व्यष्कभ्ना[1] रोदसी विष्ण[2] एते दाधर्थ पृथिवीमभितो मयूखैः ॥
सुवागावद देव दुर्ये[3] अरिष्यन्नरिष्यतः ॥
आ नो वीरो जायतां कर्मण्यो ऽभिशस्तिपा अनभिशस्तेन्यः[4] ।
यं बहवो ऽनुजीवान्यो बहूनामसद्वशी ॥
वैष्णवमसि विष्णुस्त्वोत्तभ्नातु ॥

दिवो विष्ण[6] उत वा पृथिव्या उरोर्वा विष्णो बृहतो अन्तरिक्षात् ।
हस्तौ पृणस्व बहुभिर्वसव्यैरा[7] प्रयच्छ दक्षिणादोत[8] सव्यात् ॥
विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥

विष्णोः पृष्ठमसि विष्णो रराटमसि विष्णोः श्निप्त्रे[9] स्थो विष्णोः स्यूरसि[10] विष्णोर्ध्रुवो ऽसि वैष्णवमसि विष्णवे त्वा ॥

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति[11] भुवनानि विश्वा ॥९॥

Vgl 3, 8, 7 — TS 1, 2, 13 (havirdhanamandapanirmanam), Kâth 2 10, Kap. S 2,4 VS 5, 14—21, Man Çr 2, 2 2

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे[12] ऽभ्रिरसि नारिरसीदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो मे समानो यो ऽसमानो ऽरातीयति[13] तस्य ग्रीवा अपिकृन्तामि बृहन्नसि बृहद्रावा[14] बृहतीमिन्द्राय वाचं वद रक्षोहणं वलगहनं वैष्णवीं

1) P वि । चस्कभ्ना । 2) P विष्णो इति विष्णो । M 2 विष्णु एते । 3) M 1 दुर्ये॰, die andern Mss दुर्ये, auch der P auffälligerweise da er vielmehr दुर्यान् lesen müsste 4) M 2 u P ॰तेन्यु । 5) Hier fordert das Metrum Einfügung eines वा, welches aber die Mss nicht bieten vgl TS 1 2 13 2 VS 5 19 6) P विष्णो इति विष्णो । 7) So M 1, P वा । म । यच्छ । ॰ TS 1, 2 13, 2 u VS 5 19, H, Bb u B lesen ॰रातंयच्छ, M 2 ॰रादू प्र॰ । 8) P वा । उत । 9) H, Bb u B श्निप्ते, Kaṭh श्नप्त्रे. Kap S wie VS 5 ॥ श्नप्त्रे, TS 1, 2 ■ 3 श्नप्त्रे । 10) So M 1. P स्यूः ।, ebenso Man Çr 2, 2 2, aber M 2 H Bb u B स्यूर॰ ebenso Kap S, aber Kaṭh सूर॰ । 11) M 1 u 2 क्षीयन्ति । 12) B ॰ददे 13) P अरातीयति । 14) So M 1 2, Bb, H u B, P बृहद्रावा इति बृहत् । रावा ।, dieselbe Form MS 3,8 3, Man Çr 2,2,3 बृहन्नसि बहद्राय इति, dagegen TS 1,3 2 2 u Kaṭh 2,11 बृहद्ग्रावा, VS 5,22 u Kap S 2,5 बृहद्ग्रावा

सम्राडसि सपत्नहेदमहं तान्वलगानुद्वपामि यान्मे समानो यानसमानो निचखान ये कुल्फदघ्ने निरस्तो वलगः स्वराडस्यभिमातिहेदमहं तान्वलगानुद्वपामि यान्मे सजातो यानसजातो निचखान ये जानुदघ्ने निरस्तो वलगो विराडसि रक्षोहेदमहं तान्वलगानुद्वपामि यान्मे संबन्धुर्यानसबन्धुर्निचखान ये नाभिदघ्ने निरस्तो वलगः सम्राडस्यघ्नस्तिहेदमहं तान्वलगानुद्वपामि यान्मे भ्रातृव्यो यानभ्रातृव्यो निचखान ये श्मश्रुदघ्ने निरस्तो वलगः सर्वराडस्यरातीयतो हन्तेदमहं तान्वलगानुद्वपामि यान्मे सजन्यो यानसजन्यो निचखान ये ग्रीवदघ्ने निरस्तो वलगः ॥

संमृश द्रुमानामुपे वर्चसे च देवानां निधिरसि द्वेषोयवनः ।
पृषोऽध्यसंहैपांसि यानि कानि च चकृम ॥
देवानामिदं निहितं यदस्त्यग्नाभाहि प्रदिशश्चतस्रः ।
कृण्वानो अन्यां अधरान्त्सपत्नान् ॥ १० ॥ Vgl 3 8,8 — agnishomiyapaçupraçnah in TS 1,3,1 (sadonirmânam) u 2 (havirdhânagatoparavanirmânam), Kâth 2,11, Kap S 2 5; VS 5,22—24, Man Çr 2,2,3, 1,8,2

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा शुन्धन्तां लोकाः पितृषदना यवो ऽसि यवय द्वेषो अस्मद्यवयारातीः पितृषदनं त्वा लोकमवस्तृणामि ॥

उच्छ्रयस्व वनस्पते सजूर्देवेन बर्हिषा ।
नितानस्त्वा मारुतो निहन्तु मित्रावरुणौ ध्रुवेण धर्मणा ॥

1) H, Bb °दघ्ने 2) H u Bb संभ्रातो 3) So M 1 u 2. P यरातीयतो 1, H u Bb यरातीयतो 1 4) So M 1 u 2 Bb द्वेषो यवय, P auch । यवय ; ob er aber द्वेष । liest, oder ohne Accent ist undeutlich 5) Im P पृषोधि । ohne Accent 6) P यद । अ । भाहि । 7) P अन्यान् । 8) So M 1, in M2 eig यावय geschrieben, aber in यवय corr., H, Bb u B यावय । P यावय । TS 1,3 1 1 liest यवय, ebenso Kap S u VS 5 26, aber Kath यावय, vgl übr unten 1 2,14 9) So M 1, H, Bb u B; in M2 wie oben; P यावय । TS u VS यवय, Kath u Kap. S यावय, MPa 1dh. II S 22 यवयारातिं

ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह रायस्पोषं दृꣳह प्रजां दृꣳह सजातानस्मैं यजमानाय दृꣳह ॥ घृतेन द्यावापृथिवी आपृण विश्वजनस्य छायासि ॥

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।

वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः[1] ॥

इन्द्राय त्वेन्द्रस्य स्यूरसीन्द्रस्य ध्रुवो ऽस्यैन्द्रमसीन्द्राय त्वा रक्षोघ्नो वो वलगघ्नः प्रोक्षामि वैष्णवान् रक्षोहणं त्वा वलगहनमवसिञ्चामि वैष्णवꣳ रक्षोहणं त्वा वलगहनमवस्तृणामि वैष्णवꣳ रक्षोघ्नी वाꣳ वलगघ्नी उपदधामि वैष्णवी रक्षोघ्नी वाꣳ वलगघ्नी पर्यूहामि वैष्णवी रक्षोहणं त्वा वलगहनमास्तृणामि वैष्णवम् ॥ ११ ॥

Vgl 3,8 9 — TS1,3 1u2 (s oben) Kāṭh 2 12 Kap S 2 6 VS5 26—30 25, Man Çr 2 2 3, 1 8 2

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रो ऽसि प्रचेतास्तुथो ऽसि विश्ववेदा अवस्युरसि दुवस्वानंहारिरसि बम्भारिरङ्गिरसि कविः शुन्ध्युरसि मार्जालीयः सम्राडसि कृशानुः परिषद्यो ऽस्यास्तव्यो नभो ऽसि प्रतक्वासंमृष्टो ऽसि हव्यसूदनः संगरो ऽसि विश्ववेदा ऋतधामासि[10] स्वर्ज्योतिः[11] समुद्रो ऽसि विश्वव्यचा अजो ऽस्येकपादहिरसि बुध्न्यः कव्यो[12] ऽसि कव्यवाहनो रौ-

1) P यसी । ohne Accent 2) P बुष्टा । 3) So nur im P doch ist dies die richtige Form die andern Mss betonen जुष्टय । 4) M2 H Bbh B स्यूर° nur M1 स्योर° I स्यो । vgl oben 1 2 9 5) So M1 u ° H u Bb dagegen B अवस्यूर° u P अवस्युरित्यव स्यूं ।, TS Kaṭh u Kap S lesen अवस्युर° aber VS 5 32 अवस्यूर° 6) Diese Betonung findet sich freilich nur im P अंहारि । und बंभारि । aber die Vergleichung mit TS Kap S u VS 5 32 erweist sie als die richtige in den andern Mss der MS sind diese Wörter Paroxytona 7) P आ स्तव्य । 8) I प्र तक्वा । 9) I ■ मृष्ट ।। vielleicht auch in M° oxytonirt vgl aber असंमृष्टो in TS, असमृष्टो in Kap S प्रतक्व सम्मृष्टो in Kaṭh 10) M° e g ऋतुधामा dann corr , auch Kap S ऋतधामा 11) P स्वर्ज्योतिरिति स्वः ज्योतिः । 12) M° बुध्न कव्यो u ebenso betont Kap S

ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामि ब्रह्म दृंह क्षत्रं दृंह रायस्पोषं दृंह प्रजां दृंह सजातानस्मै यजमानाय दृंह ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

दिवीव चक्षुराततम् ॥

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानं मनुष्याः[1] सह रायस्पोषेण प्रजया च व्ययन्तां दिवः सानूपेष[2] दिवं ते धूमो गछत्वन्तरिक्षं ज्योतिः पृथिवीं भस्म स्वाहा ॥ १४ ॥ Vgl 3,9,2–4 — TS 1,3,5 (yupachedah) und 6 (yupasthapanam), Kāṭh 3,2 u 3, Kap S 2,9 u 10, VS 5,42 41 43, 6,1–6 Mān Çr 1,8,1 2

इषे त्वोपावीरस्युपो[3] देवान्दैवीर्विशः प्रागुर्वह्नय[4] उशिजो बृहस्पते धारया[5] वसूनि हव्या ते स्वदं[6] देव त्वष्टर्वसु रण्वे[7] रेवती[8] रमध्वं[9] देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे ऋतस्य त्वा देवहविः[10] पाशेन प्रतिमुञ्चाम्यमुष्मै त्वा जुष्टं धर्षा[11] मानुषा[12] अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षाम्यनु त्वा माता मन्यतामनु

---

1) Nur der P hat hier das Richtige मनुष्याः, die andern Mss °ष्यास्त्वा oder °ष्यास्त्व vgl TS 1,3,6,2, wo ebenfalls Nom pl steht, ganz anders Kap S 2 10 परीम रायो मनुष्यम°, u VS 6,6 परीमं यजमान° रायो मनुष्याणाम् 2) So M 1 u 2 ebenso Mān Çr 1,8,2, MPaddh II,S 53, P सानु । ऊपेष । welche Trennung offenbar unrichtig ist, wir lesen vielmehr auf in सानु । उप । इष । was genau mit dem Accent in M 1 2 stimmt, und übersetzen „zu des Himmels Rücken strebe auf!" Vgl B bei W., Nachtrag zum 2 Th, s v इष् c उप H u Bb सानुपेष, B सानुपेष, vgl aber auch Kāṭh 3 3 अन्तरिक्षस्य सानूपेष Kap S 2 10 सानूपेष, anders TS 1,3 6,2 u VS 6 6 3) So M 2, P उप अयो । aber M 1, H, Bb u B °पावीरि° 4) P वह्य । उत् 5) P प्र । अगु । 6) P धारय । 7) P स्वदन्तु । Kap S 2 11 auch स्वद, aber TS 1 3 7 1 u VS 6 2 स्वदन्ताम्, Kaṭh 3 4 स्वदन्तम् 8) So alle Mss, P वसु रण्वे । also zwei Worte Kaṭh 3,4 u Kap S 2 11 lesen वसु रण्व, TS 1,3 7,1 वसु रण्व, Say sieht auch zwei Worte darin u erklärt रण्व durch रमणीयं कुरु (s Webers Ausg S 30 Anm) VS 6 7 वसु रम 9) P रेवती । 10) P देवह विरिति देव हविः । 11) P धर्ष । M 2 धरिषा Kap S 2 11 धरियां Kāṭh 3 5 धर्षा, VS 6,8 u TS 1 3 8 1 धर्षा unten 3 9,6 auch धर्षा; desgleichen MPaddh II S 54 133 148 nur ohne Accent. 12) So alle Mss, P मानुष ।, dasselbe MPaddh II S 54 113 auch Kap S 2 12 मानुष । अप°, VS मानुष ।, aber Kaṭh मानुषान् अप°, TS मानुषानप°

पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्यो ऽनुमानावह[1] देवान्देवायते[2] यजमानायापां पेरुरसि स्वात्तं[3] संहविरापो देवीः स्वदन्तु सं ते वायुर्वातेन गछतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा घृतेनाक्तौ पशुं त्रायेथाम् ॥

ये बध्यमानमनु बध्यमाना अन्वैक्षन्त[4] मनसा चक्षुषा च ।
अग्निष्टं[5] अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया[6] संरराणः ॥

रेवति[7] मेधा[8] यज्ञपतिमाविशोरो अन्तरिक्ष सजूर्देवेन वातेन ॥

त्मनास्य[9] हविषो यज समस्य[10] तन्वा भव ।
वर्षीयो वर्षीयसो यज्ञं यज्ञपतौ धाः ॥

स्वर्विदसि स्वर्वित्त्वा स्वरिहि ३ स्वर्मह्य स्वः पशुभ्यो लोकविदसि लोकं वित्त्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यो नाथविदसि नाथं वित्त्वा नाथमिहि नाथं मह्यं नाथं पशुभ्यो गातुविदसि गातुं वित्त्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यः ॥

न वा एतन्म्रियसे[11,12] नेत्[13] रिष्यसि देवाँ[14] इदेषि पथिभिः शिवेभिः ।
यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु ॥

शमितार उपेतन[15] यज्ञं देवेभिरन्वितम् ।

---

1) P यं॒नु । मान । आ । वह ।, ebenso 3,9,6, in Kāṭh u Kap S fehlt अनुमान, es ist wohl ein Nomen, abgeleitet von मन् o मनु mit Beziehung auf den vorhergehenden Satz 2) So alle Mss, nur P देवायते ।, vgl oben 1,2,8 3) So betonen M 1 2 u P, in H u Bb स्वात्तं ohne Accent 4) M 2 अन्वैक्षत, vgl übrigens AV 2,34,3, TS 3,1,4,2 5) P अग्नि । ताम् । 6) H, Bb u B प्रजाया 7) Bb रेवती 8) Ebenso 3,9,7, vgl das adverbiale मियधा in TS 1,3,8,1, aber P मेधा । मियधा इति मिय धा ।, zu dieser Auffassung stimmt VS 6 11 मियं धा स्वा विश्व, Kāṭh 3, 6 u Kap S 2, 13 lesen ebenfalls मेधा 9) P आत्मना । स्य । 10) P सं । अस्य ।, vgl aber TS 1,3,9,2, Kap S 2,15 u VS 6 11 11) P एतत् । 12) H u Bb das Verb ohne Accent 13) P नं । इत् । 14) P देवान् । 15) So betonen die Mss, P irrig उपेत इतुप । इत । नं ।

पाशात्पशुं प्रमुञ्चत बन्धाद्यज्ञपतिं परि ॥
अदितिः पाशान्प्रमुमोक्त्वेतान्पशोः पाशान्पशुपतेरधि ।
यो नो द्वेष्ट्यधरः स पद्यतां तस्मिन्पाशान्प्रतिमुञ्चाम एतान् ॥

॥ १५ ॥ Vgl 3,9,6 7 — TS 1, 3, 7 (paçor upākaraṇam) und 8 (paçoḥ saṃjñapanam), Kāṭh 3, 4—6, Kap S 2,11—13, VS 6,7—11, 23,16, Man Çr 1,8,3

नमस्त आतानानर्वा प्रेहि यजमानाय घृतस्य कुल्यामनु सह रायस्पोषेण देवीरापः शुद्धा यूयं देवान्युयुध्वं शुद्धा वयं सुपरिविष्टाः परिवेष्टारो वो भूयास्म वाचमस्य मा हिꣳसीः प्राणमस्य मा हिꣳसीश्चक्षुरस्य मा हिꣳसीः श्रोत्रमस्य मा हिꣳसीर्यत्ते क्रूरं यदास्थितं तदेतेन शुन्धस्व देवेभ्यः शुम्भस्व गात्राण्यस्य मा हिꣳसीश्चरित्रानस्य मा हिꣳसीर्नाभिमस्य मा हिꣳसीर्मेढ्रमस्य मा हिꣳसीः पायुमस्य मा हिꣳसीः शमद्भ्यः ॥

ओषधे त्रायस्वैनं स्वधिते मैनं हिꣳसीः ।
या ते शिवतमा तनूस्तयैनमुपस्पृश ॥

पृथिव्यै त्वा रक्षसां भागो ऽसीदमहं रक्षो ऽववाध इदमहं रक्षो ऽधमं तमो नयामीषे त्वोर्जे त्वा देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व ॥ घृतेन द्यावापृथिवी प्रोर्णुवातामंशुम्ने त्वा जुष्टं नमः सूर्यस्य संदृशे ॥ उरुर्वन्तरिक्षं वीहि प्रत्युष्टं रक्षः प्रत्युष्टारातिर्वायोः स्तोकानां

---

1) P प्रयतम । 2) So M1 in Uebereinstimmung mit TS 1, 3, 8, 2, Kāṭh 3, 6, VS 6,12, Man Çr 1,8,4, MPaddh II S 58, der P liest auch आतान। अनर्वा।, aber H, Bb u B आतानानवर्षा und ebenso Kap S 2 13, in M2 fehlend, vgl unten 3,10,1 3) P प्र। इहि। 4) So alle Mss nur P युयध्वं।, s oben 1,1,11, Kaṭh 3,6 यूडु, Kap S 2,13 युड TS 1,3 8 2 कल्प॰, VS 6 II चोढ़॰ 5) So M1, aber H u Bb चरित्रानस्य, M2, B ebenso, nur ohne Accent, P चरित्रान्। 6) P अव। बाधे। 7) P अधमं। 8) P प्र। ऊर्णुवाता।

संयुता हैषासि स्वाहोर्ध्वनभसं मारुतं देवं गच्छतम् ॥ १६ ॥

Vgl 3,10,1flg — TS1,3,8 (paçoh samjñapanam) und 9 (vapotkhedah), Kâth.3,6, Kap S 2,13, VS6,12—16, Mân Çr 1,8,4

जुष्टं देवेभ्यो हव्यं घृतावदस्तुभ्यं त्वा जुष्टं रेदस्यमिष्ट्वा श्रीणा-त्वोपस्त्वा समरिचन्वातस्य त्वा ध्राज्यै पूष्णो रंह्या ऊष्मणो ऽव्यथिषै ऽपामोषधीनां रसो घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वा वाताय दिशः प्रदिश आदिशो विदिश उद्दिशो दिश ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्रो ऽपानो अङ्गे अङ्गे निबोभुवदैन्द्रो व्यानो अङ्गे अङ्गे विबोभुवत् ॥

देव त्वष्टर्भूरि ते सत्समेतु सलक्ष्म यद्विषुरूपं बभूव ।
देवत्रा यन्तमवसे सखायो ऽनु त्वा माता पितरो मदन्तु ॥ १७ ॥

Vgl 3,10,4 — TS1,3,10 (vasâhomah), Kâth.3,7, Kap S 2,14, VS 6, 18—20, Mân Çr 1, 8, 5

समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवं सवितारं गच्छ स्वा-

---

1) P ऊर्ध्व.नभसं ।; vgl unten 3,1,10   2) So die Mss, nur P घृतवदिति घृतवत् ।   3) P रेट् ।   4) P रंह्यै ।   5) M1, H u Bb ऽव्यथियै und ebenso M2 u B, nur ohne Accent, nur der P ऽव्यथाः ।, merkwurdig, dass auch Kâth 3, 7 ऽव्यथायै liest, aber richtig Kap S 2,14 ऊष्मणो, ebenso VS6,18, in TS fehlend, Mân Çr 1,8,5 स्वाहोष्मणो व्यथिष इत्यूष्माणमनुमन्त्रयते MPaddh II, S 63 119 136 स्वाहोष्मणो व्यथिषे   6) So H u. Bb, ebenso M2 u B, nur ohne Accent, M1 व्यथीपे, P व्यथिषे ।, desgl MPaddh II S 63 119 136 vgl Kath 3 7 ऽव्यथिष्यै अ° u Kap S. 2,14 ऽव्यथिष्यै अ°, wo wir also genau den von Pa 3,4,10 als vedisch uberlieferten Infinitiv व्यथिषै vorfinden, vgl meine Abh „das Kath u die Mâitr S", Monatsber d K Akad d Wiss z Berlin, 1879, S 685flg In VS6 18 verstümmelt zu व्यथिषत्   7) So M2, nur ohne Accent, P नि । दीध्यत् ।, M1 नीदीध्यद°, H, Bb u B निदिध्यद°, Kâth u Kap S निदीधयद°, VS6 2 निदीध्यद°, TS निदेध्यद°, vgl übrigens Pet W s v 1 धी c नि   8) So schreibe ich gegen P सं° समिति सं° । सम् । एतु ।, ebenso in allen vier verwandten Samhitas Dagegen M1 सत्समेतु, M2 u B ebenso, nur ohne Accent, H u Bb सत्समेतु wo die Betonung ebenfalls auf die Lesart des P und der andern Samhita's hindeutet

होहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा छन्दांसि गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा मनो हार्दि[1] यच्छौषधीभ्यस्त्वा ॥

धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे[2] ।
ततो वरुण नो मुञ्च ॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा[3] वयमादित्य व्रते तवानागसो अदितये स्याम ॥
सुमित्रा न आपा[4] ओषधयः सन्तु दुर्मित्रास्तस्मै सन्तु ।
यो अस्मान्द्वेष्टि यं च वयं द्विष्मः ॥१८॥ Vgl 3, 10, 7 — TS 1, 3, 11 (gudakāṇḍena upayajsaṃjñakahomāh), Kath 3, 8, Kap II 2, 15, VS 6, 21 u 22, Mān Çr 1, 8, 6

॥ इति प्रथमकाण्डे ऽध्वरो नाम द्वितीयः प्रपाठकः[5] ॥

---

हविष्मतीरिमा आपो हविष्मान्देवो अध्वरः ।
हविष्मं आविवासति हविष्मं अस्तु सूर्यः ॥

---

1) Nur P हार्दि । u MPaddh II S 66 so freilich auch die andern Saṃhitā's, daher vielleicht vorzuziehen, s aber unten 3 10 7 mehrmals auch das Masc., auch Man. Çr 1, 8, 6 मनो हार्दि यच्छेति 2) M = शपामहि 3) P अथ । 4) P आप । 5) So die Unterschrift in H, Bb u B nur dass diese Mss अध्वर् नाम schreiben; in M 1 u 2 lautet die Unterschrift अध्वरो द्वितीय प्रपाठक 6) P हविष्मान् ।

अयेवो ऽपन्नगृहस्य[1] सदसि सादयामि देवानां भागधेयीः स्थेन्द्राग्न्योर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयी स्थ विश्वेषां देवानां भागधेयी स्थ सुम्नायुव[2] सम्नार्यं सुम्नं धत्त ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥
शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः[4] ।
शृणोत ग्रावाणो विदुषो नु यज्ञं[5] शृणोतु देवः सविता हवं मे ॥

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यः शुक्रपेभ्यो दात्त येषां भागः स्थ स्वाहा कार्षिरसि[5] समुद्रस्य वो ऽक्षित्या[6] उन्नये वसूनां[7] रुद्राणामादित्यानां पत्नेजनी स्थ वसवो रुद्रा आदित्या एतां व पत्नेजनी [7]समुद्र गन्धर्वेष्ठामन्वातिष्ठत[8] वातस्य पत्मनेडिता[9] वाम्यो ते सदृशि[10] विश्व[11] रेतो धेषीय[11] तव वामीरनु सदृशि[12] ॥

---

1) P अपन्न गृहस्य । 2) M 1 सुम्नायुव aber H u Bb betonen richtig die erste Sylbe ebenso P सुम्नायुव इति सुम्ना युव । (M 2 u B ohne Accent) 3) So M 1 u P u M 2 u B ebenso nur ohne Accent Bb सुम्न्या u so wohl auch H Kath सुम्नायथसुम्न्याय सुम्न्यन्धत्ते॰ wo wohl wie u MS सुम्न zu schreiben ■ Kap S verstümmelt सुम्नाय इथ सुम्नाय सुम्न der Sinn ist wohl „Ihr Huldreichen schenkt Huld dem der Huld verdient" TS 1 3 12 सुम्नाय सुम्निनी सुम्ने मा धत्त 4) So H Bb u B in Uebereinstimmung mit TS Kap S VS 6 26 M 1 धिषणा च देवी ebenso P auch M 2 nur ohne Accent 5) So M 1 H auch M 2 B MPaddh III S 41 nur ohne Accent P कार्षिः । असि । Bb कार्षसि Kath कार्ष्येसि Kap ■ कार्षिरसि TS 1 3 13 u VS 6 28 कार्षिरसि 6) P अक्षित्यै । 7) P पत्नेजनी । 8) Dies auch in Kap S in Kath गन्धर्वेष्ठाम॰ P गन्धर्वेष्ठा । गन्धर्वेस्थामिति गन्धर्वे स्थाम् । 9) P पत्मना । ईडिता । 10) So M 1 H Bb ebenso M 2 u B nur ohne Accent P सदृशीति सन् दृशी । Kath वामो ते संदृशि Kap S वाम्या ते सदृशि unten 4 5 4 schwanken die Mss zwischen सदृशि und सदृशी 11) Kath u Kap S धिषीय 12) So M 1 auch M 2 u B nur ohne Accent P सदृशीति सन् । दृशि । H u Bb ॰शी oder ॰शे Kath वाम्यनु सन्दृशि Kap S वाम्यनु सदृशि

होहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा छन्दांसि गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा मनो हार्दिं[1] यच्छौषधीभ्यस्त्वा ॥

धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे[2] ।

ततो वरुण नो मुञ्च ॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।

अथा[3] वयमादित्य व्रते तवानागसो अदितये स्याम ॥

सुमित्रा न आप[4] ओषधयः सन्तु दुर्मित्रास्तस्मै सन्तु ।

यो अस्मान्द्वेष्टि यं च वयं द्विष्मः ॥१८॥ Vgl 3, 10 7 — TS 1, 3, 11 (guda kâṇḍena upayatsaṃjnakahomah), Kaṭh 3, 8, Kap S 2, 15, VS 6, 21 u 22, Mân Çr 1, 8, 6

॥ इति प्रथमकाण्डे ऽध्वरो नाम द्वितीयः प्रपाठकः[5] ॥

---

हविष्मतीरिमा आपो हविष्मान्देवो अध्वरः ।

हविष्मं[6] आविवासति हविष्मं अस्तु सूर्यः ॥

---

1) Nur P हार्दिं। a MPaddh II [illegible] 66 so freilich auch die andern Saṃhitâ's, daher vielleicht vorzuziehen s. aber unten 3 10 7 mehrmals auch das Masc., auch Mân. Çr 1, 8 6 मनो हार्दिं यच्छेति 2) M 2 शपामहि 3) P यथ। 4) P पाप। 5) So die Unterschrift in H Bb u. H nur dass diese Mss अध्वर नाम schreiben, in M 1 u 2 lautet die Unterschrift अध्वरो द्वितीय प्रपाठक 6) P हविष्मान्।

क्षमैवों उपनगृहस्य[1] सदसि सादयामि देवानां भागधेयीः स्थेन्द्राग्न्योर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयीः स्थ विश्वेषां देवानां भागधेयीः स्थ सुम्नासुवः[2] सम्नाय[3] सुवं धत्त ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वमिमंमध्वरं दिवि देवेषु होत्रा यछ ॥
शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः[4] ।
शृणोत ग्रावाणो विदुषो नु यज्ञं शृणोतु देवः सविता हवं मे ॥

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यः शुक्रपेभ्यो दात येषां भागः स्थ स्वाहा कार्षसि[5] समुद्रस्य वो ऽक्षित्या[6] उन्नये वसूनां रुद्राणामादित्यानां पत्नेजनीः[7] स्थ वसवो रुद्रा आदित्या एता वः पत्नेजनीः समुद्रं गन्धर्वेष्ठामन्वातिष्ठत[8] वातस्य पत्मनेडिता[9] वामी ते संदृशि[10] विश्वं रेतो धेषीय[11] तव वामीरनु संदृशि[12] ॥

---

1) P उपन गृहस्य । 2) M 1 सुम्नायुव aber H u Bb betonen richtig die erste Sylbe, ebenso P सुम्नायुव इति सुम्ना युव । (M 2 u B ohne Accent) 3) So M 1 u P in M 2 u B ebenso nur ohne Accent Bb सुम्न्या u so wohl auch H, Kath सुम्नायवस्सुम्नाय सुम्न्यधत्त॰ wo wohl wie in MS सुम्न zu schreiben ist Kap S verstummelt सुम्नाय इव सुम्नाय सुम्न der Sinn ist wohl „Ihr Holdreichen schenkt Hold dem der Hold verdient!“ TS 1 3 11 सुम्नाय सुम्निनी सुम्ने मा धत्त 4) So H Bb u B in Uebereinstimmung mit TS Kap S VS 6 26 M 1 धिषणा च देवी, ebenso P auch M 2 nur ohne Accent 5) So M 1 H auch M 2 B MPadāh III S 41 nur ohne Accent P कार्षि । असि । Bb कार्षसि Kath कार्ष्येसि Kap S कार्षिरसि TS 1 3 13 u VS 6 28 कार्षिरसि 6) P ऊंक्षित्यै । 7) P पत्नेजनी । 8) Dies auch in Kap S im Kath गधर्वेष्ठाम॰ P गधर्वेष्ठां । गधर्वेस्थामिति गधर्वे स्थाम् । 9) P पत्मना । ईडिता । 10) So M 1 H Bb ebenso M 2 u B nur ohne Accent P सदृशीति सन् । दृशी । Kath वामो ते सन्दृशि Kap S वाम्या ते सदृशि unten 4 5, 4 schwanken die Mss zwischen सदृशि und सदृशी 11) Kāṭh u Kap S धिषीय 12) So M 1 auch M 2 u B nur ohne Accent P सदृशीति सन् । दृशि । H u Bb ॰शी oder ॰शि Kath वाम्यनु सन्दृशि Kap S वाम्यनु सदृशि

यमग्ने पृत्सु मर्त्यमवा[1] वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥

जुष्टो वाचो भूयासं जुष्टो वाचस्पतिर्देवाचो मधुमत्तस्मै स्वाहा स्वाहा सरस्वत्यै ॥ १ ॥ Vgl 4, 5, 1—4 — Somabhishavah in TS 1, 3, ▒ (vasatīvarīṇām grahaṇam) und 13 (somasya çakaṭād upāvarohah), Kāṭh 3, 9, Kap S 2, 16, VS 6, 23—29, Mān Çr 2, 2, 5, 2, 3, 1 2

निग्राभ्याः स्थ देवश्रुतस्तर्पयत मायुर्मे[2] तर्पयत तर्पयत मा प्राणं मे तर्पयत तर्पयत मापानं मे तर्पयत तर्पयत मा व्यानं मे तर्पयत तर्पयत मा चक्षुर्मे तर्पयत तर्पयत मा श्रोत्रं मे तर्पयत तर्पयत मा मनो मे तर्पयत तर्पयत मा वाचं मे तर्पयत तर्पयत मात्मानं मे तर्पयत तर्पयत मा प्रजां मे तर्पयत तर्पयत मा गृहान्मे तर्पयत तर्पयत मा पशून्मे तर्पयत तर्पयत मा गणान्मा[3] वितीतृपत[4] तर्पयत मा ॥ २ ॥ Vgl Kaṭh 3, 10, Kap S 2, 17, VS 6, 30 u. 31, Mān Çr 2, 3, 2 a E , 2, 4, 1

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ग्रावास्यध्वरकृद्देवेभ्यो गभीरमिममध्वरं कृधि ॥

इन्द्राय त्वा सुषुतमं मधुमन्तं पयस्वन्तम् ।
इन्द्राय त्वाभिमातिघ्ने इन्द्राय त्वा वसुमते रुद्रवत इन्द्राय त्वादित्यवते ॥

अग्नये त्वा रायस्पोषदे विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा ॥

---

1) P ऽवा । 2) P मा । आयु । 3) So die Mss , P गणा॑ः ।, vgl aber die folgende Anmerkung 4) So H u Bb, auch M 2 u B, nur ohne Accent, M I वितितृपत, P वि । तीतृपत् । Mān Çr 2 4 1 गणान्मे मा वितीतृपत्, Kap S गणान्मे तर्पयत त मे मा वितृप wohl zu corr in ते मे मा वितृपन्, vgl VS 6, 31; in TS 3, 2, 5, 3 heisst es गणान्मे मा वितीतृष

श्वात्राः स्थ वृत्रतुरो राधं गूर्ता[1] अमृतस्य पत्नीः[2] ।
ता देवीर्देवत्रेमं[3] यज्ञं धत्तोपहूताः सोमस्य पिबत ॥

यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरा अन्तरिक्षे तेनास्मै यज्ञपतय उरु राये कृध्यधि दात्रे वोचो मा भेर्मा संविक्था[4] ऊर्जं धत्स्वो-[5]र्जमस्मासु धेहि धिषणे ईडिते[6] ईडेथामूर्जं दधाथामूर्जमस्मासु धत्तं मा वां हिंसिषं मास्मान्[7] हिंसिष्टम् ॥ ३ ॥ Vgl 4 5 4 — Graha praçnah in TS 1, 4, 1 (somābhishava!), Kath 3, 10 Kap S 2, 17, VS 6, 30 32—35, Man Çr 2 3 3

वाचस्पतये पवस्व वृष्णो[8] अंशुभ्यां गभस्तिपूतः ॥ देवो देवानां पवित्रमसि येषां भागो ऽसि ॥ मधुमतीर्न[9] इषस्कृधि स्वाकृतो[10] ऽस्युर्वन्तरिक्षं वीहि[11] विश्वेभ्य इन्द्रियेभ्यो[12] दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु[13] स्वाहा त्वा सुभव[14] सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यः प्राणाय त्वा यत्ते सोमादाभ्यं[15] नाम जागृवि तस्मै ते सोम सोमाय स्वाहा

---

1) So die Mss, P राधगूर्ता इति राध गूर्ता । also als Compositum gefasst, ein solches ist jedenfalls in der Schreibung von TS 1, 4, 1, 1 u VS 6, 34 राधोगूर्ता, Kap S राधोगूर्ता, die Bedeutung ist wohl „um der Gaben willen gepriesen" Der Text in MS ist wohl verdorben wie er vorliegt bedeutet er wohl „spendet ihr gepriesenen!" Dann mussen aber gegen den P zwei Worte darin gesehen werden Bb ubrigens राधगू° 2) So M 1 u P, ebenso Kap S, TS u VS, in H u Bb ohne Accent 3) P देव त्रा । इमम् । 4) P विक्था । oder वित्था । , M 2 व्यक्था od व्यत्था VS 1 23 u 6, 35 संविक्था( ) Kap S 2 17 सभित्था( ) 5) P धत्स्व । 6) So die Mss auch P (nur Bb इडिते), desgl 4 5, 4, Kap S ईडिते ईडयेथाम॰ Kāṭh 3 10 वीते वीडयेथाम् TS 1 4 1 2 वीडु सती वीडयेथाम॰, VS 6, 35 वीड्वी सती वी॰ 7) P मा अस्मान् । 8) So M 1 P वृष्ण । , aber H u Bb विष्णो, ebenso M 2 u B, nur ohne Accent TS 1 4 2 a VS 7 1 वृष्णो Kāṭh 4, 1, वृष्णा अ॰, in Kap S 3 1 eig विष्णो aber am Rande verbessert in वृ॰ 9) P न । 10) So die Mss in Uebereinstimmung mit 4 5 5 TS 1 4 2, VS 7 3 Kap S 3 1 (2 Mal) P स्वाकृत इति स्वा कृत । nur Kath hat स्वकृतो 11) P वि । इहि । 12) M 2 इन्द्रीयेभ्यो 13) So M 1 P त्वा । अष्टु । dasselbe TS 1, 4 2 u VS 7, 3 dagegen lesen H Bb u B त्वाष्टु und ebenso Kap S 3 1 (2 Mal), M 2 स्वाष्टु Kath 4 1 त्वष्टु und weiter unten त्वाष्टु 14) P सुभवेति सु भव । , nur M 1 सुपव, VS सुभव TS सुभव, Kap S सुभो (2 Mal) 15) P सोम । अदाभ्य ।

प्रांगपागधरांगुदगोतास्त्वा दिशा आधावन्त्वंम्ब निसर॑ समरिं॑-
विंदाम॑ ॥ ४ ॥ Vgl 4, 5 5 7 — TS 1, 4, 2 (upâṅçugrahah) und 1 (s oben) Kath 4, 1, Kap S 3, 1 u 2, 17, VS 7, 1—3 u 6 36, Man Çr 2 3, 3. 4

उपयामंगृहीतो ऽसि ॥

अन्तर्यच्छ मघवन्पाहि सोमंमुरुष्य रांयः संमिषो यजस्व ।
अन्तस्ते॑ द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ।
सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ॥

वांक्काद्दु॑ स्वाहा त्वा सुभव॑ सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो ऽमानाय त्वा ॥ ५ ॥ Vgl 4, 5, 6 — TS 1 4, 3 (antaryamah), Kath 4 1, Kap S 3 1 VS 7, 4—6, Man Çr 2, 3, 4

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो॑ ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥

उपयामंगृहीतो ऽसि॑ वायवे त्वा ॥

इन्द्रवायू इमे सुता॑ उप प्रयोभिरागतम् ।
इन्दवो वामुशन्ति हि ॥

उपयामंगृहीतो ऽसि॑ वायव इन्द्रवायुभ्यां त्वैष ते योनिः॑ सजोषोभ्यां त्वा ॥ ६ ॥ Vgl 4, 5 8 — TS 1, 4, 4, (aindravayavah), Kath 4 2, Kap S 3, 2, VS 7, 7 u 8, Man Çr 2, 3, 5

अयं॑ वां मित्रावरुणा सुतः सोम॑ ऋतावृधा ।
ममेदिह श्रुत॑ हवम् ॥

---

1) So M 1 H Bb u B M 2 निःस्वर, P निः । स्वर 1. Kap S 2, 17 निस्वर, TS 1 4, 1 2 निस्वर, VS 6 36 निषर 2) So H Bb, ebenso B u M 2, nur ohne Accent, P सम । अरि । विदाम । M 1 समरीविदा Kath 3 10 समरिविदः, Kap S 2 17 समरीविदः, VS 6 36 समरीविदाम् 3) P urg पार्थस्य इत्यते खे । 4) So M 1, vgl TS u VS 7 3 W Bb B u wohl auch M 2 त्वाड्, P वाक् । त्वा । अड्ड 1, aber vgl gerade den P oben S 31, Anm 13 5) P सु भव । nur M 1 सुपय, vgl oben S 31, Anm 14 6) P उपो इत्युपो । 7) P सुता॑ । 8) P सोम ।

उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वैष ते योनिरृतायुभ्यां त्वा ॥ ७ ॥ Vgl 4 5 8 4 6 5 — TS 1 4 5 (maitrāvaruṇaḥ) Kaṭh 4 2 Kap S 3 2 VS 7 9 u 10, Mān Çr 2 3 5

या वां कशा मधुमत्यश्विना सूनृतावती।
तया यज्ञं मिमिक्षतम् ॥

उपयामगृहीतो ऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ॥ ८ ॥ Vgl 4 6 1 — TS 1, 4 6 (āçvinaḥ) Kaṭh 4 2 Kap S 3 2 VS 7, 11, Mān Çr 2 3 6

उपयामगृहीतो ऽसि देवेभ्यस्त्वोपयामगृहीतो ऽसि विश्वदेवेभ्यस्त्वोपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्यः ॥
दितेः[1] पुत्राणामदितेरकारिषमुरुशर्मणां[2][3] बृहतां वरूथिनाम्[4]।
येषां नामानि विहितानि धामशश्चित्तैर्यजन्ति भुवनाय जीवसे ॥
उपयामगृहीतो ऽसि विष्णोस्त्वोरुक्रमे[5] गृह्णामि विष्ण[6] उरुक्रमैष ते सोमस्तं[7] रक्षस्व मा त्वा दभन्दुश्चक्षास्ते मावख्यदयं[8] वसुः पुरोवसुर्याक्पा[9] वाचं मे पात्वयं वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे[10] पात्वयं वसुः संयद्वसुः[11] श्रोत्रपाः श्रोत्रं मे पातु ॥ ९ ॥ Vgl TS 3 2 10 (pratinirgrahyamantrāḥ) Kaṭh 4 2 Kap S 3 2 Mān Çr 2, 3 8

1) H u Bb दिते 2) M 1 u P अकार्षम् wegegen das Metrum übrigens betonen H u Bb °कारिषम° 3) M 1 °मुरुशर्मणा 4) M 1 2 u Bb वरूथिनां 5) P वक् क्रमें। der Sinn wohl „In Viṣṇu's Weitschritt schöpfe ich dich“ Vgl Kap S 3 2 इन्द्रवायुभ्यां त्वैष ते योनिर्विष्णोरुरुक्रम उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्विष्णोरुरुक्रम उपयामगृहीतो ऽस्यश्विभ्यां त्वैष ते योनिर्विष्णोरुरुक्रमे त इदस्व ebenso Kaṭh 4 2 unter V s „Weitschritt“ ist offenbar jedes Mal einer der bekannten drei Schritte in symbolischer Nachahmung gemeint 6) M 2 u B विष्णु P विष्णो ईति विष्णो। 7) P दभन्। (die andern Mss दभ) 8) S, M 1, M 2 liest मावचष्ट° B मावख्यद्° H u Bb माचख्यद्° P urg मा। यचत्।, vgl oben 1 2 5 a F und 1 2 13 Kap S 3 2 a E liest auch मावपत् aber Kaṭh 4 2 मावख्यत्, TS 3 2 10 मावख्यन् 9) P वाक पा। 10) P विदत् वसु। 11) P सयत् वसु।

अयं वेनश्चोदयत्पृश्निगर्भा[1] ज्योतिर्जरायू[2] रजसो विमाने ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी[3] रिहन्ति ॥
उपयामगृहीतोऽसि शण्डाय[4] त्वैष ते योनिर्वीरतायै त्वा ॥ १० ॥

Vgl. 4, 6, 3. — TS 1, 4, 8 (çukrāmanthinău); Kāṭh. 4, 3; Kap. S. 3, 3; VS 7, 16. 12; Mān. Çr. 2, 3, 5.

तं प्रत्नथा पूर्वथा विश्वथेमथा[5] ज्येष्ठराजं बर्हिषदं स्वर्दृशम् ।
प्रतीचीनं[6] वृजनं[7] दोहसे गिराशुं[8] जयन्तमनु यासु वर्धसे ॥
उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाभ्यस्त्वा ॥ ११ ॥

Vgl. 4, 6, 3. — TS 1, 4, 9 (çukrāmanthinău); Kāṭh. 4, 3; Kap. S. 3, 3; VS 7, 12. 16.

अपनुत्तौ शण्डामर्कौ[9] सह तेन यं द्विष्मोऽच्छिन्नस्य ते देव सोम दक्षस्य रायस्पोषस्य सुवीर्यस्याभिग्रहीतारः स्याम ॥ तुथो ऽसि जनधायाः[10] देवास्त्वा शुक्रपाः प्रणयन्तु तुथो ऽसि जनधाया[10] देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि[11] सुवीराः प्रजाः प्रजनयन्परीहि सुप्रजाः प्रजाः प्रजनयन्नभिपरीहि ॥

इन्द्रेण मन्युना युजावबाधे पृतन्यतः ।
घ्नता वृत्राण्यप्रति ॥

संजग्मानौ दिवा पृथिव्या शुक्रौ शुक्रशोचिषौ तौ देवौ शुक्रामन्थिना[12] आयुर्यज्ञे धत्तमायुर्यज्ञपतौ पुमांसं गर्भमाधत्तं गवीण्योः[13]

---

1) P पृश्नि-गर्भाः । 2) P ज्योतिर्जरायुरिति ज्योतिः । जरायुः ।; M 1. 2 u. Bb ॰जरायु 3) P मतिभिरिति मति भिः । 4) M 1 षण्डाय, M 2 खण्डाय 5) P इमथेतीम-था । 6) So betonen M 1 u. P; dagegen H u. Bb प्रतीचीन॰ 7) H, Bb u. B वृजिनं 8) P गिरा । आशुम् । 9) M 2 खण्डा॰ 10) P जन-धायाः । 11) So die Mss; P irrig अनाधृष्ट । असि ।; M2 अनादृष्टासि; auch Kap. S. 3, 3 und VS 7, 12 अनाधृष्टासि; desgl. Kāṭh. 4, 4, nur ohne Accent 12) P शुक्र-मन्थिनौ । 13) Alle Mss haben den Cerebral; M 1 गवीण्योः; ebenso M 2, nur ohne Accent; H u. Bb गविण्यौः; P गवीण्यौ ।

प्राणान्पशुषु यच्छत[1] शुक्रस्याधिष्ठानमसि मन्थिनो ऽधिष्ठानमसि निरस्तः शण्डो निरस्तो मर्कः सह तेन यं द्विष्मः ॥

या प्रथमा संस्कृतिर्यज्ञे अस्मिन्यः परमो बृहस्पतिश्चिकित्वान् ।
यो मध्यमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय सुतमाजुहोत ॥ १२ ॥

Vgl 4, 6, 8 — Kâth 4, 4, Kap S 3, 3, VS 7, 12—15 17 18, TBr 1, 1, 1, 1—5, Tândya Br 1, 4, 3 Mân Çr 2, 4, 1

ये देवा[2] दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥

उपयामगृहीतो ऽस्याग्रायणो[3] ऽसि स्वाग्रायणो[4] जिन्व यज्ञं जिन्व यज्ञपतिमभि सवनानि पाहीतस्त्वा विष्णुः पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १३ ॥ Vgl 4, 6, 4 — TS 1, 4, 10 (âgrayanah), Kâth 4, 5, Kap S 3, 4, VS 7, 19 20, Mân Çr 2, 3, 5

उपयामगृहीतो ऽसि ॥

इन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवम्[5] ।
यस्त इन्द्र बृहद्वयस्तस्मै[6] त्वा विष्णवे त्वा ॥

एष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवं

---

1) P यछ' ।, M 1 यंछो, M 2 यच्छो  2) P देवा ।  3) So die besten Handschriften, M 1 u B (letzteres ohne Accent) u P ऽग्रायणो ।, (vgl auch 4 6, 4 u 4, 7, 4), diese Form auch aus Kath belegt s Böhtl Wb, ferner häufig im Mân Çr ; H, Bb u B °ग्रयणो  4) M 1 स्वाग्रायणो M 2 ebenso, nur ohne Accent; P स्वाग्रायण इति सु-आग्रायण ।, H, Bb u B °ग्रयणो, desgl Kap S  5) P उक्था. युवं ।  6) So mit P बृहत् । वय ।, vgl TS u VS, M 1, H u Bb बृहद्वयस्त°, M 2 u B ohne Accent

गृह्णामि[1] पुनर्हविरसि देवेभ्यस्त्वा देवायुवं पृणच्मि[3] यज्ञस्यायुषे ॥ १४ ॥ Vgl 4, 6, 5 — TS 1, 4 12 (ukthyah), Kath 4 5 u 6, Kap S 3 VS 7, 22 21, Man Çr 2 3, 5, 2, 4, 3

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् । 16
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥
उपयामगृहीतो ऽसि वैश्वानराय त्वा ॥ ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमो ऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा ॥

ध्रुवं ध्रुवेण हविषा वः सोमं नयामसि ।
यथा नः सर्वा इज्जनः संगमे सुमना असत् ॥

दिवि दिव्यान्दृंहान्तरिक्षे अन्तरिक्ष्यान्पृथिव्या पार्थिवान् ॥ १५ ॥
Vgl 4 6 6 — TS 1, 4 13 (dhruvah), Kath 4 5 Kap S 3 5, VS 7 21 25, Man Çr 2 3, 5

उपयामगृहीतो ऽसि मधवे त्वा माधवाय त्वा शुक्राय त्वा शुचये त्वा नभसे त्वा नभस्याय त्वेषाय[8] त्वोर्जाय[10] त्वा सहसे त्वा सहस्याय त्वा तपसे त्वा तपस्याय त्वा ॥ १६ ॥ Vgl 4 6 7 — TS 1, 4, 14 (rtugrahah), Kath 4 7, Kap S 3 5, VS 7 30, Man Çr 2 4 2

इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् ।
अस्य पातं धियेषिता[11] ॥

उपयामगृहीतो ऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा ॥ १७ ॥
Vgl 4 6 8 — TS 1 4 15 (aindragnah) Kath 4, 7, Kap S 3 5, VS 7, 31, Man Çr 2, 4 2 3

1) H u B गृह्णामि Bb गृह्णामि 2) P देवा युव । 3) So corrigirt nach Kath 4 ■ wo die Form mehrmals sich wiederholt H liest पृणच्मि, M 1 पृणच्मि, B पृणमि, Bb bloss पृण M 2 undeutlich P प्रण। धीमि प्र नच्मि।, auch in Kap S 3 4 corrumpiert wiederholt पृणच्मि MPaddh II S 11, 13 प्रणच्मि, Man Çr 2 4,3 पृणच्मि 4) P चर्षि। 5) ■ 2 सम्राजम॰ 6) P आसन्। पा। 7) P संर्व.। इत्। अस। 8) So betonen M 1 H u Bb (in M 2 u B überhaupt keine Accente); der P schreibt इष्य। ohne Accent 9) P इषाय। 10) P ऊर्जाय। 11) P धिया। इषिता।

ओमासश्चर्षणीधृतो[1] विश्वे देवास[2] आगत।
दाश्वांसो दाशुषः सुतम् ॥
उपयामगृहीतो ऽसि[3] विश्वेभ्यस्त्वा देवेभ्य[3] एष ते योनि[3] विश्वेभ्यस्त्वा देवेभ्यः ॥ १८ ॥ Vgl 4, 6, 8 — TS 1, 4, 16 (vaiçvadevah), Kâth 4, 7, Kap 3, 5; VS 7, 33, Mân Çr 2, 4, 2

इन्द्र मरुत्व[3] इह पाहि सोमं यथा शार्याते अपिबः सुतस्य।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः[4] ॥
उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत[5] एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १९ ॥ Vgl 4, 6 8 — TS 1 4, 18 (marutvatiyah), Kâth 4, 8, Kap S 3, 6, VS 7, 35, Mân Çr 2, 4, 4

जनिष्ठा[6] उग्रः सहसे तुराय मन्द्र[7] ओजिष्ठो बहुलाभिमानः[8]।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं जजनज्जनिष्ठम्[9] ॥
उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत[5] एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ २० ॥ Vgl 4, 6, 8 — TS 1, 4 18 a E (marutvatiyah), TBr 2, 8, 3, 4 u 5, Kâth 4, 8, Kap S 3, 6, VS 33 64, 7, 36 a E, Mân Çr 2, 4, 4

मरुत्वन्तं वृषभं वावृधानमकवारिं[10] दिव्यं शासमिन्द्रम्।
विश्वासाहमवसे[11] नूतनायोग्रं सहोदामिह तं हुवे ॥
उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत[5] एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ २१ ॥ Vgl 4, 6, 8 — TS 1, 4, 17 (marutvatiyah), Kath 4, 8, Kap S 3, 6, VS 7, 36

---

1) P चर्षणीधृत । चर्षणिधृत इति चर्षणि धृत। 2) P देवास। 3) P मरुत्व.। 4) M 2 सुयज्ञा। 5) P मरुत्वते। 6) P nachla sig जनिष्ठा। 7) P मन्द्रः। 8) P बहुलं अभिमान। 9) So M 1 M 2 जजनज्जनिष्ट, P जजनत्। जनिष्ठ। H, Bb u B यजनज्जनिष्ठ, जजनत ist eine correcte Form war nur bisher nicht belegt, vgl Pa. 6, 1 192 schol und Kaç dieselbe Form unten 1, 9, 1, vgl Vorr — RV X, 73, 1 liest दधनर्ज्जनिष्ठा, desgl VS 33 64 und TBr. 2, 8 3 5 Kath दधनज्जनिष्ठा, Kap S दधन ज्जनिष्ठा. 10) P चकवारिमितिचकम। चरि। 11) P विश्वासाह। विश्वसहमिति विश्व सह।

मरुत्वां[1] इन्द्र वृषभो रणाय पिबा[2] सोममनुष्वधं मदाय।
आसिञ्चस्व जठरे मध्व ऊर्मिं[3] त्वं राजासि प्रदिवः सुतानाम्॥
उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ २२ ॥ Vgl 4 6 8 — TS 1, 4 19 (marutvat yah) Kath 4 8, Kap S 3 6 VS 7 36

सजोषा[4] इन्द्र[5] सगणो[6] मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्।
जहि शत्रूंरप[7] मृधो[8] नुदस्वाथाभयं[9] कृणुहि विश्वतो नः॥
उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ २३ ॥ Vgl 4 6 8 — TS 1 4 42 (s d o lacet) Kap S 3 6 VS 7 37 Man Çr 2 4 6

महाँ[10] इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ[11] इव।
स्तोमैर्वत्सस्य वावृधे[12]॥
उपयामगृहीतो ऽसि महेन्द्राय[13] त्वैष ते योनिर्महेन्द्राय त्वा ॥ २४ ॥
Vgl 4 6 8 u E — TS 1, 4 20 (māhendrai) Kath 4 8 Kap S 3 6 Man Çr 7, 2 4

महाँ[14] इन्द्रो नृवदा चर्षणिप्रा[15] उत द्विबर्हा[16] अमिनः सहोभिः।
अस्मद्र्यग्वावृधे वीर्यायोरुः[17] पृथुः सुकृतः कर्तृभिर्भूत्॥
उपयामगृहीतो ऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ २५ ॥
Vgl 4 6 8 u E — TS 1 4 21 (māhendrai) Kath 4 8 Kap S 3 6 VS 7, 39 Man Çr 2 4 6

1) So M 1 u 2 P मरुत्वान्। H Bb B मरुत्वा vgl aber Vorr TS मरुत्वाँ desgl Kath Kap S u VS 2) P पिब 3) So M 1 u 2 H Bb B u P ऊर्मिं eben so Kath 4) I स जोषा। 5) M 2 इन्द्र 6) M 2 सगुणो 7) So M 1 P शत्रून्। अप। M 2 शत्रूमरप H Bb u B शत्रूंरपा vgl aber die verwandten Texte u d RV III, 47 2 8) I मृधः। 9) P नुदस्व। अथ। अभयं। 10) P महान्। M 2 महँ H u Bb मह M 1 u B महँ 11) I वृष्टिमाँ इव। वृष्टिमानिवेति वृष्टिमान् इव। 12) I वावृधे। ववृध इति ववृधे। 13) I महेन्द्रायेति महा इन्द्राय। 14) So M 1 2, H H u Bb महँ P महान्। 15) P चर्षणि प्राः। 16) I द्वि बर्हाः। 17) So M 1 cf RV VI 19 1 P अस्मद्र्यक्। H Bb B M 2 अस्मद्रियग्° Kath अस्मद्र्यग्वा° Kap S अस्मद्र्यग्वा°

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु[1] मघवन्भूय[2] इन्नु[3] ते दानं देवस्य पृच्यते ॥
उपयामगृहीतो ऽस्यादित्येभ्यस्त्वा ॥
कदा चन प्रयुछस्युभे निपासि जन्मनी ।
तुरीयादित्य[4] सवनं त[5] इन्द्रियमातस्था[6] अमृतं दिवि ॥
उपयामगृहीतो ऽस्यादित्येभ्यस्त्वा ॥
यज्ञो देवानां प्रत्येतु सुम्नमादित्यासो भवता[7] मृडयन्तः ।
आ वो ऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् ॥
अहं परस्तादहमवस्तादहꣳ[8] विश्वस्य भुवनस्य राजा ।
अहꣳ[8] सूर्यमुभयतो ददर्श यदन्तरिक्षं तदु नः पिताभूत्[9] ॥
उन्नम्भय[10] पृथिवीं भिन्ध्यदो[11] दिव्यं नभः ।
उद्नो[12] दिव्यस्य नो धातरीशानो विष्या[13] दृतिम्[14] ॥ २६ ॥

Vgl 4, 6, 9 — TS 1, 4 22 (adityah) und 2 4 9, 2, Kāth 4 10, Kap S 3, 8 VS 8, 2--4 9, Man Çr 2 5 1

अदब्धेभिः सवितः पायुभिष्ट्वꣳ[8] शिवेभिरद्य परिपाहि नो वृधे ।
हिरण्यजिह्वः[15] सुविताय नव्यसे रक्षा[16] माकिर्नो[17] अघशꣳस ईशत ॥
उपयामगृहीतो ऽसि सावित्रो ऽसि जनधाया[18] जिन्व यज्ञं जिन्व यज्ञपतिमभि सवनानि पाहीतरस्त्वा विष्णुः पातु विशं त्वं पाहीन्द्रियेण ॥ २७ ॥ Vgl 4, 7, 1 — TS 1, 4 [illegible] (savitrah), Kath 4, 10 Kap S 3, 8, VS 8 69 94, Man Çr 2, 5, 1

---

1) P न । इन्द्र । 2) P उपोपेन्नुप उप । 3) P इत् । नु । 4) P भूय । 5) P तुरीय । आदित्य । 6) P ते । 7) P आ । तस्थौ । 8) P भवत । 9) P पिता । अभूत् । 10) P irrig उत् । स्तम्भय । 11) M 1 भिन्ध्यादो H भीध्यादो, ebenso M 3 u B nur ohne Accent Bb भोध्यादो nur P ganz correct भिन्धि । अदः । 12) H, Bb u B उद्धो । 13) P वि । स्य । 14) H Bb u B धृति 15) M 1 हिरण्यजिह्व । 16) P रक्ष । 17) P माकिः । 18) जन धाया ।

उपयामगृहीतोऽसि ॥ सुशर्मासि[1] सुप्रतिष्ठानो बृहदुक्षे[2] नमः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २८ ॥ Vgl 4, 7, 1 — TS 1, 4, 26 (vaiçvadevah), Kaṭh 4, 10, Kap S 3, 8, VS 8, 8, Mān Çr 2, 5, 1

उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्द[3] इन्द्रियावतः[4] पत्नीवन्तं ग्रहं राध्यासम् ॥ अग्ना३इ[5] पत्नीवा३न्त्सजूस्त्वष्ट्रा[6] सोमं पिब ॥ २९ ॥ Vgl 4, 7, 4 — TS 1, 4, 27 (pātnīvataḥ) Kaṭh 4, 11, Kap S 3, 9, VS 8, 9 u 10, Mān Çr 2, 5, 2

उपयामगृहीतोऽसि हरिरसि हारियोजनो[7] हरिवान्हर्योः[8] स्थाता। स्तुतस्तोमस्य ते देव सोम शस्तोक्थस्येष्टयजुषः[9] ॥ हरिवतो हारियोजनस्य[10] हरिवन्तं ग्रहं[11] राध्यासम् ॥ हर्योर्धाना हरिवतीः सहसोमा[12] इन्द्राय रय्यै त्वा पोषाय त्वा ॥ ३० ॥ Vgl 4, 7, 4 — TS 1, 4, 28 (hariyojanaḥ) Kaṭh 4, 11, Kap S 3, 9, VS 8, 11 u 12, Mān Çr 2, 5, 4

---

1) P सु शर्मो। असि। 2) P बृहत् उक्षे। 3) So M 2 und dazu vgl TS इन्द्रो। P richtig इंद्रो इतीद्रो।, M 1, B u H इद्र, Bb इद्र, in Kap S fehlend, MPaddh II, S 174 इद्र इ॰ 4) M 2 इन्द्रीयावत 5) So schreibe ich, cf TS 1, 4, 27 Die ३ bloss im P über dem इ angedeutet अग्ना३इ।, vgl aber 1, 6, 10 1, 8, 5 7, M 1 अग्नाई, in M 2 verwischt, H, Bb अग्नाइ, desgl B ohne Accent, vgl die folgende Anmerkung 6) Die Mss schwanken, M 1 पत्नीवात्स॰, in M 2 verwischt, aber der Schluss ॰न्त्स॰ ist deutlich, P पत्नीवानिति पत्नीवान्। H, Bb पत्नीवान्, desgl B ohne Accent Dasselbe steckt in der corrumpirten Lesung von Mān Çr 2, 5, 2 अग्नाइ पत्नीवानिति Kaṭh 4 11 अग्ना३इ पत्नीवा३न्सजूस्त्वष्टा cet, Kap S 3, 9 अग्ना इ पत्नीवान्स॰ VS 8 10 (पत्नीवत्म॰) steht dieser Lesung näher als TS पत्नीवा३। Für den Accent cf Whitney Indische Gramm § 78, ferner unten 1, 6, 10 1 8 5 7 7) So M 1 P हारि योजन। H Bb u B हार्योजनो, in M 2 eigentlich auch so geschrieben dann in हारि॰ corrigirt TS u VS stimmen zu M 1, Kap S zu H Bb u B unten 4 7 4 hat die beste Hdschr (Ben) हारियो॰ 8) Bb हरीवान् 9) P richtig शस्तोक्थस्येति शस्त उक्थस्य। इष्टयजुष इतीष्ट यजुष।, aber M 1 शस्तोक्थस्येष्टयजुष H Bb शस्तोक्थस्येष्टयजुष (M 2 u B ohne Accent) 10) M 1 u P हारियोजनस्य, M 2 H Bb u B हार्यो॰ 11) H u Bb गृह॰ 12) P सह सोमा।, M 1 सहं सोमा

अग्न[1] आयूंषि पवस[2] आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥

उपयामगृहीतो ऽस्यग्नये त्वायुष्मत एष ते योनिरग्नये त्वायुष्मते॥३१॥ 4, 7, 3 — TS 1, 4, 29 (atigrahah), Kāṭh 4, 11, Kap [illegible] 3, 9, VS 10, 38, Mān Çr. 7, 2, 2

ओजस्तदस्य तित्विष[3] उभे यत्समवर्तयत्[4] ।
उप इन्द्रश्चर्मेव रोदसी ॥

उपयामगृहीतो ऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ ३२ ॥ Vgl TS 1, 4, 30 (atigrahah), Kaṭh 4 11, Kap [illegible] 3, 9, VS 8, 39

अदृश्रन्नस्य[5] केतवो वि रश्मयो जनाँ[6] अनु ।
भ्राजन्तो अग्नयो यथा ॥

उपयामगृहीतो ऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥ ३३ ॥ Vgl TS 1, 4, 31 (atigrahah), Kāṭh 4, 11, Kap S 3 9, 10 VS 8, 40

इन्द्रमिद्धरी[7] वहतो ऽप्रतिधृष्टशवसम्[8] ।
ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥

उपयामगृहीतो ऽसीन्द्राय त्वा हरिवत[9] एष ते योनिरिन्द्राय त्वा हरिवते ॥ ३४ ॥ Vgl 4, 7, 8 — TS 1 4, 38 (shodaçin) Kath 4 11, Kap S 3, 9, VS 8, 35, Man Çr 2, 5, 1

उपयामगृहीतो ऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं [illegible] गृह्णामि यत्ते देवेभ्यो दक्षाय दक्षवृधमग्निह्वरेभ्यस्त्वा[10] ऋतायुभ्य[11]

---

1) P अग्ने । 2) P पवसे । 3) P तित्विषे । [illegible] u Bb betonen तित्विषं 4) So M 1 u P, auch M [illegible] (ohne Accent) desgl Kath u Kap S, aber H समावर्तयत्, ebenso B, nur ohne Accent, Bb समावर्तयत् 5) P अदृश्रन् । 6) P जनान् । 7) P इत् । हरी इति हरी । [illegible] P अप्रतिधृष्टशवस। 9) P हरिवते 10) P अपिह्वरेभ्य इत्यपि ह्वरेभ्य । 11) P ऋतायुभ्य इत्यृत आयुभ्य ।

इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः[1] पर्जन्यात्मभ्यः पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वाद्भ्यस्त्वौषधीभ्यो वनस्पतिभ्यस्त्वा प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वा भूताय त्वा भव्याय त्वा येन प्रजा अछिद्रा अजायन्त तस्मै त्वा प्रजापतये विश्वकर्मणे विश्वव्यचसे विभूदाव्ने[2] विभुं भागं जुहोमि स्वाहा ॥

तिस्रो जिह्वस्य[3] समिधः परिज्मनो[4] ऽग्नेरकृण्वन्नुशिजो अमृत्यवे[5] ।
तासामेकामदधुर्मर्त्ये[6] भुजं लोकमु द्वे उप जामी ईयतुः ॥ ३५ ॥

TS 3, 5, 8 (dadhigrahamantrah), Kath 30, 5 u 6, Man Çr 7, 2 4

अग्निः प्रातः सवनात्पात्वस्मान्वैश्वानरो[7] विश्वकृद्विश्वशंभूः ।
स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम ॥

अग्नये त्वा प्रवृहामि गायत्रेण छन्दसेन्द्राय त्वा प्रवृहामि त्रैष्टुभेन छन्दसादित्येभ्यस्त्वा प्रवृहामि जागतेन छन्दसा रैशीनां त्वा पत्मन्नाधूनोमि मान्दानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि पूतनानां त्वा पत्मन्नाधूनोमि पस्त्यानां त्वा पत्मन्नाधूनोमि माध्वीनां त्वा पत्मन्नाधूनोमि मदुघानां[8] त्वा पत्मन्नाधूनोमि देवयानीनां त्वा पत्मन्नाधूनोम्युपयामगृहीतो ऽसि शुक्रं त्वा शुक्र शुक्राय गृह्णाम्यह्नो रूपे सूर्यस्य रश्मिषु ॥

आ समुद्रा अचुच्यवुर्दिवो धारा असश्चत ॥

---

1) P वातापिभ्य इति वात आपिभ्य । 2) M 1 विभुदाव्ने, P विभुदाव्न इति विभु दाव्ने । 3) So M 1, H, Bb desgl ohne Accent M 2 u B, nur P यह्वस्य ।, vgl RV III, 2, 9 u Böhtlingk's Wörterbuch s. v. जिह्व 4) So nach Anleitung des P परिज्मन इति परि ज्मन ।, vgl RV III 2 9 M 1 परिज्मनो, ebenso M 2, nur ohne Accent, H परिज्मनो, Bb परिज्मनो, ebenso B nur ohne Accent. 5) M 1 मर्ते 6) P उ इयतु । 7) So die Mss , auch P प्रात सवनादिति प्रात सवनात् ।, dagegen Kāth. 30, 6 अग्नि प्रातस्सवने पात्व°, s TS 3, 1 9, 1 8) So M 1, M 2 मदूघाना, H Bb मधुघानां, ebenso B, nur ohne Accent, P मधुघाना ।

ककुभं रूपं वृषभस्य रोचते बृहद्वसूनामधीतौ रुद्राणां कर्मन्नादित्यानां चेतसीन्द्राय त्वा विभूवसे जुहोम्युशिक्तं देव सोम गायत्रेण छन्दसाग्नेर्धामोपेहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य धामोपेह्यस्मत्सखा देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि ॥ ३६ ॥ Vgl 4, 7 7 — TS 3 1 9 (savanahutyad mantrâh) u 6 3 3 3 (adabhyamçugrahartha mantrah) Kath 30 6 VS 8 48—50 Mân Çr 7 1 1

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ 10

द्यां गच्छ स्वर्गच्छ रूपं वो रूपेणाभ्येमि वयसा वयस्तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाके पृथिव्याः ॥
एतत्ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नय ॥
अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं शत्रूञ्जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातौ ॥ 11

ऋतस्य पथा प्रेत चन्द्रदक्षिणा[10] ब्राह्मणमद्य राध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् ॥ वि स्वः[11] पश्य[12] व्यन्त-

1) P चेतसि । 2) So M2 nur ohne Accent M 1 चाभि सं oder स्व H Bb u B वर्षीत्क्ष P वर्षीक । स्व । 3) P पाथ । 4) P चेत् । उ देसु । 5) P स्वां । चमा । 6) P सूर्यं । 7) P चभि । एमि । 8) M 1 e g एतु aber wie es scheint durch चेति ersetzt Kap S एतु 9) So die Form TS 1 3 4 1 4 46 3 VS 5 37 7, 44 Kap S 3 7 Auch hat P richtig जर्हृषाणो, aber M 1 जरिर्हृषाणो M 2 जरिर्षाणो H u B जर्न्हृषाणो Bb जच्चृषाणो । 10) H Bb u B चंद्र॰ 11) P वि । स्वरिति स्व । aber H Bb विश्व ebenso M2 u B nur ohne Accent. 12) Ich lasse पश्य gemäss M1 ohne Accent obgleich H u Bb पश्य schreiben weil sonst vor स्व die ३ stehen musste die sich aber in keiner Hdschr findet

रिष्टं[1] यतस्व सदस्यैरसंदाता[2] मधुमतीर्देवत्रा गच्छत[3] प्रदातारमाविशतानवहायास्मान्देवयानेन[2] पथा सुकृतां लोके सीदत[3] तन्नः संस्कृतम् ॥ ३९ ॥ Vgl. 4, 8, 2 3 — TS 1, 4, 43, (dakshinâ), Kâth 4, 9, Kap S 3, 7, — VS 7, 41. 42 44—46, Man Çr 7, 2, 5

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।
विष्णुस्त्वष्टा प्रजया संरराणो[4] यजमानाय द्रविणं दधातु ॥
समिन्द्र नो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमतौ यज्ञियानाम्[5] ॥
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु[6] तन्वो यद्विरिष्टम् ॥
सुगा वो देवाः सदना कृणोमि य आजग्मेदं[7] सवनं जुषाणाः ।
जक्षिवांसः[8] पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥
यानावह[9] उशतो देव देवांस्तान्प्रेरय[10] स्वे अग्ने सधस्थे[11] ।
वहमाना भरमाणा हवींषि वसुं घर्मं[12] दिवमातिष्ठतानु ॥
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ठाः[13,14] प्रजानन्विद्वानुपयाहि यज्ञम् ॥
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरस्तेन संभव भ्राजं गच्छ देवा गातुविदो गातुं

1) P यक्षेत् राता । 2) P अमवहाय । 3) M2, सीदतु 4) P सन्ररार्णमिति u ररार्ण । (sic ?) 5) M 1 यज्ञीयानां desgl M2 ohne Accent. 6) So M1, H, Bb u मार्ष्टे, P मार्ष्टु ।, M2 undeutlich 7) P दे । आ जग्मे । 8) P जक्षि वांसः । 9) P यान् । आ । अवहः । 10) P देवान् । 11) P सधं स्थे । 12) Bb घर्मं 13) P ऋधक् । अयाट् । ऋधक् ।, Kap S °या ऋधगु° (= VS 8, 20), TS wie MS 14) So M 1, P उत । अशमिष्ट ।; H u B °शमीष्ट, Bb °शमीष्ट, Kâṭh °शमिष्ट, Kap S °शमिष्ठ, TS u VS 8, 20 °शमिष्ठाः

वित्त्वा गातुमित मनसस्पते[1] सुधात्विमं[2] यज्ञं दिवि देवेषु वाते धाः[3]
स्वाहा ॥ ३८ ॥ Vgl 4, 8, 4 — TS 1, 4, 44 (samishtayajurhomah), Kath 4, 12, Kap S 3, 10, VS 8, 17 15 14 18—22 Mân Çr 2, 5, 4

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ[3] ।
अपदे पादा प्रतिधातवे ऽकरुतापवक्ता हृदयाविधश्चित्[4] ॥
शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
आरे बाधस्व निरृतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ॥
अपोऽनीकमपां साविवेशापां नपात्प्रतिरक्षदसुर्यान्[5] ॥
दमे दमे समिधं यक्ष्यग्ने[6] प्रति ते जिह्वा घृतमुच्चरण्यत् ॥
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः[7] ।
यज्ञस्य ते यज्ञपते सूक्तोक्तौ[8] नमोवाके विधेम ॥

स्वाहावभृथ निचुङ्कुण[9] निचेरुरसि निचुङ्कुणो[10] गृहं गृहो[11] ऽव नो देवैर्देवकृतमेनो यक्ष्यव[12] मर्त्यैर्मर्त्यकृतं चिकित्वानुरोरा नो[13] देव रिष-

---

1) H मनसस्पते, so auch in Bb corrigirt 2) P धातु एतवै । उ इत्यु । M 2 °तवा उ 3) P धाः । 4) So in M2, nur ohne Accent in Uebereinstimmung mit TS, Kath, Kap S, VS, so eigentlich auch in M 1, aber corrigirt in °वृधश्चित्, H, Bb, u B °वृधश्चित्, sogar P हृदयावृध । हृदयवृध इति हृदय वृध । 5) So accentuire ich mit P अपां । नपात्, weil das neutrale प्रतिरक्षद° nur auf अनीकम° sich beziehen lässt, also auch अपां नपात् nur Apposition zu diesem sein kann, dieselbe Accentuation in Kap S u VS 8, 24, dagegen M1, H u Bb °स्वापांनपात् in Uebereinstimmung mit TS 1, 4, 45, 1, wo aber das Partic masc. gen ist (wie übrigens auch in Kap. S u VS) 6) P यक्षि । ohne Accent 7) M 1 2, H, Bb, B °न्त्वोषधीरु° so auch Kap S, P विशन्तु । ओषधीः । उत । आपः । 8) P सूक्त उक्तौ । 9) M2 नीचुङ्कुण, weiterhin aber in Uebereinstimmung mit den andern Mss निचुङ्कुणो 10) P निचुङ्कुण इति नि चुङ्कुण । in M 1 Oxytonon in H u Bb Paroxytonon, Kâṭh auch निचुम्पुण — निचुम्पुणः, Kap S निचुम्पुण — — निचुम्पुणो, Man Çr 2, 5 4 निचुम्पुणेति 11) So M 1, desgl M 2, nur ohne Accent P गृह । गृहः । अव । नः ।, dagegen H, Bb गृहावा नो, B गृहावा नो, in den andern Saṃhita s fehlen die räthselhaften Worte गृहं गृहो ganz 12) P यक्षि । अव । 13) P irrig उरोः । आ । इत्युरो । आ । statt उरोः । आ । नः ।

स्वाद्वेप्सु धौतस्य[1] ते देव सोम नृभिः सुतस्य[2] यस्ते गोसंनिर्भक्षो यो अश्वसंनिस्तस्य ता[3] उपहूता[4] उपहूतस्य भक्षयामि[5] विचृत्तो वरुणस्य पाशः[6] प्रत्यस्तो वरुणस्य पाशो[7] नमो वरुणस्य पाशा-[8] योऽभितर्वसीयो[9] ना उन्नयामि[8] ॥

इन्दुक्षे[9] मधुमत्तमा गिरः स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा[10] इव ॥
कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः[11] ।
उदेत[12] प्रजामुत वर्चो[13] दधाना[14] युष्मान्राय[15] उत यज्ञा असश्चत ॥
गायत्रं[16] छन्दो अनु संरभध्वमथा[17] स्यात सुरभयो गृहेषु ।
एधो ऽस्येधिषीमहि समिदसि समेधिषीमहि ॥
अपो अद्यान्वचारिषं[18] रसेन समसृक्ष्महि ।
पयस्वानग्न[19] आगमं[20] तं मा संसृज वर्चसा ॥

---

1) P अप्सुधौतंस्वीयप्सु धौतस्य । 2) M 1, H नृभि सुतस्य, desgl M 2 u B ohne Accent, Bb नृयभि सुतस्य, P नृभि । सुतस्य ।, Kāṭh नृभि सुतस्य, Kap.-S नृभि सुतस्य 3) P ते 4) P उपहूतमित्युप हूत । (sic) Kāṭh u Kap S उपहूत उप॰ 5) M 2 वरूणपाशो 6) So M 1, Bb P वरुणस्य । पाशाय ।, B वरुणपाशाय॰, H erg वरुणपाशाय॰, aber dann corrigirt in वरुणस्य पाशा॰, M 2 वरूणस्य पा॰ 7) P उदेतु त्रित्युत् नेतु । 8) So M 1, P न । उत् । नय । आमि ।, M 2 u B उन्नयाभि, H, Bb उभयामि, Kap S वस्यो घ्नतया न ।, fehlt im Kāṭh 9) H u Bb खदुक्ते, M 1 खंदुक्ते 10) M 1 यथा 11) ॰द्धीतम॰ wie in RV VIII 3 16 12) So M 1, desgl M 2, nur ohne Accent, H Bb B उदेत P ganz verstummelt उत् । आ । इ । त् । अ॰ Es wäre vielmehr उत् । आ । इत । aufzulösen, das Metrum legt die Correctur in उत नahe, aber auch Kāṭh 4 13 liest उदेत 13) H u Bb ॰मुतवो 14) P दधाना । 15) P राय । 16) P auffällig गायत्री छंद । u Kap S गायत्री छन्दांसिगुसरभताम॰ 17) P अथ 18) So H Bb, desgl M 2 ohne Accent, M 1 ॰अद्यान्वचार्षं॰, B ॰चारिषं॰, P अद्य । अनु । अचारिष । 19) P अग्ने 20) आ । अगम ।

॥ ३९ ॥ Vgl 4 8 5 — TS 1 4 45 (avabhṛthaḥ) Kāṭh 4 13 Kap 3 11 VS 8 23—25 27 20 22, Mān Çr 1 7, 4 2 5, 4

॥ इति प्रथमकाण्डे ग्रहो[1] नाम तृतीयः प्रपाठकः ॥

---

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम॥
अग्ने व्रतपते व्रतमालप्स्ये[2] तन्मे प्रब्रूमस्तन्नो[3] गोपाय तच्छकेयम्[4] ॥
अग्निं होतारमुप तं हुवे देवान्यज्ञियानिह यान्यजामहे[5]।
वन्तु देवा हविषो मे[6] अस्या[7] देवा यन्तु सुमनस्यमानाः ॥
युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे[8] जातवेदः।
इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥
अस्मास्विन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम्।
अस्माकं सन्त्वाशिषः ॥
आमाशिषो[9] दोहकामा[10] इन्द्रवन्तो हवामहे।
धुक्षीमहि प्रजामिषम् ॥
सा मे सत्याशीर्देवान्गम्याज्जुष्टाज्जुष्टतरा[11][12] पण्यात्पण्यतरा[13] ॥

---

1) H Bb u B ग्रह नाम M1 2 ग्रहस्तृतीय प्र॰  2) So ist zu schreiben wie die Vergleichung mit 1 4 5 und 1 4 14 lehrt auch hat Mān Çr 1 4 1 आलप्स्य इति M1 2 u B आलप्से P आ। लप्से। Bb आलभे so Kāṭh 4 14 (ohne Accent) in H undeutlich eigentlich wohl भे dann aber verändert in से od प्से  3) P तत्। न।  4) P तत्। शकेयं।  5) M° यज्ञीयान्  6) मे fehlt in H u Bb  7) P अस्य। आः।  8) M1 वोढवे M2 वोढवें Bb 3 ढवे H Bb bloss ढवें  9) So M1 u 2 desgl B nur ohne Accent P आम्। आशिषः इत्या शिषः। H u Bb fehlerhaft सामाशिषो s Bol H Wort s v आम्  10) P दोह कामा।  11) P सत्या आशीः।  12) Von गम्या॰ bis गछ in B fehlend  13) M 2 पुंख्यात्पुण्यतरा

सभ्यं तद्विराजमाप्नोदन्नं वै विराडन्नं वा वितदाप्नोन्मध्याधिदेवने राजन्यस्य जुहुयाद्वारुण्यु ऋचा वरुणो वै देवानां राजा राज्यम-[3]स्मा अवरुन्द्धे हिरण्यं निधाय जुहोत्यभिमन्त्र्यैव जुहोत्यायतन-वत्यन्यो ऽध्वर्युः स्यादायतनायतने जुहुयाच्छतंमनसा अक्षानभ्युद्धेत्ता-न्विचिनुयाच्छतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति गामस्य तदहः सभायां दीव्येयुस्तस्याः[4] पद्व्यपि न हि स्युस्ता सभासद्भ्य उपहरेत्तया यमूहन्नीयात्तं ब्राह्मणेभ्यो देयं तान्सभ्यमन्नमे-वरुन्द्धे ॥११॥ Vgl Kaṭh 8, 7 u 12, Kap S 7, 3 u 4

यस्या रात्र्याः प्रातरग्निमाधास्यमानः स्यात्तां रात्रीं चतुःशरा-वमोदनं पक्त्वा ब्राह्मणेभ्यो जीवतण्डुलमिवोपहरेददितिर्वै प्रजाका-मौदनमपचत्सोच्छिष्टमाश्नात्तस्या धाता चार्यमा चाजायेतां सा-परमपचत्सोच्छिष्टमाश्नात्तस्या मित्रश्च वरुणश्चाजायेतां सापरम-पचत्सोच्छिष्टमाश्नात्तस्या अंशश्च भगश्चाजायेतां सापरमपचत्सै-क्षतोच्छिष्टं मे ऽश्नत्या द्वौ द्वौ जायेते इतो नूनं मे श्रेयः स्यादिति पुर-स्तादश्नीयामिति सा पुरस्तादश्नित्वोपाहरत्तां अन्तरेव गर्भः[5] सन्ता अवदतामावमिदं भविष्यावो यदादित्या इति तयोरादित्या निर्ह-न्तास्मैतस्तां अंशश्च भगश्च निरहतां तस्मादेतौ यज्ञेन यजन्ते

---

1) So M 1, in M 2, H u Bb मध्याधिदेवने, cf Kap S 7, 4, wo das Wort मध्याधिदेवन in verschiedenen Casus auftritt 2) So M 1, in M 2, H u Bb वारुण्यो 3) So M 2, wohl auch H, Bb राज्यम°, M 1 राज्यम° 4) So M 1 u 2, aber H u Bb चिद्दिव्येयुस्, B चिदिव्येयुस्, im Anschluss an die letzten drei Mss läge es nahe चिद्दीव्येयुस् zu vermuthen, um so mehr, als Kap S 7, 4 von der Kuh gesagt wird गा (cod गो) प्रति ता चिद्दीव्यन्ति ता सभासद्भ्य उपहरति, indess wird die Richtigkeit der Lesung in M 1 u 2 glänzend dadurch bewiesen, dass der ganze Satz wörtlich so citirt wird von Patanjali im Mahabhâshya zu Pâ 2, 3, 60, desgl im Schol zu Pâ 2 3 60 Interessant ist es, dass Patanjali a a O unmittelbar vorher auch die vorhin angeführte Stelle der Kap S citirt, mit geringen Abweichungen गा प्रति गा प्रदीव्यन्ति गा सभासद्भ्य उपहरन्ति 5) So alle Mss

ऽश्मप्रासो ऽश्नस्य[1] भागधेयं जने भगो ऽगच्छत्तस्मादाहुर्जनो गन्ताऽस्यस्तेन भगेन संगच्छता इति स वा इन्द्र ऊर्ध्व एव मार्गम्[2] उदश्रयत मृतमितरमाण्डमवापद्यत[3] स वाव मार्ताण्डो यस्येमे मनुष्याः प्रजाः सा वा अदितिरादित्याननुप्राधावदस्त्वेव म इदं मा म[4] इदं मोघं[5] परापप्तदिति[6] ते ऽब्रुवन्नेयेऽयो ऽस्माकमेव ब्रवातै[7] न नो ऽतिमन्याता[8] इति स वाव विवस्वानादित्यो[9] यस्य मनुश्च वैवस्वतो यमश्च मनुरेवास्मिंल्लोके यमो ऽमुष्मिंस्तेन वै देवयानान्पथो गोपाः । १ यदादित्यास्त इमसमाणं प्रतिनुदन्ते यो वा एतेभ्यो[10] ऽप्रोच्याग्निमाधत्ते तमेते स्वर्गाल्लोकात्प्रतिनुदन्त उच्छिष्टभागा वा आदित्या यदुच्छिष्टे विवर्तयित्वा समिध आदधाति तदादित्येभ्यो ऽग्न्याधेयं प्राह नैनं स्वर्गाल्लोकात्प्रतिनुदन्ते संवत्सरमुत्सृजेताग्निमाधास्यमानो नास्याग्निं गृहाञ्जहेयुर्नान्यत आहरेयुः संवत्सरे वृद्धा गर्भाः प्रजायन्ते प्रजातमेनं वृद्धमाधत्ते द्वादश रात्रीरुत्सृजेत द्वादश वै रात्रयः संवत्सरस्य प्रतिमा संवत्सरे वृद्धा गर्भाः प्रजायन्ते प्रजातमेनं वृद्धमाधत्ते तिस्र उत्सृजेत त्रयो वा इमे लोका इमानेव लोकानाप्नोत्येकामुत्सृजेतैको वै प्रजापतिः प्रजापतिमेवाप्नो-

---

1) So M 1 u. 2, in H, Bb u. B °ग्रस्य 2) So schreibe ich, d. h. मार्गमाम् । उदश्रयत ।, die Mss schwanken, M 2 मार्गामन् उश्रयत desgl. M 1 u. Bl ohne Accent, H u. Bb मार्गममुदश्रयत desgl. B, ohne Accent 3) So M 1 u. Bl, ohne Accent, in M 2 मितं° H, Bb मित°, desgl. B, ohne Accent 4) So meine Corr. In den Mss ohne Accent, in M 2 eigentlich माम geschrieben, aber dann corrigirt in मम, alle andern Mss मम 5) So die Mss 6) So M 1 u. Bl, ohne Accent, M 2 परापतन्नदिति, H u. Bb परापतदिति desgl. B, ohne Accent 7) M 1 u. Bl ब्रुवाते 8) So M 2, die andern Mss तिमन्यता 9) So M 2, in den andern Mss विवस्वान° ohne Accent 10) So M 2, in H, Bb एतेभ्यो प्रोच्या°, in M 1 u. Bl ohne Accent

ति पुरूरवा वा ऐड उर्वशीमविन्दत देवीं तस्या आयुरजायत स देवान्त्स्वर्गे लोके यजतो ऽन्वैक्षत ऽभुवं स्विदयं देवा इमः कथमयं मनुष्यो गमिष्यतीति सो ऽब्रवीद्देवा वै मे समानास्ते मा वक्ष्यन्ति किमस्यै देव्याः पुत्रो देवेभ्यो मातुर्भ्रातृभ्या आहार्षीदिति स्त्वेव मे किंचिदिति तस्मा अग्निमेतम्प्रायच्छंस्तमुत्तरतो ऽयथायाहरंस्तामुत्तरामेवादधात्सो ऽस्यैतस्याऽरोहो ऽभवद्योऽस्या सा शमी तस्मादेतौ यज्ञावचरौ पुण्यजन्मानौ ऽश्वमिषं वरुणं ब्रह्मचर्यमागच्छमवसन्त तस्य जाया संभवद्धि पुरस्तादायन्त प्रतिक्रशाय प्रत्यङ् निरद्रवन्तो ऽवेत्सैवं वा इन्द्रियं नृम्णं रेतो निर्लुप्य हरतीति तदनुपराहाय निरलुम्पद्यदेता आसीत्सो ऽश्वत्थ आरोहो ऽभवद्यदुल्वं सा शमी तस्मादेतौ यज्ञावचरौ पुण्यजन्मानौ हि प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत सो ऽश्वो भूत्वा संवत्सरं उन्यङ् भूम्याः शिरः प्रतिनिधायातिष्ठत्तस्याश्वत्थो मूर्ध उदभिनद्यदश्वत्थस्याश्वत्थत्वं तस्मादेष यज्ञावचरः प्राजापत्यो हि ॥ १२ ॥

Vgl Kāṭh 7, 15. 8, 10, Kap S 6, 5 7, 6, TBr 1, 1, 9

मनुर्वै प्रजाकामो ऽग्निमाधास्यमानो देवतायै देवताया अजुहोत्ततो मित्रावरुणयोराहुत्या पयस्युदतिष्ठत्तस्या घृते पदोरक्षरन्सा मित्रावरुणा ऐत्तां अभ्यूतामाहुत्या वै ममावयोरजनिष्ठा मनो-

---

1) M 2, H, Bb पुरूरवा, M 1 पुरूरवा, desgl B, ohne Accent, s oben 1, 9, 7 a A Die ganze Stelle findet sich auch MPaddh III, S 3a und dort steht पुरूरवा 2) M 2, H Bb यजतो नुदेते, desgl B ohne Accent, M 1 यजतो नुदेते 3) So corrigirt, in den Mss मातु° ohne Accent 4) So die Mss, desgl MPaddh III, S 3a, (ohne Accent) 5) So corr, M 2 H u Bb योंषा, M 1 योषा, desgl B, ohne Accent, u MPaddh III S 3a 6) So corrigirt, die Mss प्रतिघाय ebenso MPaddh III, S 3b (ohne Accent) 7) Bb सो 8) So corrigirt, M 1 u 2 उन्य, H, Bb, B एवं 9) So das Verb betont in M 1, H, Bb, in M 2 निधायातिष्ठत्

रन्वै त्वमसि' तं परेहीति' सा मनुमेत्सो ऽब्रवीदसुरा वा इमे पुण्यमन्या अग्निमादधते' तान्परेहीति' सा परैउत्ते ऽमुमेया आदधतायेमममयेमं' सा पुनरैत्तामपृछत' किमभ्यगन्निति' साब्रवीदमुमेवाया आधिपतायेमममयेममिति' सो ऽब्रवीत्सकृद्वावासुराः श्रियो ऽन्तमगुः' परा तु भविष्यन्तीति' सो ऽब्रवीद्देवा वा इमे पुण्यमन्या अग्निमादधते' तान्परेहीति' सा परैत्तं इमममया आदधतायामुममयेमं' सा पुनरैत्तामपृछत' किमभ्यगन्निति' साब्रवीदिममेवाया आधिपतायामुममयेममिति' सो ऽब्रवीत्सकृद्वाव देवाः सर्वेण साकं स्वर्गं लोकं समारुक्षन्नितः प्रदानात्तु यज्ञमुपजीविष्यन्तीति' यः सर्वेवेदसं दास्यन्त्स्यात्स इमममया आदधीतायामुममयेमं' तद्यथैव देवाः सर्वेण साकं स्वर्गं लोकं समारोहन्नेवमेव यजमानः सर्वेण साकं स्वर्गं लोकं समारोहति य एवं विद्वानग्निमाधत्ते' सो ऽब्रवीदृषयो वा इमे पुण्यमन्या अग्निमादधते' तान्परेहीति' सा परैत्तं इमममया आदधतायेमममयामुं' सा पुनरैत्तामपृछत' किमभ्यगन्निति' साब्रवीदिममेवाया आधिपतायेमममयामुमिति' सो ऽब्रवीदहं वाव ग्न्याधेयं विदांचकार' सर्वेषु वा एषु लोकेष्वृषयः प्रत्यष्ठुरिति' प्रति प्रजया च पशुभिश्च तिष्ठति य एवं विद्वानग्निमाधत्ते' यदमुमाधायेममादध्यादेव तदादध्याद्यद्वेममाधायामुमादध्यादेव तदादध्याद्यदिममेवाधायायेमममयामुं' तथा समृद्धा आधीयते' प्राचीनप्रवण आधेयस्तथा समृद्धा आधीयते' प्राचीनं मध्यमाद्गार्हपत्यादाधेयस्तथा

---

1) So H u Bb, in M I u 2 मद्गाना° ohne Accent 2) So M I u 2, vgl unten 2, 8 3, Kāty Çr 5, 1, 21, in H u Bb °प्रमम B °र्वविष

संमृद्धा आधीयते'र्या वै सा प्रथमाॅसीत्सा गौरभवत्सैडा सा मानवी घृतंपदी मैत्रावरुणी ॥ १३ ॥

Vgl. Kāth. 8, 4, Kap. 8, 6, 9, TBr. 1, 1, 4

॥ इति प्रथमकाण्डे आधानं नाम षष्ठः प्रपाठकः ॥

---

यंत्वा क्रुद्धः परोवंप मन्युंना सुमनस्तर।
सुकल्पमग्ने तंत्तव पुनस्त्वोद्दीपयामसि ॥
यंत्ते मन्युंपरोप्तस्य पृथिवीमनुदध्वसें[1]।
आदित्या विश्वे तंद्देवा वंसवः पुंनराभरन् ॥
यंत्ते भामेन विचकारानीशानो[2] हृदस्परि।
पुनस्तंदिन्द्रश्चाग्निश्च[3] वंसवः संमचीकृपन् ॥
पुंनस्त्वादित्या रुद्रा वसवः संमिन्धतां पुंनर्ब्रह्माणो वसुधीते[4] अग्ने।
घृतेन त्वं तन्वं॰ वर्धयस्व राायस्पोषा यजमान॰ सचन्ताम् ॥

---

1) So M 1 u. 2, P ॰अनुदध्वस इत्यनु दध्वसे । , dagegen H u. Bb ॰मंनु दध्वसे wie TS 1, 5, 3, 2 2) P ॰अनीशान । H u. Bb ॰रानीशानो 3) So M 1, P तत् I, aber M 2 स्तदि॰, H, Bb u. B स्तदि॰ 4) So M 1 u. 2 H, Bb u. B वसु धीयते पे, P वसुधीत इति वसु धीते । अग्ने ।, Kap S वसुधीतमग्ने, VS 12, 44, TS 4, 2, 3, 4 वसुनीथ यज्ञैः .

चयस्ति॰शतंन्तवो ये॰[1] वितन्वत इमं च यज्ञं॰ सुधया[2] ददन्ते ।
तेभिश्छिद्रमपिदध्मो यदत्र स्वाहा यज्ञो अप्येतु देवान्[3] ॥
मनो ज्योतिर्जुषतामाज्यस्य[4] विछिन्नं॰ यज्ञं॰ समिमं दधातु ।
इमं॰ यज्ञं॰ समंतनुं ततं[5] ना आ देवा यन्तु सुमनस्यमानाः ॥
बृहस्पतिर्नो हविषा घृतेन विछिन्नं॰ यज्ञं॰ समिमं दधातु ।
या इष्टा उषसो याश्च याऽन्यास्ताः संदधामि मनसा घृतेन ॥
अग्ने[6] ऽभ्यावर्तिन्नभि मावर्तस्वायुषा वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण ॥
अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः[7] ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा[9] ।
पुनर्नः पाह्यंहसः ॥

---

1) So die Mss  P ये । , aber Kaṭh 34, 19 यान्वितन्वत  TS 1, 5 10 4 ये वितत्निरे   2) So M 1, 2 u P, Bb सुधया, H सुधया desgl B ohne Accent, Kaṭh 34, 19 इम यज्ञ॰ स्वधया चे दद्रे, in Kap S fehlt der Vers  Vgl noch I, 8, 9   3) P देवांना ।   4) M 2 ॰मोषस्य   5) So M 1 u 2, B ततम्, H, Bb ततम् (ohne Accent), P ततंम । (der Accent nicht ganz sicher)  musste wohl ततं । न । lauten, Kaṭh 34, 19 समतनु तत्र आ॰   6) P अग्ने । अभ्यावर्तिन्नित्यभि आवर्तिन् ।  7) P सः । वर्तस्व ।, müsste aber मा । आ । वर्तस्व lauten   8) P उपावृत इत्युप आवृत ।   9) P इषा । आयुषा ।

सहं रय्यां निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

सलिलः[1] संलिगः[2] संगरस्ते न आदित्यां हविषो जुषाणां व्यन्तु स्वाहा ' केतः सुकेतः संकेतस्ते[3] न आदित्यो हविषो जुषाणां व्यन्तु स्वाहा ' देवजूते विवस्वन्नादित्य ते नो देवाः सत्यां देवहूतिं देवेभ्या सुवध्वमादित्येभ्यः स्वाहा ॥ १ ॥

Vgl. 1, 7 1 5 — TS 1, 5, 3 (punarādheyam); 1, 5, 10, 4, 2, 1, 2 3, 4, 2, 7 4, Kāṭh. 8, 14 31, 19, Kap 8 6, 2, VS III 44 2, 13 12, 7—10

अमेवै भागः पुनराधेयमेतं॰ वै भागं प्रेप्सन्न्यूर्धयति ' यद्यादधानो मन्येत ' वि स्यां ऋध्यता ' इत्युत्साह पुनरादधीत ' यमेव भागं प्रेप्सन्न्यर्धयति तं प्राप्यार्धयत्येव ' सर्वमेवाग्निर्य क्रियते ' यत्किंच सर्वमेवाग्नये भागं प्रदाय सर्वामृद्धिमृध्नोति ' न संभाराः संभृत्या ' न यजुः कर्तव्या ' इत्याहुः ' संभृतसंभारो ह्येष कृतयजुस्तदाहुः ' संभृत्या एवं संभाराः ' काङ्क्ष्यै॰ यजुरिति ' पुनरुत्सूतं॰ वासो देयं पुनर्णवो[5] रथः पुनरुत्सृष्टो ऽनड्वानेतानि वै पुनराधेयस्य रूपाणि ' रूपाण्येवास्याप्नोत्यवरुन्द्धे ' ऽग्निर्वा उत्सीदन्नपं ओषधीरभ्युत्सीदति ' दर्भा वा आपा ओषधयो ' यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोषधीभ्यो ऽध्याप्नावरुन्द्धे ' देवा असुरैर्विजयमुपयन्तो ऽग्नौ प्रियास्तन्वः संन्यदधत ' यन्नो जयेयुरिमा अभ्युपधावेम ' यद्यु जयेमेमा अभ्युपावर्तेमहीति ' तां

---

1) So M 1, P, desgl B, ohne Accent, Kath 8, 14, Kap S 8, 2, dagegen M 2, H u Bb सलीलं, vgl unten 1, 7, 5    2) So M 1, desgl B, ohne Accent, Kāth und Kap ■, die andern Mss संलीय s 1 7, 5    3) M 2 संकेतस्, vgl aber auch TS 1, 5, 3, 3    4) So die Mss vgl oben 1, 5, 4 स्या ऋध्यत्, Kath 8, 15 ऋध्यते स्या इति पुनराद्धीत, Kap S 6, 3 corrupt विपृध्यते भस्येति    5) So durch Correctur in M 2, die andern Mss पुनर्नवो, vgl 1, 5 6 1, 8, 4

देवा जित्वान्वैछन्त्सर्वेषां नः सहेति 'ऽसो ऽग्निरब्रवीद्य एवं मां महेत्वय आदधातै स एताभिस्तनूभिः संभवादिति 'तं देवा आदधत' तं एताभिस्तनूभिः संमभवन्पशवो वै देवानां प्रियास्तन्वः 'पशुभिरेव समभवंस्तद्य एवं विद्वान्पुनराधेयमाधत्त एताभिरेवास्यैस्तनूभिः संभवति 'पशवो वै देवानां प्रियास्तन्वः 'पशुभिरेव संभवति' मनुः पुष्टिकाम आधत्त 'स इमान्पोषानपुष्यत्तेन र्द्धं 'त्वष्टा पशुकाम आधत्त 'तं इमे त्वाष्ट्राः पशवः प्राजायन्त 'तेन र्द्धं 'प्रजापतिः प्रजाकाम आधत्त 'ता इमाः प्रजाः प्राजापत्याः प्राजायन्त 'तेन र्द्धं 'यो वै तमय्या आधत्त' स तेन वसुना समभवत्तत्पुनर्वसोः पुनर्वसुत्वं 'तस्मात्पुनर्वसा आधेयः 'पुनर्हि स तेन वसुना समभवद्धो वै तमाधत्ताभीति' तस्मात्पुनराधानस्याधेया' र्द्ध्या 'अभीत्येवापो मिथुनत्वाय ॥ २ ॥

Vgl TS 1, 5, 1 u 2, Kaṭh 8, 15, Kap S 8, 3, Mān Çr 1, 6, 5

अग्निर्वा उत्सीदन्त्संवत्सरमभ्युत्सीदति 'सप्तदश सामिधेनीः काऽर्याः 'पञ्च ऋतवो 'द्वादश मासा 'एषं संवत्सरः 'संवत्सरादेवैनमध्याप्नावरुन्द्धे 'तदाहुः 'पञ्चदश सामिधेनीः काऽर्या न सप्तदशेत्येतद्वै संवत्सरस्य संक्रमणतममेतेनाग्निष्टमाप्यते' 'पञ्चदश सामिधेनीः' पञ्चदशार्धमासस्य रात्रयस्ताभिरेव ता आप्नोति 'यावन्ति वै सामिधेनीनामक्षराणि तावन्ति संवत्सरस्याहानि 'तैरेव' तान्याप्नोति' ऽग्निर्वा उत्सीदन्त्संवत्सरमभ्युत्सीदति 'षड्वा ऋतवः संवत्सरस्ते-

---

1) So M 1 u 2, H u Bb यादधन 2) So M 2 H u Bb, M 1 °मादधत्ता°
3) So M 2, Bb und wohl auch M 1 in H B °दमरा° 4) M 2 संक्रामणतममे°, Kap S 8 4 संक्रमणतरम° 5) So M 1 u 2 in H Bb u B तैरेव

स्यात्पङ्क्तिभक्तयः सम्वत्सरो वा अग्निर्वैश्वानरो यत्पङ्क्तिभक्तयः सम्वत्सरादेवैनमध्याप्नावरुन्द्धे ऽथ यदग्निर्बहुधा विह्रियत इमांल्लोकान्पुमेति तस्मादग्निरेतावतीर्विभक्तीरानशे नान्या देवतायै यद् द्व्यक्षराः सतीश्चतुरक्षराः क्रियन्ते ऽथाचतुरं हि पशवो द्वन्द्वं मिथुनं चतयो वै प्रयाजा ऋतवोऽमृतवो यत्प्रयाजानन्तरियादृतूनन्तरियाद्यज्ञमुखं वै प्रयाजा यत्प्रयाजानन्तरियाद्यज्ञमुखमन्तरियात्तेद्यस्योत्सर्गस्योपरिष्टात्प्रयाजानां विभक्तीः कुर्याद्वीर्यं वै प्रयाजा वीर्ये विभक्तयो वीर्यादेवाधि यज्ञं करोति तावंगृद्धिमभिक्रामति नानाग्नेयं क्रियते ऽथ कस्मात्सह विभक्तयः प्रयाजैरिति सम्वत्सरे प्रयाजाः परीज्यन्ते कस्मादाग्नेयं क्रियते तस्मान्नानाग्नेयं ॥ ३ ॥

Vgl TS 1, 5 2, Kath 9, 1, Kap S 8, 4, Man Çr 1, 6, 3

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः ॥

इति पुरस्तात्प्रयाजानां जुहुयात् ॥

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

इत्युपरिष्टादनुयाजानां जुहुयादूर्जा वा एष पशुभिरस्तीदन्नसहोऽस्तीति पुनरूर्जा निवर्तस्वेति तदूर्जमेव पशून्पुनरवरुन्द्धे ऽथो तानेव भागिनः करोत्यथो उभयत एव यज्ञस्याशिषं वृङ्क्ते नानाग्नेयं क्रियते ऽथ कस्मादाज्यभागा इज्येते इति चक्षुषी वा एते

---

1) So corrigirt, M 1, H u Bb विह्रीयत, M [illegible] विहीयत, B विदीयत, cf Kap S 8, 4 यथा इदमग्नि बहुधा विहरति  2) So M 2 (desgl Kath, Kap S), H, Bb u B विभक्तीर॰, M 1 विभक्तिर॰ vgl weiter unten  3) Die Mss क्रीयंत  4) Die Mss ॰नन्तरीयादृतमन्तरीयाद्॰ (Kath hat die correcte Form)  5) Die Mss das erste Mal ॰न्तरीयाद्॰, das zweite Mal Bb correct.  6) So M 1 (= Kath), H, Bb, [illegible] विभक्ती (Kap S विभक्ती), [illegible] 2 विभक्ति

यज्ञस्य यदाज्यभागौ यदाज्यभागा अन्तरियाच्चक्षुषी यज्ञस्यान्तरियादिमा आयूंषि पवसा इति सोमस्य लोके कुर्याद्यदाग्नेयी तेनाग्नेयी यत्पावमानी तेन सौमी नानाग्नेयं क्रियते न सोममन्तरेत्यग्निर्मूर्धा दिवः ककुदिति प्रजाकामो वा पशुकामो वा सोमस्य लोके कुर्याद्यन्मिथुना तेन प्रजननवती[1] यद्वृतस्वती तेन सौमी यज्ञेन वा एष व्यृध्यते ऽयो ऽग्निमुत्सादयते पाङ्क्तो यज्ञो यत्पञ्चकपालो यज्ञमेव पुनरालभते ऽष्टाकपालः कार्यो गायत्रो ऽग्निर्गायत्रछन्दा आग्नेयं वा एतत्क्रियते यत्पुनराधेयं तस्मादष्टाकपालस्तन्न सूर्क्ष्यं पञ्चकपाल एव कार्यः पञ्चमोहा संधृतो[2] पञ्च ऋतुरभवंस्समानमेतद्यत्पञ्चमश्च ऋतुः षष्ठश्च यत्पञ्चकपालः संवत्सरादेवैनमध्याप्त्वावरुन्धे प्रजननं वा ऋतवो ऽग्निः प्रजनयिता यत्पञ्चकपालः प्रजननादेवैनं प्रजनयिता प्रजनयति ॥ ४ ॥

Vgl. 1, 7, 1 — TB 1, 5, 2, Kāṭh 9, 1—3, kap 8 8, 4 u 5

वीरहा वा एष देवानां ऽयो ऽग्निमुत्सादयते शतदायो वीरो यदेताः शताक्षराः पङ्क्तयो भवन्ति वीरं वावैतद्देवानामवदयते ऽन्यस्मै वै कमाधेयमन्यस्मै पुनराधेयं न वै तदाधेयेन स्पृणोति यस्मै कं पुनराधेयं पुनराधेयेन वाव तत्स्पृणोति जरा वै देवहितमायुरेतावतीर्हि समा एति यदेताः शताक्षराः पङ्क्तयो भवन्ति यावदेवायुर्वीर्यं तदाप्नोति तत्स्पृणोति तदवरुन्धे आयुषा वा एष वीर्येण व्यृध्यते ऽयो ऽग्निमुत्सादयत आयुर्वीर्यं हिरण्यं यद्धिरण्यं ददात्यायुषैवैनं वीर्येण समर्धयति शतमानं भवति शता-

---

1) So corrigirt; M 1 प्रजननवति, M 2 प्रजंनन्वती, H u Bb प्रजांनंनवती, B प्रजाणभवती, Kap 8 8, 5 hat das Richtige 2) So corrigirt, M 1 u 2 संधृतो, H u Bb संधृतो, B संधृतोः, Kaṭh 9, 3 संधृतो

युवा पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोत्यादित्या वा इत उत्तमाः स्वर्गं लोकमायंस्ते घृतपृष्ठितःप्रदानाद्धि[1] देवा यज्ञमुपजीवन्ति ते वा एते पुनरादधत त आर्ध्नुवन्नादित्या वा अस्मिंल्लोक ऋद्धा आदित्या अमुष्मिन्पशवो ऽस्मिन्नृतवो ऽमुष्मिन्त्संवत्सर एवं विद्वान्पुनराधेयमाधत्त उभयोरेव लोकयोर्ऋध्नोत्यस्मिंश्चामुष्मिंश्च सलिलः[2] सलिगः[3] संगरस्ते न आदित्या हविषो जुषाणा व्यन्तु स्वाहा केतः सुकेतः संकेतस्ते[4] न आदित्या हविषो जुषाणा व्यन्तु स्वाहा देवजूते विवस्वन्नादित्य ते नो देवाः सत्यां देवहूतिं[5] देवेभ्यः सुवध्वमादित्येभ्यः स्वाहेत्येतेवं ते तं पुनरादधत त आर्ध्नुवन्त्संददेते पुनराधत्ते ऽथ प्राप्नोत्यादित्या हि पुनराधेयम् ॥ ५ ॥

Vgl TS 1, 5, 2; 4, 4; Kāth. 9, 2 u. 8; Kap. S 8, 5 u 6.

॥ इति प्रथमकाण्डे पुनराधानं नाम सप्तमः प्रपाठकः ॥

---

प्रजापतिः प्रजा असृजत स वा अग्निमेवाग्रे मूर्धतो ऽसृजत स[6] यतो ऽग्निमसृजत तत्पर्यमार्ट्[7] ततो लोहितमवाहरत्तन्न्यमार्ट्[8] तत उदुम्बरः संमभवत्तस्मादुदुम्बरः प्राजापत्यस्तस्माल्लोहितं फलं प-

---

1) So M 2, H u Bb प्रदानाद्धि, desgl H, ohne Accent, M 1 °ष्ठितः प्रदानादि। — Kāṭh. u Kap ■ vgl TS 3, 2, 9, 7 2) H u Bb सलोर्दः, s oben 1, 7, 1 — Kāṭh. u Kap. S 8, 6 सलीगः, सलिल. 3) So M 1, M 2 सलिग., H, Bb u B सलीग., Kāṭh 9, 3 सलिग 4) H u Bb संकेतस्, vgl oben 1, 7, 1 5) H u Bb देवाहूति 6) fehlt in H, Bb 7) H u Bb पर्यमाट् 8) H u Bb तन्यमाट्

च्यते[1] सो ऽस्मात्सृष्टः पराङ्भागधेयमिच्छमानः स तदेव नाविन्दत्प्रजापतिर्यदहोष्यत्स स्वं चक्षुरादायाजुहोत्॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा॥ इति तद्वा अदृष्टचक्षुर्मन्यन्ते यदसा आदित्यो ऽमुं वा एतदस्मिञ्जुह्वतो मन्यन्ते सत्यं वै चक्षुः सत्येनाग्निहोत्रं जुहोति य एवं विद्वाञ्जुहोति भविष्णुः सत्यं भवति य एवं वेद कस्मै कमग्निहोत्रं हूयत इति ब्रह्मवादिनो वदन्त्यग्नये वा एतत्सृत्यै गुप्त्यै हूयते यत्सायं जुहोति रात्र्यै[2] तेन दाधार यत्प्रातरह्ने तेनोभौ सर्वान्यज्ञान्स्थापयन्त्यथ कस्मादेतद्देवाग्निहोत्रमुच्यत इति ब्रह्मवादिनो वदन्ति होत्रा वै देवेभ्यो ऽपाक्रामन्नग्निहोत्रे भागधेयमिच्छमाना यत्॥ अग्निहोत्रम्॥ इत्याह तेन होत्रा आभजति तेनैना भागिनीः करोत्येषा वा अग्रे ऽग्ना आहुतिरहूयत तदग्निहोत्रस्याग्निहोत्रत्वं सो ऽस्मात्सृष्टः पराङ्भागधेयमिच्छमानः स तदेव नाविन्दत्प्रजापतिर्यदहोष्यत्स्वा वागभ्युवदज्जुहुधीति स इत एवोन्मृज्याजुहोत्॥ स्वाहा॥ इति स्वा ह्येन[3] वागभ्यवदत्तत्स्वाहाकारस्य जन्म तस्मादग्निहोत्रे स्वाहाकारस्तस्माल्ललाटे च पार्ष्णी च लोम नास्त्यतो हि स तदादायाजुहोत्तस्माद्धास्य दक्षिणतः कोशा उन्मृष्टास्तमाहुर्ज्येष्ठलक्ष्मीति[4] प्रजापतिर्ह्येतदग्रे ज्येष्ठ उदमृष्टानेन संमिता स्रुक्कार्यानेन वा अग्रे ऽग्ना आहुतिरहूयत तस्या आहुत्याः पुरुषो ऽसृज्यत द्वितीयामजुहोत्ततो ऽश्वो ऽसृज्यत तस्मादश्व उभयाद-[5]

---

1) S. in Abhdlg. Ztschr. DMG XXXIII S. 199, Patañjali, Mahâbh. zu Pâ. 3, 1, 87. — Kâṭh. 6, 1, s. Monatsber. d. Kgl. Akad. d. Wiss. zu Berlin, Juli 1879, S. 683 flg. 2) M 2 रांत्रियै 3) Die Mss ह्येन॰ 4) S. TBr. 2, 1, 2, 2 5) So M 1 u. 2, m. II, Bb. u. B. उभयादत्त॰, diese Form als ved. Adj. angeführt Kâç. zu Pâ. 5, 4, 142; bisher unbelegt

न्नेनन्तर्हितो हि पुरुषादसृज्यत तस्मादेनं प्रत्यञ्चं तिष्ठन्तं मन्यन्ते ऽश्वो नू[1] पुरुषा[2] इति तृतीयामजुहोत्ततो गौरसृज्यत चतुर्थीमजुहोत्ततो ऽविरसृज्यत पञ्चमीमजुहोत्ततो ऽजासृज्यत षष्ठीमजुहोत्ततो यवो ऽसृज्यत सप्तमीमजुहोत्ततो व्रीहिरसृज्यत[3] ते सप्त ग्राम्याः पशवो ऽसृज्यन्त तानेवावरुन्द्धे य एवं विद्वानग्निहोत्रं जुहोति ॥ १ ॥

Vgl. Kâth. 6, 1. 2; Kap. S. 4, 1; TBr. 2, 1, 2.

अष्टमीमजुहोत्ततो वसन्तो ऽसृज्यत नवमीमजुहोत्ततो ग्रीष्मो ऽसृज्यत दशमीमजुहोत्ततो वर्षा असृज्यन्तैकादशीमजुहोत्ततः शरदसृज्यत द्वादशीमजुहोत्ततो हेमन्तो ऽसृज्यतौद्यता त्रयोदश्याहुतिरासीदथ शिशिरमसृज्यत तस्मादेतदृतूनामशान्तं क्रूरमहुताद्धि समभवदहुतादसृज्यत[4] तदाहुर्ब्रह्मवादिन ऋतवः पूर्वे ऽसृज्यन्ता३ पशवा३[5] इत्युत ऋतव उत पशवा इति ब्रूयादुभये३ इति सहासृज्यन्त स वा एनमित एव पुनः प्राविशदेतद्वा अग्निधानं[6] हस्तस्य यत्पाणिस्तस्मादेतौ हस्तस्याग्नितमौ[7] विदहति[8] यज्ञन्यमानो[9] हस्तौ प्रतिप्रसारयत्यग्नौ वा एतन्मोञ्चनमिच्छते[10] ऽग्निं वै पशवः

---

1) So M 1 u. 2; in H, Bb u. B नु 2) Vgl. Kâth. 6, 2 तस्मात्पुरुषपशवश्च मर्त्यं प्रत्यंचो न सु विशायन्ते इव 3) So M 2; in H u. Bb °दृशु° ohne Accent (M 1 u. Bl.) 4) So M 1; in H, Bb u. B ohne die ३; M 2 सृज्यंता: 5) So M 2; M 1 u. Bl. पशवा३; H u. Bb पशवा; vgl. 1, 6, 10 u. E. 6) So M 2, d. h. वा । एतत् ।; cf. das vorhergehende प्राविशत्; in M 1 u. Bl. ohne Accent तस्मादेतो; H u. Bb तस्मादेदेतो; desgl. B, ohne Accent. — Kâth. 6, 2; Kap. S. 4, 1 steht statt dieses Passus तस्माद्धस्ताभ्यामग्निर्मथ्यमानो जायते 7) So meine Correctur; die Mss. नं तमा°; vgl. aber नतराम् 8) So M 1 u. 2; in H, Bb u. B वंदहत 9) So meine Correctur im Anschluss an Kap. S. 4, 1 तस्माज्जन्यमानो हस्तौ प्रतप्य गृह्णात्यग्नावेव तमार्तिमिच्छते; die Mss. schwanken; M 1 °मानो; M 2 °माने; H, Bb u. B °मानो; auch Kâth. 6, 2 °मानो हस्तौ प्रमृज्जाति 10) Kâth. चार्तिमिच्छते

प्रविशन्त्यग्निः पशून् प्र ह वा एनं पशवो विशन्ति प्र स पशून्य एवं वेदेत्तद्ध स वा आह नारदो यच्च गां शयानां निर्जानाति मृतामेनामविद्वान्मन्यते ऽत्यग्निꣳ ३ह्येवैते प्रविशन्त्यग्निरेताꣳस्तस्मात्सर्वानृतून्पशवो ऽग्निमभिसर्पन्ति न ३ह्येत ऋ३ते ऽग्नेर्यज्जातः पशूनविन्दत तज्जातवेदसो जातवेदस्त्वं तामप्सु प्रासिञ्चत्तासापो ऽन्वदहꣳस्ता अशमये वज्रो ऽभवꣳस्तस्माज्जीव्यपि प्रोक्षतामिरभि न प्रोक्ष्यो यदभिप्रोक्षेद्वज्रेण यज्ञेन यजेत ताꣳ वै प्रजापतिरन्वैछत्तामप्स्वन्वविन्दत्तामोषधीषु न्यमार्ट् तस्मादोषधयो ऽनभ्यक्ता रेभन्त्योषधीभ्यः पशवः पशुभ्यो मनु३ष्या अनभ्यक्तो ह रेभते य एवं वेद तद्यो वसन्ताशिशिरे कक्षः स उपार्धेय एतद्ध तदग्नेः प्रियं धामैषा वाव साहुतिः ध्यायत्येवैतया प्रियं धामोपैत्यंयो पशुमान्भवत्यंयो आत्मानमेवैतया यजमानः पुनीते सह वा एता आस्तामग्निश्च सूर्यश्च समाने योना अंयसि लोहिते स आदित्य ऊर्ध्व उदद्रवत्तस्य रेतः परापतत्तदग्निर्योनिनोपागृह्णात्तदेनꣳ न्यदहत्तस्माद्यो ऽधपु प्रतिधुक्क्षीरꣳ विदहति तस्मादेतज्जुह्वति पशूनाꣳ वा एतत्पयो यद्व्रीहियवौ तस्मादेतज्जुह्वति नातिशृतं का३र्यꣳ रेतः शोषयेद्यद्विष्यन्देतोन्मादुको ऽस्य प्रजायामाजायेतामुष्य वा एतदादित्यस्य रेतो हूयते ऽमेध्यमशृतꣳ समुद्दन्तꣳ होत३व्यं तद्धि शृतं मेध्यं मिथुनं प्रजनिष्णु ॥ २ ॥

Vgl Kaṭh. 6, 2 3; Kap S. 4, 1 2

---

1) So meine Correctur, M 2 प्रोक्षो, M 1 प्रोक्षो; B प्रोक्ष्ये, H u Bb प्रोक्षेत्
2) So M 1 u 2, in H, Bb u B यक्षते
3) H न्यमार्ट्, Bb न्यमार्ट्
4) So M 1 u 2; in H, Bb u B वसन्तः शिशिरे
5) So M 2, desgl M 1 u Bl, ohne Accent; H धपुः, so B, ohne Accent, Bb वधुः, vgl Kap 5 4 2 तस्मादयस्पयसाय प्रतिधुक्षयति (cod °पयस°); fast ebenso Kath 6, 3 अयस्पयःपात्र (cod पः) प्रतिधुक्षयति

स्थाल्यां दुहत्यनया वा एतदुपसीदन्ति नहीमामितो नैतः स्कन्दत्यस्कन्नत्वायायंकृती भवत्यूर्ध्वकपाला सदेवत्वाय सा हि सदेवासुऽर्यै वा एतन्मांच यत्कुलालकृतं चक्रवृत्तं यत्र स्कन्देत्तदपो निनयेदापो वै शान्तिरापो निष्कृतिरापो भेषजं यत्र वा एता अस्या उपयन्ति ततस्ततरा ओषधयो जायन्ते वंऽहीयसीर्यदि दुह्यमानावभिष्याद्न्यया स्थाल्यां निर्णिज्य दोह्या यज्ञो हि यज्ञस्य प्रायश्चित्तिर्यद्यधिश्रितं स्कन्देद्यद्युद्वास्यमानं यद्युद्वासितं यद्युन्नीयमानं यद्युन्नीतं यदि पुरः पराहृतं होमाय पुनरवनीयान्याभिर्दुह्या यज्ञो हि यज्ञस्य प्रायश्चित्तिर्वारुणीमृचमनूच्य वारुण्या होतऽव्यं वरुणो वा एतद्यज्ञस्य गृह्णाति यदार्छन्ति निष्कृतिरेवैषा प्रायश्चित्तिरप्रतिषेक्यं स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्याथो तुस्तूर्षमाणस्याथो यः कामयेत वीरो मा आजायेतेत्यप्रतिषिक्तो वै घर्मस्तेजो ब्रह्मवर्चसं तेजस्वी ब्रह्मवर्चसी भवति स्तृणुते यं तुस्तूर्षेता हास्य वीरो जायता आज्येन होतऽव्यं यस्याप्रतिषेक्यं स्यादेतद्वा अप्रतिषिक्तं न तु स्कन्नस्य प्रायश्चित्तिरस्त्यथो न पशुमानिव भवति पशूनां वा एतत्पयः प्रवृज्यते शुचं पशुषु दधाति तेजो ऽशान्तं पशून्निर्दहति तस्मात्प्रतिषेक्यमेव स्याद्यदद्भिः प्रतिषिञ्चेद्वरो विनयेद् गांदोहसंनेजनेन प्रतिषिंच्यं तद्धि नापो न पयस्तदाहुः स्क-

---

1) So M 2 u 3 (n. Bl.), in H, Bb u B °स्कन्दत्याय°  2) S m Abhdlg Ztschr DMG XXXIII, S 198, Pa. 4 1, 30 Auch Man Çr 1,6, 1 अयंकृत्यां दोहूति; im Kâṭh. 6, 3, Kap S 4, 2 ist das Wort vermieden, durch यथाकृत ersetzt: यथाकृत तदसुर्यं यदयथाकृत तद्देवपात्र (so Kap S und mit einigen unwesentlichen Fehlern auch Kaṭh.)  3) So M 1 u 2 in H Bb u B °सुउर्यं°, vgl oben 1, 6, 10, a. d. Über s. Pâ. 4 4 123, beim Schol der ganze Satz citirt.  4) B पराहृत°  5) So M 1, die andern Mss. प्रतिषिच्य° दधि

न्दति वा एतर्हि वा एतद्दोहनात्पर्याक्रियते तर्हि स्कन्नमन्तर्हिता ऽह्यस्या वनस्पतया इति तदद्भिरेव प्रतिषिच्य स्तोकेनैकेन न हारे विनयति एवं पशूनां शमयति पशवो वै तेजो ब्रह्मवर्चसं मिथुनं वा आपश्च पयश्च मिथुनात्खलु वै प्रजाः पशवः प्रजायन्ते तन्मिथुनं तस्मादेवं मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायत ओदनेन होत३व्यं यस्य प्रतिषे३क्यं स्यादेष हि प्रतिषिक्तः शान्तो मेध्यो मिथुनः प्रजनिष्णुः ॥ ३ ॥

Vgl Kath 6, 8, Kap S 4, 2; (TBr 2, 1, 3), Man Çr 1, 6, 1, 3, 2

प्रजापतिः प्रजा असृजत ता वै तपसैवासृजत स वै स वाचमेवायच्छत्तस्यो वा एष उपैति यो वाचं यच्छति सृष्टिः प्रजानामग्निहोत्रमभवत एवं प्रजाः सृजत इतश्चामुतश्च निर्मुक्ते सूर्ये वाग्यत्तथ्यायो दुह्यमानायामथो अधिश्रित उन्नीयमान एवं यन्त३थ्यास्त्वंदेवक्लृप्तमन्नम् ॥ उद्भवः स्थ ॥ इत्यवेक्षेत ॥ उदहं प्रजया पशुभिर्भूयासम् ॥ इति प्रजायाः पशूनां सृष्ट्या अथो अ३भ्येवैनद्धारयति मेध्यत्वायाग्निहोत्रे वै दंपती[1] व्यभिचरेते पूर्वो यजमानस्य लोको ऽपरः पत्न्या यत्प्राचीनमुद्वासयेद्यजमानः प्रमीयेत यत्प्रतीचीनं पत्नी कं घर्ममभ्युदवीवसा इति ब्रह्मवादिनो वदन्त्युदीचीनमेवोद्वास्यमथ्यद्रुणी संजीयेतः सर्वमायुरितो नार्तिं नीतश्चतुरुन्नयति चतुष्पादस्तेन पशूनवरुन्धे द्विर्जुहोति द्विपदस्तेन यं कामयेतानुज्येष्ठं प्रजया ऋध्नुयादिति तस्य पूर्वमग्रा उन्नयेदथ कनीयो ऽथ कनीयो ऽनुज्येष्ठं प्रजया ऋध्नोति तदाहुः कनीयांसं वा एष यज्ञक्रतुमुपैति कनीयसीं प्रजां कनीयसः पशून्कनीयो ऽन्नाद्यं

1) Kap S 4, 3 वायापती. Kâth 6, 4 वायम्पती

पापीयान्भवति समितमिवाग्निमुन्नयेदथ भूयो ऽथ भूयः पूर्णमुत्तमं यज्ञस्याभिक्रान्त्यै तदाहुर्ज्यायांसं वा एष यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः पशून्भूयो ऽन्नाद्यं वसीयान्भवत्यर्धको ऽस्य पुत्रः कनिष्ठो भवतीति यदि कामयेत सर्वे सदृशाः स्युरिति सर्वान्समानवदुन्नयेत्सर्वे ह सदृशा भवन्ति न पश्चादुपसादयेदपक्रान्तिः सा यज्ञस्य यथैवोन्नयेत्तथा सादयेत्प्रतरं वा यज्ञस्याभिक्रान्त्या अनुध्यायिनं वा एतदपरं करोति यदपरस्मिंस्तपन्ति पूर्वस्मिञ्जुह्वति समयाग्निं हरन्ति[1] तेनैवैनं प्रीणात्यथो अग्निहोत्रस्य वा एतत्मा चमैषुपोदेवैनदपरस्माद्धि पूर्वं सृष्टं तमेतावत्यरमयंस्तस्मात्पुरो दृत्य जुहोति ॥ आयुर्मे यच्छ ॥ इति सादयत्यायुरेवास्मिन्यच्छ-त्यथो वर्चो मे यच्छ ॥ इति सादयति वर्च एवास्मिन्यच्छत्योषधीर्वा इमा रुद्रा विषेणाञ्जंस्ताः पशवो नालिशन्त ते देवाः प्रजापतिमेवो-पाधावंस्स प्रजापतिरब्रवीद्वार्यं वृणै भागो मे ऽस्त्विति वृणी-ष्वेत्यब्रुवंस्सो ऽब्रवीन्मह्येव३न्येव समिदसदिति तस्मात्प्राजापत्या समिद्देवेषु ह्यस्यैषा वार्यंवृता द्वे समिधौ कार्ये द्वे ह्याहुती एकैव कार्यैका हि प्रजापतिरेकधा खलु वै समिद्ध उत बह्वीराहु-तयो हूयन्ते ता अग्निनान्वबाकरोत्ता अस्वदयत्ताः पुनर्णवा[2] अजा-यन्तैतर्हि खलु वा अग्निहोत्रिणो दर्शपूर्णमासिने सर्वा ओषधयः स्वदन्ते यत्समिधमादधाति सर्वा एवास्मा ओषधीः स्वधया-मकः[3] ॥ ४ ॥

Vgl Kāṭh 6 4 5, Kap S 4, 3 4, Tär 2, 1, 3 u 4, Man Çr 1, 6, 1

भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतावेदेतद्वै यद्वैतत्सत्यमेतदृतं न

1) M 2 हरति, vgl aber das Vorhergehende 2) So M 1, die andern Mss पुनर्णवा 3) So alle Mss.

वा एतस्माद्दतें यज्ञोऽस्ति तस्मादेवं वदितव्यम् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ इति गर्भिण्या वाचा गर्भं दधाति मिथुनया वाचा मिथुनं प्रजनयति यद्वाचा च जुहोति यजुषा च तन्मिथुनं यत्तूष्णीं च जुहोति मनसा च तन्मिथुनं स्थाणुर्वै पूर्वाहुतिरतिहाय पूर्वामाहुतिमुत्तरा होतव्या स्थाणुमेव छम्बट्करोत्युत्तराहुतिर्भूयो होतव्या यज्ञस्याभिक्रान्त्यै पशूनेव पूर्वयाहुत्या स्पृणोति ब्रह्मवर्चसमुत्तरयाग्नेयी सायमाहुतिस्तया रेतः सिञ्चति तद्रेतः सिक्तं रात्री गर्भं दधाति तत्सौर्या V. तः प्रजनयामकरिये होतव्याय पराय पुनरवस्तात्प्रातरवस्ताद्धि नो प्रजातिः प्रजननं हि सौरी तच्च सूर्यो परापीव होत्र- चमेः यज्ञस्याभिक्रान्त्या उदङ्ङुद्दिशति ॥ अनाभो मृड धूर्ते नमस्ते अस्तु रुद्र मृड ॥ इत्येता वै रुद्रस्य तन्वः क्रूरा एतानि नामान्येताभिर्वा एष पशूञ्छमायते ता एवास्य भागधेयेन शमयत्यवाचीनं सायमेवमार्ष्टि तस्मात्सायमवाची प्रुष्वैत्यूर्ध्वं दिवोन्मार्ष्टि तस्मादूर्ध्वा दिवेति पराचीनमिव वा एतद्यदग्निहोत्रं यमुरस्ताद्वाजुयं वदति धृत्या अनिर्मार्गाय यो वा अग्निहोत्रस्य वैश्वदेवं वेदाघातुक एनं पशुपतिर्भवत्यघातुको ऽस्य पशुपतिः पशून्प्राञ्चासीनो जुहोति देवांस्तेन प्रीणाति हुत्वोञ्चिशंपति पशूनेव यजमानायोञ्चिशंपत्युदङुद्दिशति रुद्रं तेन निरवदयते दक्षिणतो निमार्ष्टोपधीच्च तेन पितॄंश्च प्रीणाति प्राश्नाति मनुष्यांस्तेन प्रीणात्यङ्गुल्या प्राश्नाति यदस्वाय न दतो गमयेद्धदतो गमये-

---

1) M 2 रात्रियी, so eigentlich auch [illegible] 1 aber corrigirt 2) So M 1 2 u P, (ebenso Kap S 4, 6) die andern Mss धूर्त 3) So M 1 u 2 in H, Bb, [illegible] शमयते s 1, 8, 6 4) H Bb चानिर्भागाय 5) Von hier bis ऽस्य in H, Bb, [illegible] fehlend

त्सर्पा एनं घातुकाः स्युः सर्पानेव शमयत्यहिंसायै ॥ पूषासि ॥ इति यजुर्वेदे पशवो वै पूषा पशूनेवावरुन्द्धे ऽशान्तो वा एषो ऽप्रीतः पुरुषमेधं वा एष प्रतीक्षते यजमानमेवं हव्यं यदग्निहोत्रहवणीं निष्टपत्यशान्तस्तेनाग्निहोत्रहवणीं प्रतप्य हस्तो ऽवधेयो हस्तो वा प्रतप्याग्निहोत्रहवण्यामवधेयस्तेनैवैनं शमयति तेन प्रीणाति शान्त एनं प्रीतो न हिनस्तीत्यथ पर्यावर्तेत एवं हि यज्ञः पर्यावर्तते ऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तते होतव्यं गार्हपत्या३न्न होतव्या३मिति मीमांसन्ते ऽनुध्यायी वा एष रुक्षो होतव्यमेव ॥ अग्ने गृहपते परिषद्य जुषस्व स्वाहा ॥ इति जुहुयात्तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमननुध्यायिनमरुक्षं करोत्यथ यत्पूर्वामाहुतिं हुत्वोत्तरां होष्यन्नास्ते तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमननुध्यायिनमरुक्षं करोत्यथ यत्पूर्वामाहुतिं हुत्वोत्तरां होष्यन्प्रतीक्षते तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमननुध्यायिनमरुक्षं करोत्यथ यदेवास्य गृह उपह्रियते यदेनमग्निमभित आसीना याचन्ति तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमननुध्यायिनमरुक्षं करोति ॥ ५ ॥

Vgl Kāṭh 6, 6, Kap 4, 4 6, TBr 2, 1, 4, Mān Çr 1, 6, 1

द्वे दुहन्त्यग्निहोत्राय ज्यायान्वा एकस्या दुग्धादग्निहोत्रिणो लोको यद्द्वे दुहन्ति ज्यायांसं वा एतं लोकं यजमानो ऽभिजयति मनुष्य वा इदं मनायी च मिथुनेन प्राजनयताम् यत्स्थाल्यां च दो-

1) So M 1, die andern Mss वार्धेयो 2) So M 1, desgl M 2, ohne Accent die andern Mss °मवार्धेयस 3) So schreibe ich, M 1 गार्हपत्यां न, H, Bb गार्हपत्यान्नं M 2, B ohne Accent °पत्यान्न, vgl oben 1 6, 10, unten 1, 8, 7 4) M 1 होतव्यामीति, H, Bb होतव्या३मिति, M 2, B होतव्यामिति aber vgl 1, 6, 10 1, 8, 7 5) M 1 पर्षद 6) So M 2, M 1 एतं°, H Bb, B एतल्लो° 7) S m Abhdlg ZDMG XXVIII, S 197, Pā 4, 1, 38. 8) So M 1, M 2 प्रजनयता, B प्रजयता°, H, Bb प्रजमयाता°

हनेन च दुहन्ति मिथुनादेव प्रजायते ॥ सजूर्जातवेदो दिवा पृथिव्या जुषाणो अस्य[1] हविषो वीहि स्वाहा ॥ इति जुहुयादेषा वा अस्य जातवेदस्या तनूः क्रूरतया वा एष पशूञ्छमायते तामेवास्य भागधेयेन शमयति यदि तदति शमायेत ॥ अग्ने दुःशीर्ततनो[2] जुषस्व स्वाहा ॥ इति जुहुयादेषा वा अस्य गृणती[3] तनूः क्रूरतया वा एष पशूञ्छमायते तामेवास्य भागधेयेन शमयति यदि तदति शमायेत ॥ द्वादश रात्रीः सायंसायं जुहुयाद्द्वादश वै रात्रयः संवत्सरस्य प्रतिमा संवत्सरो वा अग्निर्वैश्वानरस्तमाहिताग्नयो दर्शपूर्णमासिन इन्धते तेषां वा ऋतव एव दारूणि येऽस्य विष्ठा अङ्गारास्ते मासा ये घो दिशास्तेऽर्धमासा अहोरात्राणि मुर्मुरा यत्तद्धूमं ज्योतिस्तद्वैश्वदेवं यल्लोहितं तद्वारुणं यत्सुवर्णं तद्बार्हस्पत्यं यन्न लोहितं न सुवर्णं तन्मैत्रं यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव भाति तद्देवानामाऽऽस्यमग्नौ अमुष्य च वा एतदादित्यस्य तेजो मन्यन्ते ऽग्नेश्च तस्मात्तर्हि होतव्यं यऽद्धोवासन्नमिदधाति तद्धिनोत्याविर्वै नामैषाहुतिरविर्भूयं देवमनुष्येषु गच्छति य एवं वेद न समिदग्निहोतव्या ऽप्रतिष्ठिता साहुतिर्नो यथा ब्रीवावसर्वेद्यता सा तस्मैव होतव्यं यथाग्निं प्यवेयात्सा हि यता सा प्रतिष्ठिता तस्मान्महानग्निहोत्रस्येध्मः काऽर्यो यो वै वहु ददिवान्वहूृीजाऽनो ऽग्निमुत्सादयते ऽस्तिष्ठदे तस्य तदीजानां वै सुकृतो ऽमुं लोके नक्षन्ति ते वा

1) So P u H, in M 1, Bb ohne Accent, (in M 2 das ganze Blatt ohne Accent.) 2) P fehlerhaft दुःशीर्ततनम इति दुःशीर्ष तमः। 3) So M 1 u 2 (ohne Accent); in B शीणती, H u Bb शीर्णति 4) in H, Bb betont एधते 5) So M 1 u H; Bb नेमाय येव, so B, ohne Accent M 2 नेमाय विव, Kāṭh 6, 7 नेमायेव, Kap. S. 4, 6 नेमाएव (wie im Kāṭh zu corrigiren), s unten 2, 2, 5. 6) So M 1 (der Anfang corrigirt, eigentlich दिवा॰) desgl M 2, ohne Accent; H, Bb u. B वीवावसंवे॰ 7) So M 1 u 2, Bb, in H ॰द्दंयत्ता desgl B, ohne Accent. 8) H यत्ता; desgl B, ohne Accent

एतानि यन्नक्षत्राणि यदाहुर्ज्योतिरवापादि तारकावापादीति ते वा एते ऽवपद्यन्त आभ्यां स्थिते त इदं यथालोकं सचन्ते यदमुतः प्रच्यवन्ते ऽथ यो बहु ददिवान्बह्वीजानो ऽग्निहोत्रं जुहोति दर्शपूर्णमासौ यजते चातुर्मास्यैर्यजते बहूनि सत्राण्युपैति तस्य वा एतदक्षय्यमपरिमितं तिरो वा ईजानाद्यज्ञो भवति तदाभ्यामेवाग्निभ्यां दग्ध३व्यः स्वं वा एतदिदमन्वारोहत्यपरेण दग्ध३व्या३ः पूर्वेणा३ इति मीमांसन्त उभौ समाहत्यान्तरा दग्ध३व्यस्तदयकूमतमं गृह्णीयान्नक्तमग्निमसु३र्यां वै रात्रिर्ज्योतिषैव तमस्तरति दिवा ह वा अस्मा अस्मिंल्लोके भवति प्रास्मा असौ लोको भाति य एवं वेद ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वेदेभ्यो वा एतल्लोकेभ्य इष्टका उपदधाति स्वर्गस्य लोकस्य समष्ट्यै यत्सायं जुहोति सहस्रं तेन कामदुघा अवरुन्द्धे यत्प्रातः सहस्रं तेन यदस्याग्निराधीयते सहस्रं तेन यमराज्यं वा अग्निष्टोमेनाभिजयति सोमराज्यमुक्थ्येन सूर्यराज्यं षोडशिना स्वाराज्यमतिरात्रेणैतानि वै सर्वाणीन्द्रो ऽभवदेतानि सर्वाणि भवति य एतैर्यजते सर्वमेतद्भवति य एवं वेद हविष्मान्वा एको देवयाज्येकः सहस्रयाज्येको यो ऽग्निहोत्रं जुहोति स हविष्मान्यो दर्शपूर्णमासौ यजते स देवयाजी यश्चातुर्मास्यैर्यजते स सहस्रयाज्यग्निहोत्रं वै सर्वे यज्ञक्रतवः सर्वान्यज्ञक्रतूनवरुन्द्धे य एवं विद्वानग्निहोत्रं जुहोति ॥ ६ ॥

Vgl Kāth. 6, 7, Kap S 4, 6

1) M 1 दर्धतैनस्य, desgl M 2 ohne Accent 2) So M 1 (nur ohne die ३) desgl M 2, ohne Accent (das ganze Blatt ohne Accent) aber H, Bb u B दग्व्यं 3) M 1 पूर्वेणं, H u. Bb पूर्वेणा, desgl M 2 u B, ohne Accent, die ३ fehlt in d Mss 4) So M 1, die andern Mss °मसूर्यां, cf 1, 6, 10 a A

प्रैयमेधा वै सर्वे सह ब्रह्मवादिनस्ते ऽग्निहोत्रेण समराधयंस्तेषां त्रिरेको ऽजुहोद्द्विरेकः सकृदेकस्तेषां यस्त्रिरजुहोत्तमपृच्छन्कस्मै त्वमहौषीरिति सो ऽब्रवीत्त्रेधा वा इदमग्नये प्रजापतये सूर्यायेत्यथ यो द्विरजुहोत्तमपृच्छन्कस्मै त्वमहौषीरिति सो ऽब्रवीद्द्वेधा वा इदमग्नये च प्रजापतये च सायं सूर्याय च प्रजापतये च प्रातरित्यथ यः सकृदजुहोत्तमपृच्छन्कस्मै त्वमहौषीरिति सो ऽब्रवीदेकधा वा इदं प्रजापतय एवेति तेषां यो द्विरजुहोत्स आर्ध्नोत्तस्येतरे साजात्यमुपायन्नृध्नोति य एवं विद्वानग्निहोत्रं जुहोत्युपास्य समानाः साजात्यं यन्ति प्रदोषमग्निहोत्रं होतव्यं व्युष्टायां प्रातर्वृक्षाग्रेभ्यो ऽग्निं जनयन्ति तदाहुः परा वा एतस्याग्निहोत्रं पतति यस्य प्रदोषे न जुह्वतीति यदि मन्येतर्तुमत्यनैषमिति ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वेदेस्तेनैव सर्वं नात्येति ॥ दोषा वस्तोर्नमः स्वाहा ॥ इति जुहुयादृतुमेव नात्यनैषीद्धोतव्या३ं[1] होतव्या३मिति[2] मीमांसन्ते यस्याहुतमग्निहोत्रं सूर्यो ऽभ्युदियाद्धोतव्यमेवाग्नये वा एतर्हि गुप्त्यै हूयते प्रजननं नु छम्बट्करोति यदि मन्येतर्तुमत्यनैषमिति ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वेदेस्तेनैव सर्वं नात्येति ॥ प्रातर्वस्तोर्नमः स्वाहा ॥ इति जुहुयादृतुमेव नात्यनैषीद्यथा कारुद्वेषिणो जुह्वत्येवमस्य हुतं भवति यस्याग्निमनुद्धृतं सूर्यो ऽभिनिम्रोचेद्यो ब्राह्मणो बहुवित्स उद्धरेत्सर्वेणैवैनं ब्रह्मणोद्धरत्यग्निहोत्रेणानुद्रवेद्भागधेयेनैवैनं प्रणयत्यथो भागधेयेनैवैनं समर्धयति वरो दक्षिणा सर्वत एवैनं दिग्भ्यो वरेण च्यावयति यस्योभा अनुगता अभि-

1) So H, desgl B, ohne Accent, M 1 °तव्यां३, desgl. M 2, ohne Accent, in Bb fehlend S. 1, 6, 10 1, 8, 5   2) So H u Bb, desgl B, ohne Accent; M 1 होतव्यामिंतिः desgl M 2, ohne Accent

निर्मोचेद्यस्य वाभ्युदियात्पुनराधेयमेव तस्य प्रायश्चित्तिर्यथा वै पथ्यौ वर्तनी एवं दर्शपूर्णमासौ यथान्तरमेवमग्निहोत्रमेवं वा अग्निहोत्रिणो दर्शपूर्णमासिने स्वर्गौ लोकावनुभात्युपाप्यानि हवींषि वसन्त्यथ कस्मादग्निहोत्रे नोपवसन्तीति ब्रह्मवादिनो वदन्ति प्रततं वा एतदपरिमितमसंस्थितमश्नाति मा संमुष स्त्रियमेति तस्मान्नोपवसन्ति पशुव्रतेन भवितव्यं तूष्णीमिव पशवः संभवन्ति ते[1] मेध्या यत्तूष्णीं स्त्रियमुपैति मेध्यतरस्तेन भवति हिंकृत्योपेयादेवमिव हि पशव उपयन्ति मेध्यत्वाय संस्थाप्या३म्[2] संस्थाप्या३-[3]मि३ति मीमांसन्ते ऽग्निहोत्रं यत्संस्थापयेत्तृणमक्ष्णानुप्रहरेत्सा ह्यग्निहोत्रस्य संस्थितिस्तदाहुर्यदा वै जीर्यते यदा प्रमीयते यदार्तिमार्छत्यथाग्निहोत्रं संतिष्ठता इति तन्न संस्थाप्यं मनसा वा इमां प्रजापतिः पर्यगृह्णादियं वा अग्निहोत्रस्य वेदिरियमुपयाम ओषधयो बर्हिः स्रुग्वा[4] पौष्णी दिशः परिधयो यत्किंचाभ्याधीयते स इध्मो यजमानो यूप उच्छ्रीयमाने स्थेयमेवमिव हि यूपः समृद्ध्यै मध्यतो वा एष यज्ञः प्रततो यदग्निहोत्रं तस्मादग्निहोत्री दर्शपूर्णमासी सर्वं बर्हिष्पूं ददाति मध्यतो ह्येतद्यज्ञस्य दीयते यदग्निहोत्रं होतव्यं राजन्यस्याग्निहोत्रा३म् होतव्या३मि३ति मीमांसन्त आमादिव वा एष यद्राजन्यो बहु वा एषो ऽयज्ञियममेध्यं चरत्यनवं जिनाति ब्राह्मणं तस्माद्राजन्यस्याग्निहोत्रमहो-

---

1) So M 1 u. 2, in H, Bb, B fehlt ते 2) So M 1, desgl. M 2 u. B, ohne Accent, H, Bb संस्थाप्या३म् 3) So M 1, desgl. M 2, B, ohne Accent, H, Bb संस्थाप्या३मिति 4) M 1 ग्रुग्वा 5) So M 1, eigentlich auch M 2 so, aber dann corrigirt wie H, Bb u. B दीयते 6) So H u. Bb, desgl. B, ohne Accent, M 1 °होत्रा३ं, desgl. M 2, ohne Accent 7) In den Mss. fehlt die ३

तदृतं वै सत्यमग्निहोत्रं ब्राह्मणं ऋतं सत्यं तस्माद्ब्राह्मणस्यैव होतव्यमथो ब्राह्मणायैवास्यायतो[1] गृहे[2] आहरेयुस्तद्धुतमेवास्या[3]ग्निहोत्रं भवत्यथो य ऋतमिव सत्यमिव चरेत्तस्य होतव्यमनुसंतत्यै ॥ ७ ॥

Vgl. Kāṭh. 6, 6. 8; Kap. S. 4, 5. 7.

याग्निहोत्र्युपसृष्टा निषीदेद्यस्यान्नं नाद्यात्तस्मै तां दद्यादवर्तिं वा एषा यजमानस्यानुत्सद्य निषीदति तयैवैनां सह निरवदयते गृहे तु तस्य ततः परो नाश्नीयाद्यदश्नीयादार्तिमार्छेद्यस्याहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदग्निना च सहाग्निहोत्रेण चोद्धरेद्भागधेयेनैवैनं प्रणयत्यथो भागधेयेनैवैनं समर्धयत्यथाभिमन्त्रयेत[4] ॥

इत एव प्रथमं जज्ञे[5] अग्निरेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥

इत्येते वा एतस्य योनयः[6] स्वेभ्य एवैनं योनिभ्योऽधि प्रजनयति ॥ इषे राये रमस्व सहसे द्युम्नायोर्जेऽपत्याय[7] ॥ इत्येतान्येवावरुन्द्धेऽथो रमयत्येवैनम् ॥ सम्राडसि स्वराडसि सुषदा[8] सीद ॥ इति सुषदे[9]वैनं सादयति ॥ सारस्वतौ त्वोत्सौ प्रावताम् ॥ इत्यृक्सामे वै सारस्वता उत्सौ ताभ्यामेवैनं प्रावति ताभ्यां समर्धयत्यग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद्ब्राह्मण्यं यवमयं चरुं यस्याहुतेऽग्निहोत्रे पूर्वो

---

1) M 2 ब्राह्मणस्यैवास्या°   2) H, Bb, B गृहे   3) M 1 तद्धुतम°; H, Bb तत् हुतम°; M 2 ohne Accent.   4) Die Mss. schwanken, M 1 यंस्याहुतायोपसृ°; desgl. M 2, ohne Accent; H, B यंस्यांस्याहुतांयोपसृ°, Bb यस्यास्य आयात°   5) M 2 °ज्ञ्यो भिम°   6) So M 1 u. 2; in H, Bb, B प्रथमं° यथे, P प्रथमः यथे।   7) P °पत्याय।   8) So M 2 (ohne Accent); P °सुषदा। सुषदेति सु सदा।; M 1, H, Bb u. B सुषदा   9) So M 2 (ohne Accent), M 1, H, Bb u. B सुषदेवैन°

ऽग्निरनुगच्छेत्तमो वा एतस्य यज्ञं युवते यस्याहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छति यदग्नये ज्योतिष्मते ज्योतिषैवास्य यज्ञं समर्धयति वारुणीं चरुं निर्वपेद्वारुणो वरुणादेवास्याधि यज्ञं स्पृणोति यस्याहुते ऽग्निहोत्रे ऽपरो ऽग्निरनुगच्छेत्तत एवं प्राञ्चमुद्धृत्यान्ववसायाग्निहोत्रं जुहुयादथाभिमन्त्रयेत ॥ भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति समनसा एवैनौ करोति यजमानस्याहिंसाया एतौ वै तौ या आहुर्ब्रह्मवादिनो नैकः कुब्जिर्द्वौ व्याघ्रौ बिभर्तीत्यग्नये ऽग्निमते ऽष्टाकपालं निर्वपेद्यस्याग्नी अग्निमभ्युद्धरेयुर्देवताभ्यो वा एष समदं करोति यस्याग्नी अग्निमभ्युद्धरन्ति यदग्नये ऽग्निमते देवता एवास्मै भूयसीर्जनयति वसीयान्भवति ॥ ८ ॥

Vgl TS 2, 2, 4, 6—8, 4, 2, 5, 1, VS I° 60, Man Çr 3, 3

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥

इत्यभिमन्त्रयेत यस्याहुतमग्निहोत्रं सूर्यो ऽभ्युदियादनुख्यायैवैनत्पुनरवरुन्द्धे तदाहुरमुं वा एष लोकं समारोहयति सह प्रजया पशुभिश्च यजमानस्य तस्मादुत बहुर्याहिताग्निरपशुर्भवतीति तदुपस्थेयः ॥ इहैव क्षेम्य एधि मा प्रहासीर्मामुमामुष्यायणम् ॥ इत्यस्मिन्नेवैनमेतं लोके दाधार सह प्रजया पशुभिश्च यजमानो वसीयान्भवति मैत्रं चरुं निर्वपेत्सौर्यमेककपालं यस्याहुतमग्निहोत्रं

---

1) H पूर्वोग्निर°, Bb पूर्वोग्निर° 2) So M 1, desgl M 2, ohne Accent, H कुब्जिर्द्वौ desgl B, ohne Accent, Bb कुब्जि द्वौ, der Sinn etwa „Ein Gebüsch (Röhricht) fasst nicht zwei Tiger“ 3) So corrigirt M 1 u 2 °भ्युद्°, H, Bb u B °भ्युद्°, P °भ्युद्धरत् 1, aber Man Çr 3, 3 °भ्युद्धरेदिति 4) So M 2, nur ohne Accent, m M 1 H अनुख्यायैवैनत्, Bb अनुख्यायेवैनत्, B अनुख्यायैवैनुत् 5) P क्षेम्यं । 6) P मामुं । अमुष्यायणं ।

सूर्यो ऽभ्युदियान्मित्रो वा एतस्य यज्ञं युवते यस्याहुतमग्निहोत्रं सूर्यो ऽभ्युदेति मित्रं महयेन्मैत्रो मित्रादेवास्याधि यज्ञं स्पृणोत्यथ यत्सौ३र्यो ऽमुनैवास्यादित्येन पुरस्ताद्यज्ञं समर्धयति यस्याहुतमग्निहोत्रं सूर्यो ऽभ्युदियादग्निं समाधाय वाचंयमौ दंपती सर्वाहमुपासीयातां द्वयोर्गवोः सायमग्निहोत्रं जुहुयादुभयमेवास्मै भागधेयं प्रयच्छति सायन्तनं च प्रातस्तनं च यद्वै पुरुषस्यामयत्यश्नाती३ नाश्नाती३[2] इति वै तमाहुर्नाश्नातीति चेदाहुस्तर्ह्यैव स्तो ऽमृतेति यन्नाश्नीतो न व्याहरतो ऽन्वेवैनमभ्रातां तपसैनं पुनरवरुन्धाते ऽग्नये व्रतपतये ऽष्टाकपालं निर्वपेदग्निर्वै देवानां व्रतपतिस्तमेव भागधेयेनोपासरत्स एनं व्रतमालम्भयति यस्याग्निरपक्षायेद्यच्चैवैनमनुपरागच्छेत्तत्समाधायान्ववसायाग्निहोत्रं जुहुयादिति वा एतदग्निर्यदपक्षायति यच्चैवैनमनुपरागच्छति तत एनं पुनरवरुन्द्धे ऽग्नये पथिकृते ऽष्टाकपालं निर्वपेद्यस्याग्निरपक्षायेदहिप्पथं वा एष एति यस्याग्निरपक्षायत्यग्निर्वै देवानां पथिकृत्तमेव भागधेयेनोपासरत्स एनं पन्थामपिनयत्यनड्वान्दक्षिणा स हि पन्थामपिवहत्यग्नये शुचये ऽष्टाकपालं निर्वपेद्यस्याभ्यादाव्येन संसृज्येताशुचितर इव वा एष यदभ्यादा३व्यो यदग्नये शुचये शुचिमेवैनं मेध्यं करोत्यग्नये क्षामवते ऽष्टाकपालं निर्वपेद्यस्याहिताग्नेः सतो ऽग्निर्गृहान्दहेदग्निर्वा एतस्य क्षामो गृहानभ्युच्यति स दहत्येवापरं[3] यदग्नये क्षामवते यैवास्य क्षामा प्रिया तनूस्तामेवास्य भागधेयेन शमयत्यथाहुर्को ऽस्यापरम-

1) So M 1 u 2, s Ztschr DMG XXXIII, S 193, Pâ 5, 4, 88 6, 4, 7, H, Bb u B सर्वाङ्गम° 2) So M 1 (nur die ३ über der Linie); desgl M 2, ohne Accent, in Bb °श्नाति नाश्नातीति, H °श्नाति नाश्नातीति, in B verstümmelt °श्नातीति 3) M 1 दहत्ये°

पिगृह्णान्भवति यस्याग्निरनुगच्छेत्तेभ्य एवावक्षाणेभ्यो ऽधि मन्थितऽ३व्यस्तेदेनं स्वाद्योनेः प्रजनयति यदि न तादृशानि चावक्षाणानि स्युर्भस्मनारणी संस्पृश्य मन्थितऽ३व्यः स्वादेवैनं योनेः प्रजनयत्यग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं निर्वपेद्यस्याग्निरनुगच्छेन्न हि वा एतस्मा अपिधीयते ऽथैषो ऽनुगच्छत्योषधयो वै पावका ओषधीरेवास्मै पावका भागधेयमपिदधाति प्रजननाय ॥

पयस्विंशन्तनावो यं विसन्वँत इमं च यज्ञं सुधया ददन्ते ।
तेभिश्छिद्रमपिदध्मो यदत्र स्वाहा यज्ञो अप्येतु देवान् ॥

इति जुहुयाद्यद्वनो वा रथो वान्तरा वियायादेतावन्तो वै यज्ञस्य तन्तवो देवता वा एतास्तान्वा एतत्समवृक्षन्तीः संदधात्येतद्ध स्म वा आहुर्दाक्षायणास्तन्तून्समवृक्षद्गामन्वत्यावर्तयेति गौर्हि यज्ञिया मेध्येदं विष्णुर्विचक्रम इति पदं गोपयति विष्णोः स्विदेव यज्ञस्य विक्रान्तमकरऽ३मो ऽन्वतिपित्सति शान्त्यै ॥ ९ ॥

Vgl Mân Çr 3, 3 1

रौद्रं गवि संह्रायमुपावसृष्टमाश्विनं दुह्यमानं सौम्यं दुग्धं वारुणमधिश्रितं मैत्रं शरोगृहीतं मारुतं विन्दुमदाग्नेयमुदन्तं सारस्वतं विष्यन्नं वैष्णवं प्रतिनीयमानं स्वऽ३र्ग्यमुद्वासितं त्वाष्ट्रमुन्नीयमानं धातुरुन्नीतं वैश्वकर्मणमुद्यतं सावित्रं प्रणीयमानं द्यावापृथिवीयं प्रह्रियमाणमैन्द्राग्नमुपसन्नं प्राजापत्यं समिधि वैश्वदेवं हुतम् ॥ १० ॥

॥ इति प्रथमकाण्डे अग्निहोत्रब्राह्मणं नाम अष्टमः प्रपाठकः ॥

1) So M 1, M █ von hier ab nicht mehr vorhanden H, Bb, R तादृशाणीवाद°
2) So M 1 u H, in Bb नहि 3) S den ganzen Vers oben 1, 7, 1

चित्तिः स्रुक्[1] चित्तमाज्यं[2] वाग्वेदिराधीतं बर्हिः केतो अग्नि-[3] र्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्यु-[4] रिन्द्र गच्छ स्वाहा पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्नीन्मित्र उपवक्ता वाचस्पते वाचो वीर्येण संभृततमेनायक्षसे[5] यज्ञपतये वार्यमा स्व- स्कर्वाचस्पतिः[6] सोममपाज्जनयन्निन्द्रमिन्द्रियाय[7] सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु श्रातास्त[8] इन्द्र सोमा वातापयो[9] हवनश्रुतो ऽग्निर्होताश्विनाध्वर्यू[10] रुद्रो अग्नीद् बृहस्पतिरुपवक्ता वाचस्पते हृन्विधे[11] नामन्विधेम ते नाम विधेस्त्वमस्माकं[12] नाम वाचस्पतिः सोममपादस्मासु[13] नृम्णं धात्सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु श्रातास्त[14] इन्द्र सोमा[15] वातापयो हवनश्रुतो महाहविर्होता सत्यहविरध्वर्युरच्युतपाजा अग्नीदच्युतमना उपवक्तानाधृष्यश्चाप्रति-[16] धृष्यश्चाभिगरा[17][18] अयास्य[19] उद्गाता विधे[20] नामन्विधेम ते नाम विधेस्त्वमस्माकं[21] नाम मा देवानां तन्तुश्छेदि मा मनुष्याणां नमो मात्रे पृथिव्यै ॥ १ ॥

Vgl 1, 9, 3—6, Kath 9, 8, Kap S 8, 11.

---

1) P चर्मीत् 2) P वा। यचवे। 3) P irrig वां। चर्वमा 4) P स्व- रिति स्व। क।, Kath 9, 8, Kap S 8, 11 वार्यमा स्वस्करो वा॰ 5) P अपात्। 6) P जनेनत्।, der Satz जजनदिन्द्र citirt bei Pâ 6, 1, 192 schol und Kâç zu diesem Sûtra Ebenso liest Kâth 9, 8 In Kap S. 8, 11 corrupt यजनदिंद्रम्; vgl oben 1, 3, 20, TBr 2, 2, 3, 5 प्रजनदिन्द्रमिन्द्रियाय 7) So ist zu lesen, die Mss श्रा- तां स्थ (so auch Kap S, ohne Accent), P श्राता। स्थः।; Kâth श्रातास्थ 8) P sonderbarerweise इन्द्रसोमा इतीन्द्र सोमा। (also als Compositum) 9) P वाता- पय इति वात आपय।, Kath वातापे 10) P अध्वर्यू इत्यध्वर्यू। 11) So die Mss, P हिन्। विध इति विधे।, Kath. हविधे, Kap S रिविधे 12) So M 1, P विधं इति विधे।, B विधे, H, Bb विधे 13) P मा। अस्मासु। 14) Mss श्राता स्थ, P श्राता। स्थ।, s oben 15) P wie oben, in Bb सोमा ohne Accent 16) P अनाधृष्य इत्यना धृष्य। 17) P अप्रतिधृष्य इत्यप्रति धृष्य। 18) P fehlerhaft अभिगरं इत्यभिगरं। 19) P अयास्य। 20) So M 1, in den andern Mss ohne Accent. 21) So M 1, P विधेरिति विधे। die andern Mss. विधे स्त्व॰

ऋग्भिर्यजुर्भिः सविता स्तोमैरिन्द्र उक्थामदैर्बृहस्पतिश्छन्दोभिर[1]दितिरपश्च बर्हिश्चादित्या आज्यैर्मरुतः सदोहविर्धाने विष्णुर्दीक्षातपोभ्यां मित्रावरुणौ धिष्ण्यैरश्विना आशिरा त्वष्टा समिधा पूषा स्वाहाकारैर्वाग्वाय्वोः पत्नी पथ्या यूप्यः पृषिउव्यमेः सेनेन्द्रस्य धेना बृहस्पतेर्गायत्री वसूनां त्रिष्टुब्रुद्राणां जगत्यादित्यानामनुष्टुब् मित्रस्य विराड्वरुणस्य पङ्क्तिर्विष्णोर्दीक्षा सोमस्य ॥ २ ॥

*Vgl 1, 9, 8 — Kath 9, 10*

प्रजापतिर्वा एक आसीत्सो ऽकामयत यज्ञो भूत्वा प्रजाः सृजेयेति स दशहोतारं यज्ञमात्मानं व्यधत्त स चित्तिं स्रुचमकुरुत चित्तमाज्यं वाचं वेदिमाधीतं बर्हिः स दशधात्मानं विधाय मिथुनं कृत्वायतनमैच्छत्स वै त्रिवृत एव प्राणानायतनमचायत्तैः प्रजा असृजतोर्ध्वा उदतृणत्पूर्वपक्षः पञ्चदशस्तेन देवानसृजत ते देवा ऊर्ध्वा आप्यायन्तोर्ध्व आप्यायते य एवं वेदावाङवातृणदपरपक्षः पञ्चदशस्तेनासुरानसृजत ते ऽसुरा अवाञ्चः प्राध्वंसन्त प्रास्य भ्रातृव्यो ध्वंसते य एवं वेद दिवा देवानसृजत नक्तमसुरांस्ते देवाः शुक्ला अभवन्कृष्णा असुराः सत्येन देवानसृजतानृतेनासुरांस्ते देवाः सत्यमभवन्ननृतमसुरा दक्षिणेन हस्तेन देवानसृजत सव्येनासुरांस्ते देवा वीर्यवन्तो ऽभवन्मृधा असुरास्ततो देवा अभवन्परासुरास्तद्य एवं वेद भवत्यात्मना परास्य भ्रातृव्यो ऽभवति सो ऽमन्यत क्व होष्यामीति स तदेव नाविन्दत्प्रजापतिर्वाव होपद्रष्टा अस्यान्यद्धोत्रमासीत्प्राणास्तं[3] वा इन्द्रमेवान्तरात्मनायतनमचायत्स[4] इन्द्रं गच्छ

---

1) P उकथामदैरिद्धक्व मदे । 2) *In den Mss das Verb ohne Accent* 3) Die Mss प्राणास्त 4) V 1 इंद्र एवा॰

स्वाहेत्यपानद्वीऽर्यं वै प्राणो वीऽर्यमिन्द्रो वीर्य एव वीर्यमजुहोत् ॥ ३ ॥

Vgl. 1, 9, 1 — Kâth 9, 11, (TBr 2, 2, 3)

ते वै चतुर्होतारो न्यसीदन्त्सोमगृहपतया इन्द्रं जनयिष्यामा इति पृथिवी होतासीद् द्यौरध्वर्युस्त्वष्टाग्नीन्मित्र उपवक्ता ते वा एतां मंहा अगृह्णत वाचस्पते वाचो वीर्येण संभृततमेनायक्ष्यसे यज्ञपतये वार्यमा स्वस्करिति ते एकविंशमायतनमचायंस्तेनेन्द्रमजनयंस्त इन्द्रं जनयित्वाब्रुवन्त्स्वरयामेति ते वै पञ्चहोतारो न्यसीदन्वरुणगृहपतयो ऽग्निर्होतासीदश्विनाध्वर्यू रुद्रो ऽग्नीद्बृहस्पतिरुपवक्ता यदग्निनेति तेन पञ्चहोता ते वा एतां मंहा अगृह्णत वाचस्पते हिन्विधे नामन्विधेम ते नाम विधेस्त्वमस्माकं नामेति ते त्रिणवमायतनमचायंस्ते सेतुं कृत्वा स्वरायंस्तेन पशूनसृजन्त तान्देवताभ्यो ऽनयन्यमायाश्वमनयंस्तस्यार्धमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि यमाय त्वा मंह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मंह्यं प्रतिग्रहीत्रे ॥ इति ऽसो ऽर्धमिन्द्रियस्योपाधत्तार्धमिन्द्रियस्योपधत्ते य एवं विद्वानश्वं प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णात्यर्धमस्येन्द्रियस्यापक्रामति रुद्राय गामनयंस्तस्य तृतीयमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ रुद्राय त्वा मंह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मंह्यं प्रतिग्रहीत्रे ॥ इति स तृतीयमिन्द्रियस्योपाधत्त तृतीय-

---

1) So M 1, die andern Mss विधे त्व° 2) P प्रतिगृहीत्रे इति प्रति॰गृहीत्रे ।, auch H प्रतिगृहीत्रे 3) So M 1, die andern Mss °स्योपाधत्ते

मिन्द्रियस्योपधत्ते[1] य एवं विद्वान्गां प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति तृतीयमस्येन्द्रियस्यापक्रामत्यर्यम्णे हिरण्यमनयत्तस्य चतुर्थमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ अर्यम्णे त्वा मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स चतुर्थमिन्द्रियस्योपाधत्त चतुर्थमिन्द्रियस्योपधत्ते य एवं विद्वान्हिरण्यं प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति चतुर्थमस्येन्द्रियस्यापक्रामति बृहस्पतये वासो ऽनयत्तस्य पञ्चममिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ यास्त्वाकृन्तन्नपसो ऽतन्वत धियो ऽवयन्बृहस्पतये त्वा मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स पञ्चममिन्द्रियस्योपाधत्त पञ्चममिन्द्रियस्योपधत्ते य एवं विद्वान्वासः प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति पञ्चममस्येन्द्रियस्यापक्रामत्युत्तानायाङ्गिरसायाप्राणदनयत्तस्य षष्ठमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ उत्तानाय त्वाङ्गिरसाय मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स षष्ठमिन्द्रियस्योपाधत्त षष्ठमिन्द्रियस्योपधत्ते य एवं विद्वानप्राणत्प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति षष्ठमस्येन्द्रिय-

1) So M 1, die andern Mss °स्योपाधत्ते 2) S Ztschr DMG XXXIII S 201 Monatsber d Kgl Akad d Wiss zu Berlin, Juli 1879, S 684, Kaṭh 9, 9, Kap S 8, 12 (corrupt), Man Çr 11, 1 5, 2, 14 Durga zu Nir 3, 21 — P याः । त्वा । अकृतन् । 3) So auch Man Çr , P धिय । अवयन् ।, Durga a. a O auch धियो aber einige Mss fügen वयित्र्यो hinzu, Kaṭh u Kap S वयन्तीरवयन् 4) So M 1, die andern Mss. स्योपधत्ते 5) So M 1, H °सायाप्राण अनय°, desgl B, ohne Accent, Bb °सायाप्रणयअनय° 6) P त्वा । आंगिरसाय । 7) So M 1, die andern Mss. °स्योपाधत्ते 8) So M 1 zu H u Bb विद्वान् प्राण (wo die Nichtaccentuirung von प्राण auf die Schreibung von M 1 deutet), B विद्वान्प्राण

स्योपक्रामति ॥ क इदं कस्मा अदात्काम[1] कामायादात्कामो दाता काम प्रतिग्रहीता कामाय त्वा प्रतिगृह्णामि कामैतत्ते[2] ॥ इति समुद्रो वै कामो दक्षिणा कामो दक्षिणयैव दक्षिणा प्रतिगृह्णाति यो वै तां देवतां वेद यास्ये दक्षिणामनयद्दक्षिणीयो ह[3] भवति नयति दक्षिणाम् ॥ ४ ॥

Vgl 1 9 1 — Kath 9 11 12 Kap S 8 19 VS 7 47 48 Man Çr 11 1 5 2 14

ते वै स्वयंभुवो ऽब्रुवन्नो नो[4] यूयं प्रयच्छत केनायतनेनार्त्स्येव वेत्स्यथेत्यब्रुवंस्ते वै सप्तहोतारो न्यसीदन्नर्यमगृहपतयो[5] महाहविर्होतासीत्सत्यहविरध्वर्युरच्युतपाजा अग्नीदच्युतमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरावयास्य उद्गाता ते वा एते ग्रहमगृह्णत विधे नामन्विधेम ते नाम विधेस्त्वमसाक[6] नामेति ते चयस्त्रिंशमायतनमचायंस्तेनेदं समतन्वन्सप्तहोत्रा च वा इदं संतत त्रयस्त्रिंशेन च यदिदं देवमनुष्या[7] अन्यो ऽन्यस्मै संप्रयच्छते प्राणो वै दशहोता चक्षुश्चतुर्होता श्रोत्रं पञ्चहोता वाक्चात्मा च सप्तहोताग्निहोत्रं वै दशहोता दर्शपूर्णमासौ चतुर्होता चातुर्मास्यानि पञ्चहोता सौम्यो ऽध्वरः सप्तहोताग्निहोत्रं हूयते[8] सर्वमायुरेति य एवं वेद चक्षुषे कं दर्शपूर्णमासा इज्येते न चक्षुषो गृहे[9] य एवं वेद श्रोत्राय कं चातुर्मास्यानीज्यन्ते न श्रोत्रस्य गृहे य एवं वेद

---

1) So M 1 I कस्मै । अदात् । in H Bb das Verb betont 2) So H 1 काम । एतत् । ते । M 1 कामैतत्ते Bb I blend 3) ह nur in M 1 4) So M 1 in H Bb fehlt नो in B steht statt dessen तो 5) So M 1 in H Bb in B °म्नर्यमगृहपतयो 6) So M 1 H विधे स्त° desgl Bb B ohne Accent 7) So M 1 in H Bb देवमनुष्या 8) So M 1 in H u Bb हूयते 9) Medium in passivem Sinne cf गुहामसि RV 8 91 16 गुहते RV 5 30 1? hin sichtlich der Endung cf Delbrück altind Verbum § 103 — Kath 9 13 liest न चक्षुषो गुह्यते — — न श्रोत्रस्य गुह्यते und so fort

वाचे चात्मने च कं सौम्यो ऽध्वर इज्यते न वाचो नात्मनो गृहे य एवं वेद प्रजापतिर्वै दशहोतैकः संभूयिष्ठभाग् व्याहृतीनामेकः संभूयिष्ठो भवति य एवं वेद तेजसे कं पूर्णमा इज्यते सौम्यो वै ब्राह्मणो देवतया गायत्रछन्दा गायत्रो ऽग्निः स्वै वावास्य एतद्देवते संमस्थे ऽकर्णौस्यान्यौ योगक्षेमस्यैणा आयुषे कममावास्येज्यते समीव वा एष आम्रियते सर्वमायुरेति य एवं वेद स्वर्गाय लोकाय कं सौम्यो ऽध्वर इज्यत एति स्वर्गं लोकं य एवं वेद दशहोत्राग्निहोत्रमुन्नीतमभिमृशेद्दशहोत्रा वै देवा अग्निहोत्रमसृजन्त प्रजातमेनत्सृष्टमालभ्य चतुर्होत्रा दर्शपूर्णमासा अभिमृशेच्चतुर्होत्रा वै देवा दर्शपूर्णमासा असृजन्त प्रजाता एनौ सृष्टा आलभ्य पञ्चहोत्रा चातुर्मास्यान्यभिमृशेत्पञ्चहोत्रा वै देवाश्चातुर्मास्यान्यसृजन्त प्रजातान्येनानि सृष्टान्यालभ्य सप्तहोत्रा सौम्यमध्वरमभिमृशेत्सप्तहोत्रा वै देवाः सौम्यमध्वरमसृजन्त प्रजातमेनं सृष्टमालभ्य दशहोतारं वदेत्पुरस्तात्सामिधेनीनां प्रजापतिर्वै दशहोता यज्ञमुखं सामिधेन्यो मिथुनं वावास्यैतद्यज्ञमुखे दधाति चतुर्होतारं वदेत्पुरस्तात्प्रयाजानां चतुर्होत्रा वै देवा इन्द्रमजनयन्निन्द्रं वावास्यैतद्यज्ञे ऽजीजनत्सेन्द्रेण यज्ञेन यजते पञ्चहोतारं वदेत्पुरस्ताद्धविषां पञ्चहोत्रा वै देवाः पशूनसृजन्त परासुरानभावयन्पशूनेव सृजते परा भ्रातृव्यं भावयति सप्तहोतारं वदेत्पुरस्तादनुयाजानां सप्तहोत्रा वै देवाः स्वरायन्त्स्वरेवैति दशहोतारं वदेत्पुरस्ताद्बहिष्पवमानस्य प्रजापतिर्वै दशहोता यज्ञमुखं बहिष्पवमानं मिथुनं वावास्यैत-

---

1) So M 1, in H u Bb das Verb ohne Accent 2) So M 1, in H, Bb u B °याज्ञे इज्यते 3) So die Mss 4) So H u Bb, in M 1 das Verb ohne Accent 5) So M 1, in H u Bb das Verb ohne Accent

यज्ञमुखे दधाति' चतुर्होतार॰ वदेत्पुरस्तादाज्यानां' पञ्चहोतार॰ वदेत्पुरस्तान्माध्यंदिनस्य पवमानस्य' सप्तहोतार॰ वदेत्पुरस्तादार्भवस्य पवमानस्य' सप्तहोत्रा वै देवाः स्वरायन्त्स्वरेवैति' यो वै चतुर्होतॄननुसवनं तर्पयितव्याँ३न्वेद तृप्यति प्रजया च पशुभिश्चैते वै चतुर्होतारोऽनुसवनं तर्पयितव्या३' यद्ब्राह्मणा बहुविदस्तानेव तर्पयति' त एनं तृप्ताः प्रजया च पशुभिश्च तर्पयन्ति ॥ ५ ॥

Vgl 1, 9, 1 — Kāṭh 9, 12 13.

यः प्रजया पशुभिर्न प्रजायेत स द्वादशाहानि वरासीं परिधाय तप्तं[1] पिबन्नधः शयीत' तपो वै तप्त्वा प्रजापतिर्विधायात्मानं मिथुनं कृत्वा प्रजया च पशुभिश्च प्राजायताविहितो हि वा एषोऽमिथुनोऽथैष न प्रजायते' तंतप एवं तप्त्वा विधायात्मानं मिथुनं कृत्वा प्रजया च पशुभिश्च प्रजायते' प्रजापतिर्वै दशहोता' ज्यायान्वै प्रजापतिहोमात्संसाद्यन्न जुह्वति' प्राण्यापानेद्यानं[2] एवं प्राश्य जुहोति' संग्रामिणं चतुर्होत्रा याजयेच्चतुर्गृहीतमाज्यं कृत्वा चतुर्होतार॰ व्याचक्षीत' पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं' चतुर्होत्रा वै देवा इन्द्रमजनयन्त्यतरस्मिन्खलु वै संग्रामे इन्द्रो भवति स जयतीन्द्र॰ वावास्यैतत्संग्रामेऽजीजनञ्जयति संग्रामं' प्रजाकामं चतुर्होत्रा याजयेच्चतुर्गृहीतमाज्यं कृत्वा चतुर्होतार॰ व्याचक्षीत' पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं' चतुर्होत्रा वै देवा इन्द्रमजनयन्प्रजामस्मै जनयति' नैव त्वपरोऽनुजायते' तेजस्वीव तु भवति' सर्वेण ह्येनमिन्द्रियेण जनयति' पशुकामं पञ्चहोत्रा याजयेच्चतुर्गृहीतमाज्यं कृत्वा पञ्चहोतार॰ व्याचक्षीत'

---

1) H, Bb तृप्तं 2) So M 1, H u. Bb, m B प्राण्यापा॰

पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं पञ्चहोत्रा वै देवाः पशूनसृजन्त पशूनेव सृजते भ्रातृव्यवन्तं पञ्चहोत्रा याजयेच्चतुर्गृहीतमाज्यं कृत्वा पञ्चहोतारं व्याचक्षीत पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं पञ्चहोत्रा वै देवा असुरान्पराभावयन्प्र पाप्मानं भ्रातृव्यं भावयति स्वर्गकामं पञ्चहोत्रा याजयेच्चतुर्गृहीतमाज्यं कृत्वा पञ्चहोतारं व्याचक्षीत पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं पञ्चहोत्रा वै देवाः स्वरायन्त्स्वरेवैति यो यज्ञस्य संस्थामनु पापीयान्मन्येत तं सप्तहोत्रा याजयेत्सप्तहोत्रा वै देवा इदं समतन्वन्त्समतत ताजक् ताइङ् पुनर्भवति यादृक्सन्यजते ॥ ६ ॥

Vgl 1, 9, 1 — Kāṭh 9, 14

ब्रह्मवादिनो वदन्ति यदेको यज्ञश्चतुर्होताथ कस्मात्सर्वे चतुर्होतार उच्यन्त इति चत्वारो वा एते यज्ञास्तेषां चत्वारो होतारस्तच्चतुर्होतॄणां चतुर्होतृत्वं चतुर्णामेकः संवत्सरं नाश्नीयात्तद्व्रतमन्नं वै चतुर्होतारोऽन्नवान्भवति य एवं वेदाथ यमनूचानं सन्तं नोपनमेत्सोऽरण्यं परेत्य ब्राह्मणमुपद्रष्टारं कृत्वा चतुर्होतॄन्व्याचक्षीत ब्रह्मणो वा एतदुदरं यच्चतुर्होतारो ब्राह्मण उपद्रष्टोपद्रष्टुरेवान्ते ब्रह्माविदक्संदेनमाविर्भूतमाविदं गमयत्यथ यौ विशयेयातामहं भूयो वेदाहं भूयो वेदेत्यथ वाव भूयो वेद यश्चतुर्होतॄन्वेद चतुर्होतारो वै यज्ञस्य योनिश्चतुर्होतृभ्योऽधि यज्ञो निर्मितो नैनं विशसं हिनस्ति चतुर्होतारं यद्दशमेऽहन्नन्नकामोऽन्नं वै चतुर्होतारोऽन्तो दशममहरन्तमेव गत्वान्नाद्यमवरुन्द्ध एतद्वा अस्यैतदप्रयुक्तमेतदनव-

1) Dies Wort fehlt in M 1  2) So M 1, die andern Mss नोपानमेत्  3) So M 1, in B, Bb परेत्य  4) So M 1, die andern Mss ब्राह्मण उपद्र॰

रूढं तदेव प्रयुङ्क्ते तदवरुन्द्ध इयं वै सर्पराज्ञी तस्या वा एतदुक्थं यच्चतुर्होतारो होता वदति स्तुतं वा एतदनुशंसति न हि स्तुतमननुशस्तमस्ति[1] ॥ ७ ॥

Vgl. Kāṭh. 9, 15.

देवाश्च वा असुराश्चास्पर्धन्त ते वै समावदेव यज्ञे कुर्वाणा आयन्यदेव देवा अकुर्वत तदसुरा अकुर्वत तेन व्यावृतमगच्छंस्ते देवा अब्रुवन्नेतेमं[2] यज्ञं तिर उपर्यसुरेभ्यस्तंस्यामहा इति तमेतावन्त्यादायोदक्रामन्नेभिर्यजुर्भिः सविता स्तोमैरिन्द्र उक्थामदैर्बृहस्पतिश्छन्दोभिरिति ते तिर उपर्यसुरेभ्यो ऽतन्वत तमेषां[3] यज्ञमसुरा नान्ववायंस्तेन वा एनानपानुदन्त ततो देवा अभवन्परासुरास्तद्य एवं वेद तिर उपरि भ्रातृव्याद्यज्ञं तनुते भवत्यात्मना परास्य भ्रातृव्यो भवत्येतैरेव जुहुयात्समृतयज्ञे चतुर्भिश्चतुर्भिरन्वाक्यायं[4] पुरस्तात्प्रातरनुवाकस्यैतावान्वै यज्ञो यावानेव यज्ञस्तं वृङ्क्ते संयज्ञो[5] भवत्ययज्ञा इतर एतैरेव जुहुयात्पुरस्ताद्दीक्षाया एषा वै मर्त्यस्य दीक्षा तामेवालब्ध्वैतैरेव जुहुयात्पुरस्ताद्द्वादशाहस्यैष वै मर्त्यस्य द्वादशाहस्तमेवालब्ध्वैतैरेवातिथ्यमभिमृशेद्यज्ञेनेव यज्ञमालभ्य दक्षिणतो वै देवानसुरा यज्ञमजयंस्त उदञ्चः पत्नीभिः सहाग्नीध्रं प्राविशंस्तान्पत्नीभिः सह प्रक्ष्णाय[6] जिह्रियतो[7] ऽसुरा अपावर्तन्त तांस्तत एवानूत्यायाजयंस्ततो देवा अभवन्परासुरास्तद्य एवं वेद भवत्यात्मना परास्य भ्रातृव्यो भवति नास्य भ्रातृव्यो गृहान्पशूनभ्यारो-

1) So M 1; in H, Bb u. B न हि न स्तुतं° 2) M 1 °मेतेमं°; Bb °न्नेतेमं° 3) Die Mss. °सुराणां न्वेषा° 4) Die Mss °रन्वाचायै; s. Vorr. — 5) So corrigirt; M 1 सं यज्ञो; H u. Bb सं यज्ञो 6) So corrigirt, die Mss. प्रक्षाय; s. Vorr.; Kāṭh. 9, 15 प्रक्षाय 7) Die Mss. जिह्रियतो

हन्त्यभि भ्रातृव्यस्य गृहानभि पशूनारोहति य एवं विद्वानेतान्येवाधीषे ऽनुब्रूयाद्यदीदं पात्नीवतस्य यजति तृप्ता पत्नी रेतो धत्ते प्र प्रजया च पशुभिश्च प्रजायत एतैरेव जुहुयादन्तरा त्वष्टारं च पत्नीश्च संवत्सरं प्रजाकामो मिथुनं वै त्वष्टा च पत्नीश्च त्वष्टारं वा एतन्मिथुने ऽप्यस्राट् प्रजननाय तन्मिथुनं तस्मादेव मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते विन्दते प्रजामास्य वीरो जायते यदि संवत्सरं जुह्वन् विन्देन्नाहत्यम्[1] ॥ ८ ॥

Vgl 1, 9, 2 — Kāṭh 9, 15

॥ इति प्रथमकाण्डे चातुर्होत्रिको नाम नवमः प्रपाठकः ॥

---

आग्नेयो ऽष्टाकपालः[2] सौम्यश्चरुः सावित्रो द्वादशकपालः सारस्वतश्चरुः पौष्णश्चरुर्मारुतः सप्तकपालो वैश्वदेव्यामिक्षा द्यावापृथिवीया[3] एककपालो वाजिनं वाजिनमाग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो ऽष्टाकपालः सारस्वतश्चरुः पौष्णश्चरुरैन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा वारुण्यामिक्षा काय एककपालो वाजिनं वाजिनमग्नये ऽनीकवते[4] प्रातरष्टाकपालो मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं[5] इन्द्रस्य निष्काष्यो मरुद्भ्यः क्रीडिभ्यः साकं रश्मिभिः सप्तकपाल

1) So M 1, in H u Bb विंदेन्नाहृत्य B विंदेताहृत्य 2) P ष्टाकपाल । ष्टकपाल ईत्यष्ट कपाल । 3) P द्यावा पृथिवीय । 4) P ऽनीक वते । 5) P ष्योदनं ।

आग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो ऽष्टाकपालः सारस्वतश्चरुः पौष्णश्चरुरैन्द्राग्नो द्वादशकपाला[1] इन्द्राय वृत्रघ्ने चरुर्वैश्वकर्मण एककपाल आग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो ऽष्टाकपालः सारस्वतश्चरुः पौष्णश्चरुर्वायव्या यवागूः प्रतिधुग्वैन्द्राय शुनासीराय द्वादशकपालः सौर्य एककपालः षट्कपालः पुरोडाशो धाना मन्थः प्रतिपुरुषं पुरोडाशा[3] एकश्चाध्यादित्यश्चरुः[4] ॥ १ ॥

Vgl TS 1, 8, 2 (cāturmāsyeshu vāiçvadevakhyam prathamam parva) 3 4 7 Kāṭh 9, 4 5, Kap S 8, 7 8, Mān Çr 1, 7, 1 5

अग्ने वेर्होत्रं[5] वेर्दूत्यमूर्ध्वो[6] अध्वरो अस्थाद्देवता नो द्यावापृथिवी स्विष्टकृदिन्द्राय देवेभ्यो भवास्य[7] घृतस्य हविषो जुषाणो वीहि स्वाहा ॥

प्रघास्यान्हवामहे मरुतो यज्ञवाहसः ।
करम्भेण सजोषसः ॥
मो षू ण इन्द्राच[8] पृत्सु देवास्तु[9] स्म ते शुष्मिन्नवयाः[10] ॥
मही चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥
यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।

1) P द्वादश कपाल । 2) P वा । इंद्राय । (cod वा) 3) P पुरोडाशा । 4) P एक । च । अधि । आदित्य । 5) So M 1, die andern Mss अपेर्वे होत्रं°, P अग्ने । वे । होत्रं । Kāṭh 36, 10 Kap S 8 8 wie M 1 — Kath 9 5 अपेर्वेहोत्र Mān Çr 9, 4, 2 अपेर्वेहोत्र 6) So M 1, P वे । दूत्य 1, H वेदत्यम°, desgl Bh, ohne Accent, B वेदत्यम°, Kāṭh 9 5 वेदूत्यम° 36 10 विर्दूतम°, Kap S 8, 8 वेक-त्यम° (lauter Corruptelen der Lesart von M 1) 7) P भव । अस्य । 8) P मो इति मो । सु । न । इन्द्र । अच । 9) P देवा । अस्तु । cf Kath 9 4 देवा अस्तु 10) So Kaṭh, Kap S — P अवया इत्यव या । M 1 °नवयाः H u Bh °नवंयां, B °न्वया

यदेनश्चकृमा[1] वयं[2] यदप्स्वश्चकृमा वयम् ।
तदेकस्यापि[3] चेतसि तदेकस्यापि धर्मणि ।
तस्य सर्वस्यांहसो ऽवयजनमसि ॥
अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा[4] ।
देवेभ्यः कर्म कृत्वास्तं[5] प्रेत सुदानवः ॥
पूर्णा दर्वि[6] परा पत सुपूर्णा पुनरापत ।
वस्नेव[7] विक्रीणावहा इषमूर्जं शतक्रतो ॥
देहि मे ददामि ते नि मे धेहि नि ते दधौ ।
अपामित्यमिव[8] संभर क्रौ अस्वादद्ते[9] ददत् ॥ २ ॥

Vgl TS 1, 8, 3 (varunapraghâsâkhyam dvitiyam parva) 4 (sâkamedhâkhye tṛtîye parvani pradhânahavimshi); Kâṭh. 9, 4. 5; Kap. S. 8, 7. 8; VS 3, 44—47. 48. 50; Mân. Çr. 1, 7, 4.

अत्र पितरो मादयध्वम् ॥
सुसंदृशं त्वा वयं वसो[10] मघवन्मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः[11] स्तुतो यासि[12] वशं[13] अनु योजा न्विन्द्र ते हरी ॥

---

1) P चकृम 2) M 1 यदप्स्वश्चकृमा; B यदप्स्वश्चकृमा; ▮ यत् । अप्सु । (oder अप्स्(अः)) चकृम ।; in H u. Bb fehlt dieser Pâda Sehr nahe liegt hier die Correctur in यदागश्चकृमा (cf RV 1, 179, 5; 4, 12, 4 u dgl ) Aber der Fehler müsste dann sehr alt sein, denn auch Kâth. 9, 4 liest यदप्स्वश्चक्रिमा; Kap. ▮ 8, 7 यदप्स्वश्चकृमा 3) P एकस्य । अपि । 4) So M 1, P मयोभूवेति मयः-भुवा ।; dagegen H, Bb u B मयोभुवा wie TS 1, 8, 3, 1. In Kap. S. 8, 7 मयोभुवा 5) P कृत्वा । अस्तं । 6) So M 1; desgl. Kâth. 9, 5; aber P दर्वि । in Uebereinstimmung mit TS 1, 8, 4, 1; Kap. S. 8, 8; VS 3, 49 In H u Bb दर्वी, ▮ corrupt पर्वी 7) P वस्नेवेति वस्ना-इव । 8) So H u. Bb, M 1 अपामित्यमिव; ebenso B, ohne Accent. | desgl. Kâṭh 9, 5. Die Bedeutung etwa „Aequivalent, Entgelt “ Der P irrig अपां । इत्यमिवेतीत्यं-इव । 9) P चनं । अद्दते । 10) M 1 वसो 11) H, Bb u B पूर्णवधुरः; P पूर्ण-वंधुरः ।; ▮ 1 पूर्णवंधुर 12) M 1 यासि 13) P वशान् ।

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम।
अग्निर्मा तस्मादेनसो गार्हपत्य[1] उन्निनेतु दुष्कृताज्जातवेदाः।

अमीमदन्त पितरो नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो रसाय नमो वः पितरो यज्जीवं तस्मै नमो वः पितरो यद्घोरं तस्मै स्वधा वः पितरो नमो नमो वः पितरः ॥ एषा युष्माकं पितर इमा अस्माकं जीवा वो जीवन्तः इह सन्तः स्याम ॥

परेतन[2] पितरः सोम्यासो[3] गम्भीरेभिः पथिभिः पूर्वेभिः[4]।
दधाथ नो द्रविणं यच्च भद्रं रयिं च नः सर्ववीरं नियच्छत॥
अया विष्ठा[5] जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः।
स प्रत्युदैद्धरुणो मध्वो अग्रं स्वां यत्तनूं तन्व्यामैरयत[6] ॥
अक्षन्नमीमदन्त ह्यव[7] प्रियां[8] अधूषत।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा[9] न्विन्द्र ते
हरी ॥
मनो न्वाहुवामहे[10] नाराशंसेन स्तोमेन।
पितॄणां च मन्मभिः ॥
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे।
ज्योक्च सूर्यं दृशे ॥
पुनर्नः पितरो मनो ददातु दैव्यो जनः।

---

1) P गार्हपत्यः। 2) aber P पंरा। इत। न। Kāṭh. u. Kap S bloss परेत पितरः 3) So M 1; auch in P ohne Accent, aber H u. Bb सोम्यासो 4) Kap S पूर्वेभिः, desgl. Kāṭh., ohne Accent 5) P विष्ठा। विष्ठेति वि स्था। 6) P irrig तनन्वा। मा। ऐरयत। 7) P हि। अव। 8) P प्रियाः। 9) P योज। नु। 10) P नु। आ। हुवामहे। M 1 न्वाहुवे

जीवंँ घ्नांतँ सचेमहि ॥

अग्ने तंमद्याश्वं[1] नं स्तोमैः क्रतुं नं भद्रंँ हृदिस्पृंशम् ।

ऋध्यामा ता[2] ओंहैः[3] ॥

॥ ३ ॥ Vgl 1, 10, 19 — TS 1, 8, 5 (mahâpitryajñah); 1, 7, 12, 2, Kâṭh 9, 6, Kap 8, 9; VS 3, 51—55, 15, 44, Mân Çr 1, 7, 6, 1, 1, 2.

आखुं ते रुद्र पशुं करोम्येषं ते रुद्र भागंस्तं जुषस्व सहं स्वंसाम्बिकया स्वांहा ॥

अंवाम्ब[4] रुद्रंमदिमह्यंव[5] देवं त्र्यम्बकम् ।

यंथा नो वंस्यसस्करंद्यंथा नः श्रेंयसस्करत् ॥

यंथा नो भूंयसस्करंद्यंथा नः प्रतरं तिरांद्यंथा नो व्यवसायंयात्[6]

भेषजं गवे अश्वाय पुरुषाय भेषजंम् ।

अंथो अस्मभ्यं भेषजंँ सुभेषजँ यंथांसति[7] सुगं मेषांय मेष्यै ॥

त्र्यम्बकँ[8] यजामहे सुगन्धिं पुष्टिवंर्धनम् ।

उर्वारुकंमिव[9] बन्धनान्मृत्योंर्मुक्षीय[10,11] मामृंतात्[12] ॥

रुद्रैषं ते भागंस्तेनावसेंन परो मूजवतो ऽतीहि[13] ॥

पिनाकहस्तः कृत्तिवासा[14] अवततधन्वा ॥ ४ ॥

Vgl 1, 10, 20 — TS 1, 8, 6 (tryambakapuroḍâçaḥ), Kâth 9, 7, Kap S 8, 10, VS 3, 57—61.

---

1) P °श्व । वंय । 2) P ऋध्याम । ते । ओंहैः । 3) Der P schiebt hier noch den Vers ein । उभ्रंत । त्वा । हवामहे । cet 4) P अंव । अव । 5) So M 1, H u Bb, desgl TS 1, 8 6, 2 Dagegen B °मदीमह्यव, P ऽमदीमहि ।, dazu stimmt Kath 9, 7 °मदीमह्य° und VS 3, 58 Desgl die corrupte Lesart Kap S 8, 10 रुद्रामधीमह्यव cet cf unten 1, 10, 20 6) P व्यवसाययादिति वि॰अवसाययात् । 7) P fehlerhaft यंथा । आंसति । 8) P त्रि अम्बक । 9) M 1 उर्वारुकम् 10) P fehlerhaft बघनान् 11) So M 1, H u Bb, aber P मुक्षीय । (= RV 7, 59, 12, TS u VS 3 60) 12) P मा । अमृंतात् । 13) P अंति । इहि । 14) P कृत्ति॰वासाः ।

देवाश्च वा असुराश्चास्मिँल्लोक आसन्त्स प्रजापतिरकामयत प्रासुरान्नुदेय प्रजाः सृजेयेति स चातुर्मास्यान्यपश्यच्चातुर्मास्यैर्वै सोऽसुरान्प्राणुदत चातुर्मास्यैः प्रजा असृजत तथ एवं विद्वांश्चातुर्मास्यैर्यजते प्र भ्रातृव्यं नुदते प्र प्रजया च पशुभिश्च जायते[1] ऽग्निष्टोमाद्वैश्वदेवं यज्ञक्रतुं निर्मीय प्रजापतिः प्रजा असृजतोक्थ्याद्वरुणप्रघासान्यज्ञक्रतुं निर्मायेमाः प्रजा वरुणेनाग्राहयदतिरात्रात्साकमेधान्यज्ञक्रतुं निर्मायेन्द्रो वृत्रमहन्त्सृष्टा वा अन्याः प्रजा आसन्नसृष्टा अन्या अथ प्रजापतिरकामयत प्रजाः सृजेयेति संवत्सरो वै यज्ञो[2] यज्ञः प्रजापतिः स एते मिथुने पयसी आत्मन्नधत्तोधश्च वत्सं[3] चौषधीभ्यो देवताभ्य एतानि हवींषि भागं निरवपत्तैः प्रजा असृजत ऋतुभ्यो वै ताः प्रजाः प्राजायन्त ऋतवो वा एतानि पञ्च हवींषि पञ्च ऋतवस्ततः प्रजायते ऽग्निरेव प्राजनयत्सोमो वै[4] रेतो ऽदधान्मिथुनं वा अग्निश्च सोमश्च सविता प्रासुवत्प्रजननाय संवत्सरो वै सविता द्वादश मासाः संवत्सरस्तस्माद्द्वादशकपालो ऽथो वैश्वदेवत्वायैव द्वादशकपाल उपांशु यजत्यनिरुक्तो हि संवत्सरः सरस्वत्येव[5] सृष्टासु वाचमदधात्पूषणा प्रतिष्ठामभ्यसृज्यन्त वाग्वै सरस्वती पशवः पूषा मिथुनं वाक्च पशवश्च मध्यतः प्रजापतिनासृज्यन्तान्ततो मिथुनाद्विपूचीः प्राजायन्त तन्मध्यत एवैतत्प्रजापतिना सृज्यन्ते ऽथाद्यो ऽन्ततो मिथुनाद्विपूचीः प्रजायन्ते वार्त्रघ्नानि वा एतानि हवींष्येतेन वा अनीकेनेन्द्रो वृत्रमहन्त्सोमेन राज्ञा

1) H u. Bb प्रजायते 2) H u. Bb °कालन् 3) So M 1; in H, Bb u. B मध्य. Kāṭh. 35, 20 वाह्य. wohl वाह्य zu vermuthen 4) वै fehlt in M 1 5) So M 1; die andern Mss सरस्वत्येवं

सवितृप्रसूतः सरस्वत्या चेत्रा[1] पूष्णा वीर्येणान्वतिष्ठत ʼ विजितिर्वा एतानि हवींषीन्द्रो वै वृत्रमहन्स विष्वङ् वीर्येण व्यार्छत्स यदिदं सर्वं प्राविशद्यदोषधीर्वनस्पतींस्तेन देवा अभ्राम्यंस्तं समनयंस्तत्सान्नाय्यस्य सान्नाय्यत्वं ʼ तद्ध एवं विद्वान्सान्नाय्येन यजत ऋध्नोति ॥ ५ ॥

(TBr 1, 6, 1 2)

मिथुनं वै दधि च घृतं चाथ यत्संसृष्टमार्द्रमिव मस्त्विव परीव ददृशे गर्भ एव स ʼ तपसो वै ताः प्रजाः प्राजायन्त ʼ तपस्त्वं वा एतद्गच्छति योऽमृतत्वं गच्छति ʼ ततः प्रजायते ʼ ऽथैषा वैश्वदेव्यामिक्षा ʼ प्रजापतिः प्रजा असृजत ʼ ता वैश्वदेवेनैवासृजत ʼ तस्मादिमा वैश्वदेवीः प्रजा ʼ विश्वान्देवान्यजति ʼ स्तोका वै विश्वे देवास्तान्वा एतद्यजत्येषो अमुतःप्रदानाद्धि मनुष्या यज्ञमुपजीवन्ति ʼ योनिर्वा एष प्रजानां ʼ ते मरुतो ऽभ्यकामयन्त ʼ ततो ऽहोगृहीता असृज्यन्त ʼ यांस्त्वेतवद्धः स्वत्वामेव निष्कृत्यै ʼ प्रजननो वा एष पशूनां ʼ यन्मारुतः सप्तकपालो भवति ʼ सप्त हि मरुतो ʼ विशमरुतो ʼ ऽथो निरवत्त्या एव मारुतो ʼ ऽथो ग्राम्यमेवैतेनान्नाद्यमवरुन्द्धे ॥ ६ ॥

Vgl Kath 36, 1, (TBr 1, 6, 2)

ता वैश्वदेवेन सृष्टा विषूचीर्व्युदायंस्ताः प्रजापतिर्द्यावापृथिवीयेन पर्यगृह्णाद्यद् द्यावापृथिवीयः प्रजानां सृष्टानां परिगृहीत्यै ʼ यदेककपालस्तेन प्राजापत्यः ʼ प्रजापता एव देवतासु प्रतितिष्ठति ʼ यजमानो वा एककपाल ʼ आहवनीयः स्वर्गो लोको ʼ यत्सर्वहुतं करोति हविर्भूतमेवैनं स्वर्गं लोकं गमयति ʼ यजमानं वै हूत्वैनं प्रजा अनु-

---

1) So M 1, in H u Bb चेत्रा पू°, B चेत्रात्पू°

हूर्छन्ति यजमानं प्रतितिष्ठन्तं प्रजा अनुप्रतितिष्ठन्त्यृजुं होतऽव्यः प्रतिष्ठित्यै सर्वहुतं करोति प्रतिष्ठित्यै यजमानो वा एककपालः पशवो घृतं तदभिपूर्यैः पशुभिरेवैन॰ समर्धयति यदभिपूरयेदधरमेनं पशुभ्यः कुर्यादभुञ्जन्त एनं पशवा उपतिष्ठेयुराविःपृष्ठः कार्यः पशुभ्य एवैनमुत्तरमकर्भुञ्जन्त एनं पशवा उपतिष्ठन्ते तन्न सूर्क्ष्यमभिपूर्यं एव न हि पशवो न भुञ्जन्ति यत्प्राङ् पद्येत यजमानः प्रमीयेत यद्दक्षिणा प्रजामस्य निर्दहेद्यत्प्रत्यङ् पत्नी प्रमीयेत यदुदङ् पशूनस्य निर्दहेद्यदुत्तानः पतेत्पर्जन्यो ऽवग्रुकः स्यात्पुनरादायाभिघार्यं होतऽव्यो यजमानस्य प्रतिष्ठित्यै वरो दक्षिणा वरेणैव वर॰ स्पृणोत्यात्मा हि वरस्त्रेधासंनद्धं बर्हिर्भवति त्रेधासंनद्धा ऽधस्त्रेधाविहितानि चातुर्मास्यानि संवत्सर॰ वै चातुर्मास्यानि संवत्सरेणाग्निं मन्थन्त्यग्नि॰ वै प्रजा अनुप्रजायन्ते प्रजननो वा एष मथ्यते ऽश्वो वृषाण॰ वा एतद्यजमानाय जनयन्ति वसन्ता यष्टव्युं प्रजननाय प्रवर्ते यष्टव्युं प्रजननाय नोत्तरवेदिमुपवपन्ति प्रजननाय प्रस्वो भवन्ति प्र मा जनयानीति पशवो वै पृषदाज्यं नानारूपा वै पशवस्तस्मान्नानारूपमाग्नेयं घृतमैन्द्रं दध्यैन्द्राग्नं पृषदाज्यं देवतया प्राणापानौ वा इन्द्राग्नी मिथुनं प्राणापानौ मिथुनयोनयः प्रजा मिथुनात्खलु वै प्रजाः पशवः प्रजायन्ते तन्मिथुनं तस्मादेव मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते यदि वसन्ता यजेत त्रिरुपस्तृणीयात्सकृदभिघारयेदोषधयो वै पशवा ओषधीष्वेव पशून्प्रतिष्ठापयति

1) H, Bb repetiren die letzten vier Worte, B desgl, nur schreibt es das zweite Mal प्रतिष्ठित 2) H u. Bb schieben वै ein 3) H u. Bb नहि, M 1 नहि ohne Accent

यदि प्रावृषि यजेत सकृदुपस्तृणीयाद्द्विरभिघारयेद्वृष्ट्यैव पशूनभिजिघर्ति ॥ ७ ॥

Vgl. Kāṭh 36, 1. 2, (TBr 1, 6, 3)

प्राणेभ्यो वै ताः प्रजाः प्राजायन्त प्राणा वा एतानि नव हवीꣳषि नव हि प्राणा आत्मा देवता ततः प्रजायते नव प्रयाजा नवानुयाजा द्वा आज्यभागा अष्टौ हवीꣳष्यथैते समवद्यति वाजिनो यजन्ति तत्त्रिꣳशत्त्रिꣳशदक्षरा विराड् विराज्येव प्रतितिष्ठति विराजो वै योनेः प्रजापतिः प्रजा असृजत विराजो वा एतद्योनेर्यजमानः प्रजायते त्रिꣳशत्त्रिꣳशद्वै रात्रयो मासो यो मासः स संवत्सरः संवत्सरः प्रजापतिस्तत्प्रजापतेश्च वा एतद्विराजश्च योनेर्मिथुनाद्यजमानः प्रजायत एकैकया वा आहुत्या द्वादश द्वादश रात्रीरयुवत ता यावतीः संख्याने तावतीः संवत्सरस्य रात्रयः संवत्सरमेव भ्रातृव्याद्युवते वैश्वदेवेन चतुरो मासो ऽयुवत वरुणप्रघासैः परांश्चतुरः साकमेधैः परांश्चतुरस्तानेव भ्रातृव्याद्युवत ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यो यो वसन्तो ऽभूत्प्रावृडभूच्छरदभूदिति यजते स ऋतुयाज्यथ यस्त्रयोदशं मासꣳ संपादयति त्रयोदशं मासमभियजते स चातुर्मास्ययाज्यृजूꣳस्त्रीनिष्ट्वा चतुर्थमुत्सृजेत ऋजू द्वौ परा इष्ट्वा तृतीयमुत्सृजेत ये वै त्रयः संवत्सरास्तेषाꣳ षट्त्रिꣳशत्पूर्णमासा यौ द्वौ तयोश्चतुर्विꣳशतिस्ते ऽद्य ऽमी षट्त्रिꣳशत्यधि तानस्यां चतुर्विꣳशत्यामुपसंपादयत्येष वाव स त्रयोदशो मासस्तमेवैतत्संपादयति तमभियजते वैश्वदेवेन यजेत पशुकामो न वरुणप्रघासैर्न साकमेधैः सर्वो वै पुरुषः साहस्रो जायते यावत्स ऽत्त्येवैति प्रजननꣳ वा एतद्यद्वैश्वदेवꣳ यद्वैश्वदेवेन यजते प्रजननाय वा एतद्यजते स्वां

मां वा गच्छानीति स यदा सहस्रं पशून्गच्छेदथ वरुणप्रघासैर्यजेत यद्देवादः सहस्रमगꣳस्तस्यैतदꣳहो ऽवयजति ॥ ८ ॥

Vgl. Kāṭh 36, 2. 3, (TBr 1, 6, 3).

यद्बर्हिः प्रयाजेषु यजत्योषधीस्तद्यजति यद्बर्हिरनुयाजेषु फलं तद्यद्बर्हिर्वारितीनाꣳ यद्देवादः फलात्प्रजायते तदेतद्यजति यद्दुर उपस्य तद्यदुपासानक्ता स्रुपिं चैव निमुक्तिं च यज्जोष्ट्री यदेव जातं च जनियमाणं च यद्दूर्ज्जोहुती यदेवात्ति च पिबति च यद्दैव्या होतारेमे एवं यत्तिस्रो देवीर्यौग्वै तिस्रो देवीर्वाचꣳ वा एतद्यजत्यथो छन्दाꣳसि वै वाक्छन्दाꣳसि वा एतद्यजति तनूनपाद्वै यज्ञो ऽप्रसृतो नराशꣳसः प्रसृतस्तस्मात्तनूनपातं प्रयाजेषु यजत्यप्रसृतो हि तर्हि यज्ञस्तस्माद्‌ नराशꣳसमनुयाजेषु यजति प्रसृतो हि तर्हि यज्ञो वनस्पतिꣳ यजति सोमो वै वनस्पतिः सौमीरिमाः प्रजाः प्रजास्वेव रसं दधाति त्वष्टारꣳ यजति त्वष्टा हि रूपाणि विकरोति वाजिनो यजति पशवो वै वाजिनस्तान्वा एतद्यजत्यथो छन्दाꣳसि वै वाजिनश्छन्दाꣳसि वा एतद्यजति पशवो वै वाजिनस्तेन्न सꣳस्थाप्यꣳ यत्सꣳस्थापयेत्तानेव सꣳस्थापयेदसꣳस्थिता ऽह्येते सददि प्रजायन्ते न वा एष सुयज्ञ इव सꣳस्थिते हि प्रहृतेषु परिधिषु जुहोति यद्व्यवानन्यजति[1] तेन यज्ञः क्रियते ऽनुयजति समिष्ट्या एव प्रतिष्ठित्यै बर्हिरनुपिञ्जꣳगृह्णात्यूर्ध्वेष्वेव रेतो दधात्यूर्ध्वज्ञुरासीनो यजत्यूर्ध्वज्ञवो हि पशवः पशुषु रेतो दधत्यथो ऊर्ध्वज्ञुर्हि प्रजापतिः प्रजा असृजत[2] दिग्भ्यो जुहोतीमा एव दिशो रसेन भुनक्ति प्राचीमुत्तमां जुहोति

1) So M 1 (desgl MPaddh III ▪ 27a), die andern Mss यद्व्यपानꣳद्° 2) In den Mss ohne Accent

प्राचीमेव दिशं पुनरुपावर्तन्ते सर्वमुपह्वयन्ते सोमपीथ इव ऽऋत्विजः प्राश्नन्ति ॥ वाजिनो मे यज्ञं वहान् ॥ इति समावच्छो भक्षयन्ति समावच्छ एव वाजं विभजन्त आत्मना प्राश्नात्यात्मन्नेव वाजं धत्ते ॥ ९ ॥

Vgl. Kāṭh 36, 3 4, (TBr 1, 6, 3)

ता वैश्वदेवेन सृष्टास्तासां स्तर्हि वरुणो ऽगृह्णात्तदाहुरित्थं वै ताः प्रजापतिमचरंस्ता अभिचरन्तीर्वरुणेनाग्राहयत्तस्मात्तिता नातिचरितवा इति वैश्वदेवेन वै प्रजापतिः प्रजा असृजत तस्य मरुतो हव्यं व्यमथ्नत ततो ऽंहोगृहीता असृज्यन्त ताभ्यो भेषजमैच्छंस्ता आत्मन्नेवैच्छंस्त एतत्पय आत्मनो ऽधि निरमिमीत तेनाभ्यो ऽंहो ऽवायजन्यदंहसो वा एषा वेष्टिर्यद्वरुणप्रघासा यद्वरुणप्रघासैर्यजेत सर्वस्मादंहसो ऽवेष्ट्यै जग्धाद्वै ताः प्रजा वरुणो ऽगृह्णात्तस्माद्वरुणप्रघासा यावत्कुमार्ऽरे ऽश्नाति जातं एनस्तावदस्मिन्नेनो भवति यो वरुणप्रघासैर्यजते सावित्रो ऽष्टाकपालो भवति गायत्रो वै देवानां सविता द्वादशकपाल ऐन्द्राग्नो देवतया यद्वै तद्वरुणगृहीता अवेव्लीयन्तेव तदास्विन्द्राग्नी बलमधत्तां शिथिरा वै ताः प्रजा वरुणो ऽगृह्णात्तास्विन्द्राग्नी बलमधत्तामोजो वै वीर्यमिन्द्राग्नी ओजो वा एतद्वीर्यं मध्यतः प्रजानां धीयते न वै ताः प्राणंस्ता अप्राणतीर्वरुणो ऽगृह्णात्प्राणापानौ वा इन्द्राग्नी प्राणापानौ वा एतन्मुखतः प्रजानां धीयते अथैतानि पञ्च हवींषि संतत्यै निरवत्यै मारुती निर्वरुणत्वाय वारुणी कत्वाय कामो यद्वै तद्वरुणगृहीताभ्यः

---

1) So M 1, B, H u Bb ह्येपां 2) M 1 तद्यीमन्ते, H, Bb u B तद्यिमाभि, Kāṭh 36, 5 तस्मिन्दर्शिमन्वस्य अभुष्ठात् 3) So M 1, m H u Bb °त्रैवमैच्छत
4) Vgl oben 1, 6, 10

कमभवत्तस्मात्कायः प्रजापतिर्वै कः प्रजापतिर्वै ताः प्रजा वरुणेनाग्राहयद्यत्कायं आत्मन एवैना वरुणान्मुञ्चति ॥ १० ॥

Vgl. Kāṭh 36, 5; TBr 1, 6, 4

ऋतं वै सत्यं यज्ञो ऽनृतं स्त्र्यनृतं वा एषा करोति या पत्युः क्रीता सत्यथान्यैश्चरत्यनृतमेव निरवदाय ऋतं सत्यमुपैति यन्मिथुया प्रतिब्रूयात्प्रियतमेन याजयेदथ यद्वाचयति मेध्यामेवैनां करोत्यामपेषा भवन्ति सर्वस्यांहसो ऽवेष्ट्यै यद्भृज्ज्येयुरनवेष्टमंहः[1] स्यात्पात्रेभ्यो वै ताः प्रजा वरुणो ऽगृह्णाद्यत्पात्राणि पात्रेभ्य एवैना वरुणान्मुञ्चति प्रतिपुरुषं भवन्ति प्रतिपुरुषमेवांहो ऽवयजत्येकमधि भवति गर्भेभ्यस्तेन निरवदयते ऽन्नाद्वै ताः प्रजा वरुणो ऽगृह्णाच्छूर्पेणान्नं बिभर्ति तस्माच्छूर्पेण जुहुतः स्त्रीपुंसौ जुहुतो मिथुना एव प्रजा वरुणान्मुञ्चतः पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ जुहुतः पुरस्तादेवांहो ऽवयजतो यत्पात्राणि ये एव द्विपादः पशवो मिथुनास्तेषामेतत्पुरस्तादंहो ऽवयजतो ऽथ यन्मेषश्च मेषी च ये एव चतुष्पादः पशवो मिथुनास्तेषामेतदुपरिष्टादंहो ऽवयजत उभयत एवांहो ऽवयजतः पुरस्ताच्चोपरिष्टाच्च ॥ ११ ॥

Vgl Kāṭh 36, 6, Mān Çr 1, 2, 4, TBr 1, 6, 5 4, 4

यद्ध प्रजा वरुणो गृह्णाति शम्यं चैव यवं चापि न गृह्णाति हेमन्तो हि वरुणो या एवावरुणगृहीतौ ताभ्यामेवैना वरुणान्मुञ्चति वरुणो वै यवो वरुणदेवत्यः स्वेनैवैना भागधेयेन वरुणान्मुञ्चत्यनृताद्वै ताः प्रजा वरुणो ऽगृह्णाद्यदिता अनृतपशू अनृतादेवैना वरुणान्मुञ्चतो मिथुनौ भवतो मिथुना एव प्रजा वरुणान्मुञ्चतो

---

1) auch Kāṭh 35, 6 यद्भृज्जेयुर° 2) So M 1, in II u. Bb ist das Verb betont.
3) Kāṭh 35, 6 शमीं 4) Die Mss एवावरुण°

लोमशौ भवतो मेध्यत्वाय ये हि पशवो लोम जगृहुस्ते मेधं प्रापुः शमीपर्णानि भवन्ति शन्त्याय भूर्जो वै नामैष वृक्षः कार्ष्मर्य एतस्य स्रुचः प्रजापतिर्वा अन्नाद्यमवरुन्धं नाशक्नोत्स एतेनेध्मेनावारुन्द्ध परःशतानि कार्ष्मर्याण्यन्नाद्यस्यावरुद्ध्यै सहस्रेध्मो ह्येवांऽहसो ऽवेष्टि विध्याच परःसहस्राणि कार्ष्मर्याणि सर्वस्यांऽहसो ऽवेष्ट्यै यदा मांसाणि जुहुत्यथान्यं संमार्ष्टि यस्मिन्नेवांऽहो ऽवायाक्षुस्तस्मिन्नुभूते देवता यजा इतीन्द्रो वै यतीन्त्सालावृकेयेभ्यः[1] प्रायच्छत्तेषा[2] वा एतानि शीर्षाणि यत्खर्जूराः सोमपीथो वा एषो ऽस्या उदेपद्यत्करीराणि सौम्यानि वै करीराणि सौमी ह्येषाहुति[3]रमुतो वृष्टिं च्यावयति[4] यत्करीराणि भवन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै ॥ १२ ॥

Vgl Kāṭh 36, 6 7, TBr 1, 6, 4, 5

प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसंस्ते परापातमासत यत्र यत्राकामयन्ताथ वा इयं तर्हि शिथिरासीत्तेषामिन्द्रः पक्षानच्छिनत्तैरिमामदृंहद्ये पक्षा आसंस्ते जीमूता अभवंस्तस्मादेते सदा पर्वतमुपप्लवन्ते योनिर्ह्येषामेष ततो यः प्रथमो रसः प्राक्षरत्तानि करीराण्यभवंस्तदेतदुभावृष्टि जीमूताः प्लवन्ते यजन्ते वरुणप्रघासैः करीराणि भवन्ति वृष्टिं तैः संतनोति तस्मात्तर्हि भूयिष्ठं वर्षति वृष्टिं हि संतनोति न वै वैश्वदेव उत्तरवेदिमुपवपन्त्युपाश्व यन्ति प्रजाताः प्रजाः प्रतिगृभ्णादिति येयमुत्तरा वेदिर्या अर्चीः प्रजास्तासामेषा योनिस्ता एतामनुप्रजायन्ते येयं

1) So M 1 in H Bb यतीयान्त॰ B यतीभता॰ s folgende Anmerkung 2) So M 1, H, Bb in B सालावृकेय aber auch Kāṭh 36,7 यतीन्त्सालावृकेभ्य प्रादत् 3) M 1 ॰पुतीर॰ 4) Die Mss च्यावयति 5) M 1 प्रापुषी

दक्षिणा वेदिर्या आद्याः प्रजास्तासामेषा योनिस्तामेतामनुप्रजायन्त उभयीरेवं प्रजाः प्रजनयत्यन्नीश्चाद्याश्चायं वाव हत्वा आसीन्नायं तद्धेयं दक्षिणा वेदिस्तयेममविन्दंस्तस्मादेष एतस्य परिवेष्टी कनीयान्हि तस्मात्कनीयाञ्ज्यायांसं परिविवेष्टि समे प्राची भवतः समौ ऽहीमौ प्राञ्चौ हत्वा असंभिन्ने भवतः सर्वस्यांहसो ऽवेष्ट्यै यत्संभिन्द्युरनवेष्टमंहः स्यादेकस्यां पश्चात्संभिनत्त्यनुसंतत्या उपेमा वपन्ति नेमामप्यभ्यारोहयात्क्षत्रं वा इन्द्रो विशमरुतो नाना यजतः पापवसीयसस्य व्यावृत्त्यै यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति तस्माद्यद्राजा करोति तद्विड्करोति न वै वैश्वदेवे विंशदाहुतयः सन्ति न साकमेधेषु वरुणप्रघासेषु वाव विंशदाहुतयो वैराजो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा यन्नखेनावभृथमभ्यवयन्ति यजमानस्य निर्वरुणत्वाय यर्हि यज्ञस्य स्वगाकृतिं न प्राप्नोति तद्वरुणो गृह्णाति यन्निष्कापेणावभृथमभ्यवयन्ति यदेवात्र वरुणस्य न्यक्तं तस्यैषा निरवत्तिरनपेक्षमाणा आयन्ति वरुणस्याननुवायाय परोगोष्ठं मार्जयन्ते परोगोष्ठमेव वरुणं निरवदयन्त एधो ऽस्येधिषीमहीति निर्वरुणा एव भूत्वैधितुमुपयन्ति समिदसि समेधिषीमहीति समिद्धा एव ॥ १३ ॥

Vgl Kāth 36, 7.

प्रजाः सृष्ट्वाहो ऽवयज्य सो ऽकामयत वृत्रं हन्यामिति स एताभिर्देवताभिः सयुग्भूत्वा मरुद्भिर्विशामिनानीकेनोपप्रायत स वृत्रमेत्य वृत्रं दृष्ट्वोरुस्तम्भंगृहीतो ऽनभिधृष्णुवन्नतिष्ठत्तं मरुतो ऽध्यैयन्त

---

1) So M 1, in H u Bb ohne Accent, vgl 1, 10, 20 2) So corrigirt, M 1 भूत्वैधीतुम॰, H u Bb भूत्वैधितुम॰ 3) H u Bb एवा

लोमशी भवतो मेध्यत्वाय यो हि पशवो लोम जगृहुस्ते मेधं प्रापुः शमीपर्णानि भवन्ति शन्त्वाय भूर्जो वै नामैष वृक्षः कार्यो एतस्य स्रुचः प्रजापतिर्वा अन्नाद्यमवरुन्धं नाशक्नोत्सोऽश्वत्थेनैवावारुन्द्ध परःशतानि कार्याण्यन्नाद्यस्यावरुद्ध्यै सहस्रेध्मो ह त्वेवाऽहसो ऽवेष्टिविध्याच परःसहस्राणि कार्याणि सर्वस्याऽहसो ऽवेष्ट्यै यदा पांपाणि जुहृत्यथापि सेमार्ष्टि यस्मिन्नेवाऽहो ऽवायासुस्तस्मिन्नुपृते देवता यज्ञा इतीन्द्रो वै यतीन्त्सालावृकेयेभ्यः[1] प्रायच्छत्तेषा वा एतानि शीर्षाणि यत्खर्जूराः सोमपीथो वा एऽषां ऽस्या उदैपद्यत्करीराणि सौम्यानि वै करीराणि सौमी ह त्वेवाहुतिरस्तुतो वृष्टिं च्यावयति यत्करीराणि भवन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै ॥ १२ ॥

Vgl Kâṭh 36, 6 7, TBr 1, 6, 4, 5.

प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसंस्ते परापातमासत यत्र यत्राकामयन्तोय वा इयं तर्हि शिथिरासीत्तेषामिन्द्रः पक्षानछिनत्तैरिमामदृंहद्ये पक्षा आसंस्ते जीमूता अभवंस्तस्मादेते सदा पर्वतमुपप्लवन्ते योनिर्ह्येषामेष ततो यः प्रथमो रसः प्राक्षरत्तानि करीराण्यभवंस्तदेतदुग्रावृषि जीमूताः प्लवन्ते यजन्ते वरुणप्रघासैः करीराणि भवन्ति वृष्टिं तैः संतनोति तस्मात्तर्हि भूयिष्ठं वर्षति वृष्टिं हि संतनोति ने वै वैश्वदेव उत्तरवेदिमुपवपन्त्युभयीष्व वपन्तीत्प्रजाताः प्रजाः प्रतिगृभ्णादिति येयमुत्तरवेदिर्या अन्याः प्रजास्तासामेषा योनिस्तां एतामनुप्रजायन्ते या

1) So M I in H, Bb यतीयाभ्यस॰, B यतोभ्यस॰ = folgende Anmerkung So M I, H, Bb, in B सालावृकेभ्य aber auch Kâṭh 36,7 यतीन्त्सालावृकेयेभ्यः = ३) M I ॰कुकीर॰ 4) Die Mss प्यावयति 5) M I प्रावृषी

दक्षिणा वेदिर्या आशीः प्रजास्तासामेषा योनिस्तामेतामनु प्रजायन्त' उभयीरेवं प्रजाः प्रजनयत्यचीश्चाशीश्चार्य॰ वाव हस्ता आसीनाय' तद्वेयं दक्षिणा वेदिस्तयेममविन्द॰स्तस्मादेषं एतस्य परिवेशं कनीयान्हि' तस्मात्कनीयान्ज्यायाऽसं परिविवेष्टि' समे प्राची भवतः समौ उहीमौ प्राञ्चौ हस्ता असंभिन्ने भवतः सर्वेस्याऽहसो ऽवेष्ट्यै' यत्संभिन्द्युरनवेष्टमऽहः स्यादेकस्यां पश्चात्संभिनत्त्यनुसंतत्या' उपेमा॰ वपति' नेमामन्वभ्यारोहयत्क्षप॰ वा इन्द्रो' विरमस्तो' नाना यजतः पापवसीयसस्य व्यावृत्त्यै' यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति' तस्माद्यद्राजा करोति तद्विद्वरोति' न वै वैश्वदेवे विश्वदाहुतयः सन्ति न साकमेधेषु' वरुणप्रघासेषु वाव विश्वदाहुतयो' वैराजो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा' यत्तद्यवभृथमभ्यवयन्ति यजमानस्य निर्वरुणत्वाय' यद्धि यज्ञस्य स्वगाकृतिं न प्राप्नोति तद्वरुणो गृह्णाति' यत्विष्कापेणावभृथमभ्यवयन्ति' यदेवाथ वरुणस्य न्यक्तं तस्यैषा निरवत्तिरनपेक्षमाणा आयन्ति वरुणस्यानन्ववायाय' परोगोष्ठं मार्जयन्ते' परोगोष्ठमेवं वरुणं निरवदयन्ता' एधो ऽस्ये-धिषीमहीति' निर्वरुणा एव भूर्त्वधितुमुपयन्ति' समिदसि समेधिषीमही'ति समिद्धा एवं ॥ १३ ॥

Vgl Kath 36, 7

प्रजाः सृष्ट्वाऽहो ऽवयज्य सो ऽकामयत' वृत्रं॰ हन्यामिति' स एताभिर्देवताभिः सयुग्भूत्वा मरुद्भिर्विशांसिनानीकेनोपप्रायत' स वृत्रमेत्य वृत्रं हष्ट्वोरुस्तम्भगृहीतो ऽनभिधृष्णुवन्नतिष्ठत्ते मरुतो ऽध्ययन्त'

1) So M 1, in H u Bb ohne Accent, vgl I, 10, 20. 2) So corrigirt, M 1 भूर्त्वधितुम॰; H u Bb भूर्त्वधितुम॰ 3) H u Bb एवा

वै वृत्रꣳ हतं न व्यजानꣳस्तं मरुतः क्रीडयो ऽभ्यक्रीडꣳस्तस्मात्क्रीडयो ऽथैतानि पञ्च हवीꣳषि संतत्या अथैष ऐन्द्राग्न इन्द्राग्नी एवास्मै वज्रमन्वविभृतामिन्द्राग्नी अस्मै वज्रमभ्यूवहतामथैष ऐन्द्र उद्धारꣳ वा एतमिन्द्र उदहरत वृत्रꣳ हत्वा तदुद्धार एवास्यैष भाग एवं तस्माद्राजा संग्रामं जित्वोदाजमुदजते ऽथैष वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सो ऽभवद्वृत्रꣳ हत्वाथैष आघार आहुतीनाꣳ संतत्यै विꣳशत्वाय ॥ १६ ॥

Vgl Kāṭh 36, 9 10, TBr 1, 6, 7

प्रजाः सृष्ट्वाꣳहो ऽवयज्य वृत्रꣳ हत्वा ते देवा अमृतत्वमेवाकामयन्त स्वर्गो वै लोको ऽमृतत्वꣳ संवत्सरः स्वर्गो लोको यद्द्वादशाहुतयो ऽमृतत्वमेव तेन स्पृणोत्यापद्य एतꣳसंवत्सरमिति वा एतत्संवत्सरमक्रमीद्यद्द्वादशाहुतयः संवत्सरमेव पुनरभिपर्यावर्तत आपद्य एतꣳसंवत्सरꣳ सꣳ वा एतत्संवत्सरमकृत यत्षट् षट् संपादयति षड्वा ऋतवस्तान्वा एतत्संपादयति तानपिपादयति तानपिपद्यमानानन्वपिपद्यन्त आपद्य एतꣳसंवत्सरं पितरो वा ऋतवस्तान्वा एतत्प्रजनयति तान्प्रजायमानाननु प्रजायते ततः प्रजायत एते वा अस्य संवत्सरो ऽभीष्टो ऽभूदभीष्टा ऋतवो ऽथ वा अस्य पितरो ऽनभीष्टा यदेषं पितृयज्ञेनैवास्य पितरो ऽभीष्टाः प्रीता भवन्ति दक्षिणतो निरुप्यं दक्षिणा हि पितृणामथो आहुरुभयत एवं निरुप्यमित्युभये ह्येज्यन्ते तत्र सूक्ष्य दक्षिणत एवं निरुप्यं दक्षिणा

---

1) So M 1, in B °विभृता°, H, Bb °भृता° 2) So M 1, die andern Mss °भूमवताम° 3) So M 1, die andern Mss °मिंद्राग्नीदहरत 4) Vgl Ztschr DMG XXXIII, S 196 Pā 7, 3, 50, 3, 3, 6 schol — Monatsber d Kgl Akad d Wiss zu Berlin Jah 1879, S 691

हि पितृणां षट्कपालः पुरोडाशो भवति षड्वा ऋतवस्त एवास्यैते-नाभीष्टाः प्रीता भवन्ति न वै धानाभिर्न मन्थेन यज्ञो यदेव पुरोडाशस्तेन यज्ञो ऽथैता धानाः स्वधा वा एता अमुष्मिंल्लोके ऽथो अपरिमिता वै संवत्सरस्य रात्रयस्ता एवास्यैताभिरभीष्टाः प्रीता भवन्ति न वै धानाभिर्न पुरोडाशेन पितृयज्ञो यदेव मन्थस्तेन पितृयज्ञो ऽभिवान्यायै गोर्दुग्धे स्यात्सा हि पितृणां नेदिष्ठं दक्षिणासीना उपमन्थति दक्षिणा हि पितृणामेकयोपमन्थत्येका हि पितृणामिक्षुशलाकयोपमन्थति सा हि पितृणां न प्राच्युदञ्च्या पितृयज्ञो हि न दक्षिणा यज्ञ उभे दिशा अन्तरोदङ्ङुभये ह्यीज्यन्त उपमूलं बर्हिर्दाति तेन पितृणां यदृतेमूलं तेन देवानामुभये ह्यीज्यन्ते परिश्रयन्त्यन्तर्हिता वा अमुष्मादादित्यात्पितरो ऽथो अन्तर्हिता हि देवेभ्यश्च मनुष्येभ्यश्च पितरस्तेभ्यस्तात्परिश्रयन्ति समन्तं बर्हिः परिस्तृणाति समन्तं ह्यीमे ऋतवः परिविष्टा अथो समन्तान्मा पितरो ऽभिसमागच्छानित्यमुष्मिन्वै पूर्वेस्मिन्नितरा देवता इज्यन्ते यत्सञ्च जुहुयादाहुतीः संसृजेत्समदं कुर्याद्गार्हपत्ये शृतं कुर्वन्ति यज्ञताया ओदनपचनादग्निमाहरन्ति मस्त्विनान्यता आहरन्ति ॥ १७ ॥

Vgl Kāṭh 36, 11 12, TBr. 1, 6, 8

उशन्तस्त्वा हवामह उशन्तः समिधीमहि ।
उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥

इत्यन्वाहोशन्तो हि पितरो ऽनुष्टुभमन्वाहान्तो वा अनुष्टुबन्तः पित-

---

1) M 1 °मथति   2) So wohl M 1, auch Kāṭh 36, 12 उपमूल बर्हिर्दाति. In H u. Bb दाति, B verstummelt

धूपायद्धरन्ति धूपायदिव रुद्राणामेतां दिशं हरन्त्येषां हि रुद्राणां दिक् पराचीनं हरन्ति पराञ्चमेव रुद्रं हरन्त्याखुं ते रुद्र पशुं करोमीत्याखुकिरा एकमुपवपति पशुभ्यस्तेन निरवदयते तस्मात्तान्पशुपतिर्घातुकश्चतुष्पथे याजयेच्चतुष्पथे वै रुद्राणां गृहा गृहेष्वेव रुद्रं निरवदयत एषं ते रुद्र भागस्तं जुषस्व सह स्वसाम्बिकया स्वाहेति शरद्वै रुद्रस्य योनिः स्वसाम्बिकैता वा एषो ऽन्वभ्यवचरति तस्माच्छरदि भूयिष्ठं हन्ति तयैवैनं सह निरवदयते मध्यमपर्णेन जुहोति तद्ध्यरक्षोहतमारण्येन जुहोत्यरण्य एव रुद्रं निरवदयते यद्ग्राम्येण जुहुयाद्रुद्रं प्रजास्वन्ववनयेत्तस्मादारण्येन जुहोत्यवाम्ब रुद्रमदिमहीत्यनृणा एवाभुवन्भेषजं गवे ऽश्वाय पुरुषाय भेषजमित्यनृणा एव भूत्वा भेषजमक्रत त्र्यम्बकं यजामहा इति परियन्ति त्रिरपि पतिकामा पर्यैति पतिवेदनमेवास्यास्तत्तानूर्ध्वानुदस्य प्रतिलभन्ते भगमेव प्रतिलभन्ते तान्यजमानाय समावपन्ति भगमेवास्मै समावपन्ति या पतिकामा स्यात्तस्यै समावपेयुर्भगमेवास्यै समावपन्ति तान्मूते कृत्वा वृक्ष आसजति ॥ रुद्रैषं ते भागस्तेनावसेन परो मूजवतो ऽतीहि पिनाकहस्तः कृत्तिवासा अवततधन्वा ॥ इति गिरिर्वै रुद्रस्य योनिरेता वा एषो ऽन्वभ्यवचारं प्रजाः शमायते सं

नैवैनं भागधेयेन स्वे[1] योनिं गमयत्यनपेक्षमाणा आयन्ति रुद्रस्यानन्ववायाय परोगोष्ठं मार्जयन्ते[2] परोगोष्ठमेव रुद्रं निरवदयन्ते ऽसौ वै स्त्री भगनाम्नी[3] तस्मात्त्र्यम्बका यस्य वै हविरप्रतिष्ठितमप्रतिष्ठितः सो ऽप्रतिष्ठिता अस्य त्र्यम्बका आदित्यं घृते चरुं निर्वपेत्पुनरेत्य गृहेष्वियं वा अदितिरियं प्रतिष्ठा यदादित्यो ऽस्यामेव प्रतितिष्ठति ॥ २० ॥

Vgl. 1, 10, 4 — Kāṭh. 36, 14; TBr 1, 6, 10

॥ इति प्रथमकाण्डे चातुर्मास्यानि नाम दशमः प्रपाठकः ॥

---

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं पुनातु वाचस्पतिर्वाचमद्य स्वदातु नः ॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे[4] ।
विश्वं ह्यस्यां भुवनमाविवेश तस्यां देवः सविता धर्म साविषत् ॥

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिषु ।
अश्वा भवत वाजिनः[5] ॥

---

1) So M 1, die andern Mss ohne Accent, vgl oben 1, 10, [illegible] 2) So M 1, die andern Mss °यन्ते 3) Die Mss °म्नास्ता, in M 1 fehlt dieses und das folgende Wort 4) So M 1, P वचसा । करामहे I, H u Bb वचसां (vgl TS 1, 7, 7, 1). 5) P वाजिन. (= VS 9, 6), dagegen stimmt TS 1, 7, 7, 2 zu den Saṃhitā-Mss

धूपायद्धरन्ति धूपायद्धि रुद्राणामेतां दिशं हरन्त्येषा हि रुद्राणां दिक् पराचीनं हरन्ति पराञ्चमेवं रुद्रं हरन्त्याखुं ते रुद्र पशुं करोमीत्याखुकिरामेकमुपवपति[1] पशुभ्यस्तेन निरवदयते तस्मात्तान्पशुपतिर्घातुकश्चतुष्पथे याजयेच्चतुष्पथे वै रुद्राणां गृहा गृहेष्वेव रुद्रं निरवदयत एष ते रुद्र भागस्तं जुषस्व सह स्वसाम्बिकया स्वाहेति शरद्धि रुद्रस्य योनिः स्वसाम्बिकैतौ वा एषो ऽन्वभ्यवचरति तस्माच्छरदि भूयिष्ठं हन्ति तयैवैनं सह निरवदयते मध्यमपर्णेन जुहोति मध्ये ह्यरक्षो हतमारण्येन जुहोत्यरण्य एवं रुद्रं निरवदयते यद्ग्राम्येण जुहुयाद्रुद्रं प्रजास्वन्ववनयेत्तस्मादारण्येन जुहोत्यवाम्ब रुद्रमदिमही-[3] त्यनृणा एवाभुवन्भेषजं गवे ऽश्वाय पुरुषाय भेषजमित्यनृणा एव भूत्वा भेषजमकृत[4] त्र्यम्बकं यजामह इति परियन्ति तत्रापि पतिकामा पर्येति पतिवेदनमेवास्यास्तत्रानूर्ध्वानुदस्य[5] प्रतिलभन्ते भगमेव प्रतिलभन्ते तान्यजमानाय समावपन्ति भगमेवास्मै समावपन्ति या पतिकामा स्यात्तस्यै समावपेयुर्भगमेवास्यै समावपन्ति तान्मूते कृत्वा वृक्ष आसजति[7] ॥ रुद्रैष ते भागस्तेनावसेन परो मूजवतो ऽतीहि पिनाकहस्तः कृत्तिवासा अवततधन्वा ॥ इति गिरिं वै रुद्रस्य योनिरेतौ वा एषो ऽन्वभ्यवचारं प्रजाः शमायते स्वे-

---

1) So M 1, die andern Mss •वपति  2) So M 1, in H u. Bb •रक्षमेव, B •रायमेव  3) So M 1, H, B, desgl. Kath. 36, 14, in Bb •मदीमहि, vgl. I, 10, 4  4) So M 1; die andern Mss •मक्रमत्  5) So M 1, in H u. Bb पतिवेदन•  6) So M 1, aber H u. Bb •मेवास्मा•  7) B आसजति, in M 1 entweder आसचति, oder es ist auch der Nasal noch angedeutet •ञ्चति, in H u. Bb आसिचति, an entsprechender Stelle TBr 1, 6, 10, 5 मूते कृत्वासजन्ति, Dhâtup 7, 22 giebt सञ्ज्, सजति = सञ्ज्, सज्जति an, doch war dies noch unbelegt (vgl. Pet. Wört.) Auch Kâṭh. 37, 14 मूतस्ते कृत्वा वृक्ष आसजति Vielleicht in Maitr. S. ohne Nasal [illegible] schreiben  8) So M 1, die andern Mss •चारम्

एषं स्य[1] वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष[2] आसन् ।
क्रतुं दधिक्रामनु संसनिष्यदत्पथामङ्कांस्यन्वापनीफणत् ॥
उतं स्मास्य[3] द्रवतस्तुरण्यतः[4] पर्णं न वेरनु वाति प्रगर्धिनः ।
श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥

॥ २ ॥ Vgl TS 1, 7, 8 (rathadhâvanamantrâḥ), Kâṭh. 13, 14, VS 9, 13—18, Mân Çr 7, 1, 2 a. E

आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वशंभू ।
आ मा गन्त पितरो विश्वरूपा आ मा सोमो अमृतत्वेन
गम्यात् ॥

इन्द्राय वाचं वदतेन्द्राय वाचं संवदतेन्द्रं[5] वाजं जापयतेन्द्रं वाजं जयेयं[6] वः सा सत्या संवागभूद्यामिन्द्रेण[7] समदध्वमजीजपत वनस्पतया[8] इन्द्राय वाचं विमुच्यध्वं वाजिनो वाजजितो वाजं जित्वा बृहस्पतेर्भागमवजिघ्रत वाजिनो वाजजितो वाजं जित्वा बृहस्पतेर्भागे निमृज्येषा[9] स्वो रोहावेहि[10] स्वो रोहावेहि स्वो रोहायो-र्युर्यज्ञेन कल्पते प्राणो यज्ञेन कल्पते चक्षुर्यज्ञेन कल्पते श्रोत्रं यज्ञेन कल्पते मनो यज्ञेन कल्पते वाग्यज्ञेन कल्पते ब्रह्मा यज्ञेन कल्पते पृष्ठं यज्ञेन कल्पते स्वर्यज्ञेन कल्पते यज्ञो यज्ञेन कल्पते वाजाय स्वाहा प्रसवाय स्वाहापिजाय[11] स्वाहा क्रतवे स्वाहा-

---

1) P एषं । स्यः । 2) P अपिकक्षं इत्यपिकक्षे I, Kâṭh (wie TS u VS 9, 14) अपिकक्ष आसनि 3) P स्म । अस्य I, M I स्मास्य H u Bb स्मा स्यं, desgl B, ohne Accent (s TS 1, 7, 8, 3) 4) M 1 तरण्यतं 5) So M 1; die andern Mss °तेंद्र॑ं; P ऐंद्रं; s VS 9, 11 6) P जय । इयं । (cod. इंयं) 7) So M 1; P संवागितिं स वाक् I, H, Bb सं॰ वाग॰ (s VS 9, 12) 8) P वनस्पतय । 9) aber P निः । मृज्येथा । 10) P स्वरिति स्वः । रोहाव । आ । इहि । 11) P अपिजायें-त्यपि जाय ।

वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः[1] सप्तविंशतिः ।
ते अग्रे अश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः[2] ॥
अपां नपादाशुहेमन्यं ऊर्मिः प्रतूर्तिः ककुभ्वान्वाजसाः[3] ।
तेन वाजं सेषम्[4] ॥
देवस्य सवितुः प्रसवे सत्यसवसो वर्षिष्ठं नाकं रुहेयम् ॥ देवस्य वयं सवितुः प्रसवे सत्यसवनस्य बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्म ॥ १ ॥

Vgl. 1, 11, 6. 7. — TS 1, 7, 7 (vājapeyaḥ; rathamantrāḥ); Kāṭh. 13, 14; VS 9, 1. 5—7. 10. 9. Mān. Çr. 1, 7, 1. 2.

वाजं वाजिनो जयताध्वानं स्कभुवन्तो योजना मिमानाः ॥
काष्ठां गच्छत ॥
शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः[6] ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः[8] ॥
वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः[9] ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा[10] मेधसाता सनिष्यवो महो ये धना[11] समिथेषु[12] जभ्रिरे ॥

---

1) H, Bb मधर्वात् 2) So M 1 u. P (= TS 1, 7, 7, 2); in H u. Bb चस्मिन् 3) So M 1, (vgl. Bildungen wie संमस्वन् !); H u. Bb ककुत् मयान्; desgl. B, ohne Accent; P ककुभ्मानिति ककुभ वान् 1, TS 1, 7, 7, 2 ककुद्मान्; Kāṭh. ककुद्मन्; VS 9, 6 ककुभ्मान् 4) So auch Kāṭh 13, 14, dagegen TS u. VS सेत् 5) P यंभत । यंभ्मानं । 6) P स्वर्का इति सु अर्काः । 7) P चाहिं । 8) B °मायवान° 9) So M 1; P विप्राः । अमृताः । ऋतज्ञा इत्यृतज्ञाः ।; aber H u. Bb विप्रा अमृता ऋतज्ञाः ॥ 10) P सहस्र-साः । 11) P धनानि 12) P समिथेष्विति स-इथेषु

एषं स्य[1] वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिपक्ष[2] आसन् ।
क्रतुं दधिक्रामनु संसनिष्यदत्पथामङ्कांस्यन्वापनीफणत् ॥
उत स्मास्य[3] द्रवतस्तुरण्यतः[4] पर्णं न वेरनु वाति प्रगर्धिनः ।
श्येनस्येव द्रवतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥

॥ २ ॥ Vgl. TS 1, 7, 8 (rathadhâvanamantrâh); Kâth 13, 14; VS 9, 13—18, Mân Çr 7, 1, 2 a. E.

आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वशंभू ।
आ मा गन्त पितरो विश्वरूपा आ मा सोमो अमृतत्वेन गम्यात् ॥

इन्द्राय वाचं वदतेन्द्राय वाचं संवदतेन्द्रं वाजं जापयतेन्द्र[5] वाजं जयेयं[6] वः सा सत्या संवागभूद्यामिन्द्रेण[7] समदध्वमजीजपत वनस्पतया[8] इन्द्राय वाचं विमुच्यध्वं[9] वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतं वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागे निमृज्येथां स्वो रोहावेहि[10] स्वो रोहावेहि स्वो रोहावायुर्यज्ञेन कल्पते प्राणो यज्ञेन कल्पते चक्षुर्यज्ञेन कल्पते श्रोत्रं यज्ञेन कल्पते मनो यज्ञेन कल्पते वाग्यज्ञेन कल्पते यज्ञो यज्ञेन कल्पते पृष्ठं यज्ञेन कल्पते स्वर्यज्ञेन कल्पते यज्ञो यज्ञेन कल्पते वाजाय स्वाहा प्रसवाय स्वाहापिजाय[11] स्वाहा क्रतवे स्वाहा-

---

1) P एषः । स्यः । 2) P अपिपक्ष इत्यपिपक्ष 1, Kâṭh. (wie TS u VS 9, 14) अपिकक्ष आसनि 3) P स्म । अस्य 1, M 1 स्मास्यु. II u Bb स्म अस्यं; desgl B, ohne Accent (s TS 1, 7, 8, 3) 4) M 1 तरस्यतः 5) So M 1; die andern Mss ॰तेंद्र्न; P ऐंद्र्; s VS 9, 11 6) P वाच । इयं । (cod. इंय) 7) So M 1; P अपीपिति स. वांच् 1, II, Bb सं॰ वाग॰ (s VS 9, 12) 8) P वनस्पतय । 9) aber P जिः । मृक्ष्येथा । 10) P स्वरिति स्वः । रोहाव । वा । इहि । 11) B अपिजायेत्यपि. जाय ।

हृपतये स्वाहा वाक्पतये स्वाहा वसवे स्वाहा स्वर्मूर्धा वैयश्नो व्यश्यश्वान्त्यो[15] ऽन्त्यो भौवनो[1] भुवनस्य पतये ऽधिपतये स्वाहा ऽन्नाय त्वा वाजाय त्वा वाजजित्यायै त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा स्वर्देवा अगामामृता अभूम प्रजापतेः प्रजा अभूम ॥ 3 ॥

Vgl 1, 11, 7 8 — TS 1, 7 8 a E 9 (yûpârohaṇam), Kâṭh 14, 1, VS 9, 11 12 19—21, Mân Çr 7, 1, 3

अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव ।
प्र नो यछ विशस्पते धनदा असि नस्त्वम् ॥
प्र नो यछत्वर्यमा प्र भगः प्र बृहस्पतिः ।
प्र देवाः प्रोत सूनृता[10] प्र वाग्देवी ददातु नः ॥
अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वाचं विष्णुं सरस्वतीं सवितारं च वाजिनम् ॥
सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥
इन्द्रवायू सुसंदृशा सुहवेह[11] हवामहे ।
यथा नः सर्वा[12] इज्जनः[13] सगमे सुमना[14] असत् ॥
वाजस्येमं प्रसवः सुषुवे ऽग्रे सोमं राजानमोषधीष्वप्सु ।

1) So die Mss nur P अहर्पतये । अह पतय इत्यह पतये । 2) Nur P वाक्पतय इति वाक् पतये । s Ztschr DMG XXXIII S 195, Pa. 6, 2, 19 vgl चित्पतिं oben 1, 2 1 3) Die Mss schwanken, M 1 वैयश्नो, H u Bb वैयश्नोवो, B वैयशोवो, P वैयश्नो । Kâṭh 14 1 स्वाहा मूर्धा वैयश्नाय, s TS 1, 7, 9, 1, VS 9, 20 4) So H Bb u B P व्यश्यन्निति वि अश्यन् ।, M 1 व्यश्यन्°, Kâṭh व्याहा व्यश्नुवन्नन्त्याय 5) P अन्त्यं । अन्त्य । 6) So M 1 P भौवनं ।, In H, Bb u B भौवनो 7) P अगाम । अमृता । 8) P अभूम । 9) P वद । इह । 10) So M 1 u P; die andern Mss सुनृता 11) P सुहवेति सु हवा । इह ।, B सुहवेह 12) P सर्वः । 13) P इत् । जन । 14) P सु मना ।

स विराजं पर्येतु प्रजानन्प्रजां पुष्टिं वर्धयमानो अस्मे ॥
वाजस्येमां प्रसवः शिश्रिये दिवं सं ओषधीः समनक्तु घृतेन।
ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयामा' पुरोहिताः ॥
वाजस्येदं प्रसवं आबभूवेमा च विश्वा भुवनानि सर्वतः ॥
अदित्सन्तं दापयतु प्रजानन्रयिं च नः सर्ववीरं नियच्छतु' ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या' वाचा यन्तुर्यन्त्रेण बृहस्पतिं साम्राज्यायाभिषिञ्चामीन्द्रं साम्राज्यायाभिषिञ्चाम्युपयामगृहीतो ऽसि' द्रुषदं त्वा नृषदमायुषदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽसि' पृथिवीषदं त्वान्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽस्यप्सुषदं त्वा घृतसदं भूतसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽसि' यह विश्वजनीन नियन्तर्विमायाम'' ते ॥

यास्त्विषः प्रथमजा दिव्यः कोशः समुक्षितः।
तासां विशिश्वानामिषमूर्जं' समप्रभम् ॥

इन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽसि ॥

अपां रसमुद्वयसं सूर्येशुक्रं समाभृतम्।

---

1) So die Mss जागृयामा, P जागियाम (vgl TS 1 7, 10, 1, VS 9, 23) 2) P प्र। सवं। 3) H u Bb नियच्छत 4) P संरस्वत्या। 5) So M 1, P नियन्तर्विति नि। यन्त I, in H, Bb u B नीयन्त॰ 6) So H, Bb in M 1 u B desgl, ohne Accent, P विमाय। मते। Kāth 14 1 विश्व चामनी 7) So H u Bb, desgl B, ohne Accent, in M 1 विशियानामा॰, P विशश्वानामिति विश्व श्वाना, Kāth 14, 1 विशिशन्यानामिष॰ 8) P सूर्यात्।

अपां रसस्य यो रसस्तं ते गृभ्णाम्युत्तमम् ॥

इन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा ॥

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।

इहेहैषां कृणुत भोजनानि ये बर्हिषा नमउक्तिं न जग्मुः ॥

उपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा ॥ अया विष्ठा प्रजापतये त्वा ॥ ४ ॥

Vgl TS 1, 7, 10 (annahomāh), 12 (atigrāhyamantrah), Kāth 14, 2 3, VS 9, 23—30 2 3, 33, 36, 10, 32, Mān. Çr 7, 1, 1 3, 7, 2, 5 6

देवा वै नाना यज्ञानपश्यन्नेष वा एतं सर्वे ऽपश्यंस्तस्मिन्वा अयतन्त तस्मिन्नाजिमयुस्तं बृहस्पतिरुदजयद्बृहस्पतिर्वै देवानां पुरोहितो यद्वै पुरोहितो ब्राह्मण ऋणोति तद्राज्ञस्तेनेन्द्रमयाजयत्स स्वाराज्यमगच्छत्स एष स्वाराज्यो यज्ञः स्वाराज्यं गच्छति य एतेन यजते यद्बृहस्पतिरुदजयत्तस्माद्ब्राह्मणो यजेत यदिन्द्रमयाजयंस्तस्माद्राजन्यो देवा वै नाना यज्ञानाहरन्निममहमिमं तमित्येष वा एतं प्रजापतिराहरत्तस्मिन्वा अपित्वमैच्छन्त तेभ्यश्छन्दांस्युज्जितीः प्रायच्छदेष वा एतेन प्रजापतिरयजत स स्वाराज्यमगच्छत्स एष स्वाराज्यो यज्ञः स्वाराज्यं गच्छति य एतेन यजते ऽन्नं वै वाजस्तद्य एवं विद्वानन्नमत्ति वाजयति ह वा एनमन्नमद्यमानं सोमो वै वाजपेयस्तद्य एवं विद्वान्सोमं पिबति वाजं ह गच्छति यावन्तो हि देवाः सोममपिबंस्ते वाजमगच्छंस्तस्मात्सर्वः सोमं पिपासति

---

1) P मृणुहि । 2) in M 1 scheint das Verb unbetont 3) So M 1, in H, Bb तस्मिन्नाजिम॰, desgl B, ohne Accent, Kath 14 5 wie M 1 4) M 1 ॰मित्यपवा 5) So M 1, (desgl Kāṭh 14, 5) in H u Bb चापि स्वामि॰, desgl B, ohne Accent 6) So M 1, die andern Mss ॰रयाजयत् 7) So M 1, in H u Bb das Verb ohne Accent

वाजं॰ ह गच्छति वाग्घि वाजस्य प्रसवः सा वै वाक्सृष्टा चतुर्धा व्यभवदेषु लोकेषु त्रीणि तुरीयाणि पशुषु तुरीयं॰ या पृथिव्यां॰ साग्नौ सा रथन्तरे यान्तरिक्षे सा वाते सा वामदेव्ये या दिवि सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुस्तस्माद्ब्राह्मण उभयीं॰ वाचं॰ वदति यश्च वेद यश्च न यो बृहद्रथन्तरयोर्यज्ञायज्ञिये तया गच्छति यो पशुषु तय ऋतेमह्यं तंश्च एवं॰ वेदाह वा एनमप्रतिख्यातं गच्छति यावती वाक्तां॰ हि वेद वाचा हि दीयते वाचा प्रदीयते यो गाथानाराशंसीभ्यां॰ सनोति न तस्य प्रतिगृह्यमनृतेन हि स तत्सनोति न मत्तस्य यदा हि तस्य मदो व्येत्यथ तं तत्तपति ॥ ५ ॥

Vgl. Kâṭh 14, 5

सप्तदश वा एते ग्रहा महाः प्राजापत्याः सप्तदशः पुरुषः प्राजापत्यश्चत्वार्यङ्गानि शिरोग्रीवमात्मा वाक्सप्तमी दश प्राणा अङ्गेऽङ्गे वै पुरुषस्य पाप्मोपश्लिष्टो यद्यतिपञ्चमहाग्गृह्णात्यङ्गादङ्गादेवैनं पाप्मनो मुञ्चति श्रीर्वै सोमः पाप्मा सुरोपयामा अगते काले प्राञ्चः सोमैरुत्क्रामन्ति प्रत्यञ्चः सुरोपयामैः पाप्मनैवैनं॰ विपुनन्ति तस्मादाहुर्वाजपेययाज्येव पूत इति पाप्मना ह्येनं॰ विपुनन्ति देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति परुषि परुषि जुहोत्युत्सन्नयज्ञो वा एष कौ ह तद्वेद यदेतस्य क्रियते यच्च

1) M 1 बृहती 2) So die Mss., Kâṭh दैवी च मानुषी च 3) So M 1, in H u. Bb तया 4) So corrigirt, cf. Vorr.; in den Mss. ॰यातं, Kâṭh यावमाह वा एनमप्रतिख्यातमृच्छति य एव वेद vgl. TBr 2, 7, 18, 3, 2, 2, 3, 7 5) So M 1; in H u. Bb ohne Accent 6) Dies auch Kâṭh 14, 6 7) So M 1, die andern Mss. ॰श्चो, s. TBr 3, 8, 17, 4 8) So H u. Bb (vgl. TBr 3, 8, 17, 4. Kâṭh 14, 6), M 1 पाप्मोपश्लिष्ट॰, B पाप्मोपश्लिष्टो 9) So M 1, in H, Bb तंद्य, B यत्तद; Kâṭh 14, 6 कौ ह तद्वेद यावदेतस्याधि यति यावत सर्वस्यापि cet.

सर्वत्वायैव प्रसवाय' वाजस्य नु प्रसवे मातरं महीमिति रथमुपावहरतीयं वा अदितिरनयैवैनं प्रसूतं सवित्रा चोपावहरति वाजस्योज्जित्या' अ३प्स्वन्तरमृतमप्सु भेषजमित्यश्वान्स्नपयन्त्यप्सुजा वा अश्वा' स्वादेवैनान्योनेर्जनयन्ति' वायुर्वा त्वा मनुर्वा त्वेति युनक्ति' न वा एतन्मनु३ष्या योक्तुमर्हन्ति' देवताभिरेवैनान्युनक्त्यपां नपादाशुहेमन्निति स्राटानि प्रतिमार्ष्टि' पूर्वमेव यजुरुदितमनु वदति' दुन्दुभीन्विह्लादयन्ति' वाग्वा एषैकारण्यं प्राविशत्तामेवोज्जयत्येषो या वनस्पतिषु वाक्तामेवावरुन्द्धे' सप्तदशः सर्वो भवति' प्रजापतिर्वै सप्तदशः' प्रजापतिमेवाप्नोत्युत्सन्नयज्ञो वा एष' संवत्सरो वा अध्युत्सन्नयज्ञो ऽवरुध्यते' संवत्सरादेवैनमध्याप्नावरुन्द्धे ॥ ६ ॥

Vgl 1, 11, 1 — Kâṭh 14, 6 7

देवस्य सवितुः प्रसवे सत्यसवसो वर्षिष्ठं नाकं रुहेयमिति ब्रह्मा रथचक्रं सर्पति' सवितृप्रसूत एव वज्रं सर्पति वाजस्योज्जित्या' अथो प्रजापतिर्वै ब्रह्मा यज्ञस्य' प्रजापतिरेवैनं वज्रादधि प्रसुवति वाजस्योज्जित्यै' साम गायते' सत्यं वै साम' सत्येनैवोज्जयत्युज्जितिर्योजयत्यन्नं वै वाजो' ऽन्नाद्यस्योज्जित्यै' देवस्य वयं सवितुः प्रसवे सत्यसवनस्य बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्मेति रथमभ्यातिष्ठति' सवितृप्रसूत एव रथमभ्यातिष्ठति वाजस्योज्जित्यै' वाजिनामृचो ऽन्वाह वाजस्योज्जित्या' आजिं धावन्ति वाजस्योज्जित्या' अनुदिष्टे रथैर्धावन्ति' दक्षिणयैव स्वर्गं लोकमेति' यदनुदिष्टे रथैर्धावन्ति दक्षिणया वा एतद्यजमानः सह स्वर्गं लोकमेत्यथैषं नैवारः सप्तदशशरावो' देवा ओषधीषु पक्वास्वाजिमयुस्तां बृहस्प-

---

1) So M 1, in H u Bh das Verb ohne Accent

तिरुदजयत्स एतांस्त्रिवारान् न्यवृणीत तत्त्रिवाराणां त्रिवारत्वं बृहस्पतिर्वै ता उदजयत्तमेव भागिनं करोत्यहिंसायै तमधश्चात्वाल हरन्तीहे वा असा आदित्य आसीत्तमितो ऽध्यमुं लोकमहरंस्तद्यतो ऽध्यमुं लोकमहरंस्तच्चात्वाले ऽवदधति यजमानमेव स्वर्गं लोकं हरन्त्यों मा वाजस्य प्रसवो जगम्यादिति रथेषु पुनरासृतेषु जुहोति यमेव वाजमुदजैषुस्तमात्मन्धत्ते ऽजीजपत वनस्पतया इन्द्राय वाचं विमुच्यध्वमिति रथविमोचनीयं जुहोति यजुषैव युज्यन्ते यजुषा विमुच्यन्ते वाजिनो वाजजितो वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतमिति भागिना एवैना अकर्वाजिनो वाजजितो वाजं जित्वा बृहस्पतेर्भागे निमृज्येथामिति संवानेवैनाञ्छ्रीणात्यधिवयां च सुरोपयामांश्च हरन्ति य आजिं धावन्ति तेभ्यो यमेव वाजमुदजैषुस्तं परिक्रीणीते मधुषालं ब्रह्मणे ब्रह्मण एव तेन परिक्रीणीते ककुभो राजपुत्रः प्राश्नाति वीर्यं वै ककुब्वीर्यमेवात्मन्धत्ते ॥ ७ ॥

Vgl 1, 11, 1 3 — Kāṭh 14, 7 8

स्वो रोहावेहि स्वो रोहावेहि स्वो रोहावेति ३स्वर्गो एतद्रोह्यर्मन्त्या सम्वदते ऽथो अन्वारम्भो वा एष यज्ञस्य पत्न्या सह स्वर्गे लोके भवता आयुर्यज्ञेन कल्पते प्राणो यज्ञेन कल्पता इत्येतावान्वै पुरुषो यावानेव पुरुषस्तमाप्नोति स सर्वो भूत्वा स्वर्गं लोकमेति दर्भमयं वासो भवति पवित्रत्वाय गौधूमं चषालं प्राजापत्या वै गोधूमा अर्धं प्रत्यासामोषधीनां सहैवान्नाद्येनामुं लोकमेति वाजाय स्वाहा प्रसवाय स्वाहेति त्रयोदश वा एता स्वा-

1) So M 1; (od पुनरा°), Bb पुनरासृजेषु, H पुनरासृजेषु, desgl B, ohne Accent, Kāṭh 14, 7 पुनरागतेषु 2) B इन्द्रस्य 3) Die Mss schwanken, M 1 ककुप्त्र°, H, Bb ककुत्व°, B undeutl., wohl ककुप्व°, Kāṭh 14, 7 ककुब्वीर्यं 4) in den Mss., प्रत्य° ohne Accent 5) So M 1, in H, Bb त्रयोदशं

हुतयस्त्रयोदश मासाः सꣳवत्सरः सꣳवत्सरं वावासा एतदुपदधाति स्वर्गे लोके तस्मिन्नेव प्रतितिष्ठत्यन्नाय त्वा वाजाय त्वा वाजजित्यायै नैयूपपुटैरर्पयन्ति[1] प्राजापत्या वा ऊषाः स्वः स्वो भूयाꣳसो भवन्त्यन्नाद्येनैवैनमर्पयन्तीति वा एषो ऽस्माल्लोकाद्यो ऽमुं लोकमेति यदूषपुटैरर्पयन्ति तेनास्माल्लोकान्नैति तेनास्मिंल्लोके धृतो हिरण्यमभ्यवरोहति तेजो वै हिरण्यं तेजस्येव प्रतितिष्ठति वस्ताजिनमभ्यवरोहति पशवो वै वस्ताजिनं पशुष्वेव प्रतितिष्ठत्यन्नस्यान्नस्य जुहोति वाजप्रसव्याभिरन्नं वै वाजो ऽन्नाद्यस्यावरुद्ध्या उभयं ग्राम्यं चारण्यं च जुहोत्युभयस्यान्नाद्यस्यावरुद्ध्या औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्जो ऽवरुद्ध्यै सप्तभिर्जुहोति सप्त वै छन्दाꣳसि छन्दोभिरेवास्मा अन्नाद्यमवरुन्द्धे ऽथ[2] वाग्वै छन्दाꣳसि वाचैवास्मा अन्नाद्यं प्रयच्छति ॥ ८ ॥

Vgl. 1, 11, 3 — Kâth 14, 6.

अथैते ऽतिग्राह्या यद्देवा अदः परममन्नाद्यमनवरुद्धं तस्यैते ऽवरुद्ध्यै गृह्यन्ते ऽथैते पशव आलभ्यन्ते यज्ञक्रतूनामवरुद्ध्यै यदाग्नेयो ऽग्निष्टोमं तेनावरुन्द्धे यदैन्द्राग्न उक्थ्यं तेन यदैन्द्रो वृष्णिः षोडशिनं तेन यत्सारस्वती मेषी यद्देवा अदः सप्तदशꣳ स्तोममनाप्तमनवरुद्धं तदेवैतयाप्नोति तदवरुन्द्धे ऽथैषा वशा देवाश्च वा असुराश्चास्पर्धन्त नेमे देवा आसन्नेमे ऽसुरास्ते देवा एताꣳ वशामपश्यꣳस्तया लोकं द्वितीयमवृञ्जतासुरलोकं यस्यावद्यति स देवलोको यस्य नावद्यति सो ऽसुरलोकस्तं लोकमेवैतया द्वितीयं यजमानो वृङ्क्ते भ्रातृव्यलोकमेव सारस्वत्यन्येषामुत्तमा भवति सारस्वत्यन्येषां[3] प्रथमा वाग्वै

1) M 1 °पुटैर°   2) So M 1, die andern Mss षो   3) So H, Bb; desgl. B, ohne Accent, in M 1 सारस्वत्यन्येषा°

संज्ञानं नो दिवा पशोः संज्ञानं नक्तमर्वतः ।
संज्ञानं नः स्वेभ्यः संज्ञानमरणेभ्यः संज्ञानमश्विना युवमिहा-
स्मभ्यं नियच्छतम् ॥
समिन्द्र राया समिषा रभेमहि सं वाजैः पुरुश्चन्द्रैरभिद्युभिः[1] ।
सं देव्या[2] प्रमत्या वीरशुष्मया गोअग्रयाश्वत्या रभेमहि ॥
इन्द्रवायू सुसंदृशा[3] सुहवेह हवामहे ।
यथा नः सर्वा इज्जनः संगमे सुमना असत् ॥
सं वो मनांसि सं व्रता समाकूतीर्नमसत[4] ।
अमी ये विव्रताः स्थ तान्वः संनमयामसि ॥
समाना वा[5] आकूतानि समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति[6] ॥
समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्त-
मेषाम् ।
समानं क्रतुमभिमन्त्रयध्वं समानेन वो हविषा जुहोमि ॥
संगच्छध्वं संजानीध्वं सं वो मनांसि जानताम् ।
देवा[7] भागं यथा पूर्वे संजानाना[8] उपासते ॥ ६ ॥ -

Vgl TBr 2, 4, 4 flg, Kāṭh 10, 12

आग्नेयमष्टाकपालं निर्वपेत्सावित्रं चरुं वायव्यां यवागूं प्रति-धुग्वा भौममेककपालं यस्य हिरण्यं नश्येद्यो वा हिरण्यं विन्देदे-षिर्वा अग्ने हिरण्यमविन्दत्स सवितारमामन्त्रयत न खलु वै किं चन

1) P पुरुश्चन्द्रैरिति पुरुश्चन्द्रैः । 2) So B (ohne Accent); desgl Kāṭh 10, 12; die andern Mss देव्यां 3) M 3 सुसदृशा 4) P नमंसत । W u B °नंसता 5) P व । 6) P marg मसु । सहे । आसति t, vgl RV 10, 191 4 7) P देवां । 8) P संजानाना इति स जानाना ।

वायुर्नानभिगतमस्त्यस्या वै स तद्विन्देदिति त्वा एवास्मै प्रसवाय सावित्रो ऽभिनीत्यै वायव्याय यज्ञो ऽमो ऽस्या हि स तद्विन्दते ते वै प्रदातारस्तानेव भागधेयेनोपासरत्ते ऽस्मै प्रयच्छन्ति स यदा विन्देदथैतेभ्य एवं निर्वपेद्धैरेवाविन्दत्तान्भागिनः करोत्यहिंसायै प्रजापतिर्वै सोमाय राज्ञे दुहितॄरददान्नक्षत्राणि स रोहिण्यामेवावसन्नेतरासु ता अनुपेयमानाः पुनरगच्छंस्तं राजयक्ष्मेणाग्राहयत्स निरस्रवत्तस्माद्राजयक्ष्मगृहीतो निःस्रवति स वै प्रजापतिमेवोपाधावत्तं प्रजापतिरब्रवीदृतं ब्रूहीति स ऋतमब्रवीद्यथा सर्वास्वेव समावद्वसानीति तस्मादेष सर्वास्वेव समावद्वसति तस्मै वै प्रजापतिः प्रायश्चित्तिमैच्छत्तस्मा अमावास्याया वैश्वदेवं चरुं निरवपत्तेनास्मै प्रायश्चित्तिमविन्दत्ततो ऽमुमाप्यायमानमन्वाप्यायत वसीयानभवद्यो राजयक्ष्मगृहीतः स्यात्तस्मा अमावास्याया वैश्वदेवं चरुं निर्वपेत्तेन वै स तस्मै प्रायश्चित्तिमविन्दत्तेनैवास्मै प्रायश्चित्तिं विन्दत्यमुमेवाप्यायमानमन्वाप्यायते वसीयान्भवति ॥ ७ ॥

Vgl. TS 2, 3, 5 (rājayakṣmagṛhītasyeṣṭiḥ), Kāṭh. 11, 3

प्रजापतिर्वै देवेभ्यो भागधेयानि व्यकल्पयत्स इन्द्रो ऽब्रवीदतिरिच्यते तन्ममेति तद्वा इन्द्रियमेवात्यरिच्यत तदिमांल्लोकाननूर्ध्वमनूदप्लवत तन्नैकेनाप्नोन्न द्वाभ्यां तत्तृतीयेनाप्नुवावारुन्ध यत्त्रयः पुरोडाशा भवन्त्येभ्यो वा एतं लोकेभ्य इन्द्रियं वीर्यमाप्नुवत्यवरुन्द्ध उत्तर उत्तरः पुरोडाशो ज्यायान्भवत्युत्तर उत्तरो हि लोको ज्यायानिन्द्राय

1) B पुनरागम॰ 2) M 3 निःस्रवति, desgl. B ohne Accent. 3) In Hg (u. A) das Verb ohne Accent. 4) M 3 ॰मन्वाप्यायत. 5) M 3 ॰मन्वाप्यायते। 6) So betonen M 3 u. W., in Hg (u. A) ॰मेवात्यरिच्यत 7) So betonen M 3 u. W.; in Hg (u. A) ॰मनूदप्लवत 8) So betonen M 3 u. W., in Hg (u. A) das Verb ohne Accent

राज्ञे प्रथमम् इन्द्राय स्वराज्ञे मध्यमम् इन्द्रायाधिराजायोत्तमम् एतानि वै सर्वाणीन्द्रो ऽभवद्राज्यं स्वाराज्यमाधिराज्यमेतानि सर्वाणि भवति य एतैर्यजते सर्वमेतद्भवति य एवं वेद प्रथमामनूच्य मध्यमया यजेन्मध्यमामनूच्योत्तमया यजेदुत्तमामनूच्य प्रथमया यजेदेवमस्य सर्वा अनुवाक्या भवन्ति सर्वा याज्या एषां लोकानां प्रतिप्रज्ञात्या अथो अनुसंतत्या इन्द्राय घर्मवते सूर्यवता एकादशकपालं निर्वपेत्तेजस्कामस्तेजो वै घर्मस्तेजः सूर्यस्तेज एवावरुन्द्ध इन्द्रायेन्द्रियवता एकादशकपालं निर्वपेत्पशुकाम इन्द्रियं वै पशव इन्द्र इन्द्रियस्य प्रदाता तमेव भागधेयेनोपासरत्सो ऽस्मा इन्द्रियं पशून्प्रयच्छति ॥ ८ ॥

Vgl TS 2, 3, 6 (annādanaçakāmasya tridhātur yāgaḥ), Kāṭh 10, 10 8

इन्द्रायार्कवते ऽश्वमेधवता एकादशकपालं निर्वपेन्निरुद्धं याजयेदन्तं वा एष गतो यो निरुद्धो ऽन्तो ऽर्को ऽन्तो ऽश्वमेधो ऽन्तेनैवास्मा अन्ते कल्पयति यथा दक्षिणा वेशं मा नयादितीन्द्रायार्कवते ऽश्वमेधवता एकादशकपालं निर्वपेद्यः कामयेत जने म ऋध्येतेत्यन्तो वा एषा ऋद्धीनां यज्जनो ऽन्तो ऽर्को ऽन्तो ऽश्वमेधो ऽन्तेनैवास्मा अन्ते कल्पयति यथा दक्षिणा वेशं मा नयादितीन्द्रायार्कवते ऽश्वमेधवता एकादशकपालं निर्वपेद्गतश्रीर्यदा वै श्रियो ऽन्तं गच्छत्यथ पापीयान्भवत्यन्तो ऽर्को ऽन्तो ऽश्वमेधो ऽन्तमेवालभ्य न पापीयान्भवतीन्द्रायार्कवते ऽश्वमेधवता एकादशकपालं निर्वपेद्यः कामयेत महायज्ञो मोपनमेदिति द्वयी वा इन्द्रस्य यज्ञिये तनुवौ यदर्कश्चाश्वमेधश्च ते एवालभ्य ताभ्यां महायज्ञमालभत इन्द्राय घर्मवते सूर्यवता

1) M 3 संवति 2) M 3 u. W प्रतिप्रज्ञा॰ 3) So mit Dehnung des Vokals vor anlautendem ऋ in Hg, M3 u A, dagegen W एषं, desgl B, ohne Accent, vgl oben 1, 5, 4 सा ऋतुं, 1, 7, 2 वि स्वा ऋध्यति u dgl

एकादशकपालं निर्वपेदिन्द्राय मन्युमते मनस्वत एकादशकपालमिन्द्रायेन्द्रियवत एकादशकपालमिन्द्रायार्कवते ऽश्वमेधवत एकादशकपालं भूतिकामं याजयेदिदं वा इन्द्रस्य घर्मश्च सूर्यश्चेदमस्य मन्युश्च मनश्चेदमस्यैन्द्रश्चेन्द्रियं चेदमस्यार्कश्चाश्वमेधश्चैतानि वै सर्वाणीन्द्रो ऽभवदेतानि सर्वाणि भवति य एतैर्यजते सर्वमेतद्भवति य एवं वेद ॥ ९ ॥

Vgl TS 2, 2, 7 (aindracarvādyā iṣṭayaḥ) u 8; Kāṭh 10, 8

इन्द्रायांहोमुच एकादशकपालं निर्वपेदामयाविनं याजयेदेषा वा इन्द्रस्य भेषजा तनूर्यदंहोमुक्तमेव भागधेयेनोपासरत्स एनमंहसो मुञ्चतीन्द्राय त्रात्र एकादशकपालं निर्वपेद्यो ज्यान्या मारणादपरोधाद्वा बिभीयादिन्द्रो वै त्रातेन्द्रो ऽपरोद्धा तमेव भागधेयेनोपासरत्स एनं त्रायत इन्द्रायान्वृजव एकादशकपालं निर्वपेज्ज्येष्ठबन्धुरिन्द्रियं वै ज्येष्ठबन्धुरिन्द्रियेणैवैनानन्वृजून्कुरुत इन्द्राय प्रवधायैकादशकपालं निर्वपेत्संग्रामे प्रवधो वा इन्द्रो वृत्राय वज्रं प्राहरत्प्रवध एवैभ्यो वज्रं प्रहरतीन्द्राय वै मृधायैकादशकपालं निर्वपेत्संग्रामे मृधो वा एष विहन्ति यः संग्रामं जयति मृध एव विहता इन्द्रायाभिमातिघ्न एकादशकपालं निर्वपेत्संग्रामे ऽभिमातीर्वा एष हन्ति यः संग्रामं जयत्यभिमातीरेव हता इन्द्रायाभिमातिषाह एकादशकपालं निर्वपेद्यः कामयेत विषहेयाभयं मे स्यादितीन्द्रो वै वृत्राय वज्रमुदयच्छत्तं दानवा नान्वमन्यन्त तमेतेन भागधेयेनान्वमन्यन्त ततो वा असौ

1) W ऐंद्रस्य 2) Kaṭh 10, 9 मघधायै° und auch weiterhin मघध. मघधेषु. 3) Kāṭh विमृधायै° u. weiter unten विमृधो नमू. 4) W विं हन्ति 5) So die Mss ; cf Kāṭh. तया मृधो ऽपहते इति मृध जयति संग्रामम् . तया मृधो ऽपहत चासनो ऽधि

ऽभिमातीहन्वृत्रमहन्वृत्रं खलु वा एष हन्ति यः संग्रामं जयति तदा-
चेघ्नमेवैतत् ॥ १० ॥

Vgl TS 2, 2, 7 u 8, Kāth 10, 9.

ऐन्द्रमेककपालं निर्वपेन्निरुद्धं याजयेदा प्रेहि परमस्याः परावत इति याज्यानुवाक्ये स्यातां परावतं वा एष गतो यो निरुद्धः परावत एवैनमध्याप्रावगमयत्यैन्द्रं त्रयोदशकपालं निर्वपेन्निरुद्धं याजयेदतिरिक्तं वै त्रयोदशमतिरिक्तो निरुद्धोऽतिरिक्तादेवैनमतिरिक्तमाप्रावगमयतीन्द्राय वज्रिण एकादशकपालं निर्वपेदिन्द्राय वृत्रघ्न एकादशकपालमिन्द्राय वृत्रतुर एकादशकपालं यस्य भ्रातृव्यः सोमेन यजेत वज्रं वा एष भ्रातृव्यायोच्छ्रयति यः सोमेन यजते यद्वज्रिणे वज्रेणैवास्य वज्रं स्तृणुते यद्वृत्रघ्ने भ्रातृव्यो वै वृत्रो हन्त्येवैनं यद्वृत्रतुरे भ्रातृव्यो वै वृत्रस्तरत्येवैनमिन्द्राय क्षेमंजयायैकादशकपालं निर्वपेद्यः क्षेमे पशुषु वा विवदेतेन्द्रो वै देवानां क्षेमंजयस्तमेव भागधेयेनोपासरत्सो ऽस्मै क्षेमं पशूञ्जयतीन्द्रायाधिराजायैकादशकपालं निर्वपेद्यत्र राजानः सदृशा इव स्युरिन्द्रो वै देवानामधिराजस्तमेव भागधेयेनोपासरत्स एनमाधिराज्यं गमयति ॥ ११ ॥

इन्द्राय मन्युमते मनस्वत एकादशकपालं निर्वपेत्संग्रामे मन्युना वै वीर्यं क्रियत इन्द्रियेण जयति वीर्यं चैवैष्विन्द्रियं च जित्यै दधाति मन्यवे चरुं निर्वपेत्संग्रामे मन्युना वै वीर्यं क्रियते वीर्यमेवैषु जित्यै दधाति यं जीवग्राहं गृह्णीयुस्तं विकृन्तेयुर्मन्योः स्विदेव सत्यमकरिन्द्राय मनस्वत एकादशकपालं निर्वपेद्यः कामयेत पुण्यः स्यामनाधृष्य इति मनो वै श्रीस्त्विषिः श्रियमेवास्मिंस्त्विषिं दधा-

1) W °द्रोमेहि 2) W क्रियते

ति संवत्सरं नु पुरा मनसो न कीर्तयेत्संवत्सरेण वा एना-प्रमाप्यते संवत्सरेणैवास्मा आप्तां धियं लिपिं दधाति ॥ १२ ॥

Vgl TS 2, 2, 8, 2, Kāṭh 10, 8

यस्य सान्नाय्यं चन्द्रमा अभ्युदियाद्ये पुरोडाश्याः स्तुतास्त्रेधा कुर्याद्ये मध्यमास्तानग्नये दात्रेऽष्टाकपालं निर्वपेद्ये ऽणिष्ठास्ता-निन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति वै मध्यमस्य दातैन्द्रो ज्येष्ठस्य प्रदाता यत्क्षोदिष्ठं त-च्छिपिविष्टं तदाप्नोति पशूनेव सोमो वा एतस्यातिरिच्यते यस्य सान्नाय्यं चन्द्रमा अभ्युदेति स वै पशूनेवाभ्यतिरिच्यते यः पशुकामः स्यात्सो ऽमावास्यामिष्ट्वा वत्सानपाकुर्याद्ये पुरोडाश्याः स्तुतां-स्त्रेधा कुर्याद्ये क्षोदिष्ठास्तानग्नये सनिमते ऽष्टाकपालं निर्वपेद्ये मध्य-मास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये ऽणिष्ठास्तानिन्द्राय प्रदा-त्रे दधंश्चरुमेभिरेवास्मै तद्विन्दति यदीहे विष्णुस्तद्यदन्तरिक्षा इन्द्र-स्तद्यद्दिवि सत्वानो गा इच्छन्ति यदेते तण्डुला विभाज्यन्ते सत्वानो वा एत एष्टारो ऽभिरोढार एवाग्नेयमष्टाकपालं निर्वपेत्तस्यौषधीस्तस्य गौर्धेनुर्दक्षिणा स माङ् प्रयाय वैष्णवं त्रिकपालं तस्य यडया धे-नुर्दक्षिणा स माङ् प्रयाय गिरिं गत्वापो वा प्राजापत्यं घृते चरुं तस्य पुरुषी धेनुर्दक्षिणा यदाग्नेय इमां तेनाक्रमते यद्वैष्णवो ऽन्त-रिक्षं तेन यत्प्राजापत्यो ऽमुं तेन लोकं यन्माङ् प्रयात्यभि त्रिदे-वाक्रमीद्यद्गिरिं गच्छत्यपो वान्तं त्रिदेवागन्यत्तिस्रो धेनवो दक्षिणा त्रयो वा इमे लोका इमानस्मै लोकान्धेनुरकरिमानस्मै लोकान्प्रदा-

1) M 3 मुं oder मुं, Hg vielleicht मु 2) B fügt hier noch नेत्र ein 3) Dies Wort in Hg (A) u. W ohne Accent, M 3 liest प्रांयां vgl unten 4) In Hg, (A) u W ohne Accent, M 3 प्रांयां 5) In Hg (A) W ohne Accent, M 3 प्रां-

यश्चित्त्या उपासरंद्वरुणगृहीतो वा एष य आमयावी वरुणादेवैनं तेन मुञ्चति पयो वै पुरुषः पय एतस्यामयति पयसैवास्य पयो निष्क्रीणाति यद्व्यूहति विकृत्य हि शल्यं मध्यतो निर्हरन्ति तद्यथा वाचास्यैतन्मध्यतो निर्हरन्त्यथ यत्पुनः समुह्यामये समवद्यति यथा शल्यं निर्हृत्योषधीभिरा वेष्टयन्त्येवं तद्भूतिकाम याजयेत्स्वामेव देवता प्रायश्चित्त्या उपासरद्वरुणगृहीतो वा एष यो भूतिकामो वरुणादेवैनं तेन मुञ्चति पयो वै पुरुषः पय एष इच्छति यो भूतिमिच्छति पयसैवास्मै पयो ऽवरुन्द्धे यद्व्यूहति यज्ञस्य गोपीथायाथ यत्पुनः समूहति भूत्यैवैन संमूहति ग्रामकाम याजयेत्स्वामेव देवता प्रायश्चित्त्या उपासरद्वरुणगृहीतो वा एष यो ग्रामकामो वरुणादेवैनं तेन मुञ्चति पयो वै पुरुषः पय एष इच्छति यो ग्राममिच्छति पयसैवास्मै पयो ऽवरुन्द्धे यद्व्यूहति यज्ञस्य गोपीथायाथ यत्पुनः समूहति ग्रामेणैवैन संमूहत्येककपालाञ्जुहोत्येषा वै वरुणस्य पाशस्तेन एनं मुञ्चति यत्नाना जुहुयाद्विकर्षिः स यज्ञस्यासौ सर्वे होतव्याः संमृद्ध्यै ॥ या वां मित्रावरुणा ओजस्या तनूस्तया वा विधेम तयेममस्मुं मुञ्चतमंहसो या वां मित्रावरुणौ सहस्या तनूस्तया वा विधेम तयेममस्मुं मुञ्चतमंहसो या वां मित्रावरुणौ यातव्या तनूस्तया वा विधेम तयेममस्मुं मुञ्चतमंहसो या वां मित्रावरुणौ रक्षस्या तनूस्तया वा विधेम तयेममस्मुं मुञ्चतमंहसो या वां मि-

1) P एवास्यामयति 2) So corrigirt aus der offenbar corrupten Lesart der Mss., Hg, M 3 u. W यद्विदूहति (!), in A यद्विदुहति, B यद्विकुदुहति vgl. oben 2, 2, 5 u. TS 2, 3, 13, 3, auch Kāth. 12, 1 व्यूहति 3) So M 3 u. W, in Hg (u. A) तद्वृ॰ 4) Alle Mss. यद्विदूहति, vgl. aber oben die Anm., auch Kāth. व्यूहति 5) So corrigirt, Hg, M 3, W (u. A) यद्विदूहति, nur B यद्विदुहति, s. oben die Anm., auch Kāth. व्यूहति 6) B ॰कपालान्, die andern Mss. ॰कपाला 7) P तया। एमं। अमुं।, Hg. M 3 (u. A) तं एममुं

चावरुणा ओजस्या सहस्या यातव्या रक्षस्या तनूस्तया वाममविधामं तयेमममुममौक्तमंहसो यस्ते राजन्वरुण देवेषु पाशस्तं त एतेनावयजे तस्मै ते स्वाहा यस्ते राजन्वरुणाग्नि पाशस्तं त एतेनावयजे तस्मै ते स्वाहा यस्ते राजन्वरुण द्विपात्सु चतुष्पात्सु पशुषु पाशस्तं त एतेनावयजे तस्मै ते स्वाहा यस्ते राजन्वरुणौषधीषु वनस्पतिष्वप्सु पृथिव्यां दिक्षु पाशस्तं त एतेनावयजे तस्मै ते स्वाहा ॥ एते वै वरुणस्य पाशास्तैत एनं मुञ्चति ॥ १ ॥

Vgl TS 2, 3, 13 (pāpmanā gṛhītasyeṣṭiḥ) Kāṭh 12, 1, 11, 11

वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान्देवाश्च वा असुराश्चास्पर्धन्त ते देवाः संग्रहणेनायजन्त ते यत्किंचासुराणाँ स्वमासीत्तत्समगृह्णन्मनाँसि वावैषां तत्समगृह्णँस्ते ऽमनसः पराभवन्भ्रातृव्यवान्यजेत मनोग्रहणं वा एतन्मनाँसि वा एतद्भ्रातृव्याणाँ संगृह्णाति ते ऽमनसः पराभवन्ति ग्रामकामो यजेत मनोग्रहणं वा एतन्मनाँसि वा एतत्सजातानाँ संगृह्णाति ते ऽस्मान्मनोगृहीता नापयन्ति सर्वेषाँ सजातानां गृहादाज्यमाहरेयुर्यावतामेवं कियतां च गृहादाज्यमाहरन्ति तेषाँ सर्वेषां मनाँसि संगृह्णाति ते ऽस्मान्मनोगृहीता नापयन्त्यामनेन जुहोत्यामनस एवैनान्करोति ॥ आमनस्य देव ये सजाताः संमनसस्तानहं कामये हृदा ते मां कामयन्ताँ हृदा तान्मा आमनसस्कृधि स्वाहामनस्य देव ये पुत्राः संमनसस्तानहं कामये हृदा ते मां कामयन्ताँ हृदा तान्मा आमनसस्कृधि स्वाहामनस्य देव याः स्त्रियः समनसस्ता अहं कामये हृदा ता मां कामयन्ताँ हृदा ता मा आमनसस्कृधि स्वाहामनस्य देव ये पशवः संमनसस्तानहं कामये हृदा ते मां कामयन्ताँ हृदा तान्मा आम-

नमस्कृधि स्वाहा ॥ एते वै सजाताः सजाता इव पुत्रा इव स्त्रिय इव पशव इव तैरात्मानमभिसंयुङ्क्ते तैर्भवति पृषती गौर्धेनुर्दक्षिणा सा हि वैश्वदेव्यथ यद्वैश्वदेवीष्टिर्वैश्वदेवीर्वा इमाः प्रजास्ता एवावारुन्द्ध ता आग्ना अकृत बहिरात्मन्वै प्रयाजानुयाजा आत्मा देवता यत्प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद्बहिरात्मन्सजातान्दधीताथ यन्मध्यतो जुहोति मध्यत एव सजातानात्मन्धत्ते यदि कामयेत ताजग्गेयुस्ताजक्परेयुरिति दारुमयेण जुहुयाच्चराचरा हि वनस्पतयो यदि कामयेत ध्रुवाः स्युः कृष्ठादेयुरिति मृन्मयेन जुहुयात् ॥ ध्रुवा ३हीयं ध्रुवो ऽसि ध्रुवस्त्वं देवेष्वेधि ध्रु३वो ऽहं सजातेषु भूयासं प्रियः सजातानामुपमश्चेत्ता वसुविदुग्रो ऽस्युग्रस्त्वं देवेष्वेध्यु३ग्रो ऽहं सजातेषु भूयासं प्रियः सजातानामुपमश्चेत्ता वसुविदभिभूरस्यभिभूस्त्वं देवेष्वेध्यभिभूरहं सजातेषु भूयासं प्रियः सजातानामुपमश्चेत्ता वसुवित्परिभूरसि परिभूस्त्वं देवेष्वेधि परिभूरहं सजातेषु भूयासं प्रियः सजातानामुपमश्चेत्ता वसुवित्सूरिरसि सूरिस्त्वं देवेष्वेधि सूरिरहं सजातेषु भूयासं प्रियः सजातानामुपमश्चेत्ता वसुवित् ॥ एते वै सजातास्तानस्मिन्दधाति तानस्मादनपक्रमिणः करोति ॥ २ ॥

Vgl. TS 2, 3, 9 (grāmakāmasya saṃgrahaṇīshṭiḥ), Kāṭh. 12, 2

अचैषो ऽश्वः प्रतिगृह्यते स वा उभयतोदन्प्रतिगृहीतो निर्यभस्त्यस्येन्द्रियं च पशूंश्च वरुणो वा अश्वो वरुणदेव३त्यो यो वा अश्वं प्रतिगृह्णाति वरुणं स प्रसीदति तदश्वहविषा यष्टव्यं निर्वरुणत्वाय चतुष्कपाला भवन्ति चतुष्पाद्वा अश्वः कपालैरेवैनमाप्नोति यावन्तो

1) So Hg, M 3, W (u. A), in B °नूयाजा. Kāṭh. hat auch Kürze des Vocals.
2) So Hg, M 3, W (u. A), in B °नूयाजानां 3) P हि । एवं

ऽस्यास्तावन्तः पुरोडाशा भवन्ति सर्वत एवैनं मुञ्चत्येको ऽधिभवति यन्नोपसरति तस्मा एव स यः पुनः प्रतिग्रहीष्यन्स्यान्न स यजेत यद्धि पुनः प्रतिगृह्णीयात्पुनर्वरुणं प्रसीदेदेष यः पुनः प्रतिग्रहीष्यन्स्यात्तस्य वारुणा नैमाः स्युः सौर्यवारुणा नैमा यद्वारुणो वरुणादेवैनं तेन मुञ्चत्यथ यत्सौर्यः स्वामेव देवतामुपप्रतिगृह्णात्यात्मनो ऽहिꣳसाया एकविꣳशतिः सामिधेनीर्भवन्त्यसा आदित्य एकविꣳशः प्रजापतिरसा आदित्यः प्राजापत्यो ऽश्वो यावानेवाश्वस्तमाप्नोति सर्वे वा अन्ये पशवो योनिमन्तः पुरुषयोनयो ऽयोनिरश्वो ऽप्सुजा यदेषो ऽपोनप्त्रीयश्चरुर्भवति योनिमन्तमेवैनमकः स्व एवैनꣳ योनौ प्रतिष्ठापयति ॥ यस्ते राजन्वरुण गायत्रछन्दाः पाशो ब्रह्मन्प्रतिष्ठितस्तं त एतेनावयजे तस्मै ते स्वाहा यस्ते राजन्वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतिष्ठितस्तं त एतेनावयजे तस्मै ते स्वाहा यस्ते राजन्वरुण जगच्छन्दाः पाशो विशि प्रतिष्ठितस्तं त एतेनावयजे तस्मै ते स्वाहा यस्ते राजन्वरुणानुष्टुप्छन्दाः पाशो दिक्षु प्रतिष्ठितस्तं त एतेनावयजे तस्मै ते स्वाहा ॥ छन्दाꣳसि वै वरुणस्य पाशास्तैरेनं गृह्णाति यैरेनं गृह्णाति तैरेनं मुञ्चत्यपोनप्त्रीयाभ्यां द्वाभ्यां जुहोति य एवास्य ऽप्स्वो वरुणस्तेन एनं मुञ्चति ॥ 3 ॥

Vgl. TS 2, 3, 12 (açvadânina ishṭiḥ catushkapala), Kâṭh. 12, 6

अग्नेरायुरसि तेनास्मा अमुष्मा आयुर्देहीन्द्रस्य प्राणो ऽसि प्राणं देह्यमुष्मै यस्य ते प्राणः स्वाहा पितॄणां प्राणो ऽसि प्राणं दत्तामुष्मै येषाꣳ वः प्राणः स्वाहा विश्वेषां देवानां प्राणो ऽसि प्राणं दत्तामुष्मै येषाꣳ वः प्राणः स्वाहा बृहस्पतेः प्राणो ऽसि प्राणं देह्यमुष्मै यस्य ते प्राणः स्वाहा प्रजापतेः प्राणो ऽसि प्राणं देह्यमुष्मै यस्य ते प्राणः स्वाहा ॥

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत्तत्सर्पिः[1] ।
यदध्रियत तद्घृतम् ॥
घृतस्य पन्थाममृतस्य नाभिमिन्द्रेण दत्तां प्रयतां मरुद्भिः ।
तां त्वा विष्णुस्त्वपश्यत्तां त्वेडा गव्यैरयत्[2] ॥

पावमानस्य त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोस्त्वा[3] वी३र्येणोत्सृजे बृहतो त्वा रथंतरेण त्रैष्टुभ्या वर्तन्या शुक्रस्य त्वा वी३र्येणोद्धरे ऽयेष्ठा मांचया जागत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवात्वै जीवनस्यायै ॥

इदं वर्चो अग्निना दत्तमागान्महि[4] राधः सह ओजो बलं यत् ।
दीर्घायुत्वाय शतशारदाय प्रतिगृभ्णामि महते[5] इन्द्रियाय ॥
इममग्ना आयुषे वर्चसे कृधि तिग्ममोजो वरुण सोम राजन् ।
मातेवास्मा[6] अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत्[7] ॥

अग्निरायुस्तस्य मनुष्या आयुष्कृतस्तेनायुषायुष्मानेधि ब्रह्मायुस्तस्य ब्राह्मणा आयुष्कृतस्तेनायुषायुष्मानेधि यज्ञ आयुस्तस्य दक्षिणा आयुष्कृतस्तेनायुषायुष्मानेध्यमृतमायुस्तस्य देवा आयुष्कृतस्तेनायुषायुष्मानेध्यश्विनोः प्राणो ऽसि तौ ते प्राणं दत्तां तेन जीव मित्रावरुणयोः प्राणो ऽसि तौ ते प्राणं दत्तां तेन जीव बृहस्पतेः प्राणो ऽसि स ते प्राणं ददातु तेन जीव प्रजापतेः परमेष्ठिनः प्राणो ऽसि स ते प्राणं ददातु तेन जीव ॥ ४ ॥

Vgl. TS 2, 3, 10 (âyushkâmeshṭimantrâh); Kaṭh 11, 7

---

1) P यत् । नवम् । ऐत् । तत् । नवनीतमिति नव नीतम् । 2) P तत् । त्वा । इडा । गवि. । ऐरयत् । 3) P वर्तन्या । उपांशोर्वीर्येण पांशोः । 4) P आ । अगात् । 5) P महते । 6) P मातेवेति माता इव । अस्मै । 7) P यथा । असत् ।

आग्नावैष्णवमेकादशकपालं निर्वपेत्सारस्वतं चरुं बार्हस्पत्यं चरुं पूर्वेद्युरामयाविनं याजयेदग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवास्मिन्यज्ञेन चायुर्दधाति वाक्सरस्वती ब्रह्म बृहस्पतिर्वाचा चैवास्मिन्ब्रह्मणा चायुर्दधात्येषो प्राणा वै देवताः प्राणान्वा एतत्पूर्वेद्युर्गृहीत्वोपवसति स श्वो भूत आग्नेयमष्टाकपालं निर्वपेत्सौम्यं पयसि चरुमादित्यं घृते चरुं वारुणं चरुं यवमयमियन्तमग्नये वैश्वानराय द्वादशकपालमामयाविनं याजयेद्यो वै प्रमीयते ऽग्निं तस्य शरीरं गच्छति सोमं रसो यदाग्नेयः शरीरमेवास्य तेन निष्क्रीणाति यत्सौम्यो रसं तेन यावानेव तं निष्क्रीयेयं वा अदितिरस्यामधि प्रजाः प्रजायन्ते ऽस्यामेवैनमधि प्रजनयतीयं वा अस्य भवत्येतावान्वा आत्मा यावानेवास्यात्मा तं वरुणान्मुञ्चति संवत्सरो वा अग्निर्वैश्वानरः संवत्सर एवैनं प्रतिष्ठापयति संवत्सरायुपमेनं करोत्ययमेवायुरसि तेनास्या अमुष्मा आयुर्देहीत्ययमिवै मनुष्याणामायुषः प्रदाता सो ऽस्मा आयुः प्रयच्छति पञ्चभिर्जुहोति पाङ्क्तः पुरुषो यावानेव पुरुषस्तं समीरयति यावानेव पुरुषस्तं समीरयित्वायं वाव यः पवत एष प्राण आभ्यो वा एष दिग्भ्यो ऽधि पवत एतद्वैवऽत्या वा इमा दिशो यथादेवतं वा वैनमेताभ्यो दिग्भ्यो ऽधि समीरयित्वा प्राणानस्मिन्दधाति ॥

यद्वं वैतन्नवनीतमभवद्यदसर्पत्तत्सर्पिः[1] ।
यदध्रियत तद्घृतम् ॥

इति घृतस्य वा एतन्महिमानमुदाचष्टे ऽथो महयत्येवैनमाचमानस्य त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोस्त्वा वीर्येणोत्सृजा इति यथा

1) Die Mss यमय॰

वा इदं वध्यमुत्सृजन्त्युद्धरन्त्युन्नयन्त्येवं तदेतावद्वा अस्ति स्तोमा यज्ञाश्छन्दांसि यावद्देवास्ति तेनास्मा आयुर्दधाति यज्ञेनास्मा आयुर्दधाति सर्व ऋत्विजः पर्याहुः सर्वे वा एतं एतस्मै चिकित्सन्ति सर्व एवास्मा आयुर्दधाति ब्रह्मणो हस्तमालभ्य पर्याहुर्ब्रह्म वै ब्रह्मा ब्रह्मणैवास्मिन्ब्रह्मायुर्दधाति हिरण्याद्दधि घृतं निष्पाययन्त्यमृतं वै हिरण्यमायुर्घृतममृतादेवैनमध्यायुर्निष्पाययन्ति निरिव धयन्त्यायुरेवात्मन्धत्ते तदस्मा आवध्नात्यायुरेवैनं समर्धयन्त्यपेप्यावध्नात्यग्निर्वै सर्वा देवता सर्वाभिरेवास्मिन्देवताभिरायुर्दधात्यग्निरायुस्तस्य मनुष्या आयुष्कृतस्तेनायुषायुष्मानेधीति यो वै देवानामायुष्मतश्चायुष्कृतश्च वेद सर्वमायुरेति न पुरायुषः प्रमीयत एते वै देवा आयुष्मन्तश्चायुष्कृतश्च यदिमे प्राणास्त्वे ऽस्मिन्नायुर्दधत्यश्विनोः प्राणो ऽसि तौ ते प्राणं दत्तां तेन जीवेतीमे वा एते प्राणास्तानस्मिन्दधाति तानस्मादनपक्रमिणः करोति दश देया दश ह्यात्मन्प्राणाः प्राणानस्मिन्दधात्यश्वो देयो वासो देयं हिरण्यं देयं गौर्देयो वरो देयो बहु देयम् ॥ ५ ॥

Vgl TS 2, 3, 11 (dirgharogyayurarthinor ishtih), Kath 11, 8

आग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चकपालं दधि मधु घृतं धाना उदकं तत्संसृष्टं भवत्यर्यम्णे चरुर्भवत्यृद्ध्या एवाग्नेय ऐन्द्रः पञ्चकपालः पाङ्क्तो यज्ञः पङ्क्ती याज्यानुवाक्ये पाङ्क्ताः पशवः पाङ्क्तः पुरुषो यावानेव पुरुषस्तमाप्नोति स सर्वो भूत्वा पशूनाप्नोति पशव इव ह्येतत्संसृष्टमेषो यावन्त एवं पशवस्तानस्मै संसृजति तदाहुरैन्द्रं एकादशकपालः कार्य इत्यैन्द्रा हि पशवो ऽथो आहुः प्राजापत्यं कार्यमिति प्राजापत्या हि पशवः प्रजापतिः पशूनां प्रजन-

यिता तमेव भागधेयेनोपासरत्सो ऽस्मै पशून्प्रजनयतो ऽथ यो ऽर्यम्णे चरुं यो ददाति सो ऽर्यमा दानमर्यमा दानकामा अस्मै प्रजा भवन्त्यर्यम्णे भ्राजस्वते ऽष्टाकपालं निर्वपेत्सौर्यं चरुमर्यम्णे भ्राजस्वते ऽष्टाकपालं चक्षुष्कामं याजयेदर्यम्णैव मनुष्या नक्तं चक्षुषा पश्यन्ति सूर्येण दिवैतौ वै चक्षुषः प्रदातारौ तावेव भागधेयेनोपासरत्तावस्मै चक्षुः प्रयच्छतः समाने वै चक्षुर्दधातु यत्समानी देवता चरुमभितो भवति नानानमेवास्मै चक्षुषी प्रतिदधाति यावदन्यतरेणाक्ष्णा पश्यति तावदुभाभ्यां पश्येद्यच्चरुरन्तरा न स्यादथ यच्चरुरन्तरा भवति तस्मादिदमन्तरा चक्षुषोर्विधृत्यै शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्त्येयमिव ह्यसा आदित्यः समृद्ध्यै पयसि भवति पयो वै घृतं पयश्चक्षुः पयसैवास्मै पयश्चक्षुर्दधाति सौरीभिरादधाति चक्षुरस्मिन्दधाति ॥ ६ ॥

Vgl. TS. 2, 3, 8 (cakshushkâmasya trihavishkeshṭiḥ); (Kâṭh. 11, 4 u. 5.)

देवा असुराणां वेशत्वमुपायन्निन्द्रस्तु नापैत्तेषां वा इन्द्रियाणि वीर्याण्यपाक्रामन्नेमे रथंतरमिन्द्रस्य बृहद्विश्वेषां देवानां वैरूपं सवितुर्वैराजं त्वष्टू रेवती मरुतां शक्वरी तानि वा इन्द्रो ऽन्वपाक्रामंस्तैरात्मानमभिसमयुङ्क्त तैरभवद्यो भूतिकामः स्यात्तमेतया याजयेदेतैरेवेन्द्रियैर्वीर्यैरात्मानमभिसंयुङ्क्ते तैर्भवति द्वादशकपालो भवति वैश्वदेवत्वायोत्तानानि कपालान्युपदधाति तत्स्वचरुमकर्निर्दाहायाभिशस्यमानं याजयेदस्य वै देवा अन्नमदन्त्यदन्ति तस्य मनुष्या अन्नं सर्वा वा एता देवताः सर्वा वावास्यैतद्देवता अन्नमजीघसन्ददन्ति हास्य मनुष्या अन्नम् ॥ इन्द्राय राथंतरायानुब्रूहि ॥

इति रथंतरस्यार्चमनूच्य बृहत ऋचा यजेत् ॥ इन्द्राय बार्हतायानुब्रूहि ॥ इति बृहत ऋचमनूच्य रथंतरस्य ऋचा यजेत् ॥ इन्द्राय वैरूपायानुब्रूहि ॥ इति वैरूपस्यार्चमनूच्य वैराजस्य ऋचा यजेत् ॥ इन्द्राय वैराजायानुब्रूहि ॥ इति वैराजस्यार्चमनूच्य वैरूपस्य ऋचा यजेत् ॥ इन्द्राय रैवतायानुब्रूहि ॥ इति रेवतीमनूच्य शक्वर्या यजेत् ॥ इन्द्राय शाक्वरायानुब्रूहि ॥ इति शक्वरीमनूच्य रेवत्या यजेदेतैरेवैनमिन्द्रियैरेताभिर्देवताभिर्व्यतिषजति पर्यूहमवद्यत्येतैरेवैनमिन्द्रियैरेताभिर्देवताभिः पर्यूहति पशवो वै बृहत्यमी रुद्रो यद्बृहत्या वषट्कुर्याद्रुद्रायास्य पशूनपिदध्याद्यो बृहती ऽयातयाम्नी पशवो ऽनुप्रजायन्ते ऽनुवाक्यायाश्चत्वार्यक्षराणि याज्यामभ्यत्यूहत्यनुष्टुभं च संपादयति पङ्क्तिं च वाग्वा अनुष्टुप् प्रजापतिः पङ्क्तिर्वाचि वा एतत्प्रजापतिमप्यसाट् प्रजननाय तन्मिथुनं तस्मादेव मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते ॥ ७ ॥

Vgl. TS 2, 3, 7 (sarvapṛṣṭhâ vîryakâmâbhiçastayoḥ); Kâth. 12, 5

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेण शुक्रां शुक्रेण ।
देवीं देवेनामृताममृतेन सृजामि सं सोमेन ॥
सोमो ऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥
पुनातु ते परिस्रुतं सोमं सूर्यस्य दुहिता ।
वारेण शश्वता तना ॥

---

1) So gemäss Hg, M 3 (u. A), in W रथतरस्य; desgl. B, ohne Accent; Kâṭh. 12, 5 रथंतरस्यर्चम् 2) So Hg, M 3 (u. A), in W वैरूपस्य; desgl. B, ohne Accent; Kâṭh. वैरूपस्यार्चम् 3) So Hg, M 3, (u. A); in W वैराजस्य; desgl. B, ohne Accent, Kâṭh. वैराजस्यार्चम् 4) P तीव्रं । 5) P शुक्रं । 6) P अमृतां । अमृतेन ।; Kâṭh. 12, 9 शुक्रा शुक्रेणामृताममृतेन

वायोः पूतः पवित्रेण प्रत्यङ्[1] सोमो अतिसुतः ।
इन्द्रस्य युज्यः सखा ॥
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषा नमउक्तिं न जग्मुः ॥

उपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेणाश्विभ्यां जुष्टं गृह्णाम्येष ते योनिरश्विभ्यां त्वोपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेण[2] सरस्वत्यै जुष्टं गृह्णाम्येष ते योनिः[2] सरस्वत्यै त्वोपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेणेन्द्राय सुत्राम्णे जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा सुत्राम्णे ॥

यदत्र शिष्टं रसिनः सुतस्य यमस्येन्द्रो अपिबच्छचीभिः[2] ।
अहं तमस्य मनसा घृतेन सोमं राजानमिह भक्षयामि ॥
नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसिष्टं स्वां योनिमाविशन्ती ॥
द्वे सृती[3] अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
याभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥
ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः ।
या तेषामवया[4] दुरिष्टिः स्विष्टिं नस्तां विश्वकर्मा कृणोतु ॥
अमङ्क्षियान्यङ्क्षियान्मन्यमानः प्राणस्य विद्वान्त्समरे न धीरः ।
एनो महच्चकृवान्बद्ध[5] एषं तं विश्वकर्मन्प्रमुञ्चा[6] स्वस्तये ॥
यजमानमृषया[7] एनसाहुर्विहाय[8] प्रजामनुतप्यमानाः ।

1) M 3 प्रत्यङ् desgl B, ohne Accent, ebenso Kāth 12, 9, 8 TBr 2, 6, 1, 2
2) P यं । अस्य । इंद्र । अपिबत् । 3) B सृती इति सृती । 4) P अवयां इत्यवया ।
5) P बद्धः । 6) P प्र । मुञ्च । 7) P ऋषयः । 8) P एनसा । आहुः ।

मधव्यौं स्तोकां अप तौं राध सं नक्ताभ्यां सृजतु विश्वकर्मा ॥ ८ ॥

Vgl. TS 1, 8, 21 (sâutrâmanyâ mantrâh paçavo havîṃshi ca); 3, 2, 3, 3; TBr. 1, 4, 3; 2, 6, 1 u 3, Kâth. 12, 9

कुवलसक्तुभिराश्विनं श्रीणाति बदरसक्तुभिरैन्द्रं कर्कन्धुसक्तुभिः सारस्वतं वाग्वै सरस्वती वाचैवास्मिन्स्वादुमानं दधात्यथ यैनमसा अश्लीलं वागभिवदत्यथेत्यपविष्ट व्याधिरेति सैनं पुनः कल्याणं वदति जिह्वा अधघुष्यायति व्याघ्रौ प्रतिप्रस्थाता वृकौ यजमान एषा सुरा भवति स यैवै तदिन्द्रियैर्वीर्यैर्व्यृध्यते तान्यस्मिन्नाभ्यां धत्ते ब्राह्मणस्य मूर्धन्त्साह्वा मेध्यत्वायान्नं वै सुरा मेध्यं वा अन्नं तेन मेध्यैका पुरोरुग्भैका याज्यैकाधास्मिन्वीर्यं दधाति ब्राह्मणः पाययित३व्यस्तेन हविः क्रियत आत्मनायंपाययात्मन्नेव वीर्यं धत्ते ऽयो सर्वा होत३व्याः समृद्ध्यै मध्यतो वा एष पाप्मना गृहीतो यत्स्रमया व्येति मध्यत एवैनं पाप्मनो मुञ्चति यदाहवनीये जुहुयान्न पाप्मना व्यावर्तेत क्रियेत भेषजमथ यद्दक्षिणे जुहोति वि पाप्मना वर्तते क्रियते भेषजमथ यद्धिशारयत्येवमिव ३होयं विस्रंसति शतक्षरो भवति शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति यद्वा एतस्य व्याधिं यन्त्यामामि पितृन्वा एतस्य तदगन्नित्पितृमतीभिरनुमन्त्रयन्ते पितृभ्य एवैनं तेन संमीरयन्ति यत्त्रिसंस्तृतीये हि लोके पितरो ऽथ यच्चत्वारो दिग्भ्य एवैनं तेन संमीरयन्ति ॥ ९ ॥

Vgl Kâṭh 12, 10 a E u 11.

॥ इति मध्यमकाण्डे तृतीयः प्रपाठकः ॥

1) P मधव्यौ ।

विश्वरूपो वै त्वाष्ट्र आसीत्त्रिशीर्षा सुरायाः स्वस्रीयः स सोममेकेन शीर्ष्णापिबत्सुरामेकेनान्नमेकेनावयत्तमिन्द्रो ऽमन्यतायं वाविदं भविष्यतीति तेन समलभत तेन युगशरमपतत्तं तक्षाणं तिष्ठन्तमब्रवीदाधावेमान्यस्य शीर्षाणि छिन्धीति तस्य तक्षोपस्कन्द्य परशुना शीर्षाण्यच्छिनत्तस्मात्तक्ष्णे शिरो धृतं तस्मादस्यान्नमन्नाद्यं तस्य यत्सोमपं शिर आसीत्स कपिञ्जलो ऽभवद्यत्सुरापं स कलविङ्को येनान्नमावयत्स तित्तिरिः स वै त्वष्टा पुत्रे हते सोममाहरत्त इन्द्रं तमधःशतफले ऽसुनोद्यो आहुः सहस्रफला इति तस्मिन्वा इन्द्र उपहवमैच्छत तन्नोपाह्वयत तं प्रासहादाय नाड्या निरपिबत्स सोमपीथेन व्यार्ध्यत तस्मात्सोमो नानुपहूतेन पेयः सोमपीथेन ह व्यृधुको भवति यदितो ऽमुच्यत तौ सिंहा अभवतां यदितस्तौ व्याघ्रौ यदितस्तौ वृकौ यत्प्रथमं निरष्ठीवत्तत्कुवलमभवद्यद्द्वितीयं तद्बदरं यत्तृतीयं तत्कर्कन्धु यदधस्तात्सा सुरा तं वा एतयाश्विना अयाजयतां सौत्रामण्या स यैव तदिन्द्रियं वी३र्यं व्यार्ध्यत तान्यस्मिन्नाप्त्वाधत्तां सोमेनातिपुपुवानं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते यं सोमो ऽतिपवते यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति राजसूयेनाभिषिषिचानं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति भूतिकामं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते यो ऽलं भूत्यै सन्न भवति यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति ज्योगामयाविनं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते यस्य ज्योगामयति यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति नानार्तेन यष्ट३व्यमित्याहुरार्तयज्ञ इव ३सेयं तदाहुर्यष्टव्यमेव सर्वो हि पुरुष आर्तः सर्वो बुभूषति

यदाश्वि३न्यश्विनौ ह्यभिषज्यताꣳ यत्सारस्वती वाग्वै सरस्वती वाचा ह्यभिषज्यताꣳ यदैन्द्रीन्द्रो हि तौ तानीन्द्रियाणि वीर्याण्याप्राधस्ताम् ॥ १ ॥

Vgl (TS 2, 5, 1), Kāṭh 12, 10

सीसेन क्लीबात्कार्यानृतꣳ वै सीसमनृतं क्लीबोऽनृतꣳ सुरानृतेनैवानृतादनृतं क्रीणाति तदाहुः का३र्या वडबा दक्षिणेति सृत्वरीव ३ह्येषा सृत्वरी वडवाश्विनं प्रथममालभन्तेऽथ सारस्वतीमथैन्द्रमेवमेव वपाभिश्चरन्तीन्द्र एवैषु तदधिभवत्यैन्द्रः पुनः प्रचरतां प्रथमो भवतीन्द्रꣳ वा एतत्पुनरालभन्ते सेन्द्रियत्वायैन्द्री वपानामुत्तमा भवत्यैन्द्रः पुरोडाशानां प्रथमो वी३र्यꣳ वा इन्द्रो वीर्य एवैनमभिसंधत्तः प्रसवाय सावित्रो निर्वरुणत्वाय वारुणो मध्यतो ३ह्येष वरुणगृहीतः पश्चाद्वा एषा सृष्टा प्रतीचीनशीर्ष्णी यदुपरिष्टात्पुरोडाशो भवत्यपिहित्या अच्छिद्रत्वाय सह समवत्तं भवति सहेडामुपह्वयन्ते संहित्या अथो इडाया अविदोहाय यद्वै सौत्रामण्यामृद्धं तदस्याः समृद्धꣳ यदन्यदेवत्याः पुरोडाशा भवन्त्यन्यदेवत्याः पशवस्तदस्या ऋद्धꣳ सत्समृद्धमर्धꣳ वै प्रजापतेरात्मनो धैर्यमासीदर्धं माल्व्यꣳ यद्धैर्यं तत्पुरस्तादकुरुत यन्माल्व्यं तत्पश्चात्पर्यौहत यद्धैर्यꣳ सोमो वै स ततो ब्राह्मणमसृजत तस्माद्ब्राह्मणः सर्व एव ब्रह्माभि धीरो यन्माल्व्यꣳ सुरा वै सा ततो राजन्यमसृजत तस्माज्ज्यायाꣳश्च कनीयाꣳश्च सुपा च पंगुरश्च सुरां पीत्वा विलालपत[1] आसते माल्व्यꣳ हि तत्पाप्मा वै माल्व्यं तस्माद्ब्राह्मणः सुरां न पिबेत्पाप्मनात्मानं नेत्सꣳसृजा इति

---

1) Hg, (A), W विलालप्त, Kāṭh 12, 12 सह लालपत आसते

तदुतैतद्राष्ट्रीयाय ब्राह्मणो ब्रूयादेतद्वा एवं विद्वान्सुरां पिबति न हैनं दूणात्येषा वै प्रजापतेर्वीर्यवती तनूर्वीर्यं प्रजापतिर्वीर्यमस्मिन्दधाति ॥ २ ॥

Vgl Kāṭh 12, 11 a E u 12

ततो यः सोमो ऽत्यरिच्यत तमग्ना उपप्रावर्तयत ।
स्वाहेन्द्रशत्रुर्वर्धस्व ॥

इतीन्द्रस्य हीन्ं शत्रुमचिकीर्षदिन्द्रमस्य शत्रुमकरोत्तथा वाक्षरयमेव ३थेत्स यं सोमं प्रावर्तयद्वास्मि अग्नावुपप्रावर्तयत्ता अग्नीषोमौ देवते प्राणापानौ अभिसमभवतां स यावदूर्ध्वबाहुः पराविध्यत्तावति स्वरमत यदि वा प्रवणो तावदासीद्यदि वामेरधि तावदासीत्स वा इषुमात्रमेवाह्ना तिर्यङ्वर्धतेषुमात्रमन्वङ्थो आहुरहोरात्रे एवेषुमात्रं तिर्यङ्वर्धतेषुमात्रमन्वङ्ङित्यथो आहुरर्धमासमथो मासमथो संवत्सरमिति स वा इमाः सर्वाः स्रोत्याः पर्यशयत्तस्माद्वा इन्द्रो ऽबिभेत्तस्मादु त्वष्टाबिभेत्तस्यैन्द्रः प्रतिमिच्छन्नमस्मै प्रायच्छत्तस्मै त्वष्टा वज्रमसिञ्चत्तपो वै स वज्र आसीत्तमुद्यन्तुं नाशक्नोदेष वै तर्हि विष्णुरन्या देवतासीत्सो ऽब्रवीद्विष्णा एहीदमाहरिष्यावो येनायमिदमिति स त्रेधात्मानं विन्यधत्ताभिपर्यावर्तादबिभेदस्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयं स यदस्यां तृतीयमासीत्तेन वज्रमुदयच्छद्विष्णावनुष्ठितः स वज्रमुद्यतं दृष्ट्वाबिभेत्सो ऽब्रवीदस्ति वा इदं मयि वीर्यं तत्ते प्रदास्यामि मा मा वधीरिति तद्वा अस्मै प्रायच्छत्तत्प्रत्यगृह्णात् ॥ अधा मा ॥ इति तद्विष्णवे ऽतिप्रायच्छत्तद्विष्णुः प्रत्यगृह्णात् ॥

1) W राष्ट्रियाय, desgl B, ohne Accent 2) W u B दूणा॰ 3) Hg (u A) तावदासीत्तत्स 4) Die Mss प्रति॰

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् ।
अस्माकं सन्त्वाशिषः ॥

इति सो ऽवेदस्ति वावास्मिन्नन्तर्वी३र्यमिति स यदन्तरिक्षे तृतीयमासीत्तेन वज्रमुदयच्छद्विष्णवनुष्ठितः स वज्रमुद्यतं दृष्ट्वाबिभेत्सो ऽब्रवीदस्ति वा इदं त्वयिस्मिन्नन्तर्वी३र्यं तत्ते प्रदास्यामि मा मा वधीरिति तद्वा अस्मै प्रायच्छत्तत्प्रत्यगृह्णात् ॥ द्विर्मोधाः ॥ इति तद्विष्णवे ऽतिप्रायच्छत्तद्विष्णुः प्रत्यगृह्णात् ॥

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् ।
अस्माकं सन्त्वाशिषः ॥

इति सो ऽवेदस्ति वावास्मिन्नन्तर्वी३र्यमिति स यद्दिवि तृतीयमासीत्तेन वज्रमुदयच्छद्विष्णवनुष्ठितः स वज्रमुद्यतं दृष्ट्वाबिभेत्सो ऽब्रवीदस्ति वा इदं त्वयिस्मिन्नन्तर्वी३र्यं तत्ते प्रदास्यामि मा मा वधीः ॥ संधां नु संदधावहै यथा त्वामेव प्रविशानीति[1] सो ऽब्रवीद्यन्मां प्रविशेः किं मे ततः स्यादिति सो ऽब्रवीत्त्वामेवेन्धीय तव भोगाय त्वां प्रविशेयमिति तद्वा अस्मै प्रायच्छत्तत्प्रत्यगृह्णात् ॥ त्रिर्मोधाः ॥ इति तद्वाव त्रैधातव्या सहस्रं वा अस्मै तत्प्रायच्छदृचः सामानि यजूंषि यद्वा इदं किं च तत्त्रैधातव्या तदाप्नोति पशूनेव ॥ ३ ॥

Vgl. TS 2, 4, 12 (traidhātavīyasya devatā), Kāṭh. 12, 3.

उदरं वै वृत्रः पाप्मा क्षुद्भ्रातृव्यः पुरुषस्य यत्तप उपैति पाप्मानं वा एतान्स्तृणुते भ्रातृव्यं क्षुधमेव तस्मिन्वा अवदेता[2] सेयमस्यां क्षुध्यूर्ध्वा वागवदत् ॥

उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः[3] ।

---

1) M 3 प्रविशामिति, W प्रविशानिति 2) W संवदेता॰ 3) P चर्म । एनोः ।

इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥
इति सत्यमाहेत्यब्रवीद् द्वे एव तृतीये आहर्तुरेकं प्रतिग्रहीतुरिति तौ वै तेनैवातिष्ठेतां तस्मादैन्द्रावैष्णवं चिरार्त्तस्य वा उपेप्सायै त्रेधातव्या ह्रियते यावद्वै चिरार्त्येणोपाप्नोति तावत्त्रेधातव्ययावरुन्द्धे तस्मादाहुः सहस्रदक्षिणेत्युष्णिहाककुभावन्वाह गायत्री वा उष्णिंहाथ यान्येतानि चत्वार्यक्षराण्यृच्यधि चतुष्पादो वा एते पशवो यथा वा इदं पुरोडाशे पुरोडाशोऽध्येवं वा एतदृच्यध्यक्षराणि प्राणो वै गायत्री प्राणेन पशवो यता यदुष्णिहाककुभावन्वाह पशूनां यत्यै ॥

अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥
इति परिदधाति वीर्यताया अथो ऋतताया एव यज्ञगत्या परिदध्यादन्तं गच्छेदथ यत्त्रिष्टुभा परिदधाति नान्तं गच्छत्योजो वै वीर्यं त्रिष्टुबोजस्येव वीर्ये प्रतितिष्ठति ॥ ४ ॥

Vgl TS 2, 4, 12, 6 7 u 2, 4 11 (traidhātavyeshṭiḥ), 3, 2, 11 (kāmyeshṭiyājyāḥ), Kāṭh 12, 3 u 4

सर्वाभ्यो देवताभ्यो यज्ञ आहृत्या इत्याहुः सर्वो वा एष यज्ञः सर्वाभ्यो हि देवताभ्यो यज्ञ आह्रियते सर्वाणि छन्दांस्यन्वाह सर्वाणि हि छन्दांसि यज्ञे प्रयुज्यन्तेऽभिचरन्नाहरेत्सर्वो वा एष यज्ञः सर्वेणैवैनं यज्ञेनाभिचरत्यदक्षिणस्तु स्यात्तस्मिन्नेनमकर्मेनिरदक्षिणो ऽथ यो यक्ष्य इत्युक्त्वा न यजेत तमेतेन याजयेत्सर्वो वा

1) M 3 u W इन्द्रश्च desgl B, ohne Accent 2) M 3 इत्यसत्यम° 3) W गायत्र्या, desgl B, ohne Accent 4) Die Mss पुरोडाशो. s TS 2,4,11,1 5) M 3 जिह्वे 6) P त्री । संधस्थेति से धस्था। 7) W तस्मिन्मर्मो° 8) So corrigirt, die Mss schwanken, M 3 यक्ष्य, desgl B, ohne Accent W यक्ष्ये, Hg यक्ष्य, A etwa यक्ष्यो. s TS 2, 4 11, 4

एष यज्ञः सर्वेणैवास्मै यज्ञेन प्रायश्चित्तिं विन्दन्त्युत्तर उत्तरः पुरोडाशो ज्यायान्भवत्युत्तर उत्तरो हि लोको ज्यायानथो वा इयमेवमसा ऽथ वा अन्तरिक्षं नास्या रूपं नामुष्यास्तस्माद्यवमयो मध्यतो ऽथो एवमिव ह्यन्तरिक्षस्य रूपं द्वादशकपालो भवति यद्वै त्रिस्त्रिस्तत्त्रैधातव्यायाः[3] समृद्ध्यै सर्वेषामतिघातमवद्यत्यच्छम्बट्काराय यावता हि न प्राप्नुयात्तावता छम्बट्कुर्याद्देतद्वै तद्यदाहुश्छम्बष्कुर्वाणासो इति वास इव वै यज्ञ ऊयते यत्पर्वाणि विपीव्यन्ति यजुषां तद्रूपं यद्देनवो दीयन्त उक्थामदानां तद्यद्धिरण्यं दीयते चन्द्रं गीयत इति वै सामाहुः साम्नां तद्रूपमेतेन वै सृञ्जया अयजन्त ते श्रियो ऽन्तमगच्छंस्तस्मान्नातिबहु यष्टव्यमीश्वरो हि पराङतिपत्तोर्यो वा एतेन यजते वि स छिनत्ति पुत्रो याजयितव्यो ऽनुसंतत्यै ॥ ५ ॥

Vgl TS 2, 4, 11 (traidhātavīyenābhiḥ), Kâṭh 12, 3 a E u 4.

आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं बार्हस्पत्यं चरुं भूतिकामं याजयेदिन्द्रो वै शिथिर इवामन्यत सो ऽग्निं च बृहस्पतिं चाब्रवीद्याजयतं मेति तं वा एतयाग्निश्च बृहस्पतिश्चायाजयतां तस्मिंस्तेजो ऽग्निरदधादिन्द्रियमिन्द्रो ब्रह्म बृहस्पतिस्ततो वा इन्द्रो ऽभवद्यो भूतिकामः स्यात्तमेतया याजयेत्तेज एवास्मिन्नग्निर्दधातीन्द्रियमिन्द्रो ब्रह्म बृहस्पतिर्भवत्येव यदस्मिंस्त्रीणि वीर्याण्यधत्तां तस्मात्त्रिधातुरैन्द्र इतर अभिसंश्रपयन्ति सेन्द्रियत्वाय ॥ ६ ॥

---

1) M 3 विद्॰ 2) W ॰व्याया॰ 3) Zu zerlegen in छम्बट् । न । घमी । „Nicht ist sie verfehlt", (nämlich die त्रैधातव्या), Hg छम्बणासो, W छम्बयणासो, M 3 छम्बष्कासो, W छम्बणयासो oder छम्बणयासो (indem nämlich die Silbe णा sowohl Anudātta als Udātta hat), B छम्बणासा, cf Kâṭh 12,4 सर्वेषामभिघातमव द्यत्यच्छम्बट्कार यज्ञ भावयति च्छम्बट्करोति च्छम्बट्कारस्य चरति 4) So Hg u M 3, in B u A ऊयते, W क्रुयते 5) W यदा चातिपत्तो॰ 6) Hg, M 3 u A याजितव्यो

पुरोवात जिन्व रावट् स्वाहा वातवान्वर्षन्भीम रावट् स्वाहा स्तनयन्वर्षन्नुग्र रावट् स्वाहातिरात्रं ववर्ष्वान्पूर्त रावट् स्वाहा बहु ह वा अयमवर्षीदिति श्रुत रावट् स्वाहा तपति वर्षन्विराड् रावट् स्वाहावस्फूर्जन्विद्युद्वर्षन्त्वेष रावट् स्वाहा नशन्नुवस्फूर्जन्वर्षन्भूत रावट् स्वाहा ॥

मान्दा वशा ज्योतिष्मतीरसश्चरीः शुन्ध्यो अज्रा वन्दतीः सुफेनाः ।
मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह नो ऽवत ॥
वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोपनह्यामि ॥
देवा वसव्या अग्ने सोम सूर्यापो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्यावत ॥
देवाः शर्मण्या मित्र वरुणार्यमन्नपो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्यावत ॥
देवाः सपीतयो ऽपां नपान्नराशंसापो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्यावत ॥
दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन ।
यत्पृथिवीं व्युन्दन्ति ॥
आयन्नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
प्र पर्जन्यः सृजता रोदसी अनु धन्वना यन्तु वृष्टयः ॥

---

1) P पुरोवातेति पुर॰ वात ।, M 3 पुरो वात 2) P जिन्व । रावट् ।, zur Sicherstellung der Form रावट् cf. namentlich weiter unten विराड् रावट्, anders TS 3) M 3 वरियन् for वर्षन् und so auch weiterhin 4) P वर्षन् । त्वेष । 5) P नशनि । अवस्फ॰ 6) P न । अवत । 7) P वृष्ण । 8) P वसव्या । अग्ने । सोम । सूर्य । आप । 9) P वृष्ट्या । अवत । 10) P शर्मण्या । 11) Hs (u. A) याननपान्नरा॰, P अपां । नपात् । नराशंस ।

उदीरयता[1] मरुतः समुद्रतो दिवो वृष्टिं वर्षयता[2] पुरीषिणः ।
न वो दस्रा[3] उपदस्यन्ति धेनवः शुभं कमनु रथा अवृत्सत ॥
सृजा वृष्टिं दिव आद्भिः समुद्रं पृण[4] ये देवा दिविभागाः स्थ ये अन्तरिक्षभागा ये पृथिवीभागास्त[5] इदं क्षेत्रमाविशत त इदं क्षेत्रमनुविविशत ॥ ७ ॥

Vgl TS 2, 4, 7 u 8 (kârîrishti), Kâth 11, 9

वृष्टिर्वै देवेभ्यो ऽन्नाद्यमपाक्रामत्त इदं सर्वमक्षुध्यंस्ते देवाः प्रजापतिमेवोपाधावंस्तान्वा एतया प्रजापतिरयाजयत्कारीर्या तेभ्यो वृष्टिमन्नाद्यमवरुन्धे यत्र पर्जन्यो न वर्षेत्तदेतया ज्येष्ठं वा पुरोहितं वा याजयेद्वृष्टिर्वा एतेभ्यो ऽन्नाद्यमपक्रामति यत्र पर्जन्यो न वर्षति यत्कारीर्या याजयन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्या अष्टौ वातहोमा अष्टौ दिश इति दिग्भ्य एवैतैर्वृष्टिमावर्तयन्ति मान्दा यथा ज्योतिष्मतीरमस्वरीरित्येतानि वा अपां नामधेयानि यथा वा इदं नामग्राहमसा असा इति ह्वयत्येवं[7] वा एतदपां नामधेयैश्चावयति[8] वृष्णो अश्वस्य संदानमसीति वृषा ह्यश्वो वृषा पर्जन्यः संमृद्ध्यै त्वोपनह्यामीति वृष्ट्यै ह्युपनह्यति देवा वसव्या[9] अग्ने सोम सूर्येति देवताभिरेवान्वहं वृष्टिमिच्छति यदि न वर्षेत्तत्रैव वसेयुरहोरात्राभ्यामेव वृष्टिं च्यावयन्ति कारीराणि भवन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै मधुश्चुतानि[10] भवन्त्यपां वा एष ओषधीनां रसो ऽपामेवैना ओषधीनां रसेनाच्छैति रसेनैनाश्च्यावयत्यथैषे[11] धामच्छदे ऽष्टाकपालं

---

1) P auffällig छंत् । ईरयता ।   2) P वर्षयत ।   3) M 3 दंस्रा   4) P पृर्ण ।   5) P तें ।   6) Diesen Vocativ s auch oben 1 4, 2, desgl TS 2, 4, 9, 3   7) M 3 ह्वयह्यत्य॰   8) Hg (u A) चावयति, W u M 3 चापयति   9) M 3 वसव्या   10) W मधुश्चुतानि, M 3 मधुश्चुतानि   11) Hg, (A) u M 3 चावयत्य॰

निर्वपेन्मारुतं सप्तकपालं सौर्यमेककपालं वृष्टिकामं याजयेदग्निर्वा इतो वृष्टिमीट्टे' मरुतो ऽमुतश्च्यावयन्ति[1]' तां सूर्यो रश्मिभिर्वर्षयत्येते वै वृष्ट्याः प्रदातारस्तानेव भागधेयेनोपासरत्ते ऽस्मै वृष्टिं प्रयच्छन्ति' सृजा वृष्टिं दिव आद्भिः समुद्रं पृणेतीमांश्चैवामूंश्च[2]' संमस्राडेभिरमूरर्धेति' ये देवा दिविभागाः स्थ ये अन्तरिक्षभागा ये पृथिवीभागास्त इदं क्षेत्रमाविशत' त इदं क्षेत्रमनुविविशतेतीमानेव लोकान्वृष्ट्यै संमृणत्ति ॥ ८ ॥

Vgl TS 2, 4, 9 u 10 (kārīrīshṭiḥ), Kāṭh 11, 10

॥ इति मध्यमकाण्डे चतुर्थः प्रपाठकः ॥

---

सौम्यं बभ्रुं लोमशं पिङ्गलमालभेत पशुकामः' सौमीर्वा ओषधय' ओषधयः पशवो' यत्सौम्यः' प्रत्यक्षमेवास्मै पशुमालभते' लोमशो भवत्येतद्वै पुष्ट्या रूपं' पुष्टिमेवावरुन्द्धे' बभ्रुः पिङ्गलो भवति सोमस्य रूपं समृद्ध्यै' यत्सितानामुत्तमो जायेत' तं सोमापौष्णमालभेत पशुकामः' सोमो वै रेतोधाः' पूषा पशूनां प्रजनयिता' सोम एवास्मै रेतो दधाति' पूषा पशून्प्रजनयति' स्तनं वा एतेषां द्वा अभिजायेते' ऊर्जं तृतीया' ऊर्ग्वै पशव' ऊर्जैवास्मा ऊर्जं पशूनाप्नावरुन्द्धे' चिर्वा एषा संवत्सरस्यान्यान्पशून्परिविजायत' एतद्वै पुष्ट्या

1) Hs M 3 (u 1) च्यावयति 2) B °सीमा°श्चैवामू°श्च 3) W °ायत
4) W स्तन°

रूपं पुष्टिमेवावरुन्द्धे भागिनीर्वा अन्याः प्रजा अभागा अन्या यदौदुम्बरो यूपो भवत्युभयीरेवैना भागिनीः करोति मासि मासि वा एषो ऽवान्तरमन्येभ्यो वनस्पतिभ्यः पच्यत एतद्वै पुष्ट्या रूपं पुष्टिमेवावरुन्द्धे प्राजापत्यं तूपरमालभेत पशुकामः प्राजापत्या वै पशवः प्रजापतिः पशूनां प्रजनयिता तमेव भागधेयेनोपासरत्स ऽस्मै पशून्प्रजनयति योनिर्वै प्रजापतिर्योनिरेव प्रजायते सर्वेषां वा एष पशूनां रूपाणि प्रति पुरुषस्येव श्मश्रूण्यश्वस्येव शिरो गर्दभस्येव कर्णौ शुन इव लोमानि गोरिव पूर्वौ पादावेरिवापरावजः खलु[1] सर्वाण्येव पशूनां रूपाण्याप्त्वावरुन्द्धे सर्वाण्येनं पशूनां रूपाण्युपतिष्ठन्ते हिरण्यगर्भवत्याघारौ[2] याः प्रजापतेः सामिधेनीस्ताः सामिधेनीर्याः प्रजापतेराप्रियस्ता आप्रियो हिरण्यं देयं समृद्धत्वाय तार्प्यं देयं सयोनित्वायाधीवासो[3] देयो यद्वास्य तेन रूपाण्याप्त्वावरुन्द्ध एतेन वा उपकेरु[4] रराधर्ध्नोति य एतेन यजते द्वादशधा ह नै स प्राशित्रं परिजहार तत्र द्वादश द्वादश वरान्ददौ यद्द्वादश दीयन्ते तस्यैषा प्रतिमा श्वेतं वायव आलभेत भूतिकामं याजयेद्वायुर्वै देवानामोजिष्ठः क्षेपिष्ठः[5] स एनं भूत्यै निनयति तदाहुरधृता देवतेश्वरा निर्मृज ईश्वरैनमार्तिं निनेतोरिति तदति सैवैनं भूत्यै निनयति श्वेतं वायवे नियुत्वत आलभेत ग्रामकामं याजयेद्वायुर्वा इमाः प्रजा नस्योता इत्थं चेत्थं च नेनीयते यद्वायवे वायुरे-

---

1) Hier schreibt B ein वै, M 3 वा ein 2) So Hg, M 3 (u. A), in W °घारौ; desgl. B, ohne Accent 3) So Hg, M 3, (in A °यांधीवासो), (auch Kâth. 13, 1 हिरण्यमधीवास), W °याधिवासौ, desgl. B, ohne Accent 4) So B, ohne Accent, in Hg u. M 3 उपकेरु, W ऊपकेरु, Kâth. 13, 1 उपकेतू रराध 5) M 3 क्षिपिष्ठ, W क्षेपिष्ठ, B क्षपिष्ठ

वास्मै नस्योतां विशं निनयति नियुत्वती याज्यानुवाक्ये भवतो[1] ग्राममस्मिन्दाधार श्वेतो भवति ब्रह्मणो रूपं समृद्ध्यै श्वेतं वायवे नियुत्वत आलभेतामयाविनं याजयेत्प्राणो वै वायुः प्राणो हि वा एतस्यापक्रान्तो ऽथैतस्यामयति[2] यद्वायवे वायुरेवास्मै प्राणं निनयति नियुत्वती याज्यानुवाक्ये भवतः[3] प्राणमस्मिन्दाधार श्वेतो भवति ब्रह्मणो रूपं समृद्ध्यै श्वेतं वायवे नियुत्वत आलभेत पशुकामं याजयेत्प्राणो वै वायुः प्राणं वा एतत्पशवः प्रतिधावन्ति यद्वर्षेषु वातं प्रतिजिघ्रति यद्वायवे वायुरेवास्मै पशून्निनयति नियुत्वती याज्यानुवाक्ये भवतः पशूनस्मिन्दाधार श्वेतो भवति ब्रह्मणो रूपं समृद्ध्यै ॥ १ ॥

Vgl TS 2, 1, 2 (bhūtikāmādīnāṃ çvetādyāḥ paçavaḥ); Kāṭh 13, 13 u 13, 1 u 12.

स्वर्भानुर्वा[4] आसुरः सूर्यं तमसाविध्यत्तस्य देवास्तमो ऽपाघ्नन्यत्प्रथमं तमो ऽपाघ्नन्साविः कृष्णाभवद्यद्द्वितीयं सा लोहिनी यत्तृतीयं सा वलक्षी यदध्यस्तादपाकृन्तन्साविर्वशाभवत्ते ऽब्रुवन्देवपशुमिमं कामायालभामहा इत्यथ वा इयं तर्ह्यृक्षासीदलोमिका[5] ते ऽब्रुवंस्तस्मै कामायालभामहै[6] यथास्यामोषधयश्च[7] वनस्पतयश्च जायन्ता इति तां वै तस्मै कामायालभन्त ततो ऽस्यामोषधयश्च वनस्पतयश्चाजायन्त यः प्रजाकामो वा पशुकामो वा स्यात्स एतामविं वशामालभेत प्र प्रजया च पशुभिश्च जायते ऽथो आहुर्यः प्रथमस्तमस्यापहते सूर्यस्य रश्मिर्यूपस्य चषाले वातनोत्साविर्वशाभवदिति तदुभयेनैव देवपशुरालभ्यते यद्यस्यासंज्ञानम्[8] यदि वैतरं

---

1) M 3 भवतो 2) B °थैतस्या° 3) M 3 भवतः 4) So M 3 u. W, Hg (u. A) स्वर्भानु° 5) W लोमीका 6) B °लभामहे 7) M 3 यथास्याम° 8) M 3 u. W यद्यस्या°

तत्कामाय कामायैवाविर्वेशालभ्यते' आग्नेयमजमालभेत' वारुणं पेत्वं भूतिकाम॰ याजयेदाग्नेयानि वै पुरुषस्यास्थानि' वारुणं मा॰समाग्नेयेनैवास्याग्नेयं निष्क्रीणाति' वारुणेन वारुणं भवत्येव' सारस्वतीं मेषीमालभेत यो वाचो गृहीत' वाग्वै सरस्वती' वाचैवास्य वाचं भिषज्यत्यपन्नदती[1] भवति सर्वत्वायानधिस्कन्ना[2] समृद्ध्यै' श्वेता मस्हा[3] आलभेत ब्रह्मवर्चसकाम आग्नेयी बार्हस्पत्या॰ सौरी॰ वसन्ताग्नेयी[4] प्रावृषि बार्हस्पत्या॰ शिशिरे सौरी॰ यदाग्नेयी' तेजस्तयावरुन्द्धे' यद्बार्हस्पत्या' ब्रह्मवर्चसं तया' यत्सौरी' रुचं तया' त्रिवृद्वा अस्मा एतत्समृद्धं ब्रह्मवर्चसं दधाति' स॰वत्सरं पर्यालभ्यन्ते' स॰वत्सरेण वा अन्नाद्यमाप्यते' स॰वत्सरेणैवास्मा आप्त्वा तेजो ब्रह्मवर्चसं दधाति' श्वेता भवति[6] ब्रह्मणो रूपं॰ समृद्ध्यै' वायव्यामजामालभेत' सारस्वतीं मेषीमदित्या अजामभिशस्यमान॰ याजयेद्वायुर्वा एतस्याश्लीलं गन्धं जनता अनुविहरति[7] यमभिश॰सन्त्येष उ इदं॰ सर्वमुपगच्छति' यद्वायव्ये' वायुरेवास्य तं गन्धं॰ सुरभिमकः' सो[8] ऽस्य सुरभिर्गन्धो जनता अनुवितिष्ठते' वाचा वा एतमभिश॰सन्ति यमभिश॰सन्ति' वाक्सरस्वती' यत्सारस्वती' वाचैवैषा[9] वाचं॰ शमयत्यप्रतिष्ठितो वा एष यमभिश॰सन्तीयं॰ वा अदितिरियं प्रतिष्ठा' यदादित्यास्यामेव[10] प्रतितिष्ठतीन्द्रियेण वा एष वीर्येण व्यृध्यते यमभिश॰सन्तीन्द्रियं॰ वीर्यं गर्भो' यद्गर्भिणी भवन्तीन्द्रियेणैवैनं॰ वीर्येण समर्धयन्ति ॥ २ ॥

Vgl. TS 2, 1, 2, Kaṭh. 12, 13 u. 13, 1

---

1) So Hg (u. A), s. TS 2, 1, 2. 7, auch Kaṭh. [illegible] 13 ऽपन्नदती; M 3 u. W ॰पनद्ती, B ॰पनदति 2) M 3 ॰यानधिस्कन्ना 3) M 3 u. W मसिह्वा, desgl. B, ohne Accent 4) B वसता आग्नेयी 5) W ॰येयी 6) Hg, M 3 (u. A) भवति 7) M 3 ॰नुवीहरति 8) M 3 सूो 9) M 3 वाचैवैषा॰ 10) W यदादित्यो स्याम॰, desgl. B ohne Accent

देवाश्च वा असुराश्चास्पर्धन्त ते वै समावदेव यज्ञे कुर्वाणा आयन्यदेव देवा अकुर्वत तदसुरा अकुर्वत ते न व्यावृतमगच्छंस्ते देवा एतं वामनं पशुमपश्यंस्तं वैष्णवमालभन्त ततो विष्णुरिमाँल्लोकाननुदजयत्ततो देवा असुरानेभ्यो लोकेभ्यः प्राणुदन्त ततो देवा अभवन्परासुरा यः सपत्नवान्भ्रातृव्यवान्वा स्यात्स एतं वामनं वैष्णवमालभेत ततो वै विष्णुरिमाँल्लोकाननुदजयद्विष्णोरेवोज्जितिमन्विमाँल्लोकाननुज्जयति प्रैभ्यो लोकेभ्यो भ्रातृव्यं नुदते विषम इवालभेत विषमानिव ह्रीमाँल्लोकान्देवा उदजयन्निमानेवं लोकाननुज्जयतीन्द्रो वै वृत्रमहंस्तं प्राङ्पद्यत स पद्यमाना इन्द्रं सप्तभिर्भोगैः पर्यगृह्णात्ससाक्षिव्यञ्चः पशवो व्युदायन्नूर्ध्वतो वैदेहीरुदायंस्तासामत्तासां पुरो जन्म पुर ओकस्तासां जघनतं ऋषभो वैदेहो ऽनूदैत्तमचायदयं वावं मासादहसो मुञ्चेदिति तमैन्द्रमालभेताग्नेयं तु पूर्वमजमालभत स वा अग्निनैव वृत्रस्य भोगानपिदह्यथैन्द्रेणेन्द्रियं वीर्यमात्मन्नधत्त यः पाप्मना तमसा गृहीतो मन्येत स एतमैन्द्रमृषभमालभेताग्नेयं तु पूर्वमजमालभेताग्निनैव पाप्मनो भोगानपिदह्यथैन्द्रेणेन्द्रियं वीर्यमात्मन्धत्त इन्द्रो वै बलमपावृणोत्ततः सहस्रमुदैत्तस्य सहस्रस्याग्रतः कुब्ज उदैत्तसादेतं साहस्री लक्ष्मीरित्याहुर्यश्च वेद यश्च नाथो आहुरिमं वा एष लोके पश्यन्नभ्युदेत्ति समैषत्सं एष समीषितः कुब्ज इति तमैन्द्रमालभेत पशुकाम ऐन्द्रा वै पशव इन्द्रः पशूनां प्रजनयिता तमेव भागधेयेनोपासरत्सो ऽस्मै पशून्प्रजनयति स यदा सहस्रं पशून्गच्छेद-

1) Das मे fehlt in W 2) Hier fügen W u. B ein वै ein. 3) B जघनतरा 4) So corrigirt. Hg, M 3, W मुदैत्तं°, (A मुदैत्त°), desgl. B, ohne Accent; Kāṭh 13, 8 त° सहस्रमनूदैत्, 13, 4 ऋषभो वैदेहमनूदैतमपश्यन् 5) W समैषं°; desgl. B, ohne Accent

यैत वामनं वैष्णवमालभेतैतस्मिन्वै तंत्सहसं प्रत्यतिष्ठत्से तिर्यङ्ङ्यैषतंस्मादेषं तिर्यङ्ङिव वीषितं एतेन वै सं तंत्सहसं पर्यगृह्णात्तंत्सहस्रस्य वा एषं परिगृहीत्या अविक्षोभाय देवाश्च वै पितरश्चास्मिँल्लोक आसन्त्संद्यत्किंच देवानां स्वमासीत्तत्पितरो ऽयुवत ते देवाः प्रजापतिमेवोपाधावन्त्से प्रजापतिरेतौ मिथुनौ पशू अपश्यदृषभं च वशां च तौ आलभत वैष्णववारुणीं तु पूर्वां वशामालभत ताम्वै वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदतैन्द्रं देवेष्वालभत तेनैष्विन्द्रियाणि वीर्याण्यात्मन्नदधाद्यः सपत्नवान्भ्रातृव्यवान्वा स्यात्स एतौ मिथुनौ पशू आलभेत ऋषभं च वशां च वैष्णववारुणीं तु पूर्वां वशामालभेत वरुणेनैवैनान्ग्राहयित्वा विष्णुना यज्ञेन प्रणुदतै ऽयैन्द्रेणेन्द्रियं वीर्यमात्मन्धत्ते ॥ ३ ॥

Vgl TS 2, 1, 3 (jayakâmâdînam paçavah) —5, Kath 13, 3 u 4

सावित्रं पुनरुत्सृष्टमालभेत यः पुरा पुण्यः सन्पापीयान्त्स्यात्सविता वै श्रियः प्रसविता तमेव भागधेयेनोपासरत्से एनं श्रियै प्रसुवति पापो वा एष पुरा सन्पापीयान्त्स्यान्न श्रियमश्नुते यः पुरानड्वान्त्सन्पापीयान्त्सन् गच्छति यथैव श्रियमश्नुत एवमेवैनं श्रियं गमयत्यौषधीभ्यो वेहतमालभेत प्रजाकामा ओषधीना वा एषा प्रियैता वा एता सूतोः परिबाधन्ता ओषधयः खलु वा एतस्य प्रजामपगूहन्ति यो ऽलं प्रजायै सन्प्रजां न विन्दते ता एवं भागधेयेनोपासरत्ता अस्मै प्रजां पुनर्ददत्यापो वा ओषधया आपो ह उत्वेवासत्खनन्ति ता

---

1) Das Verbum in den Mss ohne Accent, (nur in A Paroxytonon) 2) So W, in M 3 वीषित, desgl B, ohne Accent, Hg विषित, (A विषित) 3) Hg प्रजापतिरेव तौ, (ebenso A, nur mit ganz corruptem Accent) 4) W वरुणेनैवं ग्रा॰ 5) B पद्यात् 6) W एषा श्रियै n ता, M 3 ओषीता 7) cf Kâth 13, 4 आपो ऽसत्खनति

अस्मै प्रजां सनन्ति' द्यावापृथिवीये धेनू संमातरा आलभेतान्नकामो' यंऽअसौ वर्षति तदस्यां प्रतितिष्ठति' द्यावापृथिवी वा अन्नस्येशाते' ते एव भागधेयेनोपासरत्ते अस्मा अन्नाद्यं प्रयच्छतः' सं वत्सं वायव्या आलभेत' वायुर्वा अनयोर्वत्सो' वायुरिमे प्रदापयति' प्रत्ते ह वा इमे दुहे य एवं वेदैन्द्रीं सूतवशामालभेत' राजन्यं भूतिकामं याजयेदेतस्या वा अधीन्द्रोऽजायत' स जायमान एतं योनिं निरवतीयत्सा सूतवशाभवद्यो आहुरेतदेवं सकृदिन्द्रियं वीर्यं तेजो जनयित्वा नापरं सूता आयमन्सत' सा सूतवशाभवदितीन्द्रियेण वा एष वीर्येण व्यृध्यते योऽलं भूत्यै सन्न भवत्यैन्द्री भवती' न्द्रियमस्मिन्दधात्येष यस्तं विन्देद्यं सूत्वा सूतवशा भवति तमैन्द्रमालभेत तेजस्कामस्तदेवेन्द्रियं वीर्यं तेज आप्नोति' सारस्वतीं धेनुष्टरीमालभेत यः सत्ये पशुषु वा विवदेत' वाग्वै सरस्वती' वाचैवैषा वाचं वृङ्क्ते' धेनुर्वा एषा सती न दुहे' तद्यमेवैषा वाचं करोति' द्यावापृथिवीयां धेनुं पर्यारिणीमालभेत यो राजन्योऽध्यर्धो विशश्चरेद्' द्यावापृथिवीभ्यां हि वा एष निर्भक्तो'ऽथैषोऽध्यर्धो विशश्चरति' द्यावापृथिवी एवैनं विशि प्रतिष्ठापयतः' पर्यारिणी भवति' पर्यारीव ह्येतद्राष्ट्रं' यदध्यर्धो विशश्चरति द्यावापृथिवी एवैनं विशि प्रतिष्ठाप्य' सं स्वी भूते वत्सं वायव्या आलभेत' वायुर्वा अनयोर्वत्सो' वा-

---

1) So M 3 (eig सं वत्सं; dann corrigirt); Hg समवत्सं; desgl. B, ohne Accent; W सं वत्सं; Kāṭh 13, 5 द्यावापृथिव्या धेनुम्पर्यारिणीमालभेत — — — एतस्या एवं वायव्य वत्सं म आलभेत; 13, 7 द्यावापृथिव्यौ धेनू सम्मातरा आलभेत — — एतयोरेव वायव्यं (cod °व्य) वत्सं म आलभेत 2) So Hg u M 3; (so A तद्यंम°); in W तियंम°; desgl. B, ohne Accent; Kāṭh. 13, 6 धेनुर्वा एषा सती न दुहे तस्मादेनुष्ट्युं-च्यते यदेनुष्टरी वाचमेवैषा वाचं करोति 3) So corrigirt, M 3 u. W धेनुं; desgl. B, ohne Accent; Hg धेनुं; (A धेनु).

युरिमौ क्षयौ विशं च प्रदापयति प्रक्षी ह वा इमौ क्षयौ विशं च दुहे य एवं वेद ॥ ४ ॥

Vgl TS 2, 1, 5; Kāṭh 13, 4—7

आग्नेयमजमालभेत सौम्यं बभ्रुमृषभं पिङ्गलं भूतिकामं याजयेद्वाग्नेयो वा आग्नेय इन्द्रियेण वा एष वीर्येण व्यृध्यते यो ऽलं भूत्यै सन्न भवति यत्सौम्यः स्वयैवास्मै देवतयेन्द्रियं वीर्यमाप्त्वावरुन्द्धे[1] भवत्येव बभ्रुः पिङ्गलो भवति सोमस्य रूपं समृद्ध्यै गोमृगं वायव्यमालभेताभिशस्यमानं याजयेद्वापूतो वा एष यमभिशंसन्ति वायुर्वै देवानां पवित्रं वायुनैवैनं पवित्रेण पुनाति नैव वा एष ग्रामे नारण्ये यमभिशंसन्ति नैव खलु वा एष ग्राम्यः पशुर्नैवारण्यस्तस्मादस्यैष देवतया पशूनां समृद्ध ऐन्द्राग्नमनुसृष्टमालभेत यस्य पिता पितामहः सोमं न पिबेदिन्द्रियेण वा एष वीर्येण व्यृध्यते यस्य पिता पितामहः सोमं न पिबति यदैन्द्र इन्द्रियेणैवैनं वीर्येण समर्धयति देवताभिर्वा एष व्यृध्यते यस्य पिता पितामहः सोमं न पिबति यदाग्ने३यो ऽग्निर्वै सर्वा देवता देवताभिरेवैनं समर्धयत्यनुसृष्टो भवत्यनुसृष्ट इव ह्येतस्य सोमपीथो यस्य पिता पितामहः सोमं न पिबति तस्मादस्यैष देवतया पशूनां समृद्धस्त्वाष्ट्रं वडबमालभेत पशुकामस्त्वष्टा वै पशूनां प्रजनयिता तमेव भागधेयेनोपासरत्सो ऽस्मै पशून्प्रजनयति सौमापौष्णं नपुंसकमालभेत पण्डकं[2] याजयेद्वाप नु भूमेर्जायेत तन्प्रजिज्ञासेतोच वा एतस्य जायमानस्येन्द्रियं वी३र्यमपाक्रामद्देवा अस्मा इन्द्रियं वी-

1) So alle Mss   2) W षंडकं   3) So Hg, M 3 (u. A), in W ग्नें, desgl B, ohne Accent

र्यमाप्त्वा दधाति सौमश्च वा एतस्य पूषा च जायमानस्येन्द्रियं वीर्यमुपैतामियं वै पूषौषधयः सोमो यत्सौमापौष्णः स्वयैवास्मै देवतयेन्द्रियं वीर्यमाप्त्वावरुन्द्धे भवत्येव यान्यनवदानीयानि तैर्नैर्ऋतैः पूर्वैः प्रचरन्ति निर्ऋतिगृहीता वा एषा स्त्री या पुंरूपा निर्ऋतिगृहीत एष पुमान्यः स्त्रीरूपो निर्ऋत्या एवैनं तेन मुञ्चति न वै नैर्ऋत्याहुतिरग्निमानशे यदङ्गारेषु जुहोति तत्स्विदग्नौ जुहोति तदु न यत्र वा अद इन्द्रो वृषणाश्वस्य मेनासीत्तदेनं निर्ऋतिः पाप्माऽगृह्णात्स यत्पाप्मानमपाहत स नपुंसकोऽभवद्यः पाप्मना तमसा गृहीतो मन्येत स एतमैन्द्रं नपुंसकमालभेत येनैवेन्द्रः पाप्मानमपाहत तेन पाप्मानमपहतेऽथैन्द्रेणेन्द्रियं वीर्यमात्मन्धत्ते प्रजापतिः पशूनसृजत स वा एतमेवाग्रे नपुंसकमसृजत तं पशवोऽन्वसृज्यन्तायो आहुस्तमेवाग्रे सृष्टं त्वष्ट्रे च पत्नीभ्यश्च नपुंसकमालभत तेन प्रजा असृजतेति यः प्रजाकामो वा पशुकामो वा स्यात्स एतं त्वष्ट्रे च पत्नीभ्यश्च नपुंसकमालभेत मिथुनं वै त्वष्टा च पत्नीश्च त्वष्टारं वा एतन्मिथुनेऽप्यस्राट् प्रजननाय तन्मिथुनं तस्मादेव मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते ॥ ५ ॥

Vgl TS 2, 1, 5, Kath 13, 6

प्रजापतिः प्रजा असृजत ता एनं सृष्टा अत्यमन्यन्त ता अतिमन्यमाना वरुणेनापाहयत्ता वरुणगृहीताः कृष्णः पेत्वोऽध्यस्कन्दत्तस्यानुहाय पादमगृह्णात्तस्य शफः प्रावृहत स एकशितिपादभवत्तमचायदयं वावासां प्रजानामवरुणगृहीतोऽनेनेमाः प्रजा वरुणा-

---

1) M 3 °दानीयानि  2) M 3 fügt hier ein ही *ein*  3) M 3 पुरूपा  4) B °मपाहते  5) M यासा

न्मुञ्चानीति तं वारुणमालभत तेन इमाः प्रजा वरुणात्प्रामुच्यन्त तद्वरुणप्रमोचनीय एवैष यो ज्योगामयावी स्यात्तमेतेन याजयेद्वरुणेन हि वा एष पाप्मना गृहीतो ऽथैतस्य ज्योगामयति यद्वारुणो वरुणादेवैनं तेन मुञ्चत्यैकशितिपाद्भवत्येवमिव हि तस्य रूपमासीत्समृद्ध्यै द्वीपे याजयेदेता वै प्रत्यक्षं वारुणीर्यदापः स्वे वा एतद्योनौ प्रत्यक्षं वरुणमवयजति समन्तमापः परिवहन्ति रक्षसामनन्ववायाय वारुणं कृष्णं पेत्वमालभेताभिचरन्यद्वारुणो वरुणेनैवैनं ग्राहयित्वा स्तृणुते कृष्णो भवति तमो वै कृष्णं मृत्युस्तमो मृत्युनैवैनं ग्राहयत्येतद्वै पाप्मनो रूपं यत्कृष्णं कृष्ण इव हि पाप्मा पाप्मनैवैनमभिभवति तं नियुञ्ज्यात् ॥

पशुं बध्नामि वरुणाय राज्ञ इन्द्राय भागमृषभं केवलो हि । ॥
गाथाणि देवा अभिसंविशन्तु यमो गृह्णातु निर्ऋतिः सपत्नान् ॥

इत्येताभ्य एवैनं देवताभ्यो निर्याच्य मृत्युर्वै यमो मृत्युनैवैनं ग्राहयत्यग्नये वैश्वानराय कृष्णं पेत्वमालभेत समान्तमभिप्रोष्यन्संवत्सरो वा अग्निर्वैश्वानरः संवत्सराय समम्यते संवत्सरमेवाप्त्वावरुणं काममभिद्रुह्यत्याश्विनं कृष्णललाममालभेतानुजावरं याजयेदश्विनौ वै देवानामानुजावरावश्विना एतस्य देवते य आनुजावरस्तौ एव भागधेयेनोपासरत्तौ एनमग्रं परिणयतः कृष्णो भवति पाप्मानमेवापहते ललामो भवति मुखतो ऽस्मिंस्तेजो दधात्याश्विनं कृष्णललाममालभेतामयाविनं याजयेदश्विनौ वै देवानां भिषजावश्विना

1) Statt °न्न हि steht in B वारुणीर्यदाप स्वे वा एतद्योनौ यतप° म गृहीतो 2) Hg तद्धि°, (A तद्धि°) 3) P रांचि।

एतस्य देवते य आमयावी ता एव भागधेयेनोपासरत्ता एनं भिषज्यतः कृष्णो भवति पाप्मानमेवापहते ललामो भवति मुखतो ऽस्मिंस्तेजो दधाति ॥ ६ ॥

Vgl TS 3, 1, 3 (varunagrhitādinām paçavah); Kāth 13, 2 7.

छन्दांसि वै यज्ञाय नातिष्ठन्त स वषट्कारो ऽभिहत्य गायत्र्याः शिरो ऽच्छिनत्तस्याः शीर्ष्णश्छिन्नाद्यो रसो ऽक्षरत्ता वशा अभवंस्तद्वशानां वशात्वमित्येक आहुर्वंशं वै ता अक्षरंस्ता वशा अभवंस्तद्वशानां वशात्वमित्येक आहुर्वंसा वै सासीद्वंसा वा एता इति ततो यः प्रथमो रसः प्राक्षरत्तं बृहस्पतिरुपागृह्णात्सा रोहिणी बार्हस्पत्या ततो ३यो ऽप्यक्षरत्तं मित्रावरुणौ सा द्विरूपा मैत्रावरुणी ततो ३यो ऽप्यक्षरत्तं विश्वे देवाः सा बहुरूपा वैश्वदेवी ततो ३यो ऽप्यक्षरत्तमिन्द्रश्च मरुतश्च सा पृश्निरपिमारुत्येक आहुः कृष्णाबलीत्येव या विप्रुषा आसंस्तानीमान्यन्यानि रूपाणि ततो यः प्रथमो द्रप्सः परापतत्तं बृहस्पतिरभिहायाभ्यगृह्णात्स उक्षाभवत्तदुक्ष्ण उक्षत्वमित्येक आहुर्यद्देवता अनुव्यैक्षत स उक्षाभवत्तदुक्ष्ण उक्षत्वमिति तं ब्राह्मणस्पत्यमालभेत ब्राह्मणो भूतिकामं याजयेद्ब्रह्म वै ब्रह्मणस्पतिर्ब्राह्मणस्पत्यो ब्राह्मणो देवतया स्वयैवास्मै देवतयेन्द्रियं वीर्यमाप्त्वावरुन्द्धे भवत्येव रोहिणीं बार्हस्पत्यामालभेत ब्रह्मवर्चसकामो ब्रह्म वै बृहस्पतिर्बार्हस्पत्यो ब्राह्मणो देवतया स्वयैवास्मै देवतयाप्त्वा तेजो ब्रह्मवर्चसं दधाति रोहिणी भवति ब्रह्मणो रूपं समृद्ध्यै मैत्रावरुणीं द्विरूपामालभेत पशुकामो ऽहोरात्रे वै मित्रावरुणा अहोरात्रे अनु पशवः प्रजायन्ते ता एव भागधेयेनोपासरत्ता अस्मै पशून्प्रजनयतश्छन्दसां वा एष रसश्छन्दसामेवास्मै रसेन

पशूंन्धत्तो' द्विरूपा भवति समृद्ध्यै' वैश्वदेवीं बहुरूपामालभेत यस्मै कामाय कामयेत' सर्वा वा एता देवताः' सर्वा वा एतद्देवताः' कामाय भागधेयेनोपासरत्ता अस्मै कामं समर्धयन्ति यत्कामो भवति' छन्दसां वा एष रसश्छन्दसामेवास्मै रसेन दधाति' बहुरूपा भवति समृद्ध्या' आग्निमारुतीं पृश्निमालभेत वृष्टिकामो' ऽग्निर्वा इतो वृष्टिमीट्टे' मरुतो ऽमुतश्च्यावयन्त्येते वै वृष्ट्याः प्रदातारस्तानेव भागधेयेनोपासरत्ते ऽस्मै वृष्टिं प्रयच्छन्ति' छन्दसां वा एष रसो' रसो वृष्टिश्छन्दसामेवास्मै रसेन रसं वृष्टिं निनयन्ति' पृश्निर्भवति' पृश्निमातरो हि मरुतो' भौमीं कृष्णाशबलीमालभेतान्नकाम' इयं वा अन्नस्य प्रदापिका' तामेव भागधेयेनोपासरत्सास्मा अन्नाद्यं प्रयच्छति' न चर्मोपाहरेयुरन्नं वै चर्मान्नेन कृष्णमनन्नेनैवान्नमपहत्यान्नाद्यमात्मन्धत्ते' यो वै तच्छीर्ष्णश्छिन्नात्तेज इन्द्रियं वीर्यं परापतत्सा बभ्रुर्वशाभवत्सैदेषा वशान्नमेवैतदास्तां ब्राह्मणस्पत्यामालभेताभिचरन्ब्रह्म वै ब्रह्मणस्पतिर्ब्राह्मणस्पत्यो ब्राह्मणो देवतया' यावदेवं ब्रह्म तेनैनं सर्वेणाभिचरति' तेजसैनं प्रछिनत्ति' स्तृणुत एव' बभ्रुर्भवति' ब्रह्मणो रूपं समृद्ध्यै' सौर्यं श्वेतामालभेत ब्रह्मवर्चसकामो' ऽसौ वा आदित्यो ब्रह्मवर्चसस्य प्रदाता' तमेव भागधेयेनोपासरत्सो ऽस्मै ब्रह्मवर्चसं प्रयच्छति' श्वेता भवति' ब्रह्मणो रूपं समृद्ध्यै' मैत्रावरुणीं कृष्णकर्णीमालभेत वृष्टिकामो' ऽहोरात्रे वै मित्रावरुणा' अहोरात्रे अनु-

1) So Hg, M 3, W (u. A), in B रसो पशूंन्धत्तो 2) So M 3, in Hg u. W सर्वा वावाएतेतद्देवताः, (A सर्वा वावाएतेतद्देवताः), B सर्वा वाएते तद्देवताः 3) Hg (u. A) च्यावयन्त्य॰ 4) M 3 रसो रसो, in W nur einmal रसो 5) So ist das Adj. betont in Hg und wohl auch W, in M 3 कृष्णकर्णीम॰, (A कृष्णकर्णीम॰)

वर्धयत्येतद्वा अह्नो रूपं यच्छुक्लं यत्कृष्णं तद्रात्रेर्द्विरूपा भवति समृद्ध्यै ॥ ७ ॥

Vgl TS 2, 1, 7 u 9 (brahmavarcasakamadinam paçvantaram), Kath 13 8

इन्द्राय मन्युमते मनस्वते ललाममालभेत संग्रामे मन्युना वै वीर्यं क्रियत इन्द्रियेण जयति[1] वीर्यं चैवैष्विन्द्रियं च जित्यै दधाति ललामो भवति पुरस्ताद्ध्ययं मन्युरथो ब्रह्मणैवैनान्पुरस्तान्मुखतो जित्यै संश्यतीन्द्रायाभिमातिघ्न ऋषभमालभेत भ्रातृव्यवानभिमातिर्वै पाप्मा भ्रातृव्य इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहते स इन्द्राय वृत्रतुरा आलभेताभिमातिर्वै पाप्मा भ्रातृव्य इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहत्य वृत्रतूरिवाभूत्स्वाराज्यमेव गच्छति वृत्रतूरिति ह्येतमाहुर्यः स्वाराज्यं गच्छत्यैन्द्रामारुतं पृश्निसक्थ्यमालभेत राजन्यं ग्रामकामं याजयेदैन्द्रो वै राजन्यो देवतया मारुती विडिन्द्रियेणैवास्मै विशमुपयुनक्ति पृश्निसक्थ्यो भवति पश्चादेवास्मै विशमुपदधात्यनुकाममस्मै विशमविवादिनीं करोतीन्द्राय वज्रिण ऋषभमालभेत राजन्यं भूतिकामं याजयेदैन्द्रो वै राजन्यो वज्री भवत्यथ भूतिं गच्छति यद्वज्रिणे वज्रमेवास्मा आधात्तेन विजितिं भूतिं गच्छति स एनं भूत्यै प्रेम्णा इन्द्धे वज्रिण इति तदस्याभिचरणीयं यं द्विष्यात्तर्हि मनसा ध्यायेद्वज्रमेवास्मै प्रहरति स्तृणुत एनं सौम्यं बभ्रुमृषभं पिङ्गलमालभेत यो ऽलं राज्याय सन्राज्यं न प्राप्नुयात्सोमो वै राजतस्य देवता सोमो हि राजा स्वामेव

---

1) B याजयति 2) M, S चैवा, W चैवा 3) So Hg, W (u A), d o andern Mss °तूरा 4) W पृश्निस°

देवता राज्यायोपासरत्स्वेनैव देवता राज्यं गमयति बभ्रुः पिङ्गलो भवति सोमस्य रूपं समृद्ध्यै ॥ ८ ॥

Vgl TS 2, 1, 3 (cf oben 2, 5, 3); Kâth 13, 4 3

यः प्रथम एकाष्टकायां जायेत यस्तमालभ्यमानः स्यात्स आग्नेयमष्टाकपालं निर्वपेदग्निर्वै पशूनां योनिः स्वादेवैनान्योनेर्निष्क्रीणात्या मेध्याङ्गविनोरयेवै वैश्वानराय द्वादशकपालं मासि मासि निर्वपेत्संवत्सरो वा अग्निर्वैश्वानरः संवत्सरादेवैनं निष्क्रीणाति स यदा मेधं गच्छेदथैन्द्रायाभिमातिघ्न आलभेताभिमातिर्वै पाप्मा भ्रातृव्य इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहते ऽश्वो ऽभ्युप्रवहो दक्षिणैषां वै व्यावृत्तः पाप्मना पाप्मनैवैनं व्यावर्तयत्यथ यो ऽपरस्यामेकाष्टकायां जायेत तमेवमेवोत्सृज्याथैन्द्राय वृत्रतुर आलभेताभिमातिर्वै पाप्मा भ्रातृव्य इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहत्य वृत्रतूरेवाभूत्स्वाराज्यमेव गच्छति वृत्रतूरिति ह्येतमाहुर्यः स्वाराज्यं गच्छति शतमभ्युप्रवहा दक्षिणा ते वै व्यावृत्ताः पाप्मना पाप्मनैवैनं व्यावर्तयन्ति शतं भवन्ति शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति देवाश्च वा असुराश्चास्पर्धन्त ते ऽब्रुवन्ब्रह्मणि नो ऽस्मिन्विजयेयामेत्यरुणस्तूपरश्च्यैनेयो देवानामासीज्जयेतो ऽयःशृङ्गः श्यैनेयो ऽसुराणां ते ऽसुरा उत्क्रोदिनो ऽचरन्नराडो ऽसाकं तूपरो

1) So W, in Hg °त्यामेध्याङ्गविनोर°, A °त्यामेध्याङ्ग°, M 3 °त्यमेध्याङ्गविनोर°, desgl B, ohne Accent, Kath 13, 3 संवत्सरादेवैना अधिनिष्क्रीणात्या मेध्याभा भवितो
2) So Hg, W (u A), die andern Mss °तुरा 3) W °मेवागच्छति 4) W यत्स्वा°
5) So M 3, in Hg u W ब्रह्मणो, desgl B, ohne Accent, (A ब्रह्मणो), Kath 13, 4 ब्राह्मणा नो मेनो विजयेतामिति 6) So das Verb in Hg u M 3, (in A विजयेया°); W °जयेता°, B °जेयेयाता° 7) M 3 °यैतो 8) M 3 u W श्यैनेयो, desgl B, ohne Accent, Hg श्येनेयो; (A श्यैनेयो)

ऽमीपामिति । तौ वै समलभेतां । तस्य देवाः क्षुरपवि शिरो ऽकुर्वंस्तस्यान्तरा शृङ्गे शिरो व्यवधाय[1] विष्वञ्च व्यरुजन्द्यासुरी वागवदत्सेमां प्राविशद्धीदृजयतां[2] वनस्पतीँस्तस्माद्ब्राह्मणो मृन्मयेन न पिबेदसुर्या वाचात्मानं नेत्संसृजा इति तद्य एवं विद्वानमृतपात्रपो भवत्युज्जितमेव वाचं उपैति । तं ब्राह्मणस्पत्यमालभेताभिचरन्ब्रह्म वै ब्रह्मणस्पतिर्ब्राह्मणस्पत्यो ब्राह्मणो देवतया । यावदेव ब्रह्म तेनैनं सर्वेणाभिचरति । तेजसैनं प्रच्छिनत्ति । स्तृणुत एवारुणस्तूपरो भवत्येवमिव हि तस्य रूपमासीत्समृद्ध्यै । देवा असुरान्हत्वेभ्यो लोकेभ्यः प्राणुदन्त । ते राचीं प्राविशंस्तानश्विना अनुप्राविशतां । तौ तमः पर्यगृह्णातां एतमाश्विनमश्विमालभेतां । तेन तमो ऽपाघ्नातामसा एना आदित्यः पुरस्ताज्ज्योतिषा प्रत्यागच्छत्स आभ्यां तमो ऽध्यपाहन्यः पाप्मना तमसा गृहीतो मन्येत स एतमाश्विनमश्विमालभेत । येनैवाश्विनौ तमो ऽपाघ्नातां तेन पाप्मानमपहते ऽसा एनमादित्यः पुरस्ताज्ज्योतिषा प्रत्यागच्छति । सो ऽस्मात्तमो ऽध्यपहन्ति ॥ ९ ॥

Vgl TS 2, 1, 3 u. 5 (cf oben 2, 5, 3), Kāṭh 13, 3 4

असौ वा आदित्यस्तेजोभिप्रार्थ्यत । तत इदं सर्वं तमो ऽभवत्स प्रजापतिरेतान्दश ऋषभानपश्यद्यो आहुरिन्द्रो ऽपश्यदिति । तानिन्द्रो नालभत[10] । तैरस्मिन्निन्द्रियाणि[11] वीर्याण्याप्रादधाद्ब्रह्मलामा आलभ्यन्त[12] मुखतो ऽस्मिंस्तैस्तेजो ऽदधाज्ज्योतिककुद उपरिष्टात्तैर्य-

1) So Hg, desgl B, ohne Accent, (A व्यवधाय), W वायधाय, M 3 विवधाय
2) W यौदाजयत्, desgl B, ohne Accent. 3) M 3 °ममृतपावपो 4) B वापसुयिति
5) W हत्वेभ्यो 6) M 3 °प्राणु° 7) Hg, M 3 (u A) °मश्वोम° 8) So Hg, M 3, in W तमो ऽपाप°, s den Schluss des Cap 9) Hg u M 3 °मश्वोम°; (A °मश्वोम°)
10) W °नभेत 11) Hg °न्द्रियाणि 12) So Hg, M 3, (A आलभ्यत), W आलभ्यते, desgl B, ohne Accent.

श्येतानूकाशाः[1] पशवस्ततो वा असा आदित्यः सर्वतस्तेजस्व्यभवद्यस्तेजस्कामः स्यात्स एतानैन्द्रानृषभानालभेत यल्ललामा आलभन्ते मुखतो ऽस्मिꣳस्तेजो दधाति[2] यच्छितिककुद उपरिष्टात्तस्माच्छ्येतानूकाशाः[3] पशवः सर्वत एवैनं तेजस्विनं करोत्यमुष्यैनमादित्यस्य मात्रां गमयति प्राजापत्यं दशमं द्वादशौ मासा आलभेत द्वादश मासाः सꣳवत्सरः सꣳवत्सरमेवाप्त्वावरुन्धे नवालभ्यन्ते नव वै प्राणाः प्राणाः खलु वै पुरुषे वीर्यं प्राणानस्मिन्वीर्यं दधाति दशालभ्यन्ते दशाक्षरा विराड् विराडेतान्येवेन्द्रियाणि वीर्याण्यात्मन्धित्वैवꣳ विराड्यामेव प्रतितिष्ठति ॥

नमो महिम्ने चक्षुषे[4] मरुतां पितस्तदहं गृणे ते ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥
देवानामेष उपनाह[5] आसीदपां पतिर्वृषभ ओषधीनाम् ।
सोमस्य द्रप्समवृणीत पूषा बृहन्नद्रिरभवद्यत्तदासीत् ॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानꣳ योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ।
पिता वत्सानां[6] पतिरघ्न्यानामुताथ पिता महतां गर्गराणाम् ।
वत्सो जरायु[7] प्रतिधुक्पीयूष[8] आमिक्षा मस्तु घृतमस्य योनिः ॥
त्वां गावो ऽवृणत राज्याय त्वाꣳ वर्धन्ति[9] मरुतः स्वर्काः ।

---

1) Hg ॰नुकाशा, (A ॰नुकाशा) 2) B दधात्, W दधाद् 3) M 3 ॰नुकाशा 4) B चक्षुषा 5) P उपनाहे इत्युप नाहे। 6) M वत्सांना, M 3 वत्स्सांना 7) B जरायु 8) P पीयूष। 9) P वर्धयति।

वर्ष्मन्क्षत्रस्य ककुब्भिः[1] शिथिरा यातस्ततो न उर्या विभजा वसूनि ॥

॥ १० ॥ Vgl TS 2, 1, 4 (brahmavarcasakâmâdinâm paçavah); 3, 3, 9 (jimarṣabhâlambhah), Kâth 13, 7 9

वायव्यमजमालभेतैन्द्रं वृष्णिं वृषभं वा वारुणं पेत्वं भूतिकामं याजयेद्यद्वायव्यो वायुरेवैनं भूत्यै निनयतीन्द्रियेण वा एष वीर्येण व्यृध्यते यो ऽलं भूत्यै सन्न भवति यदैन्द्र इन्द्रियेणैवैनं वीर्येण समर्धयति वरुणगृहीतो वा एष यो ऽलं भूत्यै सन्न भवति यद्वारुणो वरुणादेवैनं तेन मुञ्चत्येतानेवाभिचरन्नालभेत यद्वायव्यो वायुरेवास्मै वज्रं संश्यत्यैन्द्रो वै वज्र इन्द्रियेण खलु वै वज्रः प्रह्रियते यदैन्द्रो वज्रमेवास्मै प्रहरति यद्वारुणो वरुणेनैवैनं ग्राहयित्वा स्तृणुते सौर्यं बलक्षं पेत्वमालभेत ब्रह्मवर्चसकामो ऽसौ वा आदित्यो ब्रह्मवर्चसस्य प्रदाता तमेव भागधेयेनोपासरत्सो ऽस्मै ब्रह्मवर्चसं प्रयच्छति यद्बलक्षः समृद्धस्तेन यदलूनः समृद्धस्तेन यत्पीवा समृद्धस्तेन त्रिवृद्धा वा अस्मा एतत्समृद्धं ब्रह्मवर्चसं दधात्यादित्यं बहुरूपमालभेत यस्याश्विने शस्यमाने सूर्यो नोदियात्पराचीर्वा एतस्मै व्युच्छन्ति यस्याश्विने शस्यमाने सूर्यो नोदेति यदादित्यो ऽमुमेवास्मा उच्छयति बहुरूपो भवति बहूनि वै रश्मीनां रूपाणि रश्मीनामेवास्मै रूपाण्याभ्युच्छयत्यग्निर्वै सृष्टो न व्यरोचत सो ऽग्नये तेजस्विने ऽजं कृष्णग्रीवमालभत तेन तेजस्व्यभवत्सो ऽकामयत सर्वं च विभवेयमिति सो ऽग्नये विभूतिमते

---

1) Die Hss schwanken, P ककुब्भिरिति ककुप् भिः । Hg ककुभिः, M 3 u A ककुंभिः, desgl B, ohne Accent, W ककुद्भिः vgl übrigens TS 3 3, 9, 2, vielleicht wie dort ककुब्भिः zu lesen  2) P विं । भज ।  3) W °त्याश्विन-ट्टिय (an der Stelle des steht in der Handschrift ein unleserlicher Buchstabe)

ऽजं कृष्णग्रीवमालभत तेन सर्वत्र व्यभवत्सो ऽकामयत सर्वचापिभागः स्यामिति ३सो ऽग्नये भागिने ऽजं कृष्णग्रीवमालभत तेन सर्वचापिभागो ऽभवत्सो ऽकामयत दानकामा मे प्रजाः स्युरिति ३सो ऽग्नये दा३त्रे ऽजं कृष्णग्रीवमालभत तेनास्मै दानकामाः प्रजा अभवन्यः कामयेत तेजस्वी स्यां सर्वत्र विभवेयं सर्वचापिभागः स्यां दानकामा मे प्रजाः स्युरिति स एतानजान्कृष्णग्रीवानालभेत तेजस्वी भवति सर्वत्र विभवति सर्वचापिभागो भवति दानकामा अस्मै प्रजा भवन्ति प्राजापत्यं बहुरूपमालभेत पशुकामः प्राजापत्या वै पशवः प्रजापतिः पशूनां प्रजनयिता तमेव भागधेयेनोपासरत्सो ऽस्मै पशून्प्रजनयति बहुरूपो भवति बहूनि वै पशूनां रूपाणि पशूनामेवास्मै रूपाण्याप्त्वावरुन्द्धे याम्यं शुकहरिमालभेत शुण्ठं वा यः कामयेत यमलोकं प्राप्नुयामित्येतेन वै य३मो ऽमुष्मिंल्लोक आर्ध्नोद्य३मो ऽमुष्य लोकस्याधिपत्यमानशे तमेव भागधेयेनोपासरत्स एनममुष्य लोकस्याधिपत्यं गमयत्येकधा वा एतेन यमलोकं प्राप्नोति परे वयसि[1] य एवं ताजग्धि प्रमीयते शुण्ठो वा भवति शुकहरिर्वै य ३ह्येतस्य देवतया पशूनां समृद्धः ॥ ११ ॥

Vgl. (TS 2, 1, 4)

॥ इति मध्यमकाण्डे पञ्चमः प्रपाठकः[2] ॥

---

1) B वयसी  2) So Hg, W (u. A), m. M २ मध्यमकाण्डे पशुबन्ध प्रपाठकः ॥, B इति द्वितीयकाण्डे पशुबन्धनाम पञ्चमः प्रपाठकः ॥

अनुमत्या अष्टाकपालं निर्वपन्ति ये प्रत्यञ्चः शम्यामतिशीयन्ते तं नैर्ऋतमेककपालमुभौ सह भूतौ[1] कुर्वन्ति नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय विस्रंसिकायाः काण्डाभ्यां जुहोति ॥ जुषाणा निर्ऋतिर्वेतु स्वाहा ॥ वासः कृष्णं भिन्नान्तं दक्षिणा पुनरेत्यानुमत्या अष्टाकपालेन प्रचरन्ति धेनुर्दक्षिणाथ ये उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्रुज्य जुहुयात् ॥ इदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजे[2] ॥ तत्पुनरपिदधाति ॥ इदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामि[3] ॥ श्वो भूत आदित्येभ्यो भुवद्भ्यो घृते चरुर्वरो दक्षिणा श्वो भूत आग्नावैष्णव एकादशकपालोऽनड्वान्वामनो दक्षिणा श्वो भूतेऽग्नीषोमीय एकादशकपालो हिरण्यं दक्षिणा श्वो भूत ऐन्द्राग्न एकादशकपालोऽनड्वानृषभो दक्षिणा श्वो भूत आग्नेयोऽष्टाकपालो माहेन्द्रं दधि वासः क्षौमं दक्षिणा ॥ १ ॥

Vgl TS 1, 8, 1 (anumatadayo gathan yagah), Kath 15, 1, VS 9, 35, Çat. Br 5, 2, 3, 2 flg , Man Çr 9, 1, 1

ऐन्द्राग्नमेकादशकपालं निर्वपेदाग्नेन्द्रं वा वैश्वदेवश्चरुः सौम्यः श्यामाकश्चरुर्द्यावापृथिवीया एककपालो वत्सः प्रथमजो दक्षिणा सीरं द्वादशायोगं[4] दक्षिणोष्टारो वानड्वान् ॥ २ ॥

Vgl TS 1 8, 1, (cf oben 2, 6, 1), Kāṭh 15 1 u E

आग्नेयोऽष्टाकपालो वारुणो यवमयश्चरू रौद्रो गावीधुकश्चरुरैन्द्रं दधि धेनुरनड्वाही दक्षिणायां न्ययनादपामार्गैनाहरन्ति ता-

---

1) So Hg., (m A भूतौ, desgl Kāṭh, ohne Accent), M 3 u W श्रितौ; desgl B, ohne Accent, s unten 2, 6, 5. 2) M 3 u B °यजेत् 3) B °दधाति 4) B द्वादशयोगं

नसंकूलकृत्वा दक्षिणा पर्येत्य स्वकृत इरिणे एकोल्मुकं निधाय पर्णमयेन स्रुवेण जुहोति ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रस्यौजसा रक्षोहासि स्वाहा हतं रक्षो ऽवधिष्म[1] रक्षः ॥ वरो दक्षिणा ॥ ये देवाः पुरःसदो ऽग्निनेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ये देवा उत्तरात्सदो मित्रावरुणनेत्रा[2] रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ये देवा उपरिषदो ऽवस्वद्वन्तः[3] सोमनेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहेदमहं[4] रक्षो ऽभिसमूहाम्यग्ने संदह रक्षः संदग्धं रक्षो ऽग्नये पुरःसदे स्वाहा यमाय दक्षिणात्सदे स्वाहा मरुद्भ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणाभ्यामुत्तरात्सद्भ्यां[5] स्वाहा सोमायोपरिषदे ऽवस्वद्वते रक्षोघ्ने स्वाहा रथः पञ्चवाही दक्षिणा ॥ ३ ॥

Vgl TS 1, 8 7 (çunâsiryâdikarmacatushṭayam), Kaṭh 15 2, VS 9, 35—38, Çat Br 5, 2, 4 5 flg , Mân Çr 9, 1, 1

अनुमत्यै चरू राकायै चरुः सिनीवाल्यै चरुः कुह्वै चरुर्धात्रे द्वादशकपालः पष्ठौही दक्षिणाग्नावैष्णव एकादशकपाल ऐन्द्रावैष्णवश्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षिणा सौमापौष्ण[6] एकादशक-

---

1) P ऽवधिष्म । 2) P मित्रावरुणनेत्रा इति मित्रावरुण नेत्रा । 3) P अवस्वद्वत इति अवस्वत् वत । 4) P एव । अभिसमूहामीत्यभि समूहामि । 5) P अव स्वद्वन इत्यवस्वत् वते । 6) So Hg M 3 W (u A), desgl Kaṭh, in B सोमाप॰, vgl. TS 1, 8, 8.

पाल ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः श्यामो दक्षिणाग्नये वैश्वानराय द्वादशकपालो वारुणो यवमयश्चरुर्हिरण्यं चाश्वश्च दक्षिणा ॥ ४ ॥

Vgl. TS 1, 8, 8 (devikâdikarmashaṭkam), Kâṭh 15, 3, Çat Br 5, 2, 5; Mân Çr 9, 1, 1

बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्र एकादशकपालो राज्ञो गृह ऋषभो दक्षिणादित्यश्चरुर्महिष्या गृहे धेनुर्दक्षिणा नैर्ऋतश्चरुर्नखावपूतानां परिवृक्त्यां गृहे श्येनी वराडापस्फुरा दक्षिणाग्नेयो ऽष्टाकपालः सेनान्यो गृहे हिरण्यं दक्षिणाश्विनो द्विकपालः संग्रहीतुर्गृहे सवत्र्यौ दक्षिणा सावित्रो ऽष्टाकपालः क्षत्तुर्गृहे श्येतो दक्षिणा वारुणो यवमयो दशकपालः सूतस्य गृहे बभ्रुर्महानिरष्टो दक्षिणा मारुतः सप्तकपालो वैश्यस्य ग्रामण्यो गृहे पृश्निः पष्ठौही दक्षिणा पौष्णश्चरुर्भागदुघस्य गृहे श्यामो दक्षिणा वैश्वदेवस्त्रिकपालस्तक्षरथकारयोर्गृहे सर्वायसानि दक्षिणा रौद्रो गावीधुकश्चरुरक्षावापस्य गृहे गोविकर्तस्य चासिर्वालापितस्थो दक्षिणा शबलो वा विवत्सो ऽभिधानी वा कैसरपाशा ॥ ५ ॥

Vgl TS 1, 8, 9 (ratninâṃ havîṃshi), Kaṭh 15, 4, Çat. Br 5, 3, 1, Mân Çr 9, 1, 1

इन्द्रायांहोमुच एकादशकपालं निर्वपेदिन्द्राय सुत्राम्ण एकादशकपालमृषभो दक्षिणा स्वयंरुग्णाया अश्वत्थशाखायाः पार्णं

---

1) M 3 श्येनी 2) In allen Mss der Anlaut mit य, desgl Kaṭh 15, 4, s aber Pet W s v वराड 3) So Hg u B, in M 3 सवत्रौ३, (A सवत्र्यौ), W सवत्र्यौ, vgl सवातृ in den andern Saṃhita's (s Pet W s v), auch Kâṭh 15, 4 सवात्यौ दक्षिणा 4) W श्वितो, M 3 श्वैतो 5) So Hg W, (u A), in M 3 सर्वायसानि 6) So Hg (u A), in W चासिर्वालापितस्थौ, M 3 चासिर्वालापिदस्तौ, B चासीर्वाला पिस्थौ; Kâṭh 15 4 रौद्रो गावीधुकश्चरुरक्षावापस्य च गोविकर्तस्य च गृहे दक्षिणा शबलो वा भीवाजमर्वदानमिता महासो दाम दृष्टा वत्सतरो वा सवत्सो दक्षिणा

भवन्त्येष श्वेता श्वेतवत्सां दुहन्ति तत्स्वयं मूर्छति स्वयं मथ्यते स्वयं विलीनमाज्यं भवत्येष मैत्राबार्हस्पत्यं हविर्निर्वपन्ति ये क्षोदिष्ठास्तण्डुलास्तं बार्हस्पत्यं चरुं शृतं कुर्वन्ति तं च तत्पात्रमपिधायाज्यमासिच्य ये स्थविष्ठास्तण्डुलास्तानावपन्त्युभौ सह शृतौ कुर्वन्ति मैत्रेण पूर्वेण प्रचरन्त्यैष्यो मैत्रस्य दक्षिणा शितिपृष्ठो बार्हस्पत्यस्याग्नये गृहपतय आपतकानामष्टाकपालं निर्वपेत्सोमाय वनस्पतये श्यामाकं चरुं सवित्रे प्रसवित्रे सतीनानामष्टाकपालं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय हायनानामेकादशकपालं मित्राय सत्यस्य पतये नाम्बानां चरुं वरुणाय धर्मस्य पतये यवमयं चरुं रुद्राय पशुपतये गावीधुकं चरुम् ॥ सविता त्वा प्रसवाना सुवतामग्निर्गृहपत्यानां सोमो वनस्पतीनां बृहस्पतिर्वाचामिन्द्रो ज्यैष्ठ्यानां मित्रः सत्यानां वरुणो धर्मणां रुद्रः पशूनां ते देवा असपत्नमिमं सुवध्वममुमामुष्यायणममुष्याः पुत्रममुष्या विशि महते क्षत्राय महते जानराज्याय शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्च ऋतपाश्चात्यंहा ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्तिमित्रश्च दूरेऽमित्रश्च गणः ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः ॥ ६ ॥

Vgl TS 1, 8, 9 (ratnınâm havimahı) und 10 (devasuvâm havimahı), Kâṭh 15, 4 a E u 5, VS 9, 39 u 40, 17 80 82 83, Çat Br 5, 3, 2, 4 flg, 5, 3, 3, 2 flg; Mân Çr 9, 1, 1 a E u 2

देवीरापो अपां नपाद्राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा देवीरापो अपां

1) W schreibt hier मैत्राबार्हस्पत्य ein 2) W शित, desgl Mân Çr 9, 1, 2; M 3 मृत, B शुत, Kâṭh शृत 3) B शितौ (desgl Mân Çr 9, 1, 2) 4) P दूरेमित्र इति दूरे अमित्र ı, a दूरेअमित्र VS 17, 83 5) P गणः। ऋत.।

नपाद्राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त वृषोर्मिरसि वृषसेनो ऽस्यपां पंतिरस्यपांमहावरीः स्थ परिवाहिणीः स्थौजस्विनीः स्थ मान्दाः स्थ व्रजक्षितः स्थ सूर्यवर्चसः स्थ सूर्यत्वचसः स्थ मरुतामोजः स्थ वशाः स्थ शक्वरीः स्थ विश्वभृतः[1] स्थ जनभृतो ऽपामोषधीनां रसः श्रविष्ठाः स्थ राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त ॥ ७ ॥

Vgl TS 1, 8, 11 (abhishekajalamantrāḥ); Kāṭh 15, 6; VS 10, 2—4; Çat Br 5, 3, 4, 4 flg; Mān Çr. 9, 1, 2.

देवीरापो मधुमतीः संसृज्यध्वं महि क्षत्रं क्षत्रियाय[2] वन्वानाः ।
अनाधृष्टाः सीदतोर्जस्वतीर्महि[3] वर्चः क्षत्रियाय दधतीः ॥
अपो देवीर्मधुमतीरगृभ्णामूर्जस्वती राजसूयाश्चितानाः ।
याभिर्मित्रावरुणा अभ्यषिञ्चंस्ताभिरिन्द्रमनयन्नत्यरातीः[4] ।
अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रम् ॥
शुक्रा वः शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामि ॥
देवो वः सविता पुनात्वच्छिद्रेण पवित्रेण ।
वसोः सूर्यस्य रश्मिभिः ॥
स्वाहा राजसूयाः ॥

सधमादो द्युम्निन्या ऊर्जा एका अनाधृष्टा अपस्यो वसानाः[5] ।
पस्त्यासु चक्रे वरुणः सधस्थमपां शिशुर्मातृतमास्वन्तः ॥

---

1) [illegible] विश्वभृत 2) W वर्चीयाय 3) P सीदत । ऊर्जस्वतीः । 4) P अभिषन् । 5) P ऊर्जाः । एकाः । अनाधृष्टाः । 6) So Hg, M 3 (u A); ebenso TS 1, 8, 12, 1. W वसानाः, desgl B, ohne Accent

रुद्र यत्ते गिरिपरं नाम तस्मिन्हुतमसि यमेष्टमसि[1] स्वाहा सोमा इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्मं धारयन्तु ॥ ८ ॥

Vgl. TS 1, 8, 11 (abhishekajalasaṃskâramantrâḥ), Kâth 15, 6, VS 10, 1. 4 6 7; Çat Br 5, 3, 4, 3 27 28, 5, 3, 5, 16 flg, Man Çr 9, 1, 2 a. E u 3

क्षत्रस्य योनिरसि क्षत्रस्योल्बमसि क्षत्रस्य नाभिरस्याविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नौ मित्रावरुणौ धृतव्रता आविन्ने द्यावापृथिवी घृतावृधा आविन्नः पूषा विश्ववेदा आविन्ना देव्यदितिराविन्नो ऽयमसा आमुष्यायणो ऽमुष्याः पुत्रो ऽमुष्या विशि महते क्षत्राय महते जानराज्यायैष ते जनते राजा सोमो ऽस्माकं ब्राह्मणाना राजेन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्याच्छत्रुबाधनाः स्थ पात मा प्राञ्चं पात प्रत्यञ्चं पात तिर्यञ्चं पातान्वञ्चं पातोर्ध्वं दिग्भ्य एनं पात मित्रो ऽसि वरुणो ऽसि ॥

हिरण्यवर्णमुषसो व्युष्टा अयःस्थूणमुदितौ सूर्यस्य ।
आरोहथो वरुण मित्र गर्तं ततश्चक्षाथे अदितिं दितिं च ॥

॥ ९ ॥ Vgl TS 1, 8 12 (abhishekajalasaṃskaramantrah), Kâṭh. 15, 7, VS 10, 8 9. 16, Çat Br 5 3, 5, 20 flg

समिधमातिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथन्तरं सामाग्निर्देवता ब्रह्म द्रविणमुग्रामातिष्ठ त्रिष्टुप्त्वा छन्दसामवतु पञ्चदशः स्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणं प्राचीमातिष्ठ जगती त्वा छन्दसामवतु सप्तदशः स्तोमो वैरूपं साम विश्वे देवा देवता विड् द्रविणमुदीचीमातिष्ठानुष्टुप्त्वा छन्दसामवत्वेकविंशः स्तोमो वै-

---

1) So alle Mss (s. TS 1, 8 14, 2), nur H यमेष्टमिति यम इष्टम् । 2) P सोमः । 3) H एवैन 4) M 3 चदीत्स दीत्य 5) So Hg, M 3 (u A), in W °मुग्रम°, desgl B, ohne Accent

राज्ञ॑ऽ[1] साम मित्रावरुणौ देवता पुष्टं[2] द्रविणमूर्ध्वामातिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता फलं द्रविणꣳ सोमस्य त्विषिरसि त्विषिमत्तेव मे त्विषिर्भूयात् ॥

प्रत्यस्तं नमुचेः शिरो ऽवेष्टा दन्दशूकाः[4] ।
मृत्योः पाहि दिदिवः[5] पाहि ॥

॥ ११ ॥ Vgl TS 1,8,13 (digvyasthāpanamantraḥ) und 14 (abhishekaḥ), Kāṭh 15,7, VS 10,10—15, Çat Br 5,4,1,3—7, Mān Çr 9,1,3

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहांऽशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा सोमस्य त्वा द्युम्नेनाग्नेस्तेजसैन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चामीन्द्रस्य योनिरसि जनयाति[6] द्यून्माहि[7] ॥

समाववृत्रन्नधरागुदक्ता अहिं बुध्न्यमन्वीयमानाः[8] ।
ताः पर्वतस्य वृषभस्य पृष्ठान्नावो वियन्ति सुसिचो न वाणीः ॥

इन्द्रस्य वज्रो ऽसि वाजसनिस्त्वयायं[10] वाजꣳ सेन्मित्रावरुणयोस्त्वा[11] प्रशास्त्रोः प्रशिषा युनज्मि विष्णोः क्रमो ऽसि सपत्नहा मरुतां प्र-

---

1) P वैराज्य । 2) Hg पुष्ट 3) P अवेष्टा ईंखव दृष्टा । 4) W दंदशुका, Man Çr 9 1, 3 दंदशुका इति 5) So Hg u W, desgl B, ohne Accent, (A दिदिव), M 3 दीदिय, TS 1 8, 14, 1 दिवीत्वा पाहि, Kāṭh दिवीत्वाह्वयपये etc 6) So M 3, vgl die folgende Anmerkung, Hg u W जनयाति, (A जनयाति), desgl B, ohne Accent. 7) So W u B, ohne Accent, M3 दीन्, Hg द्युन् (desgl A, ohne Accent), vgl VS 10,17 अति दिद्यून्पाहि, TS 1,8,14 2 अति दिवस्पाहि, (so auch Kāṭh, ohne Accent) 8) So die Mss, nur P चंदता ईंखत् । पाका u s VS 10 19, TS 1, 8, 14, 2 9) P पंनु । ईयमाना । Hg W u M 3 °मन्वीयम° 10) P संया । यये । 11) P पांव । सेन् । मित्रावंवणयो ।

सर्वे जयाग्रे[1] मनः संमिन्द्रियेणैव वज्रो वाजसातमस्तेन नौ पुत्रो वाजँ सेत् ॥ ११ ॥

Vgl. TS 1, 8, 12 (digvyâsthâpanamantrâḥ), 14 (abhishekaḥ) 15 (rathena vijayaḥ); Kâṭh. 15, 7 u. 8; VS 10, 5 19. 21; Çat Br. 5, 3, 5, 8 u 9; 5, 4, 2, 5 flg; Mân. Çr. 9, 1, 3.

इयदस्यायुरस्यायुर्मे धेहि युङ्ङसि वर्चो ऽसि वर्चो मे धेह्यूर्गस्यूर्जं मयि धेहि मित्रो ऽसि वरुणो ऽसि संदसि संमहँ विश्वैर्देवैर्नमो मात्रे पृथिव्यै मा मां माता पृथिवी हिँसीत् ॥

प्रति त्यन्नाम[2] राज्यमधायि स्वां तन्वँ वरुणो ऽसुषोत्[3]।
शुचेर्मित्रस्य व्रत्या[4] अभूमामन्महि[5] महऋतस्य नाम ॥
सर्वे व्राता[6] वरुणस्याभूम नि मित्रयुरतीनतारीत्[7]।
असूषुभन्त[8] यज्ञिया[9] ऋतेन नि त्रितो जरिमाणं न आनट् ॥

स्योनासि सुषदा स्योनामासीद सुषदामासीद ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा।
साम्राज्याय सुक्रतुः ॥

अग्नये स्वाहा सोमाय स्वाहेन्द्रस्यौजसे स्वाहा मरुतां बलाय स्वाहा ॥

हँसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा[10] गोजा ऋतजा अद्रिजा ऋतम् ॥

ब्रह्मा३ँस्त्वं[11] ब्रह्मासि सवितासि सत्यसवो ब्रह्मा३ँस्त्वं[11] ब्रह्मासि मि-

1) P जय । आग्रे ।; aber M 3 u. W जयाग्रे; Kâṭh 15, 8 जयाग्र 2) So corrigirt. Die Mss., auch P त्यिनाम; Hg (u A) त्यंनाम; vgl Pet W. s. v. 3) P असुषोत् । असुसोदित्यसुसोत् ।; M 3 सुषोत् । 4) P व्रत्याः । 5) P अभूम । अमन्महि ।; M 3 अभूमा॰ 6) P व्राताः । 7) So Hg, M 3 (u A), (desgl. Kâṭh. 15, 8); W मित्रयुर॰; desgl B, ohne Accent; P मित्रयुरिति मित्र-युः । अरतीन् । अतारीत् । 8) P असुंशुभंत ।; desgl. B, ohne Accent. 9) P यज्ञियाः । 10) P अब्जाः इत्यप् . जाः । 11) Die ३ als Zeichen der Plutirung fehlt in diesem Falle in den Mss. und ist von mir ergänzt; (im Kâṭh. findet sie sich geschrieben); in Hg soll eine १ über der Linie wohl die Plutirung andeuten, P ब्रह्मन् । त्वं ।; s. TS 1, 8, 16, 1.

त्रो ऽसि सुशेवो ब्रह्मासीन्द्रो ऽसि सत्यौजा ब्रह्मा३ऽस्त्वं ब्रह्मासि वरुणो ऽसि विश्वौजाः ॥

एष वज्रस्तेन मे रध्य दिशो अभ्यभूदयम् ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु ॥

असावमुष्य पुत्रो ऽमुष्यासौ पुत्रः ॥

वयं स्याम पतयो रयीणाम् ॥

॥ १२ ॥ Vgl TS 1, 8, 15 (rathena vijayah) u. 16 (sarvaih sevyatvam), ferner 1, 8, 10, 2 und 14, 2, Kaṭh 15, 8, VS 10, 25 23 26—28 24 20; Çat Br. 5, 4, 3, 20 flg, 5, 4, 4, 2 flg, Mān Çr 9, 1, 4

अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहा ॥ सावित्रो ऽष्टाकपालः श्येतो दक्षिणा सारस्वतश्चरुर्धेनुर्दक्षिणा पौष्णश्चरुः श्यामो दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणैन्द्र एकादशकपाल ऋषभो दक्षिणा वारुणो यवमयो दशकपालो बभ्रुर्महानिरष्टो दक्षिणा त्वाष्ट्रो ऽष्टाकपालो ऽश्वैपाक्नुपृष्ठो ऽधिरूढाकर्णो वा दक्षिणाग्नेयो ऽष्टाकपालो हिरण्यमष्टापृडं दक्षिणा सौम्यश्चरुर्बभ्रुर्दक्षिणा वैष्णवस्त्रिकपालो वामनो दक्षिणाग्नेयो ऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणैन्द्र एकादशकपाल ऋषभो दक्षिणा वैश्वदेवश्चरुः पिशङ्गो दक्षिणा मैत्रावरुण्यामिक्षा वशा दक्षिणाग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो द्वादशकपालो

---

1) Vgl die vorige Anmerkung 2) M 3 यामभूद्॰ 3) So Hg u W, in M 3 महानिरष्टो, über den Accent in A s Vorrede, vielleicht doch महानिरष्टो zu betonen. 4) P ॰सैपाद्रिर्ण॰सेपाद् । 5) So betonen Hg u. W, in M 3 धिरूढाकर्णो 6) So Hg. W (= A), in M 3 ॰मष्टापृष, H ॰मष्टापृड, vgl अष्टापृड (Epith zu हिरण्यम्) Kāṭh. 13, 10 (s Böhtl Wört Bd 1, Nachtr)

बार्हस्पत्यश्चरुर्ग्नये वैश्वानराय द्वादशकपालस्त्वाऽष्ट्रो ऽष्टाकपालो दक्षिणो रथवाहनवाहो दक्षिणा सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुर्वारुणश्चरुरदित्यै चरुः क्षेत्रस्य पतये चरुः सव्यो रथवाहनवाहो दक्षिणा मारुती पृश्निः पष्ठौही गर्भिण्यादित्याजा मल्हा गर्भिणी सवित्रे प्रसवित्रे सतीनानामष्टाकपालो ऽश्विभ्यां पूष्णे एकादशकपालः सरस्वत्यै सत्यवाचे चरुर्दृड उपानहौ शुष्कदृतिः सा दक्षिणा ॥ १३ ॥

Vgl. TS 1, 8, 16 a E u 17 (samarpam havimshi) 19 (diçâm aveshtayah paçudvayam sâtyadûtânâm havimshi ca) 20 (prayujâm havimshi), Kâṭh 15, 8 a E u 9; Çat. Br 5, 4, 5, 6 ffg, Mân. Çr 9, 1, 5

॥ इति मध्यमकाण्डे राजसूयो नाम षष्ठः प्रपाठकः ॥

---

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥
युक्तेन मनसा वयं देवस्य सवितुः सवे ।
स्वर्ग्याय शक्त्ये ॥
युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥

---

1) M 3 ओमर्सिंहा, W आमर्सिंहा, desgl B, ohne Accent, P आमर्सिंहेति आमसिंहा । 2) P पृथ्वी ।, M 5 पौष्ण 3) P दृढ । 4) W उपानहो, desgl B, ohne Accent, Kâṭh उपानहौ 5) P चर्षि ।, Kâṭh चषि 6) P पृथिव्याः । अधि । आ । अभरत् । 7) So die Mss, P स्व । यतः ।, (s TS 4, 1, 1, 1), Kâṭh. स्वर्यतो

युञ्जते मनः ॥

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक[1] एतु पथ्येव[2] सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥
यस्य प्रयाणमन्वन्य[3] इद्ययुर्देवा देवस्य महिमानमर्चतः ।
यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना ॥

देव सवितः ॥

इमं मे देव सवितर्यज्ञं प्रणय देवायुवम्[4] ।
वसुविदं सत्राजितं धनजितं स्वर्विदम् ।
ऋचा स्तोमं समर्धय गायत्रेण रथन्तरम् ।
बृहद्गायत्रवर्तनि ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नारिरसि गायत्रेण छन्दसा पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरा[5] त्रैष्टुभेन छन्दसाभ्रिरसि नारिरसि त्वया वयमग्निं शकेम खनितुं सधस्था[6] आ जागतेन छन्दसा ॥

हस्त[7] आधाय सविता बिभ्रदभ्रिं हिरण्ययीम् ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥

आनुष्टुभेन छन्दसा ॥ १ ॥

Vgl 3 1, 1 2 — TS 4, 1, 1 (ukhyo ḡnih, abhryâdanam), Kâṭh 15 11 u 16 1, VS 11, 1—11, Mân Çr 6, 1, 1

प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् ।

---

1) P श्लोक। 2) P पथ्या इव।, Kaṭh पथेव सूरे 3) P अन्ये। 4) P देवायुवमिति। देव। आयुव। 5) P आ। भर। स॰ 6) P सधस्थ इति सध स्थे। 7) P हस्ते।

दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥

युञ्जाथां रासभं युवमस्मिन्यामे वृषण्वसू ।
अग्निं भरन्ता[1] अस्मयुम्[2] ॥
योगे योगे तवस्तरं वाजे वाजे हवामहे ।
सखाय[3] इन्द्रमूतये ॥

प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि ॥ उर्वन्तरिक्षं वीहि[4] ॥ स्वस्तिगव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह ॥ अग्निं पुरीष्यमङ्गिरस्वदाभरामि पुरीष्यमङ्गिरस्वदच्छेमो[5] ऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ अन्वग्निः[5] ॥

आगत्य वाज्यध्वानं सर्वा मृधो विधूनुते[6] ।
अग्निं सधस्थे महति चक्षुषा निचिकीषति ॥
आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् ।
भूम्या[7] वृत्वाय[8] नो ब्रूहि यतः खनेम तं वयम् ॥
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षं समुद्रो योनिः ।
विक्ष्याय[9] चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥
उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन् ।
वयं स्याम सुमतौ पृथिव्या[10] अग्निं खनन्त[11] उपस्थे अस्याः ॥
उदक्रमीद्द्रविणोदा वाज्यर्वाकः[12] सु लोकं सुकृतं पृथिव्याः ।

1) P भरत । 2) So corrigirt nach Anleitung von TS 4, 1, 2, 1, VS 11, [illegible], auch Kath 16, 1 असमयुम, die Mss असयु auch P असयुरित्यत्र पुं ।, M 3 च श्यायुं, vielleicht असर्यं? 3) P संखाय । 4) P वि । दृहि । 5) P पशु । यदि । उर्वता । 6) P वि । धूनुते । auch W धुनुते (Y धुनुते) 7) P भूम्या । 8) W u P वृषाय । 9) M 3 विकर्षाय P विकर्षायेति विकर्षार्य ।, B विषाय 10) P पृथिव्यां । 11) P खनत । 12) P वाजी । यर्वा । अर्वेत्यकः ।

ततः खनेम सुप्रतीकमग्निं॰ उस्वो रुहाणा[1] अधि नाक[2] उत्तमे ॥

आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्त॰ व्यचिष्ठमन्न॰ रभसं दृशानम् ॥
आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषस्व ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिधृषे[4] तनुवा जर्हृषाणः ॥
परि वाजपतिः ॥
परि त्वाग्ने पुरं॰ वयं॰ विप्र॰ सहस्य धीमहि ।
धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम् ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्व॰ वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थे अग्निं पुरीष्यमङ्गिरस्वत्खनामि ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यत॰[3] शिवं प्रजाभ्यो ऽहि॰सन्तं पृथिव्याः सधस्थे अग्निं पुरीष्यमङ्गिरस्वत्खनामः ॥ २ ॥

Vgl 3, 1, 3 4 — TS 4, 1, 2 (mṛdakrāntiḥ) u 3 a. A. (khananam), Kāṭh 16, 1—3, VS 11, 12—28, Mān Çr 6, 1, 1

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्[5] ।
वर्धमानो महं आ[6] च पुष्करे दिवो मात्रया वरिणा प्रथस्व ॥
शर्म च स्थो वर्म च स्थो अच्छिद्रे बहुले उभे ।
व्यचस्वती सं॰वसेथां भर्तमग्निं पुरीष्यम् ॥

---

1) P उखरिति स्रू॰ । रुहाणा । 2) P नाकं । 3) So P, M 3 u Hg दीद्यत, (A दीयते), W दियत, desgl B, ohne Accent; Kāṭh दियत 4) P र्न । अभिधृष इत्यभि धृषे । 5) P पिन्वमाम ।, W पिन्वमाना 6) P महान् । आ ।, Kāṭh महा॰ आ

सं वसेथां स्वर्विदा समीची उरसा त्मना ।
अग्निं भरिष्यन्ती अन्ता रोचमानमजस्रमित्[1] ॥
पुरीष्यो ऽसि विश्वभरा[2] अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ॥
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः ।
वृत्रहणं पुरंदरम् ॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् ।
धनंजयं रणे रणे ॥
सीद होतः स्व उ लोके चिकित्वान्सादया यज्ञं सुकृतस्य योनौ ।
देवावीर्देवान्हविषा[4] यजास्यग्ने[5] बृहद्यजमाने वयो धाः ॥
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ[6] असदत्सुदक्षः[7] ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः ॥
सं सीदस्व महाँ[8] असि शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त[9] दर्शतम् ॥
जनिष्व[10] हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु ।
दमे दमे सप्त रत्ना दधानो ऽग्निर्होता निषसाद[11] यजीयान् ॥
अयमिह[12] ॥

---

1) P चर्तं । रोचमान । 2) B विश्वभरा 3) P सं । 4) P देवावीरिति देव. वयोः । 5) P यजासि । यजस्वेति यजासि ।, W यजास्य॰ 6) P दीदिवानिति दीदि-वान् । 7) W सुदक्षः । 8) P महान् ।, M 3 महँ॰ 9) P प्रशस्तेति प्र शस्तं । 10) So die Mss.; vgl TS 4, 1, 3, 4, nur P जनिष्व ; vgl RV 5, 1 5, Kâṭh. 16, 3 जनिष्व 11) Hg u. W ॰षादा 12) P चर्य । इहं । प्रथम ।

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा[1] मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥

अयं ते[2] ॥ 3 ॥

Vgl 3, 1, 5 — TS 4, 1, 3 (khannam), Kāth 16, 3, VS 11, 29—37

अपो देवीरुपसृजा[3] मधुमतीरयक्ष्माय प्रजाभ्यः ।
तासामास्थानादुज्जिहतामोषधयः[4] सुपिप्पलाः[5] ॥
सं ते वायुर्मातरिश्वा दधातूत्तानाया[6] हृदयं यद्विकस्तम् ।
यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ॥
सुजातो ज्योतिषा[7] शर्म वरूथमासदत्स्वः ।
वासो अग्ने विश्वरूपं संव्ययस्व विभावसो ॥
उदु तिष्ठ स्वध्वर[8] स्तवानो देव्या कृपा ।
दृशा च भासा बृहता सुशिक्वनाग्ने[9] याहि सुशस्तिभिः ॥
ऊर्ध्व ऊ षु ण[10] ऊतये तिष्ठा[11] देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
सजातो[12] गर्भो असि रोदस्योरग्ने चारुर्विभृता[13] ओषधीषु ।
चित्रः शिशुः परि तमांस्यक्तः[14] प्र मातृभ्यो अधि कनिक्रदत्गाः ॥

---

1) P सं । महेम ।, W समहेमा 2) P अयं । ते । योनि । 3) P उप । सृज । 4) P उत् । जिहता । 5) So M 3, in Hg u W सुपिप्पलो, P सुपिप्पला इति सु पिप्पला ।, (A सुपिप्पला), B सुपिप्यला 6) P उत्तानाया इत्युत्तानाया । 7) B schiebt hier सह ein, s TS 4 1, 4 1 in Kaṭh ohne सह 8) P स्वध्वरेति सु अध्वर । 9) P सुशिक्वनेति सु शिक्वना । अग्ने । अग्ने । Kaṭh सुशुक्वभिरग्ने, TS 4 1, 4, 1 सुशुक्वनिरग्ने 10) P ऊर्ध्वः । ऊं इत्यु । सु । नः । 11) P तिष्ठ । 12) So die Mss , P स । जात । 13) P विभृत इति वि भृत । 14) B °स्यक्तु P अक्तः । Kaṭh तमोसूक्त

स्थिरो भव वीड्वङ्ग[1] आशुर्भव वाज्यर्वन् ।
पृथुर्भव सुषदस्त्वमग्नेः[2] पुरीष्यवाहनः ॥
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी हिंसीर्मान्तरिक्षं मा वनस्पतीन् ॥
प्रैतु वाजी कनिक्रदन्नानदद्रासभः[3] पत्वा ।
भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥
वृषाग्निं वृषणं भरन्नपां गर्भं समुद्रियम् ।
अग्न[4] आयाहि वीतये ॥

ऋतं सत्यमृतं सत्यमग्निं पुरीष्यमङ्गिरस्वद्भरामः ॥ ४ ॥

Vgl 3 1, 5 6 — TS 4, 1, 4 (mṛdāharaṇam), Kāṭh 16, 4, VS 11, 39—47, Mān Çr 6 1, 1 a D

ओषधयः प्रतिगृभ्णीताग्निमेतं शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन्विश्वा अनिरा[5] अमीवा निषीदन्नो अप दुर्मतिं जहि ॥
ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः[6] ।
अयं वो गर्भ[7] ऋत्वियः प्रत्नं सधस्थमासदत्[8] ॥
वि पाजसा पृथुना शोशुचानो बाधस्व रिपून्रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य[9] प्रणीतौ ॥
आपो हि ष्ठा[10] मयोभुवस्ता न[11] ऊर्जे दधातन ।
महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥

---

1) P वीड्वङ्ग इति वीडु अङ्ग । 2) P सुषद । सुषद इति सु सद । 3) P भासद्न । 4) P ऽग्ने । 5) P ऽनिरा । 6) Hg सुपिप्पला॰, P सुपिप्पला इति सु॰पिप्पलाः । 7) P गर्भे । 8) P चा । चासदत्, Hg चासदत् 9) N 3 सुहवस्य 10) P स्थ । 11) P ता । न ।

इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा[1] मनीषया।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं
तव ॥

अयं ते[2] ॥ ३ ॥

Vgl 3, 1, 5 — TS 4, 1, 3 (khananam), Kāth 16, 3, VS 11, 29—37

अपो देवीरुपसृजा[3] मधुमतीरयक्ष्माय प्रजाभ्यः।
तासामास्थानादुज्जिहतामोषधयः[4] सुपिप्पलाः[5] ॥
सं ते वायुर्मातरिश्वा दधातूत्तानाया[6] हृदयं यद्विकस्तम्।
यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ॥
सुजातो ज्योतिषा[7] शर्म वरूथमासदत्स्वः।
वासो अग्ने विश्वरूपं संव्ययस्व विभावसो ॥
उदु तिष्ठ स्वध्वर[8] स्तवानो देव्या कृपा।
दृशा च भासा बृहता सुशिक्वनाग्ने[9] याहि सुशस्तिभिः ॥
ऊर्ध्व ऊ षु ण[10] ऊतये तिष्ठा[11] देवो न सविता।
ऊर्ध्वो वाजस्य संनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
स जातो[12] गर्भो असि रोदस्योरग्ने चारुर्विभृत[13] ओषधीषु।
चित्रः शिशुः परि तमांस्यक्तः[14] प्र मातृभ्यो अधि कनि
क्रदत्गाः।

1) B सं। महेम।, W संमहेमा 2) P अयं। ते। योनि। 3) P अपः। सृज 4) P उत्। जिहता। 5) So M 3, in Hg u W सुपिप्पला, P सुपिप्पला इति सु पि प्पलाः।, (A सुपिप्पला), B सुपिप्पला 6) P उत्तानाया इत्युत्ऽआनायाः। 7) E schiebt hier सह ein, s TS 4, 1, 4, 1 in Kāth ohne सह 8) P स्वध्वरेति सु अध्वर। 9) P सुशिक्वनेति सु शिक्वना। अग्ने। Kath सुमुक्षमिरग्ने, TS 4 1, 4, 1 सुमुक्म- भिरग्ने 10) P ऊर्ध्व। उ इति। सु। न। 11) P तिष्ठ। 12) So die Mss P स। जात। 13) P विभृत इति वि भृत। 14) B °स्यक्तु, P अक्त। Kāth तमोमृक्त

स्थिरो भव वीड्वङ्ग[1] आशुर्भव वाज्यर्वन् ।
पृथुर्भव सुषदस्त्वमग्नेः[2] पुरीष्यवाहनः ॥
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी हिंसीर्मान्तरिक्षं मा वनस्पतीन् ॥
प्रैतु वाजी कनिक्रदन्नानदद्रासभः[3] पत्वा ।
भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥
वृषाग्निं वृषणं भरन्नपां गर्भं समुद्रियम् ।
अग्न[4] आयाहि वीतये ॥
ऋतं सत्यमृतं सत्यमग्निं पुरीष्यमङ्गिरस्वद्भरामः ॥ ४ ॥

Vgl 3, 1, 5 ‖ — TS 4, 1, 4 (mṛdâharaṇam), Kâth 16, 4; VS 11, 38—47; Mân Çr 6, 1, 1 a E

ओषधयः प्रतिगृभ्णीताग्निमेतं शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन्विश्वा अनिरा[5] अमीवा निषीदन्नो अप दुर्मतिं जहि ॥
ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः[6] ।
अयं वो गर्भ[7] ऋत्वियः प्रत्नं सधस्थमासदत्[8] ॥
वि पाजसा पृथुना शोशुचानो बाधस्व रिपून्रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य[9] प्रणीतौ ॥
आपो हि ष्ठा[10] मयोभुवस्ता न[11] ऊर्जे दधातन ।
महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥

---

1) P वीड्वङ्ग इति वीडु अङ्ग. । 2) P सुषदः । सुसद इति सु-सदः । 3) P रासभः । 4) P अग्ने । 5) P अनिराः । 6) Hg सुपिप्पलाः; P सुपिप्पला इति सु-पिप्पलाः । 7) P गर्भे. । 8) P अ । असदत्, Hg आसदत् 9) M 3 सुहवस्य 10) P ष्ठ । 11) P नः । न. ।

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ।
आपो जनयथा च नः॥
मित्रः सꣳसृज्या पृथिवीं भूमिं च ज्योतिषा सह।
सुजातं जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः॥
रुद्राः सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे।
तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते॥
सꣳसृष्टाꣳ वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम्।
हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम्॥
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा।
सा तुभ्यमदिते मह्योखां ददातु हस्तयोः॥
उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया।
माता पुत्रꣳ यथोपस्थे साग्निं बिभर्तु गर्भ आ॥ ५॥
Vgl 8 1, 6. — TS 4, 1, 4 a E u 5 (ukhânirmâṇam), Kâṭh 16, 4 u 5, VS 11 48—57, Man Çr 6, 1, 2

मखस्य शिरोऽसि वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वद्ध्रुवासि पृथिव्यसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायादित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वद्ध्रुवासि द्यौरसि धारया मयि प्रजाꣳ रायस्पोषं

1) P अर्मयच। 2) P सꣳसृज्येति सꣳसृज्य।, so auch weiterhin 3) P प्रजस्र। रत्। 4) P वसुभि। 5) So B, P कर्मण्या।, Kaṭh 16, 5 कर्मण्यामृदम्, s TS 4, 1 5 2, Hg M 3, W (u A) कर्मण्या 6) M 3 स्वौपशा, desgl B, ohne Accent, P स्वौपशेति सु औपशा।, Kaṭh स्वौपशा 7) P मह्य। खा। उखां। 8) P गर्भे। 9) P धारय।

गौपत्यं सुवीर्यं सजातानस्मै यजमानाय विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवासि दिशो ऽसि धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातानस्मै यजमानायादित्या रास्नास्यदितिष्टे बिलं गृभ्णातु ॥

कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये ।
तां पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥

वसवस्त्वा धूपयन्त्वङ्गिरस्वद्रुद्रास्त्वा धूपयन्त्वङ्गिरस्वदादित्यास्त्वा धूपयन्त्वङ्गिरस्वदिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्वरुणस्त्वा धूपयत्वङ्गिरस्वद्विष्णुस्त्वा धूपयत्वङ्गिरस्वद्बृहस्पतिष्ट्वा धूपयत्वङ्गिरस्वददितिष्ट्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत्खनत्ववट देवानां त्वा पत्नीर्देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे धिषणा त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धामुखे ग्नास्त्वा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे वरूत्री त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत्पचतामुखे जनयस्त्वाछिन्नपत्रा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे ॥

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि ।
द्युम्नं चित्रश्रवस्तमम् ॥
देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः ।
सुबाहुरुत शक्त्या ॥
उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम् ।

---

1) P गृह्णातु । 2) P खनतु । चवट । 3) So corrigirt, Hg °दभीन्धाम°; (in A °दभोधाम°); M 3 u. W °दाभीधाम°; P चभि । इधा । उखे ।, Kâth 16,6 °दभीन्धताम° (s. TS 4, 1, 6, 2) 4) P चछिन्नपत्रा इत्यछिन्न पत्रा ।

अव्यथमाना पृथिव्यामाशा दिश आपृण ॥
मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदि ॥

वसवस्त्वाछृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाछृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाछृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आछृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ६ ॥

Vgl 3, 1, 7 8 — TS 4, 1, 5 (ukhâmmanam) und 6 (tatsamskarah), Kath 16, 5 u 6, VS 11, 57—65, Man Çr 6 1 2

आकूतमग्निं प्रयुजं स्वाहा मनो मेधामग्निं प्रयुजं स्वाहा चित्तं विज्ञातमग्निं प्रयुजं स्वाहा वाचो विधृतमग्निं प्रयुजं स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहा ॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे ॥
स्वाहा ॥
मा सु भित्था मा सु रिषो दृंहस्व वीरयस्व सु ।
अम्ब धृष्णु वीरयस्वाग्निश्चेदं[10] करिष्यथः ॥
दृंहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि ।
जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥

---

1) So Hg, M 3 W (u A), P पृथिवी । आशा 1, s auch TS 4, 1 6, 3, in B पृथिव्यामाशा wie auch Kath 16 6 u 19, 7, VS 11, 63, so auch unten 3, 1, 8 die Mss H, Bb u B 2) P दिशः । 3) P मित्र । एताम् । 4) P अभित्त्यै । 5) P त्वा । आ । छृन्दन्तु । und so auch weiterhin, B छिन्दन्तु und so auch weiterhin 6) W चित्तं°, desgl B, ohne Accent 7) B विश्वे, s TS 4, 1, 9, 1 8) B मर्त्यो 9) P भित्थाः । 10) P च । इदम् ।

द्रप्सः[1] सर्पिरासुतिः प्रत्नो होता वरेण्यः ।
सहसस्पुत्रो ऽद्भुतः ॥
परस्या[2] अधि संवतो ऽवराँ[3] अभ्यातर ।
यत्राहमस्मि ताँ[4] अव ॥
परमस्याः परावतो रोहिदश्व इहागहि ।
पुरीष्यः पुरुप्रियो ऽग्ने[5] त्वं तरा[6] मृधः ॥
यदग्ने यानि कानि चा[7] ते दारूणि दध्मसि ।
सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥
यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति[8] ।
सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥
रात्रीं[9] रात्रीमप्रयावं भरन्तो ऽश्वायेव[10] तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तो ऽग्ने[11] मा ते प्रतिवेशा[12] रिषाम ॥
नाभा पृथिव्याः समिधानो अग्निं[13] रायस्पोषाय बृहते हवामहे ।
इरम्मदं बृहदुक्थं[14] यजत्रं जेतारमग्निं पृतनासु सासहिम्[15] ॥
याः सेना अभीत्वरीराव्याधिनीरुगणा[15] उत ।
ये स्तेना ये च तस्करास्ताँस्ते अग्ने[15] ऽपिदधाम्यास्ये ॥
ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः ॥
दंष्ट्राभ्यां मलिम्लूनग्ने जम्भ्याभ्यां तस्करं[16] उत ।

1) So Hg (u A), nur ohne Accent; P द्रप्स इति । द्रं, पश्च. I; M 3 u W द्रप्सः; desgl. B und Mân Çr. 6, 1, 3, ohne Accent  2) P परस्या. ।  3) P अवरान् ।  4) P अभि । चा । तत् ।  5) P तान् ।, B त॰  6) W u B इमे  7) P तत् ।  8) P च । चा ।  9) Hg, M 3 u W अति सर्पति  10) P अश्वायेवेत्यश्वाय-इव ।  11) P मद्न्त. । अग्ने ।  12) P प्रतिवेशाः ।  13) P मासहिं । ससहिमिति स सहिं ।  14) P स्तेनाः ।  15) Dies Wort fehlt in W, M 3 अग्ने  16) P तस्करान् ।

हनुभ्या॰ स्तेनान्भगवस्तां॰स्त्वं[1] खाद सुखादितम्[2] ॥
यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान्दिप्साच्च[3] सर्वां॰स्तान्मृस्मृसा[4] कुरु ॥
उदेषां बाहूनतिरमुद्वर्चो[5] अथो बलम् ।
क्षिणोमि ब्रह्मणामित्रानुन्नयामि[6] स्वा॰[7] अहम् ॥
सं॰शितं मे ब्रह्म सं॰शितं॰ वीर्य्यं बलम् ।
सं॰शितं क्षत्रं मे जिष्णु[8] यस्याहमस्मि पुरोहितः ॥
ब्रह्म क्षत्रं॰ सयुजा न व्यथेते ब्रह्माह[9] क्षत्रं जिन्वति क्षत्रियस्य ।
क्षत्रं ब्रह्म जिन्वति ब्राह्मणस्य यत्समीची कृणुतो वीर्याणि ॥

॥ ७ ॥ Vgl 3, 1, 3 — TS 4, 1, 9 (agnyutpadanam) u 10 (agnidhāraṇam), Kaṭh 16,7, VS 11, 66—82, Mān Çr 6, 1, 3

दृशानो रुक्म उर्व्या विभाति दुर्मर्षमायुः श्रिये रुचानः[10] ।
अग्निरमृतो अभवत्सहोभिर्यदेनं[11] द्यौरजनयत्सुरेताः ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं॰ समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः[12] ॥
°विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं[13] द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता[14] वरेण्यो ऽनु प्रयाणमुषसो विराजति ॥
सुपर्णो ऽसि गरुत्मा॰स्त्रिवृत्ते[15] शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ

1) P भगवद्दिति भग व । तान् । 2) P सुखादितमिति सु खादित ।, Kaṭh सु खादिताम् (s TS 4, 1, 10, 2) 3) P दिप्सात् । च ।, W दिप्साच्च 4) So Hg, M 3 u P, (in A मृसृसा), W मृमृषा, desgl B, ohne Accent, Kāṭh मस्मसा, TS मस्मसा 5) B बाहुनातिरम°, Kaṭh बाहू अतिरम° wie TS 4 1, 10 3 6) P ब्रह्मणा । अ मित्रान् । 7) P स्वान् । 8) B जिष्णुर्य° 9) P ब्रह्म । आह । 10) B रुचाना । 11) P अभवत् । 12) W धारय 13) P प्र । असावीत् । 14) B °मख्यत्स° 15) So W, desgl B und Mān Çr 6 1, 3, ohne Accent Hg गरुत्मान्त्रि°, (A गरुत्मांस्त्रि°), M 3 गरुत्मा त्रि°, desgl Kaṭh (ohne Accent)

स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुछं धिष्ण्याः शफाः ॥ सुपर्णो ऽसि गरुत्मान् दिवं गछ स्वः पत ॥ विष्णोः क्रमो ऽसि सपत्नहा गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व विष्णोः क्रमो ऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनुविक्रमस्व विष्णोः क्रमो ऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनुविक्रमस्व विष्णोः क्रमो ऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशो ऽनुविक्रमस्व ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥
अग्ने ऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्या ॥
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।
विशस्त्वा सर्वा वाञ्छन्त्वस्मै राष्ट्राणि धारय ॥
उदुत्तमं वरुण पाशमस्मत् ॥
अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥
हंसः शुचिषत् ॥
सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनामर्चिषा मा तपसाभिशोचीरन्तरस्यां शुक्रज्योतिर्विभाहि ॥

---

1) I छेद् । 2) P वि । हि । इ । द्धो । Hg u W वि हिमिद्धो degl B ohne Accent (A विहिमिद्धो) M 3 वीहिमिद्धो aber cf RV 10 [illegible] 4 TS 4 2 1 2 auch Kāṭh 16 9 वि हीमिद्धो 3) M 3 u W अख्यदा Hg अख्यदा° degl B ohne Accent P अक्ख्यत् । आ । 4) P त्वा । अहार्षं । M 3 हार्षमन्° W हार्षमन्° 5) I अभू । B °भूर्ध्रु° Hg °भूध्रु° (A °भूध्रु°) cf TS 4 2 1 4 Kāṭh आ त्वा हार्षमन्तरभूर्ध्रु° 6) Hg W तिष्ठावि° P तिष्ठ । अविचाचलदित्यवि चाचलत् । 7) P अस्थात् । 8) P ज्योतिषा । आ । अगात् । M 3 ज्योतिषागात् 9) I स्वङ्गा इति मे अंग B स्वङ्गो 10) P अप्राः । 11) I मा । एना । अर्चिषा । 12) M 3 स्यां P अस्याः ।

अन्तरग्ने रुचा त्वमुखाया[1] सदने स्वे ।
तस्यै त्वं[2] हरसा तपञ्जातवेदः शिवो भव ॥
शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वं[3] योनिमिहासदः[3] ॥ ८ ॥

Vgl 3, 2, 1. — TS 4, 1, 10 (agnidhâranam) u. 4, 2, 1 (citikshetram; âsandyâm ukhyâgnisthâpanam); Kâṭh. 16, 8; VS 12, 1—17; Mân Çr. 6, 1, 3

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान[4] एनं जनते[5] स्वाधीः ॥
विद्मा[6] ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं[7] यत आबभूथ ॥
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न[8] ऊधन् ।
तृतीये त्वा रजसि तस्थिवांसमृतस्य योनौ महिषा अगृभ्णन् ॥
श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसो अप्सु राजा विभात्यग्र[9] उषसामिधानः ॥
उशिक्पावको अरतिः सुमेधा मर्त्येष्वग्निरमृतो[10] निधायि ।
इयर्ति धूममरुषो भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥
अक्रन्ददग्निः ॥
विश्वस्य जज्ञे भुवनस्य राजा[11] रोदसी अपृणाज्जायमानः[12] ।
वीडुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥
नक्तोषासा ॥

---

1) P भव । 2) M 3 संर्वाभि॰ 3) P इहं । वां । असदः । 4) P इंधान । 5) So die Mss., auch Kâṭh 16, 9, aber [illegible] जरते । in Uebereinstimmung mit RV 10, 45, 1, TS 4, 2, 2, 1, VS 12, 18 6) P विद्म । 7) P मु मंतः । 8) P अग्ने । 9) P यंते । 10) P मर्त्येषु । Kâṭh मर्त्येष्व॰, aber M 3 मर्त्येष्व॰ 11) Hg राजा 12) B आपृणा॰, P आपृणात् ।

यस्ते अद्य कृणवद्भद्रशोचे ऽपूपं[1] देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि द्युम्नं देवहितं यविष्ठ्य[2] ॥
आ तं भज सौश्रवसेष्वग्न उक्थ उक्था[3] आभज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना[4] भवात्युज्जातेन भिनददुज्जनित्वैः ॥
त्वामग्ने यजमाना[5] अनु द्यून्दूतं[6] कृण्वाना अयजन्त हव्यैः ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः ॥
अस्ताव्यग्निर्नृणां सुशेवो वैश्वानर[7] ऋषिभिः सोमगोपाः ।
अद्वेषे द्यावापृथिवी हुवे देवा धत्त[8] रयिमस्मे सुवीरम् ॥ ९ ॥

Vgl 3,2,2 — TS 4,2,2, (tasyâgner upasthanam), Kâṭh 16, 9, VS 12, 18—29, Mân Çr 6, 1 3

उदु त्वा विश्वे देवा अग्ने भरन्तु[9] चित्तिभिः ।
स नो भव शिवस्त्वं सुप्रतीको विभावसुः ॥
प्रेदग्ने[10] ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन्मा हिंसीस्तन्वा प्रजाः ॥
अक्रन्ददग्निः ॥
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्[11] ।
आस्मिन्हव्या[12] जुहोतन ॥
प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः[13] ।

---

1) P अपूपं । 2) P यविष्ठ । 3) P उक्थं उक्थ उक्थउक्थे उक्थे । 4) Auch P अग्ना । 5) P यजमाना । 6) So M 3 desgl B, ohne Accent, Hg द्यूनं (A द्यूत), W द्युतं, P द्युत । 7) B वैश्वानरो 8) M 3 u P धत्तं, W धत्त, desgl B, ohne Accent 9) So Hg in Uebereinstimmung mit TS 4 2 3, 1, Kap S 25, 1, VS 12, 31, M 3 u P भरत, desgl B ohne Accent W भरत Kaṭh 16, 10 भरतो 10) P प्र । इत् । अग्ने । 11) P बोधयत । अतिथिं ।, M 3 °तातिथ्य, B °तातिथं 12) P आ । अस्मिन् । 13) So Hg u [illegible] 3 in Uebereinstimmung mit RV 7, 8, 4, TS 4, 2, 3, 2, Kap S 25 1 dagegen W बृहद्भास u P बृहद्भा इति बृहत् भा । in Uebereinstimmung mit VS 12 [illegible]

अभि यः पूरुं[1] पृतनासु तस्थौ दीदाय दैव्यो अतिथिः
शिवो नः ॥
आपो देवीः प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वं सुरभा[2] उ
लोके ।
तस्मै नमन्तां जनयः सुनीडा[3] मातेव पुत्रं बिभृता स्वेनत्[4] ॥
अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे[5] ।
गर्भः संजायसे[6] पुनः ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।
संगत्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः[7] ॥
पुनरासद्य सदनमपश्च पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थे अन्तरस्यां शिवतमः ॥
पुनरूर्जा सह रय्या ॥
बोधा[8] मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः[9] ।
निन्दति त्वो अनु त्वो ववन्द वन्दारुं ते तन्वं वन्दे अग्ने[10] ॥
स बोधि सूरिर्मघवा वसुदावा वसुपतिः ।

1) So P in Uebereinstimmung mit RV 7, 8, 4; Kâth 16, 10; TS 4, 2, 3, 2; VS 12, 34; Hg, M 3 (u. A) पूर्वं; so auch Kap. S. 25, 11 W पूर्व; B पुरं 2) P सुरभौ । 3) P सनीडा इति स. नीडाः । 4) So die meisten Mss; (Hg स्वेनट्); vgl TS 4, 2, 3, 2; aber P विभृत । अग्निस्वत्यम् सु । एनत् । s. VS 12, 35; Kap. S. 25, 1 liest बिभृता स्योनं, Kâth स्वेनम्; eig स्वेनम् geschrieben, dann corrigirt. 5) M 3 सं चौषधीर॰; P सं । चौषधीः । 6) So alle Mss; (desgl Kap S 25, 1; Kâth, 16, 10); nur P सम् । जायसे ।; vgl auch VS 12, 37; RV 8, 43, 9; TS 4, 2, 3, 2 7) P आ । असदः । 8) P बोध 9) M 3 स्वभावः 10) M 3 अंग्ने ।

युयोध्यस्मज्जुहुराणमेनो यानि कानि च चकृम ॥ १० ॥

Vgl 3,2,2 — TS4,2,3 (cayanarthasya devayajanasya parigrahah, vahner ukhyasya cayanadeçam prati nayanam), Kâth 16, 10, Kap S 25, 1, VS 12 31—43, Mân Çr 6, 1, 4

अपेत वीत वि च सर्पतातो ये ऽत्र स्थ पुराणा ये च नूतनाः ।
अदादिदं[1] यमो ऽवसानं पृथिव्या[2] अक्रन्निमं पितरो लोकमस्मै ॥
अग्नेर्भस्मास्यग्नेः पुरीषमसि संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् ॥
अयं[3] सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रियं[4] वाजमत्यं न सप्तिं ससवान्त्सं[5]स्तूयसे जातवेदः ॥
अग्ने दिवो अर्णमच्छा जिगास्यच्छा[6] देवाँ ऊचिषे धिष्ण्या ये ।
याः परस्ताद्रोचनाः[8] सूर्यस्य याश्चावस्तादुपतिष्ठन्ता[9] आपः ॥
अग्ने यत्ते दिवि वर्चः पृथिव्यां[7] यत्पर्वतेष्वोषधीष्वप्सु ।
येनान्तरिक्षमुर्वाततन्थ[10] त्वेषः स भानुरर्णवो नृचक्षाः[11] ॥
पुरीष्यासो अग्नयः प्रवणेन सजोषसः ।
जुषन्तां[*] हव्यमाहुतमनमीवा इषो महीः ॥

---

1) So M3, in Hg u W अ॰, in P, A u B ebenso, nur ohne Accent 2) P पृथिव्याः । 3) Hg (u A) सतं 4) M 3 u W सहस्रीय 5) So die Mss, P सम् । स्तूयसे ।, B स्तूयसे, RV 3, 22, 1 TS4, 2 4 2, VS 12 47 संवत्सयसे auch Kap S 25,2 सम्स्तूयसे, desgl Kath., ohne Accent. 6) P अच्छ । जिगासि । अच्छ ।. M 3 betont जिगास्य॰ 7) P देवान् । 8) B पुरस्ता॰ 9) P उप तिष्ठन्ते । 10) P आ । ततन्थ । त्वेषः । ततन्थ । 11) W नृचक्षा, P नृचक्षाः इति नृ चक्षः ।, s TS 4, 2, 4, 3, VS 12, 43, auch Kap S 25, 2 नृचक्षा, desgl Kâth, ohne Accent.

इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध[1] ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥
अयं ते॥ चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद[2] परिचिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद चितः स्थ परिचितः स्थोर्ध्वचितः श्रयध्वम् ॥

संमितं संकल्पेथां संप्रियौ रोचिष्णू सुमनस्यमानौ ।
इषमूर्जमभि संवसानौ ॥
सं वां मनांसि सं व्रता समु चित्तान्याकरम्[3] ।
अग्ने पुरीष्याधिपा भव त्वं न[4] इषमूर्जं यजमानाय धेहि ॥
त्वमग्ने पुरीष्यो रयिमान्पुष्टिमाँ[5] असि ।
शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः[6] ॥
भवतं नः ॥
मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योना अभारुखा[7] ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि-
मुञ्चतु ॥ ११ ॥

Vgl 3 2, 3 — TS 4 2, 4 (garhapatyacayanam) u [redacted] (āhavanīyacayanārtham bhuraḥ karshanam), Kath 16, 11, Kap S 25, 2, VS 12, 45—51 53 57—61, Man Çr 6, 1, 5

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि[8] तस्करस्य ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥
नमः सु ते निर्ऋते तिग्मतेजो ऽयस्मयं विचृता[9] बन्धमेतम् ।
यमेन त्वं यम्या[10] संविदानोत्तमे नाके अधि रोहयैनम् ॥

1) W हवमानो यस॰, M3 साध 2) P ध्रुवा । सीद् । 3) P चा । अकर् ।, Hg (u A) ॰करन् 4) P न । 5) P पुष्टिमानिति पुष्टि मान् ।, Kap [redacted] schreibt hier (25, 2) auch पुष्टिमं असि, Kath पुष्टिमा॰ 6) P इह । आ । असदः । 7) P योनौ । अभा । उखा । 8) P स्तेनस्य । इत्या । अनु । इहि । Vgl TS 4 2, 5, 4, VS 12, 62 9) P वि । चृत । 10) So W in Uebereinstimmung mit TS 4, 2, 5, 3, in Hg, M 3 (u A) यम्या, [redacted] यम्यां ।, so auch VS 12, 63

यद्द्धं ते[1] ॥

यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम्[2] ।
तं ते विष्याम्यायुषो नु मध्ये ऽथा[3] जीवः पितुमद्धि[4] प्रमुक्तः[5] ॥
यदस्य पारे रजसो महच्छ्रित्रं ज्योतिरजायत ।
तन्नः पर्षदति[6] द्विषो ऽग्ने वैश्वानर ॥
स्वाहा भूत्यै नमः ॥
निवेशनः संगमनो वसूनां विश्वा रूपाण्यभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥
येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेन यन्तु यजमानाः स्वस्ति ॥
पूषा युनक्तु सविता युनक्तु बृहस्पतिर्वो युनक्तु ।
अर्वैस्तेजसा सूर्यस्य वर्चसा ॥
सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥
युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः[7] सभरा[8] असन्नो[9] नेदीया[10] इत्सृण्यः पक्वमायत[11] ॥
लाङ्गलं पवीरवं सुशेवं सोमपित्सरु[12] ।
उदिद्वपतु गामविं[13] प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम् ॥

1) P यत् । द्वे । ते । घोरे । भासेन् ।   2) So M 3, Hg °चर्त्तं, W °चर्तिं, P अविचृत्यमित्यवि चृत्य ।, Kap B 25, 3 °चृत्यं, Kāṭh °चर्त्यम्   3) P अथ ।   4) P पितुम् । अद्धि ।, M 3 °मद्धि   5) W प्रमुक्त   6) So im Anschluss an P पर्षत् । अति ।; Hg परिषद्°, M 3 (u. A) परिषद्° W u. B ohne Accent. So auch Kap B 25, 3, aber vgl. TS 4, 2, 5, 2   7) B सृष्टि° W सृष्टि   8) P सभरा इति स. भरा ।   9) P असत् । न ।   10) P नेदीयः ।   11) P इत् । आयत् ।, Kap S °मायात   12) P सोमपित्सर्विति सोमपित् सरु ।, Hg सोमपित्सरू, (A सोमपित्सरु), M 3 सोमपित्सरी, B सोमपित्सरू; = VS 12 71, Kāṭh. 16, 12, anders TS 4, 2, 5, 6   13) M 3 गामश्व

शुनं सुफाला[1] वितुदन्तु भूमिं शुनं कीनाशो अभ्येतु वाहैः ।
शुनासीरा हविषा तोशमाना[2] सुपिप्पला[3] ओषधीः कर्तनास्मै[4] ॥
शुनं नरो लाङ्गलेनानडुद्भिर्भगः[5] फालैः सीरपतिर्मरुद्भिः ।
पर्जन्यो बीजमीरयानो धिनोतु शुनासीरा कृणुतं धान्यं नः ॥
शुनासीरा प्रकृषतं कृणुतं धान्यं बहु ।
भूमिरियमृत्वियवती तां फाला[6] उपजिघ्नतु ॥
घृतेन सीता मधुना समज्यता विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जो भागं मधुमत्पिन्वमानास्मान्त्सीते पयसाभ्याववृत्स्व[7] ॥
उद्योजनमन्तर्याममीषां[8] खृगल्यं शवम् ।
अष्ट्रां ताडं प्रतीनाहा उभे मण्डूक्यौ युजे ॥
उदस्थादोजिदश्वजिद्धिरण्यजित्सूनृतया परीवृतः[9] ।
एकचक्रेण सविता रथेनोर्जो भागं पृथिव्या[10] यात्यापृणन् ॥
इमामिन्द्र हस्तच्युतिं संच्युतिं जघनच्युतिम् ।
संसूतिमिन्द्र[11] संधितिमूर्जे संपीतिमुत्कृषे[12] ॥
उष्टारयोः पील्वयोरथो[13] [14] आबन्धनीययोः ।
सर्वेषां विद्म वो नाम वाहाः कीलालपेशसः ॥
विमुच्यध्वमघ्न्या[15] देवयाना अतारिष्म तमसस्पारमस्य ।
ज्योतिरापाम ॥ १२ ॥

Vgl 3, 2, 4 — TS 4, 2, 5 (bhavanti acayanārtham bhuvah karshaṇam); Kāṭh 16 12; Kap. S 25, 3; VS 12, 62—71 73; Mān Çr 6, 1, 5

1) P सुफालाः । 2) P तोषमाणा ।; vgl aber auch AV 3, 17, 5 3) P सुपिप्पलाँ इति सु पिप्पलाः । 4) P कर्तन । अस्मै । 5) W भगः 6) P फालाः । 7) P पयसा । अभि । आ । ववृत्स्व । 8) So betont W; M 3 अन्तर्यामम्; in Hg उद्योजन°; auch P उद्योजनमित्युत् योजनम् । (A उद्योजन° s Vorr ) 9) So Hg, M 3 (u A); W परिवृ°; B परिवृत., P परिवृत इति परि वृतः । 10) P पृथिव्याः । 11) W °मिन्द्रे 12) B सखीतिम° 13) So Hg, M 3 u W; nur P betont पील्वयो. । (und A पील्वयोर°; s. aber Vorr ) 14) P अथो इत्यथो । 15) P अघ्न्याः ।

या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा।
मन्वे[1] नु[2] बभ्रूणामहं[3] शतं धामानि सप्त च॥
शतं[3] वो अम्ब धामानि सहस्रमुत वो रुहः।
अथा[4] शतक्रतो यूयमिमं मे अगदं कृत॥
पुष्पवतीः प्रसूवरीः फलिनीरफला उत।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे।
रपांसि[3] विघ्नतीरित रपश्चातयमानाः॥
अश्वत्थे वो निवेशनं पर्णे वो वसतिः कृता।
गोभाजा[4] इत्किलासथ[5] यत्सनवाथ[6] पूरुषम्[7]॥
यदोषधयः संगछन्ते राजानः समिता इव[8]।
विप्रः स उच्यते कवी[9] रक्षोहामीवचातनः॥
निष्कृतिर्नाम वो माताथा त्वमसि संकृतिः॥
सराः[10] पतत्रिणीः स्थन[11] यदामयति निष्कृत॥
अश्वावती[12] सोमवतीमूर्जयन्तीमुदोजसम्।
आवित्सि[13] सर्वा[14] ओषधीरस्मा अरिष्टतातये॥
यदिमा वाजयन्नहमोषधीर्हस्त[15] आदधे।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा॥

---

1) So M 3, W u P, in Hg (u A) मन्वे 2) M 3 नु 3) P बभ्रु। 4) P गोभाज इति गो भाज। 5) P किल। असथ। 6) So die Mss, (desgl Kath 16 13), B सनवथ। 7) So M 3, (A) u B, in Hg u W पुरुष, P पूरुष। पुरुषमिति पुरुष। 8) P समिता इवेति समिता इव। 9) P कवि। 10) Hg u W सराः (A सरा), desgl B, ohne Accent, M3 सरा, P सुरा, s TS 4 2,6 2, Kap S 25 4 सुरा, Kath 16, 13 सरा। 11) So M 3 u P, in Hg, (A) W u B स्तन, Kath 16 13 स्थ 12) P अश्वावती। अश्ववतीमित्यश्व वती। 13) P आ। अयुचि।, Hg आ युचि, (A आयुचि), W आयुचि, M 3 आयुचि 14) P सर्वा। 15) P हस्ते।

उच्छुष्मा[1] ओषधीनां गावो गोष्ठादिवेरते[2] ।
धनं सनिष्यन्तीनामात्मानं तव पूरुष[3] ॥
अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः ॥
ओषधयः प्राचुच्यवुर्यत्किंच तन्वो रपः ॥
यास्त आविविशुरात्मानं या आरत्सुः परुः परुः ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥
साकं यक्ष्म प्र पत चाषेण किकिदीव्या[4] ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना ओषधयः प्रावत वाचं मे ॥
याः फलिनीर्या अफला अकोशा याश्च कोशिनीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥
अवपतन्तीरवदन्दिव[5] ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः[6] ॥
दिवं ब्रूमो नक्षत्राणि भूमिं यक्षाणि[7] पर्वतान् ।
समुद्रान्नद्यो[8] वेशन्तास्ते[9] नो मुञ्चन्त्वंहसः ॥
ब्रूमो राजानं वरुणं धातारमुत पूषणम् ।
त्वष्टारमपीयं[10] ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ १३ ॥

Vgl. TS 4, 2, 6 (oshadhivāpaḥ), Kāṭh 16, 13, Kap S 25, 4, VS 12, 75—91, Mān Çr 6, 1, 6

---

1) P शुष्मा. ।; in Hg शुष्मा ohne Accent 2) P इव । ईरते । 3) W u B पुरुष, auch P पुरुष । पुरुष इति पुरुष । 4) So Hg, M 3 u P, (A किकिदीव्यां), W किकिदीव्यां 5) P दिवं । 6) W पुरुष 7) So P, in Hg यक्षाणि, (A यक्षाणि), M 3 यक्षाणि, W यक्षाणि, B यक्षाणि 8) Hg u W नद्यो, (A नद्यौ) 9) So Hg, desgl B ohne Accent, P वेशन्तान् । ते ।, M 3 वेशन्तास्ते, W वेशन्तास्ते 10) So Hg u M 3, (in A °मयोय), B °मयिय ।, P °मयिय ।; W मयिय

मा नो हिंसीज्जनिता[1] यः पृथिव्या[2] यो दिवं सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥
अभ्यावर्तस्व पृथिवि[3] यज्ञेन पयसा सह ।
वपां ते अग्निरिषितो अरोहत् ॥
अग्ने यच्छुक्रं[4] यच्चन्द्रं यत्पूतं यच्च यज्ञियम् ।
तद्देवेभ्यो भरामसि ॥
इषमूर्जमहमित आदि घृतस्य[5] धारां महिषस्य योनिम् ।
आ नो गोषु विशत्वोषधीषु जहामि सेदिमनिराममीवाम्[6] ॥
कामं कामदुघे धुक्ष्व प्रजाभ्य[7] ओषधीभ्यः ।
इन्द्रायाग्नये पूष्णे मित्राय वरुणाय च ॥
अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावस्युभे[8] पृणासि रोदसी ॥
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं रयिम् ॥
ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्व एषः[9] संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥

---

1) P हिंसीत् । जनिता ।, B हिंसीर्ज्जनिता auch Kap S हिंसीर्जनिता 2) P पृथिव्या । 3) So Hg u A in M 3 W B u P पृथिवी 4) B शुक्रं 5) B घादिर्घृतस्य, Kāṭh 16 14 आघृतस्य 6) M 3 u W °ममीराम° 7) P प्रजाभ्य । 8) So das Verb betont in W, P उप । अवसि । आ । उभे इत्युभे । aber Hg u M 3 °न्नुपावस्य°, cf TS 4, 2 7 1 9) So Hg u W d h wohl त्वे । आ । इष ।, (A त्व एष), M 3 त्व एक P त्वे इति त्वे । इष । in TS u VS 12 108 त्वे इष Kap S ते विश्वे, Kaṭh त्वे विश्वे

ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः[1] ।
श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा[2] ॥
इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिं क्रतुम् ॥
आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्[3] ।
भवा[4] वाजस्य संगथे ॥
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥

॥ १४ ॥ Vgl 3 2, 5 — TS 4 2, 7 (loshṭakshepâdikam), Kâṭh 16, 14, Kap [illegible] 25, 5, VS 13, 10⁰—113, Man Çr 6 1, 6

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः[5] ।
स बुध्न्या[6] उपमा[7] अस्य विष्ठाः[8] सतश्च योनिमसतश्च विवः ॥
हिरण्यगर्भः समवर्ततायेे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
अद्भ्यः संभृतः पृथिव्यै[9] रसाच्च विश्वकर्मणः समवर्तताधि ।
तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य देवमाजानमग्रे[10] ॥
द्रप्सश्चस्कन्द ॥

---

1) W पुरोजना 2) So Hg M3 W (u A), auch P गिरा। दैव । मानुषा। युगा।, B गिरा दै प्रचेतस दे अमानुषा युगा [illegible] So B (ohne Acc.), u Hg M3 P und wohl auch W युग्यि, (A युग्यि) Vgl die verwandten Saṃhitâs 4) P भव। 5) P वेनं । आवरित्याव।, W आव 6) W बुध्ना, P बुध्ना। 7) P उपमा इत्युप मां। 8) P विष्ठा। विष्ठा इति वि स्थां। 9) P पृथिव्यां। 10) P आजानमित्या जानम्। अग्रे।

नमो अस्तु[1] सर्पेभ्यो ये के च पृथिवीमनु।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
ये इषवो यातुधानानां ये वनस्पतीनाम्।
ये ऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥
ये अमी रोचने दिवो ये वा सूर्यस्य रश्मिषु।
ये अप्सु पदांसि[2] चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥
कृणुष्व पाजः प्रसितिं[3] न पृथ्वीं याहि राजेवामव[4] इभेन।
तृष्वीमनु प्रसितिं[5] दूणानो[6] ऽस्तासि[7] विध्य रक्षसस्तपिष्ठैः ॥
तव भ्रमास[8] आशुया पतन्त्यनुस्पृश धृषता[9] शोशुचानः।
तपोभिरग्ने जुह्वा पतङ्गानसंदितो[10] विसृज विष्वगुल्काः ॥
प्रति स्पशो विसृजा[11] तूर्णितमो भवा[12] पायुर्विशो अस्या[13] अदब्धः।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ[14] ओषतात्तिग्महेते।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविः कृणुष्व दैव्यान्यग्ने।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं[15] प्रमृणीहि शत्रून् ॥
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः।
मूर्धा कवी रयीणाम् ॥

---

1) B ऽस्तु 2) D e Mss schwanken M 3 अप्सु सदांसी B चाप्स्वंतप् सु। सदांसि। aber Hg u W अप्सुषदांसि, über A s Vorr 3) P प्रसितिमिति प्र सिति। nur B प्रसृतिम 4) So Hg (u A) in M 3 °वामव° B °वामवा W °वामवा P वमवामितीम वाम्। 5) P wie oben M 3 प्रसित्य B प्रसृति 6) P दूणाने। Kāth दूणानो 7) P अस्ता। असि। 8) P भ्रमास। 9) M 3 धृषती 10) So M 3 u B (ohne Accent) P असंदित इत्यसं दित। Hg असंचितो, W असं सितो 11) B विसृज P वि। सृज। 12) P भव। 13) P अस्याः। 14) So Hg (u A) W न्यमित्र M 3 न्यमित्र B न्यमित्रा° P नि। अमित्रान्। 15) P जामिं। अजामिं।

अग्नेष्ट्वा तेजसा सादयामि तया देवतयाङ्गिरस्वद् ध्रुवा सीद[1] ॥
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥

इन्द्रस्य त्वौजसा सादयामि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ध्रुवासि धरुणास्तृता[2] विश्वकर्मणा सुधृता मा त्वा समुद्र उद्वधीन्मा[3] सुपर्णो ऽव्यथमाना पृथिवीं दृꣳह तेजो ऽसि तेजो मे यच्छ पृथिवीꣳ यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः पृथिव्या[4] मा पाहि ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षꣳ यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीरन्तरिक्षान्मा पाहि स्वरसि स्वर्मे यच्छ दिवꣳ यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्दिवो मा पाहि ॥

यास्ते अग्न आर्द्रा योनयो याः कुलायिनीर्ये ते अग्ना[5] इन्दवो या उ नाभयः ।
ताभिष्ट्वमुभयीभिः सꣳविदानः प्रजानꣳस्तऽव्येह[6] निषीद ॥
काण्डात्काण्डात्प्ररोहन्ती[7] परुषः परुषस्परि ।
एवा[8] नो दूर्वे प्रतनु सहस्रेण शतेन च ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यै ते देवीष्टके विधेम हविषा वयम् ॥ १५ ॥

Vgl 3, 2, 6 — TS 4, 2, 8 (rukmādyupadhānam) u 9 (svayamātṛṇṇādiśhṭakopadhānam), 1, 2, 14, Kāṭh 16, 15 u 16, VS 13, 3—21, Mān Çr 6, 1, 7

यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी[9] रुचे जनाय नस्कृधि ॥

---

1) P ध्रुवा । सीद । 2) P धरुणा । आस्तृतेत्या स्तृता । (!) 3) P समुद्रः । उत् । वधीत् ।, B उद्धीमा; desgl. Kāṭh 16, 16 4) P पृथिव्याः । 5) P अग्ने । 6) P प्रजानन्निति प्र जानन् । तन्वा । इह । 7) So Hg, M 3 (u A), P प्ररोहन्तीति । प्र-रोहन्ती ।, W प्ररोहति desgl B, ohne Accent. 8) P एवं । 9) P सर्वाभिः ।

यां वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी[1] रुचं नो धेहि बृहस्पते ॥

विराड् ज्योतिरधारयत्स्वराड् ज्योतिरधारयत्सम्राड् ज्योतिरधारयद्भूरसि भुवनस्य रेता[2] इष्टका[3] स्वर्गो लोको मनसा त्वान्वारोहाम्यग्निर्ज्योतिर्ज्योतिरग्निस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद सूरसि[4] भुवनस्य रेता इष्टका स्वर्गो लोको वाचा त्वान्वारोहामि सूर्यो ज्योतिर्ज्योतिः सूर्यस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद[5] बृहस्पतिष्ट्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मती विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय विश्वं ज्योतिर्यच्छाग्निष्टे ऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मती विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय विश्वं ज्योतिर्यच्छ वायुष्टे ऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योतिष्मती विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय विश्वं ज्योतिर्यच्छ सूर्यस्ते ऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥

अषाढासि सहमाना सहस्वारातीः[6] सहस्व पृतनायतः ।
सहस्रवीर्यासि सा मा जिन्व ॥
मधु वाता[7] ऋतायते[8] मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥
मधु नक्तमुतोषसो[9] मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥

1) P सर्वाभि । 2) P urrig रेता । 3) B इष्टका u P auch इष्टका । 4) P सू । असि । 5) Von hier bis विश्वकर्मा (excl.) in B fehlend 6) P सहस्व । अराति । 7) P मधुवाता । (!) 8) P ऋतायते । ऋतयत ई्लुत यते । 9) P उषः । उषस ।

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥

अपां त्वा गह्मन्त्सादयामि समुद्रस्योद्मन्नवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे ऽनु त्वा दिव्या वृष्टिः सचतां मा त्वा सूर्यो ऽभिताप्सीन्माग्निर्वैश्वानरो ऽच्छिन्नपत्त्रः प्रजा अनुवीक्षस्व ॥

त्रीन्त्समुद्रान्त्समसृपत्स्वर्गाँ ऽपां पतिर्वृषभ इष्टकानाम् ।
तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानः सुकृतस्य लोकम् ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥

इदं विष्णुः ॥

अध स्मा ते वनस्पते वातो विवात्यग्रमित् ।
अथो इन्द्राय पातवे सुनु सोममुलूखल ॥

नक्तोषासा ॥

स्यूता देवेभिरमृतेनागादुक्था स्वसारमधि वेदिमस्थात् ।
सत्यं पूर्वैरृषिभिः संविदानो अग्निः प्रविद्वाँ इह तत्कृणोतु ॥
पृथिवि पृथिव्यां सीद मातुर्मातरि माता ।
स्योनासि सुषदा स्योनामासीद सुषदामासीद ॥
निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥

1) P मधुमानिति मधु माम् । M 3 मधुम॰, B मधुमा 2) P गह्मन् ।, Hg a W गह्मन्त्स॰, B गह्म स॰ M 3 गह्मेमत् स॰ 3) So Hg, M 3 (a A), P उद्मन् । अवत । छायायां ।; W ॰च्छायाया, B ॰यायायां 4) B वृष्टि 5) P अभि । ताप्सीत् । 6) P प्रजा । अनु । वीक्षस्व । 7) So Hg M 3, W (a A), P स्वर्गानिति स्वः । गान् ।, B स्वऽर्गान् 8) P न । 9) P स्म । 10) P सुं । इन्द्राय । 11) B स्युता, dagegen Mān Çr 6, 1 7 12) P अमृतेन । आ । अगात् । 13) P प्रविद्वानिति प्र विद्वान् ।

क्रतुं देवानां महिमानमीमहे ऽग्निꣳ सधस्थे सदनेष्वद्भुतम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसꣳ स्तोमस्य धामन्निदधे पुरीष्यम् ॥
न्यृधुर्मीचायां कवयो वयोधसो ऽग्निꣳ सधस्थे सदनेष्वच्युतम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसꣳ स्तोमस्य धामन्निहितं पुरीष्यम् ।
समिध्यमानꣳ समिधा समिन्धते[1] ऽग्निꣳ सधस्थे सदनेषु सुक्रतुम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसꣳ स्तोमस्य धामन्पवमानमाभृतम् ॥

॥ १६ ॥ Vgl 3, 2, 7 — TS 4, 2, 9 (svayamâtrṇṇadishṭakopadhanam), KAṭh 16, 16, 39, 3, VS 13, 22—32, Man Çr 6, 1, 7.

अग्ने युक्ष्वा[2] हि ये तवाश्वासो देव साधवः ।
अरꣳ वहन्त्याशवः ॥
युक्ष्वा[3] हि देवहूतमं अश्वाँ अग्ने रथीरिव ।
नि होता पूर्व्यः सदः[4] ॥
समित्स्रवन्ति सरितो न धेना[5] अन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धारा[6] अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥

ऋचे त्वा[7] रुचे त्वा भासे त्वा ज्योतिषे त्वाभूदिदꣳ विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चाग्निस्तेजसा तेजस्वान् रुक्मो वर्चसा वर्चस्वान्त्सहस्रदा[8] असि सहस्राय त्वा ॥

आदित्यं गर्भं पयसा समङ्ग्धि[9] सहस्रस्य प्रतिमाꣳ विश्वरूपम् ।

---

1) W संमिध्यते 2) P युक्ष्वं । 3) P देव हूतमाम् । चश्वान् । 4) So M 3, in Hg, W (u A) सद् betont, P सीद । 5) P धेना । 6) P धारा । 7) Hier beginnt ein Vers, der aber in den Mss nicht als solcher gefasst ist, vgl dasselbe weiter unten 8) P सहस्र दा ।, B सहस्रधा 9) Die Mss schwanken, Hg u M 1 संमग्धि, (A समग्धि), W wohl समग्धि, desgl B, ohne Accent; P सम् । अङ्धि ।

परि वृङ्ग्धि[1] हरसा माभिशोचीः शतायुषं कृणुहि चीयमानः ॥
वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानं सलिलस्य मध्ये ।
शिशुं नदीनां हरिमद्रिबुध्नमग्ने मा हिंसीः परमे व्योमन्[2] ॥
अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे[3] पूर्वचित्तिं नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम् ॥
त्वष्टुर्वरूत्रीं वरुणस्य नाभिमविं जज्ञानां रजसः परस्मात् ।
महीं साहस्रीमसुरस्य मायामग्ने मा हिंसीः परमे व्योमन्[4] ॥
यो अग्निरग्नेस्तपसो ऽधि जातः शोकात्पृथिव्या[5] उत वा दिवस्परि[6] ।
येन इमाः प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥

इमं[7] मा हिंसीर्द्विपादं पशुं सहस्राक्षो मेधाय चीयमानो मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विमं साहस्रं शतधारमुत्सं व्यच्यमानं[8] सलिलस्य[9] मध्ये घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन्[10] ॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विमामूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदां त्वष्टुर्देवानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन्[11] ॥ मेषमारण्यमनु ते

---

1) P परि । वृङ्ग्धि । 2) In den Mss ohne Accent. P व्योमनिति वि ओमन् । 3) M 3 मुरण्युम°, B मरण्युम°, P भुरण्युं । 4) In den Mss ohne Accent. 5) P पृथिव्याः, Kap [illegible] शोकात्पृ° 6) P परि । वः । 7) Hier und im Folgenden stecken Verse, welche aber von den Mss nicht als solche behandelt sind (wohl aber im Kāṭh.) 8) B वाच्यमान°, M 3 विच्यमानं 9) Kap S [illegible] Kāṭh 16, 17 सरिरस्य wie VS 13, 43 10) In den Mss ohne Accent. 11) In den Mss ohne Accent.

दिशामि तेन चिन्वानस्तन्वं निषीद मेषं ते शुगृछतु यं द्विष्मस्तं ते शुगृछत्वजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे तेन देवा देवतामग्रमायंस्तेन[1] रोहमायन्नुप मेध्यासः[2] शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद शरभं ते शुगृछतु यं द्विष्मस्तं ते शुगृछतु ॥ १७ ॥

Vgl TS 4 2, 9 (s oben) und [illegible] (paçuçirshopadhanam), Kath 16 16 u 17, Kap S 25, 8, VS 13, 36—51, Man Çr 6 1 7

अपां त्वेमन्त्सादयाम्यपां[3] त्वोद्मन्त्सादयाम्यपां[4] त्वायने सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वा भसनि[5] सादयामि समुद्रे त्वा सदने सादयाम्यर्णवे त्वा सदने सादयामि सलिले त्वा सदने सादयाम्यपां त्वा क्षये सादयाम्यपां त्वा सध्रिषु[6] सादयाम्यपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा पाथसि सादयामि गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयाम्यानुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामि ॥ १८ ॥

Vgl 3, 2, 8 — TS 4 3 1 (prathama citih apasyabhidhana ishtakah), Kath, 16, 18, Kap S [illegible] 3, VS 13 53, Man Çr 6, 1 3

अयं पुरो भूस्तस्य[7] प्राणो भौवायनो वसन्तः प्राणायनो[8] गायत्री ॥

1) P आयन् । 2) So betont in M 3 u P wie auch Kap S 25 8 TS 4 2 10, 4, VS 13 51, in Hg u W °नुपमेध्यास 3) Der Nasal vor dem त्स fehlt in den Mss, P त्वा । इमन् । 4) Der Nasal vor dem त्स fehlt in den Mss P उद्मन् । 5) So Hg M 3 (A) und P (desgl Kath) in W भसन्त्स° u भस्मनित्स° ursprünglich hat vielleicht doch भस्मन्त्स° gestanden wie in den meisten verwandten Saṃhitās was ja auch mit dem Vorhergehenden in besserer Harmonie stünde. 6) So Hg u. P in M 3, W u B सधृषु aber Kath Kap S TS und VS lesen सधिषि 7) P पुरं । भू । 8) P प्राणायनं इति प्राणा आयनं ।

वासन्ती गायत्र्याँ[1] गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत्त्रिवृतो रथन्तरं वसिष्ठ[2] ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यो ऽयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुब् ग्रैष्मी त्रिष्टुभः स्वारं स्वारादन्तर्यामो ऽन्तर्यामात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यो ऽयं पश्चा विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्सममृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपं जमदग्निरृषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य इदमुत्तरात्स्वस्तस्य श्रोत्रं सौवं शरच्छ्रौत्र्यनुष्टुप् शारद्यनुष्टुभ ऐडमैडान्मन्थी मन्थिन एकविंश एकविंशाद्वैराजं विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्य इयमुपरि मतिस्तस्या वाङ् मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्या निधनवन्निधनवत आग्रायण[10] आग्रायणात्त्रिणवत्रयस्त्रिंशौ त्रिणवत्रयस्त्रिंशाभ्यां शाक्वररैवते विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ॥ १९ ॥

Vgl TS 4, 3, 2 (prâṇabhṛta iṣṭakâḥ), Kâṭh 16, 19; Kap S 25, 9; VS 13, 54–58

प्राची दिग्वसन्त ऋतुरग्निर्देवता ब्रह्म द्रविणं गायत्री छन्दो रथन्तरं साम त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिः सानगा[11] ऋषिस्त्र्य-

1) M गायत्री चा; P गायत्र्याः; TS 4, 3, 2, 1 गायत्रियै, Kap S 25, 9, VS 13, 54 गायत्र्यै aber Kâṭh 16, 19 auch गायत्र्या wie M S. 2) P वसिष्ठ. । 3) P भरद्वाज इति भरत् वाज । 4) P पश्चात् । 5) So gemäss P श्रौत्री । (s TS 4, 3, 2 2, VS 13, 57, Kâṭh 16, 19), M3 श्रोत्रीयं, die andern Mss श्रोत्र्य, auch Kap S श्रोत्र्य 6) P विश्वामित्र । 7) Hg वाष्ट्र (?) 8) P पङ्क्त्या । 9) So Hg u M 3, P निधनवदिति निधन.वत् ।, W निधानव निधेयणवत, B निधानव निधानवत 10) P आग्रायणः 11) P सानग इति सान.गः ।

विर्वयः कृतमयानां पुरोवातो वातः पितरः पितामहाः परे ऽवरे ते नो ऽवन्तु ते नः पान्त्वस्मिन्ब्रह्मण्यस्यां पुरोधायामस्मिन्कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ दक्षिणा दिग्ग्रीष्म ऋतुरिन्द्रो देवता क्षत्रं द्रविणं त्रिष्टुप्छन्दो बृहत्साम पञ्चदशः स्तोमः स उ सप्तदशवर्तनिः सनातना ऋषिर्दित्यवाड् वयस्त्रेतायानां दक्षिणाद्वातो वातः पितरः पितामहाः परे ऽवरे ते नो ऽवन्तु ते नः पान्त्वस्मिन्ब्रह्मण्यस्यां पुरोधायामस्मिन्कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ प्रतीची दिग्वर्षा ऋतुर्विश्वे देवा देवता विड् द्रविणं जगती छन्दो वैरूपं साम सप्तदशः स्तोमः स उ एकविंशवर्तनिरहभूना ऋषिस्त्रिवत्सो वयो द्वापरो ऽयानां पश्चाद्वातो वातः पितरः पितामहाः परे ऽवरे ते नो ऽवन्तु ते नः पान्त्वस्मिन्ब्रह्मण्यस्यां पुरोधायामस्मिन्कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ उदीची दिक्शरदृतुर्मित्रावरुणौ देवता पुष्टं द्रविणमनुष्टुप्छन्दो वैराजं सामैकविंशः स्तोमः स उ त्रिणववर्तनिः पुराणा ऋषिस्तुर्यवाड् वयो ऽभिभवो ऽयानामुत्तराद्वातो वातः पितरः पितामहाः परे ऽवरे ते नो ऽवन्तु ते नः पान्त्वस्मिन्ब्रह्मण्यस्यां पुरोधायामस्मिन्कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ ऊर्ध्वा दिग्घेमन्तशिशिरा ऋतू बृहस्पतिर्देवता फलं द्रविणं पङ्क्तिश्छन्दः शाक्वररैवते सामनी त्रिणवः स्तोमः स उ त्रयस्त्रिंशवर्तनिः सुपर्ण ऋषिः पष्ठवाड् वय आस्कन्दो ऽयानामुपरिष्टाद्वातो वातः पितरः

---

1) P परे। ऽवरे। 2) P सनातेव इति सना तेन ।, Hg संनातना, M 3 संनातना, W सनातना 3) P त्रैता । त्रेयानां । 4) P वर्षा । 5) P अहभूना । 6) P पश्चाद्वात इति पश्चात् वात । 7) P पुराणं ।, in W erg पुराणं geschrieben, in पुराणा corr ; in M 3 der ganze Satz ohne Accent 8) P हेमन्तशिशिरेति हेमन्त शिशिरा । 9) P सुपर्णः ।

पितामहाः परेऽवरे ते नोऽवन्तु ते नः पान्त्वस्मिन्ब्रह्मण्यस्यां पुरोधायामस्मिन्कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ २० ॥

[1] Vgl. TS 4, 3, 3 (apânabhṛta ishṭakâḥ)

॥ इति मध्यमकाण्डे सप्तमः प्रपाठकः ॥

---

लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥
ता अस्य सूददोहसः सोमँ श्रीणन्ति पृश्नयः ।
जन्मन्देवानाँ विशस्त्रिष्वा रोचने दिवः ॥
ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवँ योनिमासीद साध्या ।
उख्यस्य केतुं प्रथमं जुषाणा अश्विनाध्वर्यू सादयतामिह त्वा ॥
कुलायिनी घृतवती पुरंधिः स्योने सीद सदने पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विदं ब्रह्म पिपृहि सौभगाय ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥
स्वैर्दक्षैर्दक्षपितेह सीद देवानाँ सुम्ने बृहते रणाय ।
पितेवैधि सूनवे यः सुशेवः स्वावेशया तन्वा संविशस्व ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥

पृथिव्याः पुरीषमस्यप्सो[1] नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व[2] ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशाम् ।
भुवनस्याधिपत्नीमूर्मिर्द्रप्सो अपामसि ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयुनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैर्वैश्वानरैः सजूर्देवैर्वयुनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ १ ॥

Vgl. 3, 2, 8 u. 9 — TS 4, 3, 4 (dvitîyasyâm citâu; âçvinyâkhyâ ishṭakâh), Kâth 17, 1; Kap. S. 25, 10; VS 12, 54 55, 14, 1—5. 7, Mân. Çr. 6, 2, 1.

प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकयापः[3] पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वा वृष्टिमेरय[4] क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयोऽधिपतिश्छन्दो मूर्धा वयः प्रजापतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड् वयो विराट् छन्दः पञ्चाविर्वयो

1) P अप्सः ।; M 3 अपस्तो; cf 2, 8, 7  2) P द्रविणा । आ । यजस्व ।  3) P लोकाय । अपः ।  4) P वृष्टि । आ । इरयत ।

त्वा कृष्यै त्वा क्षेमाय त्वा यन्त्री राड् यन्त्र्यसि यमनी ध्रुवासि धरित्रीषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ॥ ३ ॥

Vgl. 3,2,9. — TS 4, 3, 6 (trtîyasyâm citau; svayamâtrnnâdyâ ishtakâh) und 7 (prthatyâkhyâ ishtakâh); Kâth. 17, 3; Kap. S 26, 2, VS 14, 11. 13. 17–22; Mân Çr. 6, 2, 1.

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशो ऽभीवर्तः सविंशो धरुण एकविंशो वर्चो द्वाविंशः संभरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भाः पञ्चविंश ओजस्त्रिणवो विराट् त्रिंशः क्रतुरेकत्रिंशो विधृतिर्द्वात्रिंशः प्रतिष्ठा त्रयस्त्रिंशो ब्रध्नस्य विष्टपं चतुस्त्रिंशो नाकः षट्त्रिंशो विवर्तो ऽष्टाचत्वारिंशो धर्त्रं चतुष्टोमः ॥ ४ ॥

Vgl TS 4,3,8 (caturthyâm citau; akshnayâstomîyâkhyâsv ishtakâsu kâçcit); Kâth 17, 4, Kap. S 26, 3; VS 14, 23; Mân Çr. 6, 2, 1.

अग्नेर्भागो ऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोम इन्द्रस्य भागो ऽसि विष्णोराधिपत्यं क्षत्रं स्पृतं पञ्चदशः स्तोमो नृचक्षसां भागो ऽसि धातुराधिपत्यं जनित्रं स्पृतं सप्तदशः स्तोमो मित्रस्य भागो ऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वाताः स्पृता एकविंशः स्तोमो ऽदित्या भागो ऽसि पूष्ण आधिपत्यमोजः स्पृतं त्रिणवः स्तोमो वसूनां भागो ऽसि रुद्राणामाधिपत्यं चतुष्पात्स्पृतं चतुर्विंशः स्तोम आदित्यानां भागो ऽसि मरुतामाधिपत्यं गर्भाः

---

1) P यंत्री । राट् । यंत्री । असि । 2) In Hg u W ohne Accent, in M 3 Paroxytonon. P व्योमेति वि.ओमा । 3) P अभीवर्तः । अभिवर्त इत्यभि.वर्त. ; B भिवर्तः; W व्योमीवर्तः 4) So Hg, P सविंश इति स विंशः ; M 3 सं विंशोः W सविंशो 5) P धरुणः । 6) P वर्च । 7) W विंधृति° 8) P विवर्त इति वि.वर्तः । 9) So Hg (desgl Kap. S. u VS), cf. oben 2, 4, 8; an M 3 u W वृष्टि° (wie auch in TS)

गायत्री छन्दस्त्रिवत्सो वय उष्णिहा छन्दस्तुर्यवाड् वयो ऽनुष्टुप्छन्दः पष्ठवाड् वयो बृहती छन्द उक्षा वयः ककुप्छन्द ऋषभो वयः सतोबृहती छन्दो ऽनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दो वत्सो वयो युवलं छन्दो वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दः सिंहो वयश्छदिश्छन्दो व्याघ्रो वयो ऽनाधृष्यं छन्दः ॥ २ ॥

Vgl TS 4, 3, 4 (devanyakhyâ ishtakâh) und 5 (vayasyâkhyâ ishtakâh), Kâth 17, 1 a. E. u. 2, Kap. 26, 10 und 26, 1, VS 14, 8—10

इन्द्राग्नी अव्यथमानामिष्टकां दृंहतं युवम् ।
पृष्ठेन द्यावापृथिवी आपृणान्तरिक्षं च विबाधस्व ॥

राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यस्यूर्ध्वा दिगायुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि मनो मे पिन्व वाचं मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ मा छन्दः प्रमा छन्दः प्रतिमा छन्दो ऽस्रीवीश्छन्दः[3] पङ्क्तिश्छन्द उष्णिहा छन्दो गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दो ऽनुष्टुप्छन्दो विराट् छन्दो बृहती छन्दः पृथिवी छन्दो ऽन्तरिक्षं छन्दो द्यौश्छन्दो नक्षत्राणि छन्दः समा[4] छन्दः कृषिश्छन्दो[5] वाक्छन्दो मनश्छन्दो गौश्छन्दो ऽश्वश्छन्दो ऽजा छन्दो हिरण्यं छन्दो ऽग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवतेन्द्रो देवता वरुणो देवता बृहस्पतिर्देवता विश्वे देवा देवता मूर्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरित्र्यायुषे त्वा वर्चसे

1) Hg त्रिवत्सो, M 3 त्र्यवत्सो 2) Von hier bis सतोबृहती (incl.) in B fehlend 3) M 2 स्रीवी, P स्रवीवी; Kâth III, 3 स्रोवयश्छन्दः 4) So M 3, wohl auch W; desgl. B ohne Accent; Hg समां P समा 5) W कृषिश्छन्दो 6) P धरित्री

त्वा कृष्यै त्वा क्षेमाय त्वा यन्त्री राड् यन्त्र्यसि यमनी धर्त्र्यसि धरित्रीषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ॥ ३ ॥

Vgl 3,2,9. — TS 4, 3, 6 (tṛtîyasyâm citâu; svayamâtṛṇṇâdyâ ishṭakâḥ) und 7 (bṛhatyâkhyâ ishṭakâḥ); Kâṭh. 17, 3; Kap S. [illegible], 2, VS 14, 11 13. 17–22; Mân. Çr. 6, 2, 1.

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशो ऽभीवर्तः सविꣳशो धरुण एकविꣳशो वर्चो द्वाविꣳशः संभरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशो गर्भाः पञ्चविꣳश ओजस्त्रिणवो विराट् त्रिꣳशः क्रतुरेकत्रिꣳशो विधृतिर्द्वात्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपं चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो वीवर्तो ऽष्टाचत्वारिꣳशो धर्त्रं चतुष्टोमः ॥ ४ ॥

Vgl TS 4,3,8 (caturthyâm citâu, akshṇayâstomîyâkhyâsv ishṭakâsu kâçcit); Kâṭh 17, 4; Kap S 26, 3, VS 14, 23, Mân Çr. 6, 2, 1.

अग्नेर्भागो ऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमा इन्द्रस्य भागो ऽसि विष्णोराधिपत्यं क्षत्रं स्पृतं पञ्चदशः स्तोमो नृचक्षसां भागो ऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदशः स्तोमो मित्रस्य भागो ऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वातः स्पृत एकविꣳशः स्तोमो ऽदित्या भागो ऽसि पूष्ण आधिपत्यमोजः स्पृतं त्रिणवः स्तोमो वसूनां भागो ऽसि रुद्राणामाधिपत्यं चतुष्पात्स्पृतं चतुर्विꣳशः स्तोम आदित्यानां भागो ऽसि मरुतामाधिपत्यं गर्भाः

---

1) P यंघी । राट् । यंत्री । असि ।  2) In Hg u W ohne Accent, in M 3 Paroxytonon, P व्योमेति वि.ओमा ।  3) P अभीवर्त. । अभिवर्त इत्यभि.वर्त. ।; [illegible] भिवर्त.; W व्योमीवर्त  4) So Hg, P सविंश इति स विꣳशः ।; M 3 स विꣳशो; W स्रविꣳशो  5) P धरुणः ।  6) P वर्च ।  7) W विधृति°  8) P विवर्त इति वि.वर्त. ।  9) So Hg (desgl Kap. S. u. VS), cf. oben 2, 4, 8; in M 3 u W वृष्टि° (wie auch in TS)

स्पृताः पञ्चविंशः स्तोमः सवितुर्भागो ऽसि बृहस्पतेराधिपत्यं समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमो यवानां भागो ऽस्ययवानामाधिपत्यं प्रजाः स्पृताश्चतुश्चत्वारिंशः स्तोम ऋभूणां भागो ऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तं स्पृतं त्रयस्त्रिंशः स्तोमः ॥ ५ ॥

Vgl 4, 2, 10, TS 4, 3, 9 (avaçishṭā akshṇayāstomiyāḥ), Kāṭh 17, 4, Kap S 26, 3, VS 14, 24—26, Mān Çr 6, 2 1

एकयास्तुवत[1] प्रजा अधीयन्त प्रजानां पतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तऋषयो[2] ऽसृज्यन्त धाताधिपतिरासीन्नवभिरस्तुवत पितरो ऽसृज्यन्तादितिरधिपतिरासीदेकादशभिरस्तुवतार्तवा असृज्यन्त ऋतवो ऽधिपतय आसंस्त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरो ऽधिपतिरासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रो ऽधिपतिरासीत्सप्तदशभिरस्तुवत ग्राम्याः पशवो ऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्तामेकविंशत्यास्तुवतैकशफमसृज्यत वरुणो ऽधिपतिरासीत्त्रयोविंशत्यास्तुवत क्षुद्राः पशवो ऽसृज्यन्त पूषाधिपतिरासीत्पञ्चविंशत्यास्तुवतारण्याः पशवो ऽसृज्यन्त वायुरधिपतिरासीत्सप्तविंशत्यास्तुवत वनस्पतयो ऽसृज्यन्त सोमो ऽधिपतिरासीन्नवविंशत्यास्तुवत द्यावापृथिवी व्यैतां[3] वसवो रुद्रा अनुष्वायँस्त उ एवाधिपतय आसन्नेकत्रिंशता-

1) P ऐकया । चास्तुवत । 2) So Hg, P सप्तऋषय इति सप्त ऋषय । 3) In den Mss ohne Accent (s VS 14, 30, Kap S 26, 4), P विं । ऐता । 4) M 3, W u B च्छ

स्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसꣳस्त्रयस्त्रिꣳशता-स्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ ६ ॥

Vgl 3, 2 10, TS 4, 3, 10 (srshtinamaka ishtakah), Kâth 17, 5, Kap S 26 4 VS 14, 28—31, Man Çr 6, 2 1

अग्ने जातान्प्रणुदा नः[1] सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व।
अधि नो ब्रूहि सुमना अहेडञ्शर्मꣳस्ते[2] स्याम त्रिवरूथा[3] उद्भौ[4] ॥
सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व।
अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नः[5] सपत्नान् ॥

चतुश्चत्वारिꣳशी स्तोमो वर्चो द्रविणꣳ[6] षोडशी स्तोम ओजो द्रविणम् ॥

अग्नेः पुरीषमस्यप्सो[7] नाम तां त्वा विश्वे अभिगृणन्तु देवाः।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥

तया देवतयाङ्गिरस्वद् ध्रुवा सीदैवꣳछन्दो वरिवश्छन्द आछच्छन्दो[8] मनश्छन्दः शंभूश्छन्दः परिभूश्छन्दः सिन्धुश्छन्दो व्यचश्छन्दः समुद्रं छन्दः सलिलं छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यं छन्दो ऽङ्कुपं[9] छन्दो ऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रूजश्छन्दः[10] पक्षश्छन्दः प्रछच्छन्दः[11] सꣳयच्छन्दो[12] वियच्छन्दो[13] बृहच्छ-

1) P प्र। नुद। न। 2) P शर्मन् 3) P त्रिवरूथ इति त्रि वरूथे। 4) W उद्भौ, M 3 उतद्भू, P उद्भाविंत्युत् भौ। 5) P प्र। नुद। न। 6) W schiebt hier ein गायत्राछन्दो रथंतरꣳ 7) M 3 ꣳस्यप्सो, vgl 2 8 1 8) Die Mss आर्छच्छन्दो B आछत्छदो, P आर्छदित्या छत्। 9) P अङ्कुपं।, B नूप 10) Kap S क्षुरो भ्रजश्छन्द, 11) Die Mss प्रछच्छं° P प्रछदिति प्र छत्। 12) P संयदिति सं यत्।, B सꣳयत्छदो, die andern Mss सꣳयच्छं° 13) P वियदिति वि यत्।, M 3 वीयच्छं°, die andern Mss वियच्छं°,

स्पृताः पञ्चविꣳशः स्तोमः सवितुर्भागो ऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमो यवानां भागो ऽस्ययवानामाधिपत्यं प्रजाः स्पृताश्चतुश्चत्वारिꣳशः स्तोम ऋभूणां भागो ऽसि विश्वेषां देवानामाधिपत्यं भूतं निगान्तꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः ॥ ५ ॥

Vgl 7, 2, 10, TS 4, 3, 9 (avaçabdā akshnayāstomīyāḥ), Kāṭh. 17, 4, Kap S 26, 3, VS 14, 24—26, Mān Çr 6, 2 1

एकयास्तुवत[1] प्रजा अधीयन्त प्रजानां पतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तऋषयो[2] ऽसृज्यन्त धाताधिपतिरासीन्नवभिरस्तुवत पितरो ऽसृज्यन्तादितिरधिपतिरासीदेकादशभिरस्तुवतार्तवा असृज्यन्त ऋतवो ऽधिपतय आसꣳस्त्रयोदशभिरस्तुवत मासा असृज्यन्त सꣳवत्सरो ऽधिपतिरासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रो ऽधिपतिरासीत्सप्तदशभिरस्तुवत ग्राम्याः पशवो ऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे ऽधिपत्नी आस्तामेकविꣳशत्यास्तुवतैकशफमसृज्यत वरुणो ऽधिपतिरासीत्त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवो ऽसृज्यन्त पूषाधिपतिरासीत्पञ्चविꣳशत्यास्तुवतारण्याः पशवो ऽसृज्यन्त वायुरधिपतिरासीत्सप्तविꣳशत्यास्तुवत वनस्पतयो ऽसृज्यन्त सोमो ऽधिपतिरासीन्नवविꣳशत्यास्तुवत द्यावापृथिवी व्यैताꣳ[3] वसवो रुद्रा अनुव्यायꣳस्त[4] उ एवाधिपतय आसन्नेकत्रिꣳशता-

1) P एकया। अस्तुवत। 2) So Hg, P सप्तर्षय इति सप्त ऋषय। 3) In den Mss ohne Accent (s VS 14, 30, Kap S 26, 4), P वि। ऐता। 4) M 3, W u B त्स

स्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपत्य आसंस्त्रयस्त्रिंशता-स्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ ६ ॥

Vgl 3, 2 10, TS 4, 3, 10 (sṛṣṭināmakā iṣṭakāḥ), Kāth 17, 5, Kap S 26, 4, VS 14, 28—31, Mān Çr 6, 2, 1

अग्ने जातान्प्रणुदा नः[1] सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमना अहेडञ्छर्मन्[2]स्ते स्याम त्रिवरूथा[3] उद्भौ[4] ॥
सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमानो वयं स्याम प्रणुदा नः[5] सपत्नान् ॥

चतुश्चत्वारिंशी स्तोमो वर्चो द्रविणं[6] षोडशी स्तोम ओजो द्रविणम् ॥

अग्नेः पुरीषमस्यप्सो[7] नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥

तया देवतयाङ्गिरस्वद् ध्रुवा सीदैवश्छन्दो वरिवश्छन्द आछच्छन्दो[8] मनश्छन्दः शंभूश्छन्दः परिभूश्छन्दः सिन्धुश्छन्दो व्यचश्छन्दः समुद्रं छन्दः सलिलं छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यं छन्दो ऽङ्कुपं[9] छन्दो ऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रूजश्छन्दः[10] पक्षश्छन्दः प्रछच्छन्दः[11] संयच्छन्दो[12] वियच्छन्दो[13] बृहच्छ-

1) P प्र । णुद । न । 2) P शर्मन् 3) P त्रिवरूथ इति त्रि वरूथे । 4) W उद्गौ, M 3 उत्तमु, P उद्भाविसुत् भौ । 5) P प्र । णुद । न । 6) W schiebt hier ein गायत्रीछन्दो रथंतर° 7) M 3 °स्वप्सो, vgl 2, 8 1 8) Die Mss आछंछन्दो, B आछम्छदो, P आछंदित्या छंत् । 9) P अङ्कुपं, B ङ्कुप 10) Kap S क्षुरो भ्रमश्छन्द, 11) Die Mss प्रछंछ°, P प्रछंदिति प्र छंत् । 12) P संयदिति सं यंत् ।, B सम्यत्छदो, die andern Mss संयंछ° 13) P वियदिति वि यंत् ।, M 3 वीयछं° die andern Mss वियंछ°,

न्दो[1] रथन्तरं छन्दो निकायं छन्दो वीवधं[2] छन्दो गिरश्छन्दो[3] भ्रंजश्छन्दः[4] संस्तुप्छन्दोऽनुष्टुप्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो[5] विशालं छन्दो विष्पर्धाश्छन्दश्छदिश्छन्दो[6] दूरोहणं[7] छन्दस्तन्द्रं छन्दोऽङ्काङ्कं[8] छन्दः ॥ ७ ॥

Vgl 3, 2, 10 — TS 4, 3, 12 (pañcamyām citau, asapatnādyā ishṭakāh), Kāṭh 17, 6, Kap 8 26, 5, VS 15, 1—5; Mān Çr 6 2, 2

रश्मिना क्षयाय क्षयं जिन्व प्रेत्या धर्मणे धर्मं[9] जिन्वान्वित्या दिवे दिवं जिन्व संधिनान्तरिक्षायान्तरिक्षं जिन्व प्रतिधिना पृथिव्यै पृथिवीं जिन्व विष्टम्भेन वृष्ट्यै वृष्टिं जिन्व प्रवायाह्ने[10] ऽहर्जिन्वानुवाय[11] रात्र्यै रात्रीं[12] जिन्वोशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेन रुद्रेभ्यो रुद्राञ्जिन्व सुदीतिनादित्येभ्य आदित्याञ्जिन्व तन्तुना प्रजाभ्यः प्रजा जिन्वौजसा पितृभ्यः पितॄञ्जिन्व[13] पृतनाषाहा पशुभ्यः पशूञ्जिन्व रेवतीरोषधीभ्य ओषधीर्जिन्वाभिजिता युक्तग्राव्णेन्द्रायेन्द्रं जिन्वाधिपतिना प्राणाय प्राणं जिन्व धरुणेनापानायापानं जिन्व संसर्पेण चक्षुषे चक्षुर्जिन्व वयोधसाधीतायाधीतं[14] जिन्व त्रिवृता त्रिवृते त्रिवृज्जिन्व प्रवृता प्रवृते प्रवृज्जिन्व संवृता संवृते संवृज्जिन्वानुवृतानुवृतेऽनुवृज्जिन्व[15] विरोहेण विरोहाय विरोहं जिन्व प्रो-

---

1) P बृहत् ।, M 3 u B बृहच्छ°, die andern Mss बृहच्छ° 2) P वीवध । विवधमिति वि वधं ।, B विवध । 3) So M 3 u W, P गिर । (s TS 4, 3, 12, 2; VS 15, 5), Hg गिरश्छ°, B गिरिश्छन्दो (= Kap 8 26, 5) 4) P भ्रंज । 5) P वय कृत्, B वयस्कृच्छन्दो, die andern Mss वयस्कृच्छ° 6) P विष्पर्धा । विष्पर्धेति वि स्पर्धा । 7) P दूरोहणमिति दूः रोहण । 8) P ककाककमित्यक्तो कक । (cod का), M 3 कंकाकक 9) So W, die andern Mss धर्म 10) P प्रवायेति प्र वाय । अह्ने । अह ।, Hg प्रवायाह्नि अह° 11) P अनुवायेत्यनु वाय । 12) P रात्रि । 13) Von पितृ° bis ओषधी° in B fehlend 14) W धीतं 15) So Hg W (u A), in M 3 °नुवृतानुवृते नुवृ°, desgl B, ohne Accent, B अनुवृता । अनुवृते । अनुवृत् ।, Kap 8 अनू°.

हेण प्ररोहाय प्ररोहं जिन्व संरोहेण संरोहाय संरोहं जिन्वानूरोहेणानूरोहायानूरोहं[1] जिन्व वसुकेन वसुकाय वसुकं जिन्व वैपश्रिया वैपश्रियै[2] वैपश्रीं जिन्व वंस्यष्ट्या वंस्यष्ट्यै वंस्यष्टिं जिन्वाक्रान्त्याक्रान्त्या[3] उत्क्रान्तिं जिन्वोत्क्रान्त्योत्क्रान्त्या[4] आक्रान्तिं जिन्व ॥ ८ ॥

Vgl 8, 3, 1 — TS 4, 4, 1 (pañcamacit-h çeshaḥ; stomabhāgākhyā iṣṭakāḥ); Kāth 17, 7; Kap S 26, 6, VS 15, 6 7 9; (Mān Çr 6, 2, 2)

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयो ऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्यां श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नोतु रथन्तरं साम प्रतिष्ठित्या[5] अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु विराडसि दक्षिणा दिग् रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्यां श्रयतु प्रउगमुक्थमव्यथायै स्तभ्नोतु बृहत्साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्यां श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नोतु वैरूपं साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे

1) B °नुरोहेणनुरोहायानुरोह, P अनु रोहेण। अनु रोहाय। अनु रोहं।, Kap S अनु° 2) So Hg (und vom Accent abgesehen, auch A), P वैपश्रियैति वैप श्रिया। वैपश्रिये। वैप श्रिय।, M 3 वैप श्रीया वैप श्रीये वैप श्री, desgl B, ohne Accent, W वैप श्रीया वैप श्रीये वैपश्री  P चाक्रान्त्या इत्या क्रान्त्यै।; B °क्रान्त्योत्क्रान्त्या 4) P उत् क्रान्त्यै। 5) P प्रतिष्ठित्यै। प्रतिस्थित्या इति प्रति स्थित्यै।

सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु स्वराडस्युदीची दिङ्[1] मरुतस्ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नोतु वैराजꣳ साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्वधिपत्न्यस्यूर्ध्वा दिग्विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयताꣳ वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नुताꣳ शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ ९ ॥

Vgl 3, 3, 1. — TS 4, 4, 2 (nâkasadâkhyâ sahṭakâh); Kâṭh 17, 8; Kap S. 26, 7; VS 15, 10—14; (Mân Çr. 6, 2, 2)

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथकृत्स्नश्च रथौजाश्च सेनानीग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना[2] हेती[3] रक्षाꣳसि प्रहेतिस्तेभ्यो नमो अस्तु ते नो मृडन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो ऽयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमो अस्तु ते नो मृडन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो ऽयं पश्चा[4] विदद्वसुस्तस्य रथप्रोतश्चासमरथश्च[5] सेनानीग्रामण्या आशोचन्ती च प्रशोचन्ती

1) B दिं॰ 2) P यातु-धानाः। 3) P हेतिः। 4) P पश्चात्। 5) P श्चासम रथः।

चाप्सरसौ' व्याघ्रा हेतिः' सर्पाः प्रहेतिस्तेभ्यो नमो अस्तु' ते नो मृडन्तु' ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो' ऽयमुत्तरात्संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ' विश्वाची च घृताची चाप्सरसा आपो हेतिर्वातः प्रहेतिस्तेभ्यो नमो अस्तु' ते नो मृडन्तु' ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो' ऽयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च[1] सेनानीग्रामण्या' उर्वशी च पूर्वचित्तिश्चाप्सरसा' अवस्फूर्जन्हेतिर्विद्युत्प्रहेतिस्तेभ्यो[2] नमो अस्तु' ते नो मृडन्तु' ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १० ॥

Vgl 3, 3, 1 — TS 4, 4, 3 (pañcacoḍâdaya ishtakâh), Kâṭh 17, 9, Kap S 26, 8, VS 15, 15—19, (Mân Çr 6, 2, 2)

प्राच्या त्वा दिशा सादयाम्यग्निना देवेन देवतया गायत्रेण छन्दसाग्नेः शिर[3] उपदधामि' गायत्रस्य छन्दसो ऽग्नेः शीर्ष्णाग्नेः शिर उपदधामि' दक्षिणया त्वा दिशा सादयामीन्द्रेण देवेन देवतया त्रैष्टुभेन छन्दसाग्नेः पक्षमुपदधामि' त्रैष्टुभस्य छन्दसो[4] ऽग्नेः पक्षेणाग्नेः पक्षमुपदधामि' प्रतीच्या त्वा दिशा सादयामि' विश्वेभिर्देवेभिर्देवतया जागतेन छन्दसाग्नेः पुच्छमुपदधामि' जागतस्य छन्दसो ऽग्नेः पुच्छेनाग्नेः पुच्छमुपदधाम्युदीच्या त्वा दिशा सादयामि' मित्रावरुणाभ्यां देवाभ्यां देवतयानुष्टुभेन छन्दसाग्नेः पक्षमुपदधाम्यानुष्टुभस्य छन्दसो ऽग्नेः पक्षेणाग्नेः पक्षमुपदधाम्यूर्ध्वया त्वा दिशा सादयामि' बृहस्पतिना देवेन

---

1) So B (ohne Accent), P तार्क्ष । चरिष्टनेमिरित्यरिष्ट नेमि 1, aber Hg तार्क्ष्यश्चारिष्टनेमिश्च, (A ebenso, vom Accent abgesehen), M 3 तार्क्ष्यश्चारिष्टनेमिश्च, W तार्क्ष्यश्चाष्टनेमिश्च, Kâṭh 17 9 तार्क्ष्यश्चारिष्टनेमिश्च 2) P अवस्फूर्जन्नित्यव-स्फूर्जन् । 3) P शिरः 1 4) Die letzten fünf Worte in B repetirt

देवतया पाङ्क्तेन छन्दसाग्नेः पृष्ठमुपदधामि पाङ्क्तस्य छन्दसो ऽग्नेः पृष्ठेनाग्नेः पृष्ठमुपदधामि ॥ ११ ॥

Vgl 3, 3, 2 — (Mân Çr. 6, 2, 2)

मधुश्च माधवश्च वासन्तिका[1] ऋतू[2] अग्नेरन्तःश्लेषो[3] ऽसि ॥
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥
ये अग्नयः समनसो ऽन्तरा द्यावापृथिवी ।
वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥

शुक्रश्च शुचिश्च ग्रैष्मा[4] ऋतू नभश्च नभस्यश्च वार्षिका[5] ऋतू इषश्चोर्जश्च शारदा[6] ऋतू सहश्च सहस्यश्च हैमन्तिका[7] ऋतू तपश्च तपस्यश्च शैशिरा[8] ऋतू अग्नेरन्तःश्लेषो[9] ऽसि ॥
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥
ये अग्नयः समनसो ऽन्तरा द्यावापृथिवी ।
शैशिरा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥ १२ ॥

Vgl. 3, 3, 3 — TS 4, 4, 11 (rtavyakhya ishtakah), Kâṭh 17, 10, Kap S 26, 9, VS 13, 25, 14, 6 15 16 27, 15, 57

पुरोवातसंनिरस्यभ्रसंनिरसि विद्युत्संनिरसि स्तनयित्नुसंनिरसि वृष्टिसंनिरस्यंवस्येयोन्यस्यंवस्मेर्मेयोन्यसि[10] वायोर्योन्यसि वायोर्वायोयोया-

1) P वासन्तिकौ । 2) P ऋतु । 3) So Hg u M 3, in W u B das अ nicht elidirt. 4) P ग्रैष्मौ । 5) P वार्षिकौ । 6) P शारदौ । 7) P हैमन्तिकौ । 8) P शैशिरौ । 9) So Hg u M 3, in W u B das अ nicht elidirt 10) So Hg, M 3, W (u A) in Uebereinstimmung mit TS 4, 4, 6, 2, in B ॰स्येयोन्यस्यसमेर्मेयोन्यसि;- P चर्वे. । योनी । असि । चर्वेरपेरित्स्यर्वः चर्वे ।

न्यसि[1] देवानाꣳ यान्यसि देवानां देवयान्यसि विश्वेषां देवानाꣳ यान्यसि विश्वेषां देवानां देवयान्यसि सꣳयान्यस्यन्तरिक्षसदस्यन्तरिक्षे सीदाम्बा च चुला च नितत्नी[2] च स्तनयन्ती चाभ्रयन्ती च मेघयन्ती च चुपुणीका सलिलाय त्वा मृदीकाय[3] त्वा सतीकाय त्वा केताय त्वा सुकेताय त्वा संकेताय त्वा विवस्वते त्वा दिवे त्वा ज्योतिष आदित्येभ्यस्त्वा ॥ १३ ॥

Vgl TS 4 4, 6 (viçvajyotiradya isbtakah) (Man Çr 6, 2, 2)

उदपुरा नामास्यन्नेन विष्टा[4] तां त्वा प्रैम्यात्मना पुरुषैर्गोभिरश्वैरायुषा वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण मनुष्यास्ते गोप्तारो ऽग्निरधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीदापराजिता नामासि ब्रह्मणा विष्टा तां त्वा प्रैम्यात्मना पुरुषैर्गोभिरश्वैरायुषा वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण मरुतस्ते गोप्तारो वायुरधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीदाधिद्यौर्नामास्यमृतेन[5] विष्टा तां त्वा प्रैम्यात्मना पुरुषैर्गोभिरश्वैरायुषा वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण विश्वे ते देवा गोप्तारः सूर्यो ऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद प्रजापतिष्ट्वा सादयतु पृथिव्याः पृष्ठे भूरसि भूमिरसि प्रथो ऽसि पृथिव्यस्यदितिरसि विश्वधाया[6] विश्वस्य भुवनस्य धर्त्री पृथिवीꣳ यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः पृथिव्या[7] मा पाहि विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्रायाग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन

---

1) So Hg M 3, W (u A) (s TS 4 4 6 2), m B वायोर्वायोर्यान्यसि, P वायोर्वायोरिति वायो वायो । 2) M 3 नीतत्नी, P नितत्नीति नि.तत्नी 3) W मृदीकाय 4) P विष्टा । विष्टेति वि स्ता । 5) P अधिद्यौरित्यधि द्यौ । 6) P विश्व धाया 7) P पृथिव्या ।

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ऽन्तरिक्षं यच्छान्तरिक्षं दृंहान्तरिक्षं मा हिंसीरन्तरिक्षान्मा पाहि विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीं रश्मीवतीमा[1] या दिवं भास्या पृथिवीमोर्वन्तरिक्षं दिवं यच्छ दिवं दृंह दिवं मा हिंसीर्दिवो मा पाहि विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन ॥

प्रोथदश्वो न यवसे ऽविष्यन्यदा महः संवरणाद्व्यस्थात्[4] ।
आदस्य वातो अनुवाति शोचिरध स्मा ते व्रजनं कृष्णमस्तु ॥

अपां त्वा सदने सादयामि समुद्रस्योद्मन्नवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे सहस्रस्य मासि सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्य संमासि सहस्रस्योन्मासि साहस्रो ऽसि सहस्राय त्वेमा मे अग्न इष्टका धेनवः सन्त्वेका च शतं च शतं च सहस्रं च सहस्रं चायुतं चायुतं च प्रयुतं च प्रयुतं चायुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणा[10] ऋतुष्ठाः स्थ ऋतावृधो घृतश्चुतो[11] मधुश्चुता[12] ऊर्जस्वतीः पयस्वतीः स्वधायिनीः कुलायिनीस्ता मे अग्ना

---

1) So M3 u. W, P रश्मीवती । रश्मिवंतीमिति रश्मि वंती ।, Hg रश्मिवंतीम॰, A रश्मि॰, B रश्मे॰ 2) P भासि । आ । 3) P आो । उरु । 4) P सवरणादिति सवं-रणात् । वि । अस्थात् ।, B ॰णाद्यस्थात् 5) B अ 6) P अवत । छायाया । 7) P चक्षे । 8) Die beiden letzten Worte fehlen in B 9) P च । अयुत । 10) P अ-क्षीयमाणा. । 11) W घृतश्चुतो, so auch Kap S 26, 9, P घृतश्चुत इति घृत श्चुत । 12) W मधुश्चुता, P मधुश्चुत इति मधु श्चुत ।, auch Kap S मधुश्चुत

इ॑ष्टका धे॒नव॑ः सन्तु[1] वि॒राजो॒ ना॑म का॑म॒दुघा॑ अ॒मुत्रा॒मुष्मिं॑-ल्लो॒के ॥१४॥

Vgl 3, 3, 4 — TS 4, 4, 5 (sayugadaya ishṭakâh) 3 (pancacodadaya ishṭakâh) 11 (ṛtavyâkhyâ ishṭakâh), 4, 4, 3, 3, Kâṭh 17, 10, Kap S 26, 9, VS 15, 62—65; (Mân Çr 6, 2, 2)

॥ इति मध्यमकाण्डे ऽष्टमः प्रपाठकः ॥

---

आ त्वा वहन्तु हरयः सुचेतसः[2] श्वेतैरश्वैरिह केतुमद्भिः[3] ।
वातजवैर्बलवद्भिर्मनोजवैरस्मिन्यज्ञे[4] मम हव्याय शर्वे ॥
देवानां च ऋषीणां चासुराणां च पूर्वजम् ।
महादेवं सहस्राक्षं शिवमावाहयाम्यहम् ॥
तत्पुरुषाय विद्महे[5] महादेवाय धीमहि ।
तन्नो[6] रुद्रः प्रचोदयात्[7] ॥
तन्गाङ्गौच्याय[8] विद्महे[9] गिरिसुताय धीमहि ।
तन्नो गौरी प्रचोदयात् ॥
तत्कुमाराय विद्महे कार्त्तिकेयाय धीमहि ।
तन्नः स्कन्दः प्रचोदयात् ॥
तत्कराटाय विद्महे हस्तिमुखाय[10] धीमहि ।

---

1) B धेनवो (ohne सन्तु) 2) P सु चेतस ।, danach vielleicht zu corrigiren 3) So die Mss, auch P 4) P नय पंज्ञि, aber Hg u M 3 वसयज्ञि॰, in W Lücke, (über A s Vorr) 5) M 3 विधमहे s aber auch T Âr 10, 1, 5 6 6) P तत् । म । 7) P प्र । चोदयात् । 8) So schreibe ich im Anschluss an P तत् । गाङ्गौच्याय ।, vgl गाङ्ग als Beiwort Skanda s In Hg u M 3 तन्नो गौच्याय, in W Lücke von diesem Cap an (über Accent in A s Vorr) 9) M 3 विधमहे 10) Hg हस्तीमुखाय, (ebenso A, vom Accent abgesehen)

तन्नो दन्ती प्रचोदयात् ॥
तच्चतुर्मुखाय विद्महे पद्मासनाय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ॥
तत्केशवाय[1] विद्महे नारायणाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥
तद्भास्कराय विद्महे प्रभाकराय धीमहि ।
तन्नो भानुः प्रचोदयात् ॥
तत्सोमराजाय विद्महे महाराजाय धीमहि ।
तन्नश्चन्द्रः प्रचोदयात् ॥
तज्ज्वलनाय[2] विद्महे वैश्वानराय धीमहि ।
तन्नो वह्निः प्रचोदयात् ॥
तत्त्यजपाय[3] विद्महे महाजपाय धीमहि ।
तन्नो ध्यानः प्रचोदयात् ॥
तत्परमात्माय विद्महे वैनतेयाय धीमहि ।
तन्नः सृष्टिः प्रचोदयात् ॥ १ ॥

Vgl Kâth 17, 11, T Âr 10, 1, 5 flg , Man Çr 11, 5 (rudrajapa, ein pariçishṭa)

नमस्ते रुद्र मन्यव उतो त[4] इषवे नमः ।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥
या ते रुद्र शिवा तनूरघोरापापकाशिनी[5] ।
तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशीहि[6] ॥

---

1) So betonen Hg u M 3, in W Lücke, P केशवायेति केश.वाय । 2) P ज्वल-नाय । 3) Die Mss schreiben alle तत्यजपाय, P त्यजपायेति त्यं जपाय । 4) P उतो इत्युतो । ते । 5) So betone ich im Anschluss an den P, अघोरा । अपापका शिनीत्यपाप काशिनी ।, dagegen Hg und M 3 betonen °रघोरापापकाशिनी, in W Lücke, cf TS 4, 5 1, 1 6) P गिरिशन्तेति गिरि शन्ता ।

यामिषुं गिरिशन्त[1] हस्ते बिभर्ष्यस्तवे।
शिवां गिरिश तां कुरु मा हिंसीः पुरुषं जगत् ॥
शिवेन वचसा त्वा गिरिशाच्छा[2] वदामसि।
यथा नः सर्वो इज्जनः सगमे सुमना असत् ॥
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्।
अहींश्च[3] सर्वाञ्जम्भयन्सर्वाश्च[4] यातुधान्यो ऽधराचीः परासुव[5] ॥
असौ यस्ताम्रो अरुणं उत बभ्रुः सुमङ्गलः।
ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशो ऽवैषां[8] हेड ईमहे ॥
असौ यो[7] ऽवसर्पति नीलग्रीवो विलोहितः।
उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः[9] ॥
उतैनं विश्वा भूतानि स दृष्टो मृडयातु नः ॥
नमो नीलकपर्दाय सहस्राक्षाय मीढुषे।
अथो ये अस्य सत्वान इदं तेभ्यो ऽकरं[10] नमः ॥
नमस्त आयुधायानातताय[11] धृष्णवे।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम्।
याश्च ते हस्त[12] इषवः परा ता[13] भगवो वप ॥

---

1) P गिरिशन्तेति गिरिशन्त। 2) P गिरिशा। अच्छ। वदामसि। 3) Hg अहींश्च cf TS 4) B सर्वांश्च M 3 सर्वाश्च 5) M 3 u B ॰सुव 6) P चैव। एषा। 7) In den Mss ohne Accent TS u VS यो 8) M 3 u B अदृश्रन्न्॰ Kap S अदृश्रन्॰ 9) P अदृश्रन्। उत। एनम्। उदहार्यः इत्युद् हार्यः। aber Hg u M 3 ॰हार्य 10) P अकर। 11) P ते। आयुधाय। अनाततायः। 12) P हस्ते। 13) P ताः।

अवतत्य धनुष्ट्वं संहस्राक्ष[1] शतेषुधे।
प्रशीर्य शल्यानां मुखं शिवो नः सुमना भव॥
विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ[2] उत।
अनेशन्नस्य[3] या इषव आभुरस्य[4] निषङ्गधिः[5]॥
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः।
अथो य इषुधिस्तवारे अस्मिन्निधेहि[6] तम्॥
या ते हेतिर्मीढुष्टम शिवं बभूव ते धनुः।
तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज॥ २॥

Vgl TS 4, 5, 1 (rudrâdhyâye citjâgnâu homah, bhagavato rudrasya yâ pradhanabhûtâ hetir dhanuh tanuh ishur dhanorhastâu tam (!) bahudhâ prasâdya), Kâṭh 17, 11, Kap S 27, 1, VS 16, 1—14, (Man Çr 6, 2, 4)

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो'नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो'नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो'नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो'नमो बभ्लुशाय[7] व्याधिने[8]ऽन्नस्य पतये नमो'नमो रुद्रायाततायिने क्षेत्रस्य पतये नमो'नमो भवस्य हेत्यै जगतस्पतये नमो'नमः सूतायाहन्त्याय वनानां पतये नमो'नमो रोहिताय स्थपतये वृक्षाणां पतये नमो'नमो मन्त्रिणे वाणिजाय'कक्षाणां पतये नमो'नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो'नमः सहमानाय निव्याधिन'आ-

———

1) P सहस्राक्षेति सहस्र अक्ष। 2) P बाणवानिति बाण वान्।, B बाणवा॰ 3) P अनेशन्। 4) P आभु।, A आभुर॰, so TS 4, 5, 1, 4, Kap S 27, 1, aber Kaṭh 17, 11 आभूर॰ 5) So Hg (nur ohne Visarga), (cf TS 4, 5, 1, 4, Kâṭh 17, 11, ohne Accent), desgl B (u A) vom Accent abgesehen, P निषङ्गधिरिति निषङ्ग धिः।, M 3 निषंगधि, s VS 16, 10 6) So Hg, (A अस्मिन्नि॰), M 3 अस्मि नि॰, in B अस्मन्नि॰, P अस्मे।, Kap S अस्मिन्नि॰, desgl Kâṭh, ohne Accent 7) M 3 बभ्रुशाय 8) P नि व्याधिने।

व्याधिनीनां पतये नमो नम आक्रन्दयत[1] उच्चैर्घोषाय[2] सत्वानां[3] पतये नमो नमः कृत्स्नवीताय धावते पत्तीनां[4] पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां[5] पतये नमो नमो निचेरवे परिचरायारण्यानां[6] पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमः सृगायिभ्यो[7] जिघांसद्भ्यो मुष्णतां पतये नमो नमो ऽसिमद्भ्यो[8] नक्तं चरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां[9] पतये नमो नमः ॥ ३ ॥

Vgl. TS 4, 5, 3 u. 3 (ubhayatonamaskārāṇi yajūṃshi); Kāth. 17, 12; Kap S 27, 2; VS 16, 17—22.

नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नम इषुमद्भ्यो[10] धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमो ऽस्यद्भ्यो[11] विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य[12] आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो ऽश्वेभ्यो ऽश्वपतिभ्यश्च वो नमो नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमः कृत्सुभ्यः[13] कृत्सुपतिभ्यश्च[14] वो नमो नमो विरूपेभ्यो

1) P आ क्रंदयते। 2) M 3 उच्चैर्घोषाय 3) So die Mss; Kāth 17, 2 सत्वानाम्पतये 4) Hg u P wohl पत्तीनां 5) P स्तायूना। 6) P चरण्यानां। 7) So Hg; P सृगायिभ्य इति सृगायि-भ्यः।, (A सृगायिभ्यो); M 3 सृगायद्भ्यो; B सृगायुभ्यो; in Kap. S सृगायुभ्यो; Kāth सृकायिभ्यो, s auch VS 16, 21 8) P असिमद्भ्य इत्यसिमत्-भ्यः। 9) M 3 u P कुलंचानां, (wie auch Kāth 17, 13). 10) P इषुमद्भ्य इतीषुमत्-भ्यः। 11) P अस्यद्भ्य इत्यस्यत् भ्यः। 12) P शयानेभ्यः। 13) P कृत्सेभ्यः। 14) P कृत्सूपतिभ्य इति कृत्सु-पतिभ्यः।

विश्वरूपेभ्यश्च वो नमो नमः सेनाभ्यः सेनानीभ्यश्च वो नमो नमो रथिभ्यो वरूथिभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो बृहद्भ्यो ऽर्भकेभ्यश्च[1] वो नमो नमो युवभ्य[2] आशीनेभ्यश्च[3] वो नमो नमः ॥ ४ ॥

Vgl. TS 4, 5, 3 u. 4 (ubhayatonamaskārāṇi yajūṃṣi); Kāṭh. 17, 13; Kap. S. 27, 3 VS 16, 22—26; (Mān. Çr. 6, 2, 4.)

नमो ब्राह्मणेभ्यो राजन्येभ्यश्च वो नमो नमः सूतेभ्यो विश्येभ्यश्च[4] वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्टेभ्यश्च[5] वो नमो नमः श्वनीभ्यो[6] मृगयुभ्यश्च[7] वो नमो नमः श्वभ्यः श्वपतिभ्यश्च[8] वो नमो नमो भवाय च शर्वाय च नमो रुद्राय च पशुपतये च नमो व्युप्तकेशाय[9] च कपर्दिने च नमो नीलग्रीवाय च शितिकण्ठाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टराय चेषुमते[10] च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सुवृध्वने[11] च नमो ऽग्रियाय[12] च प्रथमाय च नम आशवे चाजिराय च नमः शीभ्याय च शीघ्र्याय च नम ऊर्म्याय चावस्वन्याय[13] च नमो द्वीप्याय च स्रोतस्याय च ॥ ५ ॥

Vgl. TS 4, 5, 4 (s. oben) u. 5 (anyataratonamaskārāṇi yajūṃṣi); Kāṭh. 17, 13 u. 14; Kap. S. 27, 3 u. 4; VS 16, 17—31.

---

1) M 3 अर्भकेभ्य॰ 2) P युवभ्यः । 3) So Hg; M 3 आशीनेभ्य॰; (A आशीनेभ्य॰); B आसीनेभ्य॰, P आसिनेभ्यः ।; vgl. आशिने in RV 1, 27, 13; im Kāṭh. आसिनेभ्य॰ 4) P विश्येभ्यः । 5) So M 3, P पुञ्जिष्टेभ्यः ।, Hg पुञ्जिष्टेभ्यश्च 6) So Hg (u. A); desgl. Kāṭh., ohne Accent; P श्वनीभ्य इति श्व-नीभ्यः ।, B श्वनीभ्यो; M 3 श्विनीभ्यो 7) So B, (ohne Accent); P मृग.युभ्यः । Hg मृगयिभ्यश्च; (A मृगयिभ्यश्च); M 3 मृगयेभ्यश्च; Kap. S. 27, 3 मृगयिभ्यश्च; Kāṭh. 17, 13 मृगयुभ्यश्च 8) Hg श्वभ्यः श्वपतिभ्यश्च 9) So, betonen M 3 u. P, u. Hg नमो व्युप्तकेशाय 10) M 3 चेषुधिमते 11) So Hg; in P सुवृद्ध्वन इति सु-वृद्ध्वने ।, M 3 सुवर्द्धने oder सुवर्द्धने, B सुवृधने Kāṭh. 17, 14 सुवृद्धने; Kap. S. 27, 4 सुवृदिने 12) P ग्रियाय । 13) P अव स्वन्याय ।

नम आशुषेणाय चाशुरथाय च नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः शूराय चावभिन्दते[1] च नमः श्रुताय च श्रुतसेनाय च नमो ज्यायसे च कनीयसे च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय[2] च नमो जघन्याय[3] च बुध्न्याय[4] च नमः सोभ्याय च प्रतिसर्याय[5] च नमो याम्याय च क्षेम्याय च नमोऽवसान्याय च श्लोक्याय च नम उर्वर्याय[6] च खल्याय च नमो वन्याय[7] च कक्ष्याय[8] च नमः श्रवाय च प्रतिश्रवाय च नमः पथ्याय च स्रुत्याय[9] च नमो नाद्याय[10] च वैशन्ताय[11] च नमो नीप्याय च भिद्याय च नमोऽवट्याय[12] च कूप्याय च नमः सूद्याय च सरस्याय च ॥ ६ ॥

Vgl TS 4 5 6 u 7 (anyataratonamaskāram yajumshu) Kath 17 14 15 Kap S 27, 4 u 5 VS 16, 32—35

नमो दुन्दुभ्ये चाहननीयाय[13] च नमो धृष्णवे च प्रमृशाय[14] च नमो निषङ्गिणे चेषुधिमते च नमस्तिग्मेषवे चायुधिने[15] च नमः स्वायुधाय च सुधन्वने च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय[16] च नमो वीध्रियाय[17] चातप्याय[18] च नमो वात्याय[19]

---

1) P भव भिंदते। 2) P अप गल्भाय। M 3 °गल्भ्याय 3) So Hg u M 3 in P जघन्याय। so auch Kap S 4) So P (= Kap S) cf oben 2 7 15 a A (wo Hg बु बु ! est) Hg u M 3 बुध्नाय s TS 4 5 6 1 5) M 3 प्रतिसराय 6) So P in M 3 उर्वर्याय Hg उर्वर्याय 7) So P (cf TS 4 5 6 1) in Hg वन्याय, M 3 वन्याय 8) So M 3 auch B ohne Accent Hg u P कयाय 9) M 3 स्रुत्याय desgl Kap S 27 5 Kath 17 15 सुत्याय 10) So Hg (s TS) M 3 नाद्याय P नाद्याय। 11) So B (ohne Accent) u P (s TS 4 5 7 1) Kath 17 15 Hg u M 3 वैशन्त्याय desgl Kap S 27 5. 12) So corrig et P चावट्याय। M3 वट्याय Hg वट्याय 13) P च। आहननीयाय। 14) M3 प्रमृशाय 15) P चायुधिने। 16) P चवर्ष्याय। 17) So Hg in M 3 वीध्रीयाय (A वीध्रियाय) P वीध्र्यायेति वि ईध्र्याय। Kath वीध्र्याय) B वीध्र्याय vgl Kap S 27 5 वीध्रियाय 18) P चातप्यायेत्या तप्याय। 19) M 3 वाताय

च रेष्मण्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शंगवे च पशुपतये च नम उग्राय च भीमाय च नमो ऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ७ ॥

Vgl TS 4, 5, 7 u 8 (anyataratonamaskārām yajūṃshi), Kāṭh 17, 15; Kap S 27, 4 u 5, VS 16, 35—41

नमः शिखण्डिने च पुलस्तिने च नमः किंशिलाय च क्षेण्याय च नम इरिण्याय च प्रपथ्याय च नमो गुह्याय च गोष्ठ्याय च नमो गेह्याय च तल्प्याय च नमः कूल्याय च तीर्थ्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमः प्रवाह्याय च सिकत्याय च नमः फेन्याय[10] च शष्प्याय[11] च नमो नीवेष्याय[12] च ह्रद्याय[13] च नमः काट्याय च गह्वरेष्ठाय[14] च नमः शुष्याय[15] च हरित्याय च नमः पांसव्याय च रजस्याय[16] च नमो लोप्याय चोल-

---

1) So M 3 u P, in Hg वास्तव्याय 2) In B fehlend 3) In B fehlend 4) So P (s TS u Kāṭh), Hg इरिण्याय, desgl A u B (ohne Accent), ebenso Kap S 27, 5, M 3 ईरिण्याय 5) So auch Kap S, P गुह्याय। 6) B कुल्याय, desgl. Kap S 27, 5, Kāṭh 17, 15 7) So in M 3 u P betont, auch Kap S, in Hg पार्याय 8) So auch Kap S, aber P अवार्याय! 9) So M 3 u P, in Hg प्रवाह्याय 10) M 3 फेन्याय 11) So corrigirt, da die Mss schwanken (so auch Kaṭh 17, 15, ohne Accent), Hg u A शंष्याय, M 3 u B गुष्याय, P शुंष्याय !, Kap S 27,5 शंक्याय, vgl aber TS 4, 5, 8, 2, VS 16, 42, Kaṭh 17, 15 12) So Hg u M 3, (in A नीवेष्याय), P निवेष्ठाय।, B निवेष्टयाय, Kap S निवेष्याय, Kaṭh निवेष्प्याय 13) P ह्रद्याय। 14) So die Mss, nur P गह्वरेष्ठाय। गह्वरेष्ठायेति गह्वरे स्थाय।, Kap S गह्वरेष्ठाय 15) So Hg, P (u A, vom Accent abgesehen), ebenso Kap S 27 5, M 3 u B शुंष्याय, cf TS 4, 5, 9, 1 u VS 16, 45 शुष्क्याय (desgl Kāṭh, ohne Accent), wonach wohl zu corrigiren 16) P चरजस्याय। (sic!)

पाय च नमा ऊर्म्याय[1] च सूर्म्याय[2] च नमः पर्णाय[3] च पर्णशदाय[4] च नमो ऽपगुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम आखिदाय च प्रखिदाय च ॥ ८ ॥

Vgl TS 4 5 8 u 9 (anyatarato namaskâram yajumshi), Kâṭh 17, 15, Kap 27 5, VS 16, 42—46

नमो गिरिकेभ्यो देवानां हृदयेभ्यो नमो विचिन्वत्केभ्यो[5] नम आक्षिणकेभ्यो[6] नम आनिर्हतेभ्यः[7] ॥

द्रापे अन्धसस्पते दरिद्र नीललोहित ।
एषां पशूनामासां प्रजानां मा भेर्मा रुङ् मो च नः किं चनाममत्[8] ॥
इमा[9] रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥
या ते रुद्र शिवा तनूः शिवा विश्वाह[10] भेषजी ।
शिवा रुतस्य[11] भेषजी तया नो मृड जीवसे ॥
परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥
मीढुष्टम शिवतम[12] शिवो न एधि सुमना भव ।

---

1) So Hg M 3 (u A) auch P ऊर्म्याय nur B चोर्म्याय, was vielleicht aber doch vorzuziehen ist (s auch TS 4 5, 9 1, Kath 17 15, VS 16, 45) Kap S चौ-र्म्याय 2) P सूर्म्यायेति सु ऊर्म्याय । 3) Hg पर्णाय 4) M 3 पर्णशादाय, P पर्णशादायेति पर्ण शादाय । 5) Die Mss schwanken B विचिन्वत्केभ्यो (so auch Kath 17, 16), P विचिन्वत्केभ्य इति वि चिन्वत्केभ्य । M 3 वीचिन्वत्कृभ्यो, Hg विचि न्वत्कृभ्यो Kap S विविचिन्वत्केभ्यो 6) So Hg (auch A abgesehen vom Accent) P आक्षिणकेभ्य इत्या क्षिणकेभ्य । M3 आक्षिणकेभ्यो, B आक्षणकेभ्यो, Kath विक्षीणकेभ्यो 7) P आनिर्हतेभ्य इत्यानि । हतेभ्य (s die verwandten Saṃhitâs, auch Kaṭh आनिर्हतेभ्य । 8) P मो । इक । मो इति मो । च । न । कि । चन । आममत् । 9) P इमा । 10) P विश्वाहा । 11) B रुद्रस्य 12) M 3 मीढुष्टम शिवतम

अवतत्य धनुष्ट्वमक्रुद्धः सुमना भव ।
पिनाकं बिभ्रदागहि कृत्ति॰[1] वसाना[2] उच्चर ॥
व्यंकृड[3] विलोहित नमस्ते अस्तु भगवः ।
यास्ते सहस्र॰ हेतयो ऽन्या॰स्ते[4] असंचिवपन्तु[5] ताः ॥
सहस्राणि सहस्रशो हेतयस्तव बाह्वोः ।
तासामीशानो मघवन्पराचीना मुखा कृधि ॥
असंख्याता सहस्राणि ये रुद्रा[6] अधि भूम्याम् ।
तेषा॰ सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये अस्मिन्महत्यर्णवे[7] अन्तरिक्षे भवा[8] अधि ।
तेषा॰ सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये नीलग्रीवाः शितिकण्ठा दिव॰ रुद्रा उपश्रिताः[9] ।
तेषा॰ सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये नीलग्रीवाः शितिकण्ठाः शर्वा[10] अधः क्षमाचराः ।
तेषा॰ सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये वृक्षेषु[11] शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषा॰ सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये भूतानामधिपतयो विशिखासः[12] कपर्दिनः ।
तेषा॰ सहस्रयोजने ऽव धन्वानि तन्मसि ॥

---

1) So Hg (u A), auch P कृत्ति ।, M 3 कृत्य, B कृधि॰ 2) P वसान । 3) So Hg, nur ohne Accent, (auch A व्यकृड), B विकिरिद्रिति वि किरिद्र । व्यकुडेति वि यकृड ।, M 3 वीकृड, B विकिरिद, Kap B किरिद्र, Kath विकिरिद 4) P अन्यान् । ते । 5) P वपिान ।, Kath 17, B ऽन्ये अस्मिन्निवपन्तु ता 6) P रुद्रा । 7) So corrigirt, Hg u M 3 erg ॰र्णवे 8) P भवा । 9) P रुद्रा । अधि श्रिता इत्यधि श्रिता । 10) P शर्वा 11) B वृक्षे 12) P विशिखास इति वि शिखासः ।, Hg विशिखास

ये पथां पथिरक्षय[1] ऐलमृदा[2] यो युधः[3] ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये तीर्थानि प्रचरन्ति सृगवन्तो[4] निषङ्गिणः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये अन्नेषु[5] विविध्यन्ति पात्रेषु पिबतो जनान्[6] ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितस्थिरे ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥

नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो[7] दश प्राचीर्दश दक्षिणा[8] दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो नमो अस्तु रुद्रेभ्यो ये अन्तरिक्षे येषां वाता[9] इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ९ ॥

Vgl. TS 4, 5, 9 a [illegible] (s. oben) u. 10 (ṛgrūpāḥ keeīn mantrāḥ), Kāṭh 17, 16,, Kap S 27, 6, VS 16, 46—66, (Mān Çr 6, 2, 4)

---

1) P पथि रक्षय ।, M 3 bloss °रक्ष 2) P ऐलमृदा ।, M 3 ऐलमृधा, Kap S 27,6 ऐलमृदा यवंध. Kāṭh ऐडमृदा 3) P आयोयुध ऐत्याव. युध ।, Kāṭh यव्युध oder यव्यध 4) So Hg, (auch A, vom Accent abgesehen), M 3 सृवंवन्तो, P सृगावंत इति सृगा वंत ।, B सृकवन्तो, Kap S सृकावन्तो desgl Kāṭh, ohne Accent 5) M 3 ये न्नेषु 6) M 3 जनास् 7) So A, Hg वर्षमि°, M 3 वरिषमि°, [illegible] वर्ष । इषव । 8) P दक्षिणाः । 9) P वाता ।

अघोरेभ्यो अथ घोरेभ्यो अघोरघोरतरेभ्यश्च[1]।
सर्वतः[2] शर्वशर्वेभ्यो[3] नमस्ते रुद्र रूपेभ्यो नमः ॥
यः पथः समनुयाति स्वर्गं लोकं गामिव सुप्रणीती[4]।
तेन त्वं भगवान्याहि[5] पथा[6] ॥
इमे हिरण्यवर्णाः स्वं[7] योनिमाविशन्ती ॥

गच्छ त्वं भगवान्पुनरागमनाय[8] पुनर्दर्शनाय[9] सहदेव्याय सहवृषाय सहगणाय सहपार्षदाय[10] यथाहुताय नमोनमाय[11] नमःशिवाय[12] नमस्ते अस्तु मा मा हिंसीः ॥ आवाहितमावाहित नमस्कृत नमस्कृत विसर्जित विसर्जित पथं गच्छ पथं गच्छ दिवं गच्छ दिवं गच्छ स्वर्गच्छ स्वर्गच्छ ज्योतिर्गच्छ ज्योतिर्गच्छ नमस्ते अस्तु मा मा हिंसीः ॥ १० ॥

Vgl. (TA 10, 19)

॥ इति मध्यमकाण्डे नवमः प्रपाठकः ॥

---

1) So M 3, in Hg अघोरघोरतरेभ्यश्च, P अघोरघोरतरेभ्य इत्यघोरघोर तरेभ्य । 2) Hg u P शर्वत 3) P शर्वशर्वेभ्य इति शर्व शर्वेभ्य । 4) P सुप्रणीतावित सु प्रणीतौ । 5) P भगवानिति भग वान् । याहि । Hg u M 3 betonen याहि 6) In den Mss hier keine Trennungsstriche 7) So die Mss 8) So betone ich nach Analogie des folgenden Wortes, Hg पुनरागमनाय, P पुन । आगमनायेत्या गमनाय ।, M 3 पुनरागमनाय 9) P दर्शनाय 10) So gemäss P सह पार्षदाय ।, Hg सहपार्षदाय, M 3 सह पारिषदाय 11) P नमोनमायेति नम नमाय । 12) So die Mss (Hg u M 3), aber P नम । शिवाय ।

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो
ऽधि[1] संभृताम् ।
तां न[2] इषमूर्जं धत्त मरुतः सꣳरराणा[3] अश्मꣳस्ते[4] क्षुन्मयि[5]
त ऊर्ग्यं द्विष्मस्तं ते शुगृच्छतु ॥
समुद्रस्य त्वावकयाग्ने[6] परिव्ययामसि ।
पावको अस्मभ्यꣳ शिवो भव ॥
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि ।
पावको अस्मभ्यꣳ शिवो भव ॥
उप ज्मन्नुप[7] वेतसे ऽवतरं[8] नदीष्वा ।
अग्ने पित्तमपामसि मण्डूकि ताभिरागहि ।
सेमं[9] नो यज्ञं पावकवर्णꣳ शिवं कृधि ॥
अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥
स नः पावक दीदिवः ॥
पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच[10] उषसो न केतुना ।
आ यो घृणे[11] न ततृषाणो अजरस्तूर्वन्[12] यामन्नेतशस्य[13] नू रणे ॥

1) B अधि  2) P तां । नः ।  3) So in den Mss  desgl in Kap S [illegible] 1  Das Richtige wäre aber, hier die Trennungsstriche zu setzen (सꣳरराणाः ॥) da der Vers hier zu Ende. Vgl auch VS 17, 1, TS 4 6, 1 1  4) [illegible] अश्मन् ।  5) P क्षुत् ।  6) P त्वा । अवकया । अग्ने ।  7) So B (ohne Accent) in Hg उप ज्मनुप वेतसे, (desgl A vom Accent abgesehen), M 3 उप ज्मन्नुप वेतसे, P उप । ज्मन् । उप । वेतसे ।  8) Desgl Kāṭh 17 17, Kap S 28, 1 und VS 17 6, aber P अवतरं । (cf. TS 4, 6, 1, 2)  9) P सः । इमं ।  10) P रुरुचे ।  11) So nur P, die Saṃhita-Mss घृणे, desgl Kap [illegible] 28, 1 Kāṭh घृणे vgl TS 4 6 1 2, VS 17 10  12) So M 3, (s TS u VS), P अजरः । तूर्वन् । in Hg u A अजरस्तूर्वन्ने desgl [illegible] ohne Accent, diese Lesart vielleicht berechtigt vgl तूर्वति Dhatup 15 59 „verletzen beschädigen",  13) So M 3 (desgl Kaṭh), P यामन् । in Hg u [illegible] (ohne Accent) यामन्नेतशस्य, Kap S 28 1 तुरो न यामन्नेतशस्य Kāṭh 17 17 तुरो न यामन्नेतशस्य

नमस्ते हरसे शोचिषे चाथो ते अर्चिषे नमः ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥

द्रुषदे वण्[1] नृषदे वडप्सुषदे वड्[2] बर्हिषदे वड्[3] वनसदे[4] वट् स्व-र्विदे वट् ॥

अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र[6] दातारं तारिष[7] ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥
ये देवा देवानां यज्ञिया यज्ञियानां संवत्सरीयमुप भागमासते ।
अहुतादो[8] हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥
ये देवा देवेभ्यो अधि देवत्वमायन्ये ब्रह्मणः पुरएतारो[9] अस्य ।
येभ्यो न ऋते[10] पवते धाम किं चन न ते[11] दिवो न पृथिव्या[12] अधि स्नुषु ॥
प्राणदा अपानदा व्यानदा[13] वर्चोदा वरिवोदाः ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥ १ ॥

vgl 3 3,5 6 — TS 4,6,1 (agnisamskrtih, parishecanavikarshanadayah), Kath 17,17, Kap S 28,1, VS 17, 1 4—15, Mān Çr 6 2, 4

अग्निस्तिग्मेन शोचिषा यासद्विश्वं[14] न्यत्रिणम्[15] ।
अग्निर्नो वनते रयिम् ॥

---

1) P वट् । 2) B वेड्० 3) B वेट् 4) Die Mss schwanken, Hg वनर्षदे, B वनर्षिपदे, M 3 वन० रीषदे, P वनसद् इति वन सदे । 5) B ब्रह्म 6) P प्रेति प्र प्र । 7) So schreibe ich, die Mss schwanken M 3 तारिष B तारिष, Hg तार्षी, P तार्ष ।, cf TS 4 2 3 1, VS 11 83 8) आहुताद इत्याहुत अद । 9) P पुर एतार । 10) P न । ऋते । Hg न ऋते, desgl B ohne Accent, M 3 न ऋते Kap S 28 1 न ऋते, desgl VS 17, 14, in Kath 17 17 नर्ते 11) P bloss किं । च । न । ते । 12) P पृथिव्या । 13) In B fehlt dies Wort 14) B श्वा 15) P विश्व । नि । अत्रिणं ।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवरां[1] आविवेश ॥
किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी नि-
ष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु[2] तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥
किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत्[3] ।
यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना[4] विश्वचक्षाः ।
यो विश्वचक्षुरुत[5] विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यामधमत्सं पतत्रैर्द्यावाभूमी जनयन्देव[6] एकः ॥
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्म-
न्नुतेमा ।
शिक्षा सखिभ्यो हविषा स्वधावः स्वयं यजस्व तन्वं
जुषाणः ॥
विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम्[7] ।
तस्मै विशः समनमन्त[8] दैवीरयमुग्रो विहव्यो यथासत् ॥
विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥
वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्या हुवेम ।
स नो नेदिष्ठा हवना जुजोष विश्वशंभूरवसे साधुकर्मा ॥ २ ॥

Vgl 3,3 7 — TS 4 6 1 a F u 2 (vaiçvakarmapahomah), Kāth 18, 1 2, Kap [illegible] 28, 2; VS 17, 16—23, (Man Çr 6, 2 5)

1) P संवराण् । 2) P पृच्छत । रत् । च रतु । 3) P कथा । आसीत् । 4) P और्णोत् ।, M 3 °मूर्णोत्, desgl Kap S 28 2 5) So Hg u M 3, P विश्वचक्षुरिति चक्षुः चक्षु ।, B विश्वतश्चक्षुरुत so auch Kap S 28 2 6) P देवः । 7) Die Mss schwanken, P अवध्यं । M 3 °रवध्यंन्, Hg °रवंध्यन्, desgl B, ohne Accent, Kap S °रवध्यं 8) B °मन्त 9) B दैवीर°

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने[1]।
यदेदन्ता अददृहन्त पूर्वा[2] आदिद् द्यावापृथिवी अप्रथेताम्॥
विश्वकर्मा विमने यो विहाया[4] धाता विधाता परमोत संदृक्।
तेषामिष्टानि समिषा मदन्ति यत्रा[5] सप्तऋषीन्पर[6] एकमाहुः।
त आयजन्त द्रविणा समस्मिन्नृषयः[7] पूर्वे जरितारो न भूना।
असूर्ता सूर्ते[8] रजसि निषत्ता ये भूतानि समकृण्वन्निमानि॥
यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान[9]।
यो देवानां नामधा एक एव तं संप्रश्नं[10] भुवना यन्त्यन्या॥
परो दिवः पर एना पृथिव्याः परो देवेभ्यो असुरं यदस्ति।
कं[11] स्विद्गर्भं प्रथमं दध्र[12] आपो यत्र देवाः समगच्छन्त सर्वे।
तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे।
अजस्य नाभा अध्येकमर्पितं यस्मिन्विश्वा भुवनाधि तस्थुः॥
विश्वकर्मा चेदजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधुः पुरुत्रा॥

1) P घृत । एने इति एने । अजनत् । नम्नमाने इति नम्नमाने। 2) P यदा। इत्। अन्ता। 3) P पूर्वे। 4) P विहाया इति वि हाया। 5) P यत्र। 6) P परः। 7) So Hg u. M 3, P सं। अस्मिन्। B समस्मा चाषय (s. RV 10, 82, 4) 8) So die Mss., (desgl. Kath 18, 1, ohne Accent) auch P असूर्ता। सूर्ते। Kap S 28, 2 असूर्ता सूर्ते 9) So betont M 3, in Hg अभ्यासज्ज ohne Accent, P अभ्यासदित्यभि आ सत्।, vgl TS 4, 6, 2, 1. In Kap S अभ्यासभिजजाय 10) M 3 सप्रश्नं, Kap S सपृष्ट्वं 11) So M 3, auch Hg eigentlich कं॰, dann aber in कि॰ corrigirt, die andern Mss., auch P lesen कि॰, desgl. Kap S 28, 2, so urspr. auch in Kath 18, 1 geschrieben, dann in क॰ corrigirt), (s. RV 10, 82, 5) 12) P दध्रे।

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति[1] ॥ ३ ॥

Vgl TS 4, 6, 2 (vâiçvakarmaṇahomaḥ); Kâth. 18, 2 u 1; Kap. S 28, 2; VS 17, 25—32

उदेनमुत्तरं नयाग्ने घृतेनाहुत[2] ।
सम्मेनं वर्चसा सृज[3] प्रजया च बहुं कृधि ॥
इन्द्रेमं प्रतरं नय सजातानामसद्वशी ।
रायस्पोषेण सं सृज देवेभ्यो भागदा असत्[4] ॥
यस्य कुर्मो गृहे हविस्तमग्ने वर्धया[5] त्वम् ।
तस्मै देवा अधि ब्रुवन्नयं च ब्रह्मणस्पतिः ॥
आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष[6] एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन[7] धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नरा[8] इषुहस्तेन वृष्णा[9] ॥
स इषुहस्तैः स निषङ्गिभिर्वशी संसृष्टा[10] स युध इन्द्रो गणेषु ।
संसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥
बृहस्पते परिदीया[11] रथेन रक्षोहामित्रां[12] अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥
अभि गोत्राणि सहसा गाहमान आदायो[13] वीरः शत-
मन्युरिन्द्रः ।

---

1) P उक्थशास । उक्थशास इत्युक्थशास । 2) P घृतेन । आहुतेत्याहुत । a VS 17, 50, TS 4, 6, 3, 1 3) B सृजा 4) Hg असत् 5) P वर्धय । 6) P अनिमिषं इत्यनिमिषं । 7) Hg u M 3 दुश्यवनेन 8) P नर । 9) M 3 a P वृष्णा 10) P सम्सृष्टास्तिति सं सृष्टा । 11) P परि । दीय । 12) P अमित्रान् । 13) M 3 आदायो; P आदाय इत्यादाय । vgl aber RV 10, 103, 7, TS 4 6 4, 2, Kap S 28 5 liest wie RV अदयो; desgl Kâṭh., ohne Accent.

दुश्च्यवनः पृतनाषाडयोध्योऽस्माकं सेना अवतु प्र युत्सु ॥
बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजिज्जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनु संरभध्वम् ॥
इन्द्र एषां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता भरेष्वा ॥

॥ ४ ॥ Vgl 3, 3, 8 — TS 4 6, 3 (agnipraṇayanam) und 4 (apratirathasuktam), Kath 18, 3 u 5, Kap S 28, 3 u 5, VS 17, 30—32 33—41 43, (Man Çr 6, 2, 5)

उदु त्वा ॥
पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥
समिद्धे[9] अग्ना[10] अधि मामहान[11] उक्थपत्र[12] ईड्यो गृभीतः[13] ।
तप्तं घर्मं परिगृह्यायजन्तोर्जा[14] यद्यज्ञमशमन्त देवाः ॥

7

1) M3 दुश्चवन 2) P अयोध्य, M3 °ड्योध्यो 3) M3 गोत्रविद् 4) M3 विष्णो 5) M3 gloss °स्मान् 6) P भवत। 7) P °वाप। यमति। 8) P आभञ्जतीरित्या भजतो। 9) Hg समिद्धो, A समिद्धो। 10) P अर्मी। 11) P मामहान। ममहान इति मम हानं। 12) P उक्थपत्र इंद्युक्थपत्र। 13) M 3 गृभीत 14) P परि गृह्य। अयजत। ऊर्जा।

दैव्याय धात्रे देष्ट्रे देवश्रीः श्रीमनाः शतपात्[1] ।
परिगृह्य यज्ञमायन् ॥
हरिकेशः सूर्यरश्मिः पुरस्तात्सविता ज्योतिरुदयं[2] अजस्रम् ।
तस्य पूषा प्रसवे याति विद्वान्संपश्यन्विश्वा भुवनानि गोपाः ॥
देवा देवेष्वध्वर्यन्तो अस्थुर्वीतं शमिता शमितं यजध्यै[3] ॥
तुरीयो यज्ञो यत्र हव्यमेति ततो वाका[4] आशिषो नो जुषन्ताम् ॥
इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥
विमान एष दिवो मध्य आस्त[5] आपप्रिवान्रोदसी[6] अन्तरिक्षम् ।
स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥
उक्षा समुद्रे अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश ।
मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ ॥
सुम्नहूर्यज्ञ आ च वक्षद्यक्षदग्निर्देवो देवाँ आ च वक्षत् ।
देवहूर्यज्ञ आ च वक्षद्यक्षदग्निर्देवो देवे[7] आ च वक्षत् ॥
वाजस्य मा प्रसवेनेति द्वे ॥ ५ ॥

Vgl 3,3,8 — TS4,6,3 (agnipraṇayanam) Kāṭh 18, 3, Kap S 28 3 u 5, VS 17, 53—63, (Mān Çr 6, 2, 5)

---

1) P शतपादिति शत पात् । 2) So Hg u M 3, in B °द्य°, P यंत् । च पात् । 3) P यजध्वै ।, so auch Kap S 28 3, TS 4, 6, 3 3 4) P वाका । 5) P मध्ये । आस्ते । 6) Aber P आपप्रिवांरोदसी परिणवान् । hier beginnt W wieder, nach längerer Lücke 7) P देवान् ।

क्रमध्वमग्निना नाकमुख्य॰ हस्तेषु बिभ्रतः ।
दिवः पृष्ठं॰ स्वर्गत्वा[1] मिश्रा[2] देवेभिराध्वम् ॥
प्राचीमनु ॥
अग्ने प्रेहि प्रथमो देवायतां[3] चक्षुर्देवानामुत[4] मर्त्यानाम् ।
इयक्षमाणा[5] भृगुभिः सह स्वर्यन्तु[6] यजमानाः स्वस्ति ॥
पृथिव्या[7] अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम्[8] ।
दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥
स्वर्यन्तो नापेक्षन्ता[9] आ द्यां॰ रोहन्ति[10] रोदसी ।
यज्ञं॰ ये विश्वतोधार॰ सुविद्वांसो वितेनिरे ॥
नक्तोषासेमे सहस्राक्ष ॥
सुपर्णो ऽसि गरुत्मान्पृष्ठे पृथिव्याः सीद ।
भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान[11] तेजसा दिश[12] उद्दृंह ॥
आजुह्वानः[13] सुप्रतीकः पुरस्तादग्ने स्वं॰ योनिमासीद साध्या ।
अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा[14] यजमानश्च[15] सीदत[16] ॥
तां॰ सवितुर्वरेण्यस्य चित्रामाहं॰[17] वृणे सुमतिं॰ विश्वजन्याम् ।

---

1) So die Mss, P स्व । गत्वा ।, desgl Kap S 28, 4  2) P मिश्रा ।  3) So auch Kâth, P देवायता । देवयतामिति देव यतां । Kap S देवयतां  4) B लएदें॰  5) So in Uebereinstimmung mit P ईयक्षमाणा ।, die Samhitā Mss schreiben ईयक्षमाणा, Kap S ईयक्षमाणा, desgl Kath, ohne Accent, vgl auch oben 1, 6, 12 इयक्षमाण  6) So die Mss, B स्वर्यतो  7) P पृथिव्या ।  8) P आ । अरुह । – – आ । अरुह ।  9) P न । (cod म ।) अप । ईक्षन्ते । Hg नापिक्षन्ता  10) M 3 रोहति  11) P उत् । स्तभान ।, W ॰भामस्तं॰  12) P दिश ।  13) M 3 आजुह्वान  14) P विश्वे । देवा ।  15) P यजमान । च ।, nur M 3 यजमानश्च  16) P सीदत ।  17) Hg ॰माहं॰, P आ । अहं ।, M 3 u W ॰माहं॰

यामस्य[1] कण्वो अदुहत्प्रपीना सहस्रधारां पयसा महीं गाम् ॥
विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा[2] यजा[3] तं प्र त्वे समिद्धे जुहुरे हवींषि ॥
प्रेद्धो[4] अग्ने दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ[5] ।
तां[6] शश्वन्ता[7] उपयन्ति वाजाः ॥
अग्ने तमद्य सप्त ते अग्ने ॥
चित्तिं[8] जुहोमि मनसा यथा देवा इहागमन्[9] ।
वीतिहोत्रा ऋतावृधः ॥
समुद्रस्य वो वयुनस्य पत्मन्जुहोमि विश्वकर्मणे ।
विश्वाहादाभ्यं हविः ॥ ६ ॥

Vgl. 3, 3, 9 — TS 4, 6, 5 (agnisthâpanam); Kâṭh 18, 4; Kap S 28, 4, VS 17, 65—79; Mân Çr. 6, 2, 5

॥ इति मध्यमकाण्डे दशमः प्रपाठकः ॥

---

1) P यां । अस्य ।, M 3 यामंस्य  2) So Hg (u A), M 3 °रुदारिथ; P उदारिथेत्युत् आरिथ ।; W °रुदारित; desgl B, ohne Accent, Kâṭh °रिथ  3) So Hg, M 3 u W (desgl Kâṭh 18, 4); in B यजे; P यजे । (s RV 4, 9, 3); so auch Kap S  4) M 2 प्रेत्तो, W प्रत्वे  5) So M 3, B u P; in Hg und wohl auch W यविष्ठ्य (s RV 7, 1, 3), Kâṭh यविष्ठ  6) So Hg, M 3, W und auch P ताः ।, nur B त्वां wie RV 7, 1, 3, Kap S 28, 4.  7) P प्रशत ।  8) So Hg, W u P, in M 3 चीतिं; nur B चित्तिं wie TS 5, 5, 4, 3, VS 17, 78  9) So Hg u W; P इह । आगमन्नितीत्यागमन्; M 3 ईहागमन्

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्चर्तपाश्चात्यंहा ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्तिमित्रश्च दूरेऽमित्रश्च[1] गणः ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः ईदृङ् चैतादृङ् च सदृङ् च प्रतिसदृङ्[2] च मितश्च संमितश्च संभराः[3] ईदृक्षास एतादृक्षास ऊ षु णः[4] सदृक्षासः प्रतिसदृक्षास[5] एतन[6] मितासश्च संमितासो न ऊतये संभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्नेवमिमं[7] यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥ १ ॥

Vgl TS 4, 6, 5 a E (agnasthâpanam), Kâṭh ▪ 6, Kap. S 28, 6, VS 17, 80—84 86, Man Çr 6 2, 5

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे[9] प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि[10] च मे परूंषि च मे शरीराणि च मे ज्यैष्ठ्यं च म आधिपत्यं च मे

1) P दूरेमित्र इति दूरे अमित्र ।, M 3 दूरेमित्रश्च od दूरेमित्रश्च, Kap S दूरेऽमित्रश्च wie TS ▪ VS 17, 83, desgl Kaṭh, ohne Accent 2) W प्रति सदृङ 3) P सं भरा । B समरा, Kap S 28, 6 संभारा 4 P ष दृक्षु । षु । ण । 5) P प्रतिसदृक्षास इति प्रति सदृक्षास । 6) P आ । इत । 7) So betont M 3, s. TS 4, 6, 5, 6, in Hg u W मानुषीश्च° so auch Kap S 28, 6 a E, P मानुषी ।, vielleicht vorzuziehen 8) Die letzten drei Worte fehlen in W 9) B से 10) So Hg M3 W, (so TS 4, 7 1, 2), desgl Kaṭh., ohne Accent) P ऽस्थानि, B स्थीनि; desgl Kap S 28, 7 u VS 18, 3

मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघ्मा च मे वृद्धं च मे वृद्धिश्च मे ॥ २ ॥

Vgl. 3, 4, 1 — TS 4, 7, 1 u 2 (vasordhârâ); Kâṭh. 18, 7; Kap S. 28, 7; VS 18, 1—4; Mân. Çr. 6, 2, 5.

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे सूक्तं च मे सुकृतं च मे जातं च मे जनिष्यमाणं च मे वित्तं च मे वेद्यं च मे भूतं च मे भव्यं च म[1] ऋद्धं च म ऋद्धिश्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च[4] मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च मे सूपायं[5] मे सुदिनं च मे ॥ ३ ॥

Vgl TS 4, 7, 2 u. 3 (vasordhârâ); Kâṭh 18, 8 u. 9, Kap S 28, 8 u. 9; VS 18, 5 6. 11. 8. 6

यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयुश्च[6] म ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे

1) So Hg (u. A), in W, B u wohl auch M 3 मे　2) W सुपथं; Kâṭh. 18, 8 सुपथं; Kap S 28, 8 सुपथ्यं (cf VS 18, 11)　3) So Hg u M 3, in W, B u A मे　4) P ऽनामयत् ।　5) So B (ohne Accent); P सूपा इति सु. उपा. 1; M 3 सूपायं desgl Kâṭh. (ohne Accent). Hg सुपायं. W सूपायं; TS 4, 7, 3, 2 सूपां　6) P लयुः ।

विभुं[1] च मे प्रभुं[2] च मे पूर्णं च मे पूर्णतरं च मे कुयवं[3] च मेऽक्षितिश्च मेऽक्षुच्च[4] मेऽन्नं च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मेऽणवश्च मे प्रियङ्गवश्च मे श्यामाकाश्च मे नीवाराश्च[5] मे गोधूमाश्च मे मसूराश्च[6] मे मुद्गाश्च मे खल्वाश्च[7] मे ॥ ४ ॥

Vgl TS 4, 7, 3 u 4 (vasordhârâ); Kâṭh 18, 9; Kap. S 28, 8 u 9; VS 18, 7, 9 10 12

पर्वताश्च मे गिरयश्च मे सिकताश्च मे वनस्पतयश्च मेऽश्मा च मे मृत्तिका च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपु च मे श्यामं च मे लोहितायसं च मेऽग्निश्च मा आपश्च मा ओषधयश्च मे वीरुधश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च[8] यज्ञेन कल्पन्ता[9] वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मेऽर्थश्च[10] मा एम च म इत्या च मे गतिश्च मे कर्म च मे शक्तिश्च मे वसु च मे वसतिश्च मेऽग्निश्च मा इन्द्रश्च मे सोमश्च मा इन्द्रश्च मे[11] सविता च मा इन्द्रश्च मे सरस्वती च मा इन्द्रश्च मे पूषा च मा इन्द्रश्च मेऽदितिश्च[12] मा इन्द्रश्च मे धाता च मा इन्द्रश्च मे त्वष्टा च मा इन्द्रश्च मे मित्रश्च मा इन्द्रश्च मे वरुणश्च मा इन्द्रश्च मे विष्णुश्च मा इन्द्रश्च मे बृहस्पतिश्च मा इन्द्रश्च मे वसवश्च मा इन्द्रश्च मे रुद्राश्च मा इन्द्रश्च म[13] आदित्याश्च मा इन्द्रश्च मे मरुतश्च मा इन्द्रश्च मे पृथिवी च मा इन्द्रश्च मेऽन्तरिक्षं च मा इन्द्रश्च मे द्यौश्च मा इन्द्रश्च मे नक्षत्राणि च मा इन्द्रश्च मे समा च मा इन्द्र-

1) M 3 u W विभ्रं 2) M 3 प्रभ्रं 3) So auch Kap S 28, 9; VS 18, 10; desgl. Kâṭh (ohne Accent), M 3 u W कुयव cf TS 4, 7, 4, 2 4) B अक्षुत् ! 5) Hg (u A) निवाराश्च 6) B मसुरा !, Kap S 28, 9 मसुराश्च, s TS 4, 7, 4, 2 7) So Hg, M 3, W, P खर्वा !, B खल्वाश्च, Kap S 28, 9 खल्वाश्च, so VS 18, 12; desgl Kâṭh, (ohne Accent) 8) B schiebt hier noch ein मे ein 9) P चर्था !; M 3 अर्थश्च 10) B मे 11) Von hier bis अदितिश्च (excl) in W fehlend 12) P अदितिः !; Hg मे दितिश्च 13) B मे

श्च मे कृषिश्च मा इन्द्रश्च मे वृष्टिश्च[1] मा इन्द्रश्च मे दिशश्च मा इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मेऽंशुश्च मे रश्मिश्च मेऽधिपतिश्च मेऽदाभ्यश्च म उपांशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च म ऐन्द्राग्नश्च मे क्षुल्लकवैश्वदेवश्च[3] मे ध्रुवश्च मे वैश्वानरश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च[4] मे स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मेऽधिषवणे च मे ग्रावाणश्च मे पूतभृच्च मेऽपूतभृच्च मे बर्हिश्च मे वेदिश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥ ५ ॥

Vgl. TS 4,7,5—8 (vasordhârâ); Kâṭh. 18,10 u. 11, Kap. S 28,10 u. 11; VS 18,13—21.

अग्निश्च घर्मश्चार्कश्च सूर्यश्च प्राणश्चाश्वमेधश्चादितिश्च पृथिवी च दितिश्च द्यौश्च शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृतुश्च व्रतं च संवत्सरश्च तपश्चाहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पेतामेका च तिस्रश्चा त्रयस्त्रिंशतश्चतस्रश्चाष्टौ चाष्टाचत्वारिंशतस्त्र्यविश्च[5] त्र्यवी च दित्यवाट् च दित्यौही च पञ्चाविश्च पञ्चावी च त्रिवत्सश्च त्रिवत्सा च तुर्यवाट् च तुर्यौही च पष्ठवाट् च पष्ठौही चोक्षा च वशा च ऋषभश्च वेहच्च धेनुश्चानड्वांश्च स्तोमश्च यजुश्च

1) So Hg, cf. 2, 11, 4; in M 3 u. W वृष्टिश्च; P वृष्टिः। Dies Wort in Versen und Sprüchen anders betont als in der Prosa Vgl 2, 4, 7 u. 8  2) B मे  3) So Hg; desgl. B, ohne Accent; (auch Kâṭh 18, 11; Kap. S 23, 11); P क्षुल्लकवैश्वदेव इति क्षुल्लक-वैश्वदेवः।; in M 3 die zwei ersten Silben undeutlich, sonst ebenso; (W क्षुल्लकवैश्वदेवश्च); dies Wort bisher nur Pâ. 6, 2, 39 angeführt, sonst unbelegt.  4) So Hg (vgl. 1, 3, 30); in W u. B हारियोजनश्च (wie auch Kap. S. 23, 11); dem entsprechend auch P; in M 3 हरियोजनश्च  5) P एका । च । तिस्रः । च । चा । त्रयस्त्रिंशदिति त्रयः-त्रिंशत् । चतस्रः । च । अष्टौ । च । चा । अष्टाचत्वारिंशत इत्यष्टा-चत्वारिंशतः।  6) B बृहच्च  7) So die Mss.; vgl Bd. 1, p. 71 Anm 5 u. a.

ऋक् च साम च दीक्षा च तपश्च बृहच्च रथन्तरं चौषधयो वनस्पतयो दिशश्च मे यज्ञेन कल्पन्तामन्नाय त्वा वाजाय त्वा वाजजित्यायै त्वेषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ॥ ६ ॥

Vgl 3, 4, 2 — TS 4 7, 9—11 (vasordhârâ), Kâṭh 18, 11 u E u 12, Kap S 28, 11 u 29, 1, VS 18, 22—23, (Mân Çr 6, 2, 5)

॥ इति मध्यमकाण्डे[1] एकादशमः प्रपाठकः ॥

---

विश्वे नो अद्य मरुतो विश्व[2] ऊती[3] विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा अवसागमन्निह[4] विश्वमस्तु द्रविणं वाजो अस्मे ॥
वाजो मे सप्त प्रदिशश्चतस्रो वा परावतः ।
वाजो मा विश्वैर्देवैर्धनसाता[5] इहावतु[6] ॥
वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति ।
वाजस्य हि प्रसवे नन्नमीति विश्वा आशा वाजपतिर्भवेयम् ॥
वाजो मे अद्य प्रसुवाति[7] दानं वाजो देवाꣳ हविषा वर्धयाति ।
वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्जयेयम्[8] ॥
सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः ।
सो ऽहं[9] वाजं सनेयमग्ने ॥
पयः पृथिव्यां पय[10] ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः[11] ।
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १ ॥

Vgl 3 4, 3 — TS 4 7, 12 (vâjaprasavîyahomah), Kâṭh 18 13, Kap S 29, 2, VS 18, 31—36, (Mân Çr 6, 2, 5)

---

1) Die Mss °काण्डे 2) B विश्वे, P विश्वे । 3) P ऊती । (!) 4) So die Mss ; P अवसा । आ । अगमन् । इह । Kap S 29 2 अवसागमन्निह 5) P धनसाताविति धन साती । 6) P इह । अवतु । 7) B प्रसुवति 8) P जयेम । 9) So die Mss , P सः । अहं । (desgl Kap S 29 2 (सो हं), VS 18, 35, vgl dagegen TS 4, 7, 12, 3 सो ऽहं) 10) P पयः । 11) S VS 18, 36, W पयो धा° (s TS 4, 7, 12, 2)

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयो ऽप्सरसो मुदो[1] नाम स न इदं ब्रह्म क्षत्रं पातु[2] ता न इदं ब्रह्म क्षत्रं पान्तु[3] तस्मै स्वाहा वट्[4] ताभ्यः स्वाहा वट् संहितो[5] विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयो ऽप्सरस आयुवो[6] नाम सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो[7] नामेषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो ऽप्सरस ऊर्जो नाम भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसा[8] एष्टयो नाम बृहस्पतिर्विश्वकर्मेन्द्रो गन्धर्वस्तस्य महतो ऽप्सरसा ओजो नाम प्रजापतिः परमेष्ठी मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरसः[9] स्तवा[10] नामामृडयो[11] दूरेहेतिर्मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरवो नाम स नो भुवनस्य पते[12] यस्य त उपरि गृहा विराट्पते ऽस्मै ब्रह्मणे ऽस्मै क्षत्राय महि शर्म यछ यस्य ते विश्वा आशा अप्सरसः[13] क्षीया[14] नाम स न इदं ब्रह्म क्षत्रं पातु[15] ता न इदं ब्रह्म क्षत्रं पान्तु[16] तस्मै स्वाहा वट् ताभ्यः स्वाहा वट् ॥ २ ॥

Vgl TS 3 4, 7 (râshṭrabhṛta mantrah), Kâṭh 18 14, Kap S 29 3, VS 18, 38—43; Mân Çr 6 2 5

समुद्रो ऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा वस्युरसि[17]

1) So Hg M3 u W, P मुदा । (s TS 3 4 7 2), B मुदो Kap S 29 3 मुदो, desgl VS 18 38 2) So M 3 u W, in Hg पातु (so wohl auch Kap S 29, 3) 3) So M 3 u W, in Hg पातु 4) M3 वट् = VS 18 38 5) Hg सं॰हितो 6) So M3 W, B, P आयुव ॥ (TS 3 4 7 1), Hg आयवो, desgl Kâṭh, ohne Accent 7) So die Mss, P बेकुरय । 8) P दक्षिणा । M 3 u B दक्षिणाप्सरसो, auch Kap S 29 3 दक्षिणाप्सरस 9) So die Mss, auch Kap S 29 3 nur B ऋक्सामान्य॰ (wie TS VS u Kath) 10) So M 3 W, P स्तवा । Hg स्तवा । B ॰स्तवा cf TS 3,4 7,1, Kap S 29,3 स्तवा im Pet Wort, Kâṭh 18,14 स्तवा 11) P ॰अमृडय । (s TS 3 4 7,2) 12) So Hg (A), B u P desgl Kap S u TS VS 18 W भुवनस्पते M3 विश्वस्य भुवनस्पते 13) So M3, P आशा । अप्सरस ; Hg W u B आशाप्सरस 14) P क्षिया ।, W सीया 15) So M3 in Hg पातु (W ?) 16) So W, in Hg u M3 पातु 17) So Hg desgl Kap S 29 3 u K TS 4 7 12,3 in M3 u B ॰वस्युर॰, P स्वाहा । वस्युः ।, in W fehlend S VS 18 45

दुवस्वान् शंभूर्मयोभूरभि मा वाहि स्वाहा मारुतो ऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा सजूरिन्द्र[1] आयवभिः[2] सजूरुषा अरुणीभिः सजोषा[3] अश्विना दंसोभिः सजूः सूर[4] एतशेन सजूर्वैश्वानर इडया[5] घृतेन स्वाहा ॥

अग्निं[6] युनज्मि शवसा घृतेन दिव्यं सुपर्णं वयसं बृहन्तम् ।
तेन वयं पतेम ब्रध्नस्य विष्टपं स्वो रुहाणा[7] अधि नाक उत्तमे ॥

इमौ ते पक्षावजरौ पतत्रिणौ याभ्यां रक्षांस्यपहंस्यग्ने ।
ताभ्यां वयं पतेम सुकृतामु[8] लोकं यत्रा[9] ऋषयो जग्मुः प्रथमा ये पुराणाः ॥

इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः ।
महान्त्सधस्थे ध्रुव[10] आ निषत्तो नमस्ते अस्तु मा मा हिंसीः ॥

दिवो मूर्धासि नाभिः पृथिव्या ऊर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे विश्वस्य मूर्धन्नधितिष्ठसि श्रितः ॥

समुद्रे ते हृदयमन्तरायुरपो[11] दत्तोदधिं[12] भिन्त ।
दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्यावत ॥

---

1) So M3; P ॰न्द्रः ।; Hg ॰रुन्द्रा ohne Accent, W ॰न्द्रा; H ॰न्द्रो 2) So Hg, M3, W u P, B आयवोभिः 3) P सजोषाविति सजोषाः । 4) P सूरः ।; B सूर । 5) So H (ohne Accent) u P, W इड्या; Hg u M3 ईडया, cf aber 2,12,6 6) So Hg u M3; in W u P वयस 7) P रुहाणा. । 8) So M3 u W; P सुकृतामिति सु-कृता । उ इत्यु ।, Hg सुकृताम् od ॰ताम्, B सुकृतो म 9) P यत्र । 10) P ध्रुवः । 11) W ॰रायुर॰ ohne Accent 12) H दत्त । उदधिमित्युत्-दधिं ।

वि ते मुञ्चामि रशनाꣳ वि रश्मीन्वि योक्त्राणि परिचर्तनानि ।
धत्तादस्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भागदां देवतासु ॥
इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा[1] वसुभिः ।
इष्टो अग्निराहुतः पिपर्तु न इष्टꣳ हविः स्वगेदं[2] देवेभ्यो
नमः ॥ ३ ॥

Vgl 3, 4 4 u 5 — TS 4 7,12 a [illegible] (vajaprasavīyahomāḥ) u [illegible] (agniyogaḥ); Kāṭh 18, 14 a. E 15 [illegible] a. E, Kap S 29, 3 u 4, VS [illegible] 45 19 74, 18, 51—56, Mān Çr 6, 2, 5 a. E u 6

येना[3] ऋषयस्तपसा सत्रमासतेन्धाना अग्निꣳ स्वराभरन्तः[4] ।
यमाहुर्मनवः स्तीर्णबर्हिषं तस्मिन्नहं नि दधे नाके अग्निम् ॥
तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने
दिवः ॥

आ वाचो मध्यमरुहद्भुरण्युरयमग्निः[5] सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या[6] निहितो दविद्युतदधस्पदं कृणुताꣳ ये पृतन्यवः ॥
अयमग्निर्वीरतमो वयोधाः सहस्रियो[7] ज्योततामप्रयुछन्[8] ।
विभ्राजमानः सलिलस्य मध्या[9] उप प्रयाहि दिव्यानि
धामन्[10] ॥

1) So Hg u W, B यतिभिर॰, M 3 यत्नभिर॰, P यत्यभि । von hier an Lücke in Hg (desgl A) bis सलिलस्य मध्या, die vorhergehenden 5 Worte in Hg auch schon vorhanden, aber durchstrichen und ohne Accent　2) So M 3 u W स्वगेंद्, B स्वगेंद्　3) P येन ।　4) So die Mss (d h. M 3 u W dann in Hg u A Lücke), P स्व । चाभरंत इत्या भरंत ।, vgl oben 2 [illegible] 6 स्वयन्तो Kap S [illegible] 6 स्वरयाभरंत　5) M 3 मध्यम॰　6) P पृथिव्यां ।　7) So Hg M 3 u W [illegible] सहस्रियो, so auch Kap S u Kāṭh, P सहस्रिय ।　8) So M 3 Hg u B, in W ज्योतिताम॰, P द्योतता । s द्युत्, द्योतति im Dhātup 3 4 v l (sonst noch nicht belegt), Kāṭh u Kap S द्योतताम॰　9) P मध्ये ।　10) So alle Mss (Hg M 3, W, B u P), desgl Kāṭh [illegible]

अग्ने च्यवस्व समनुप्रयाह्याविष्पथो देवयानान्कृणुष्व ।
इदमिदꣳ सुकृतमारभस्व यत्रा ऋषयो जग्मुः प्रथमा ये पुराणाः ॥
संप्रच्यवध्वमुप संप्रयाताविष्पथो[1] देवयानान्कृणुध्वम् ।
एभिः सुकृतैरनुगछेम देवा यत्र[2] नः पूर्वे पितरः परेताः[3] ॥
उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं[4] च ।
पुनः कृण्वंस्त्वा पितरो युवानो ऽन्वाताꣳसुस्त्वय[5] तन्तुमेतम् ॥
येन वहसि सहस्रꣳ येनाग्ने सर्ववेदसम् ।
तेनेमꣳ यज्ञं नो वह स्वर्देवेषु गन्तवे ॥
अयं ते[6] ॥ ४ ॥

Vgl TS 4, 7, 13 (agnyogah), Kāth 18, 18, Kap S 29, 6, VS 15, 49—56, (Man Çr 6, 2, 6 a E)

समास्त्वाग्न[7] ऋतवो वर्धयन्तु सꣳवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः ॥
सं चेध्यस्वाग्ने[8] प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता[9] ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने सꣳवरणे भवा[10] नः ।
सपत्नहाग्ने अभिमातिजिद्भव स्वे गये जागृह्यप्रयुछन् ॥
इहैवाग्ने अधिधारया[11] रयिं मा त्वा निक्रन्पूर्वचित्तो[12] [13] निकारिणः ।

---

1) उप । सम्प्रयातेति सं प्रयात । 2) W यत्रा 3) Hg परेता 4) W सꣳसृजेताम°, M 3 सꣳसृज्येथाम° 5) P अन्वाताꣳसुरित्यनु आताꣳसु । तव । 6) P अय । ते । योनि । 7) B त्वाग्ना 8) P च । इध्यस्व । अग्ने । 9) Hg चर्षद°, B च ऋषद° 10) P भव 11) P धारय । 12) W नि क्रन् ।, desgl B ohne Accent 13) Kap S 29, 4 पूर्वचितो, wie TS u VS 27, 4, desgl Kath ohne Accent

क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥
क्षत्रेणाग्ने स्वेन संरभस्व[1] मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमेष्ठेयाय[2] राज्ञामग्ने विहव्यो दीदिहीह ॥
अति निहो अति सृधो ऽत्यचित्तिमति निर्ऋतिमद्य ।
विश्वा ह्यग्ने[3] दुरिता तर त्वमथास्मभ्यं सहवीरं रयिं दाः ॥
अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ।
व्यमीवाः प्रमुञ्चन्मानुषाणां शिवेभिरद्य परिपाहि नो वृधे ॥
बृहस्पते सवितर्बोधयैनं संशितं चित्संतरां संशिशाधि ।
वर्धयैनं महते सौभगाय विश्वे चैनमनुमदन्तु देवाः ॥
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यूहतामश्विना[4] मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥
उद्वयं तमसस्परि ज्योतिः पश्यन्त[5] उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ५ ॥

Vgl 3, 4, 6 — TS 4, 1, 7 (pañcapañcāśadgabhūtā āgnikyaḥ sāmidhenyaḥ), Kāṭh 18, 16, Kap S 29, 4, VS 27, 1—10

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥
तनूनपादसुरो विश्ववेदा देवो[6] देवेभ्यो देवयानान्पथो अनक्तु मध्वा घृतेन[7] ।
मध्वा यज्ञं नक्षति प्रीणानः[8] ॥

---

1) M 3 रभध्वम् 2) P मध्यमेष्ठेयाय । मध्यमेष्ठेयायेति मध्यमे स्थेयाय ।, B मध्यमेष्ठेयाय 3) So Hg u W, in M 3 ह्यपि 4) So Hg u M 3 auch P प्रति । अहतो ; so auch Kap S 29 4 dagegen W u B प्रत्यौहता (wie TS 4 1, 7 4 u VS 27, 9; Kāṭh 18, 16) 5) P पश्यन्त । 6) W देवो, desgl B, ohne Accent. 7) B घृतेना 8) So Hg, W u P, in M 3 प्रीणानः, desgl B, ohne Accent.

नराशंसो अग्निः सुकृद्देवः सविता विश्ववारः ।
अंछायमेति[1] शवसा घृतेन ॥
ईडानो[2] वह्निर्नमसाग्निं स्रुचो अध्वरेषु प्रयत्सु ।
स यक्षदस्य महिमानमग्नेः ॥
स ईं मन्द्रा[3] सुप्रयसा[4] स्तरीमन् ।
बर्हिषो मित्रमहाः । .
वसुश्रेतिष्ठो वसुधातमश्च ॥
द्वारो देवीरन्वस्य विश्वा[5] व्रता ददन्ते अग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः ॥
ते अस्य योषणे दिव्ये न योना उषासानक्ता ।
इमं यज्ञमवतामध्वरं नः ॥
दैव्या होतारा ऊर्ध्वमिममध्वरं नो ऽग्नेर्जिह्वाभिगृणीतम्[6] ।
कृणुतं नः स्विष्टम् ॥
तिस्रो देवीर्बर्हिरेद[7] स्योनमिडा[8] सरस्वती मही ।
भारती गृणाना ॥
तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टः[9] सुवीर्यम् ।
रायस्पोष विष्य[10] नाभिमस्मे ॥
वनस्पते ऽवसृज्ञा[11] रराणस्त्मना[12] देवेभ्यः ।
अग्निर्हव्य शमिता सूदयाति ॥

---

1) P अंछ । अयम् । एति ।, M 3 u W °मैति 2) W इडानो, desgl B, ohne Accent 3) So Hg u M 3, P मन्द्रा । W मन्द्रा, desgl B, ohne Accent. 4) P सुप्रयासा इति सु प्रयासा । 5) B विश्वे 6) So Hg, M 3 u W, B °र्जिमभि°, P जिह्वा । (cf VS 27, 18, TS 4, 1 8, 2), Kath u Kap S जिह्वयाभिगृणीतम् 7) P बर्हिः । आ । इदं । 8) M 3 °मीडा 9) So Hg u M 3 (= Kath) in W u P त्वष्ट, B त्वष्टु, Kap S त्वष्टा 10) P वि । स्य ।, B विष्यता, W विष्वषा । Kap S विष्यत, Kath विष्य 11) P अव । सृज । 12) W रराण स्त्मना, desgl B, ohne Accent

अग्ने स्वाहा कृणुहि जातवेद इन्द्राय देवेभ्यः ।
विश्वे देवा हविरिदं जुषन्ताम् ॥ ६ ॥

Vgl 3, 4, 6 — TS 4, 1, 8 (prayâjayâjyâ âprînâmakâh, Kâth 18, 17, Kap S 29, 5, VS 27, 11—22

॥ इति मध्यमकाण्डे द्वादशः प्रपाठकः ॥

---

सम् अन्या यन्त्युपयन्त्यन्याः[1] समानमूर्वं नद्यः पृणन्ति[2] ।
तमु शुचिं शुचयो दीदिवांसमपां नपातं परितस्थुरापः[3] ॥
हिरण्यवर्णः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात्परि योनेर्निषद्य[4] हिरण्यदा ददत्यन्नमस्मै ॥
हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो[5] यास्विन्द्रः ।
अग्निं[6] या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु ॥
यासां राजा वरुणो याति मध्ये सत्यानृते[7] अवपश्यञ्जनानाम् ।
मधुश्चुतः[8] शुचयो याः पावकास्ता न आपः शं[9] स्योना भवन्तु ॥

---

1) Das Verb an erster Stelle so betont in M3 (wie TS 2, 5 12, 1), in Hg u W ohne Accent 2) B पृणन्ति 3) P तं । ऊं इति । उं । 4) Die Mss schwanken, M 3 परियोनेः, Hg u W पर्योने॰, desgl B ohne Accent, P परि । योनेः । 5) M3 पश्यपो 6) Hg u M 3 अग्निं 7) Hg सत्यानृते 8) So Hg u M3 (cf 2, 8, 14 a. E), W मधुश्चुत, desgl B, ohne Accent; P मधुश्चुत इति मधुश्चुत । 9) Hg u M 3 शं

यासां देवा दिवि कृण्वन्ति भक्षं[1] या अन्तरिक्षे बहुधा भवन्ति ।
याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शं[2] स्योना भवन्तु ॥
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे ।
सर्वां अग्नीं[1]रप्सुषदो हुवे मयि वर्चो बलमोजो निधत्त[2] ॥
यददः[3] संप्रयतीरहा[4] अनदता[5] हते ।
तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः[6] ॥
संप्रच्युता[7] वरुणेन यच्छीभं[8] समवल्गत[9] ।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनुष्ठन[10] ॥
अपकामं[1] स्यन्दमाना अवीवरत वो हि कम् ।
इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्नाम[11] वो हितम् ॥
एको वो देवो अप्यतिष्ठत्स्यन्दमाना यथावशम् ।
उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥
आदित्यं पश्याम्युत वा शृणोम्या मा घोषो गच्छति वान्वासाम्[12] ।
तीव्रो रसो मधुपृचामरंगम[13] आ मा प्राणेन सह वर्चसागन्[14] ॥

1) Hg अ॰ 2) M3 निधत्तं 3) So corrigirt, die Mss (Hg, M3 u W) यदद॑, P यत् । अदः । 4) P अही । 5) So corrigirt, die Mss schwanken, Hg आनदता, M3 अनदत्ता W अनुदता, B अन्वदता, P अनद्त । 6) M3 सिन्धव 7) So Hg, in M3 u W संप्रच्युता 8) P यत् । शीभं ।, B शिभ॰ 9) So Hg u M3; dem entsprechend P, u W समवल्गत, doch B, ohne Accent 10) P अनु । स्तन ।; B अनुष्ठन 11) In Hg u M3 शक्तिभि॰ 12) So Hg W वान्वासाम, M3 वात् न्वासा; B वान्नासा, P वाक् । न । आसां । = TS 5 6 1 4 in Kāṭh 39 2 वाङ्नासाम 13) M3 ॰गमं 14) P वर्चसा । अगन् ।

आपो देवीर्घृतमिन्वा ऊ आपो अग्नीषोमौ बिभ्रत्याप इत्ताः ।
मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृप यदा वः ॥
आपो हि ष्ठेति तिस्रः ॥ दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्याः संभव ब्रह्म गच्छ ॥ १ ॥

Vgl TS 5, 6 1 (kumbheshtakamantranārthā mantrah), Kāṭh 39, 2, Mān Çr 6, 1, 6 a E

तपो योनिरसि विश्वाभिस्त्वा धीभिरछिद्रामुपदधाम्यृत योनिः सत्य योनिर्ब्रह्म योनिः क्षत्र योनिः पृथिवी योनिरन्तरिक्ष योनिर्द्यौर्योनिर्दिशो योनिः ॥ २ ॥

(Vgl 3,2 6), Kath 39 2

प्राणादपानं संतन्वपानाद्व्यानं संतनु व्यानाच्चक्षुः संतनु चक्षुषः श्रोत्र संतनु श्रोत्रात्पृथिवी संतनु पृथिव्या अन्तरिक्ष संतन्वन्तरिक्षाद्दिव संतनु दिवो दिशः संतनु दिग्भ्यः स्वर्गं लोकमनुसंतनु ॥ ३ ॥

Vgl TBr 1, 5, 7, Kath 39, 6.

ऋचा त्वा छन्दसा सादयामि वषट्कारेण त्वा छन्दसा सादयामि हिंकारेण त्वा छन्दसा सादयामि प्रस्तावेन त्वा छन्दसा सादयाम्युद्गीथेन त्वा छन्दसा सादयामि प्रतिहारेण त्वा छन्दसा सादयामि स्तुतेन त्वा छन्दसा सादयामि निधनेन त्वा छन्दसा सादयामि ॥ ४ ॥

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् ।
यजिष्ठमृञ्जसे गिरा ॥

1) Die Mss schwanken M3 = W घृतमिन्वा Hg घृतमिन्वा, P घृते । इत् । शु । वा ।, Kāṭh घृतमिद्‌आप 2) P आप । 3) So die Mss , auch P, wohl in पृथिव्या zu corr 4) B विश्वाभ्यस्त्वा 5) P पृथिव्या ।

अगन्म महा नमसा यविष्ठं[1] यो दीदाय समिद्धः[2] स्वे दुरोणे ।
चित्रभानुं[3] रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥

अयमिह ॥

दधन्वे वा यदीमनु[4] वोचद्ब्रह्माणि वेरु[5] तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभवत्[6] ॥
ओर्मे[7] सुषन्द विश्पते[8] दर्वी श्रीणीष[9] आसनि ।
उतो न[10] उत्सुपूर्या[11] उक्थेषु शवसस्पत[12] इषं स्तोतृभ्य[13]
आभर ॥ ५ ॥

Vgl RV 4, 8, 1; 7, 12, 1, 2, 5, 3; 5, 6, 9, TBr 3, 11, 6, 3, TS 3, 3, 3, 3, 2, 2, 12, 7; 4, 4, 4, 6 (s unten 2, 13, 7 u 8), Kāṭh 12, 15, 39, 13

इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः[14] ।
जघान नवतीर्नव ॥
अत्राह[15] गोरमन्वत नाम त्वष्टुरपीच्यम् ।
इत्था चन्द्रमसो गृहे ॥
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम्[16] ।
अविन्दच्छर्यणावति[17] ॥
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥

---

1) B समिद्धे 2) In den Mss ohne Accent 3) W ना 4) Die Mss यद्दिमनु, nur B यत् । ईम् । अनु । (s TS 3, 3 3, 3) 5) So M 3, P वे । उ इति ।, in Hg u W वेरु, desgl B, ohne Accent 6) B निमिश्च° 7) So Hg, M 3 उर्मे, W ebenso oder ओर्मे, B ओम, P आ । उर्मे इत्युर्मे । 8) Hg विश्पते 9) P श्रीणीषे । 10) P नः । 11) So Hg u M 3, W पु°पर्या, B पुपर्या 12) P शवसः । पते । 13) P स्तोतृभ्य इति स्तोतृ भ्य । 14) B °अस्थिभि°, P °अस्थिभिरित्यस्थिभि ।, vgl RV 1, 84 13, Kāṭh 39, 12 (अस्थभि°) 15) P अत्र । अह । 16) M 3 °ष्वपश्रुतं, W °ष्वपश्रुत 17) B आविदच्

इन्द्रो दीर्घाय चक्षसा[1] आ सूर्यं रोहयद्दिवि ।
वि गोभिरद्रिमैरयत् ॥
इन्द्रा इद्धर्योः सचा संमिश्ल[2] आ वचोयुजा ।
इन्द्रो वज्री हिरण्ययः ॥
इन्द्र वाजेषु नो ऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ॥
तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।
स वृषा वृषभो भुवत् ॥
इन्द्रः स दामने कृत ओजिष्ठः स बले हितः ।
द्युम्नी श्लोकी स सोम्यः[3] ॥
गिरा वज्रो न संभृतः सबलो अनपच्युतः ।
ववक्ष[4] उग्रो अस्तृतः[5] ॥ ६ ॥

Vgl. Kāth 39, 12, TBr 1, 5, 8, 1—3; RV 1, 84, 13 15 14, 1, 7, 1—4; 8, 93 (82), 7—9

अयमग्निः सहस्रिणो ऽग्निर्मूर्धा त्वामग्ने पुष्करादधि ॥
अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा[6] इव प्र वयामुज्जिहानाः[7] प्र भानवः सिस्रते नाकमच्छ ॥
अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥
अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।

1) P चक्षसे 2) P सं मिश्ल 3) So M 3 u P, m Hg सोम्य:, W सोम्यं 4) P ववर्चे । 5) So P, m Hg, M 3, W ohne Accent 6) M 3 जिह्वा, B यह्वा 7) P उज्जिहाना ईत्युत् जिहाना ।

समिद्धस्य रुशदर्शि पाजो महान्देवस्तमसो निरमोचि ॥

जनस्य गोपा अजनिष्ट[1] जागृविरग्निः सुदक्षः सुविताय नव्यसे।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥

तुभ्येदमग्ने[2] मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे[3]।
त्वां गिरः सिन्धुमिवावनीर्महीरापृणन्ति शवसा वर्धयन्ति च ॥

सं समिद्युवसे वृषन्नग्ने[4] विश्वान्यर्य[5] आ।
इडस्पदे समिध्यसे स नो वसून्याभर ॥

अग्निं वः[6] पूर्व्यं[7] गिरा देवमीडे वसूनाम्।
सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् ॥

त्वां चित्रश्रवस्तम[8] हवन्ते विक्षु जन्तवः।
शोचिष्केशं पुरुप्रियाग्ने[9] हव्याय वोढवे ॥

आ ते अग्न[10] इधीमहि द्युमन्तं देवाजरम्।
यद्ध[11] स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आभर ॥

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः।
अस्तमर्वन्त आशवो ऽस्तं नित्यासो वाजिन[12] इषं स्तोतृभ्य आभर ॥

सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः।

1) Hg मजनिष्ट 2) B तुभ्यमिदम॰, P तुभ्य । इद । अग्ने ।, = RV 5 11,5 3) So Hg, M 3 u P, in W हृदि, desgl B, ohne Accent vgl aber RV 5, 11, 5 4) M 3 वृष॰ 5) P अर्य । 6) B अपिवं 7) So W u P, in Hg पूर्व dann die Correctur in पूर्व्यं angedeutet, B पूर्वं, M 3 पूर्व्यं 8) B चित्रश्रवस्तम॰ 9) B पुरुप्रिया अग्ने 10) B अग्ना 11) P यत् । ह ।, W यद्द 12) P वाजिन ।

संभवन्तो रयुद्रवः स॰ सुजातासः[1] सूरया[2] इषं॰ स्तोतृभ्या आ-
भर ॥ ७ ॥

Vgl TS 4 4, 4 (chando gbbadha ishtakah) 1 8 22 3 Kath 39 14, (2 15, 11, 13) VS 15, 20—22 24 25 27 28 [illegible] 31 41 42

एना वो अग्निं नमसोर्जो नपातमाहुवे ।
प्रियं चेतिष्ठमरतिं॰ स्वध्वरं॰ विश्वस्य दूतममृतम् ॥
त्वमग्ने गृहपतिस्त्वं॰ होता नो अध्वरे ।
त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥
देवो वो द्रविणोदाः पूर्णां॰[3] विवष्ट्वासिचम्[4] ।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥
अग्ने वाजस्य गोमत[5] ईशानः सहसो यहो ।
अस्मे धेहि[6] जातवेदो महि श्रवः ॥
स इधानो[7] वसुः कविरग्निरीडेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक[8] दीदिहि ॥
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः[9] ।
स तिग्मजम्भ रक्षसो दह प्रति ॥
अग्ने तमद्याश्वं न स्तोमैः[10] क्रतुं न भद्रं॰ हृदिस्पृशम् ।
ऋध्यामा ता[11] ओहैः ॥
अधा[12] ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीरृतस्य बृहतो बभूथ ॥
आभिष्टे अद्य गीर्भिर्गृणन्तो ग्ने[13] दाशेम ।

1) W सुजातास 2) P सूरय । 3) B पूर्णा॰ 4) P विविष्ट । M 3 विविष्ट्व॰ 5) P गोमत इति गो मत । 6) M3 धेहि 7) M3 n W ईधानो Kath [illegible] 15 इधानो 8) [illegible] पुर्वणीक 9) P उत । उषस । 10) [illegible] सोमै 11) P ऋध्याम । ते । 12) P अध । 13) W अग्ने

प्र ते दिवो न स्तनयन्त शुष्मैः ॥
अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य[1] ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु[2] शुक्रशोचिषः ॥
आजुह्वानस्य सर्पिषः ॥ हंसः शुचिषदभि त्वं देवं सवितारमंसे त्वं नो अन्तमः ॥ अधा ह्यग्ने[3] एवा[4] ह्यग्ने[5] ॥ ८ ॥

Vgl TS 4, 4, 4 (chando ṛbhirdbā sabjakāḥ); Kāṭh. 39, 15; Vā 15, 32 35—37. 44 45. 47.

आयाहि सुषुमा[6] हि ता[7] इन्द्र सोमं पिबा[8] इमम् ।
एदं बर्हिः सदो[9] मम ॥
आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना ।
उप ब्रह्माणि नः[10] शृणु ॥
ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः ।
सुतावन्तो हवामहे ॥
अभि त्वा शूर नोनुमो ऽदुग्धा[11] इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ।
न त्वावं[12] अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥
त्वामिद्धि हवामहे साता वाजस्य कारवः ।

---

1) P यं । 2) So M 3 u P, in Hg u W विभ्राष्ट्रिम॰, B विभ्राष्ट्रीम॰, Kāṭh विभ्राष्टिम॰, cf TS 4, 4, 4, 8. 3) Hg ह्यग्ने, so auch W, wo aber die beiden folgenden Worte fehlen, [illegible] 3 होर्य 4) P एवं । 5) In den Mss ohne Accent 6) P सुषुमा । सुसुमेति सु सुमा । 7) P ते । 8) P पिब 9) P सद॰ । 10) B मे 11) P नोनुम' । अदुग्धा इवेत्यदुग्धाः इव ।, in W नोनुमो दुग्धा 12) P त्वावानिति त्वा वान् ।

त्वा॰ वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः[1] ॥
स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः ।
गामश्व॰ रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे[2] ॥
कया नश्चित्र[3] आभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां म॰हिष्ठो मात्सदन्धसः[4] ।
दृढा चिदारुजे वसु ॥
अभी[5] षु णः[6] सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः ॥
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न श॰सिषम् ॥
ऊर्जो नपात॰ स हिनायमस्मयुर्दाशेम[7] हव्यदातये ।
भुवद्वाजेष्ववितां भुवद्वृध[8] उत त्राता तनूनाम् ॥ ९ ॥

Vgl (4, 12, 4 5), 4, 9 27 — TS 2, 4, 14 2 3, 4, 2, 11 2 u 4 4 12 5 (yajyanovakyāh), TA 4 42, 3, Kath 39, 12, VS 27, 35—42 44, Man Çr 6 2, 3

ऋतूनां पत्नी प्रथमेयमागादह्नां[9] नेत्री जनित्र्युत प्रजानाम् ।
एका सती बहुधोषो[10] व्युच्छाजीर्णा[11] त्वं जरय[12] सर्वमन्यत् ॥
को विराजो मिथुनत्वं प्रवेद ऋतून्को अस्याः क उ[13] वेद रूपम् ।
दोहान्को वेद कतिधा विदुग्धाः कति धामानि कति ये विवासाः[14] ॥

[1] P र्वतं । [2] ■ वाज जिग्युषे [3] P चित्र ।, B °श्चित्रा [4] M 3 मत्स° 5) So Hg, in M 3 अभि desgl B, ohne Accent, P अभि । (s aber RV 4, 31, 3) 6) P सु । न । 7) P हिनं । अयम् । अस्मयुरित्यस्म युः । 8) P वृधे । 9) P प्रथमा । इय । आ । अगात् । 10) W बहुधोषा 11) P fehlerhaft विं । उर्छ । जीर्णा । 12) So Hg (u A), in W u B जरया, M 3 जरया, P जरय, Kath 39,10 जरय, TS 4, 3, 11, 5 जरयसि 13) P कः । उ इत्यु । 14) So M 3, in den anderen Samh Mss fehlt Visarga, P विवासा इति वि वासाः ।

इयमेव सा या प्रथमा व्यौछदा[1]प्स्वन्तश्चरति[2] प्रविष्टा ।
वधूर्मिमाय नवगज्जनित्री[3] त्रय एनां महिमानः सचन्ते ॥
छन्दस्वती उषसा पेपिशाने समाने[4] योनिमनु संचरेते ।
सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे[4] भूरिरेतसा ॥
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु रेतसागुः[5] ।
प्रजामेका जिन्वत्यूर्जमेका[6] क्षत्रमेका रक्षति देवयूनाम् ॥
चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती[7] ।
गायत्रीं त्रिष्टुभं जगती[8] विराजमर्कं[8] युञ्जानाः स्वराभरन्निदम्[8] ॥

पञ्चभिर्धाता विदधा[9] इदं तासा[9] स्वसॄरजनयन्पञ्च पञ्च ।
तासामु यन्ति[10] प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः ॥
ऋतस्य धामप्रथमा[11] व्युष्टयामेका[12] महिमानं बिभर्ति ।
सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैकां नियच्छते ॥
इदं[9] श्रेयो मन्यमानो वा[13] आगामिहे[14] वो अस्मि सख्याय शेवः ।
समानजन्मा क्रतुरस्त्यैकः सर्वः सर्वा[15] विचरतु प्रजानन् ॥

1) व्यौछत् in den Mss ohne Accent (s. aber TS 4, 3, 11, 1). 2) Die ३ fehlt in den Mss. 3) P नवगर्दिति नव गत् । जनित्री । 4) B °चरेते. 5) So die Saṃh. Mss., P रेतसा । अगुः । 6) In P जिन्वति । ohne Accent. 7) S. TS 4, 3, 11, 2, die Mss schwanken: Hg u. W ऋषयो भवन्ति, desgl. B ohne Accent, M 3 ऋषयो भवती, P ऋषयः । भवति ।, Kāṭh. भवती. 8) Die Mss ohne die ३, P स्वरिति स्वः । आ । अभरन् । 9) P विं । दधे । 10) So Hg u. W, in M 3 तासामू यन्ति, B तासामुयन्ति, P तासां । उ इत्युं । यन्ति ।, (s. TS 4, 3, 11, 2). 11) B धाम प्र°. 12) So Hg (u. A), P व्युष्टयेति वि उष्टयी । (s. TS 4, 3, 11, 5), M 3 व्युष्ट्य°, W व्युष्टय°, desgl. B, ohne Accent, ebenso Kāṭh. 13) P वा । 14) P आ । अगाम । 15) P सं । सर्वा ।

भूयांस्म ते सुमतौ विश्ववेदा आंष्टाः[1] प्रतिष्ठांमविदो हिं गाधम् ।
सत्यं[2] वदन्तीर्महिमानमापान्यां[3] वो अन्यांमति मा[4] प्रयुक्त[4] ॥
ऊर्ध्वविधाना समना पुरस्तात्प्रजानती यांममुषा[5] अयासीत् ।
ब्रह्मद्विषस्तंमसा देवशत्रूनभिवंहन्ती विश्ववारा व्युवाट्[6] ॥
पञ्च व्युष्टीरनु पञ्च दोहा[7] गां पञ्चनाम्नीमृतवो ऽनु[8] पञ्च ।
पञ्च दिशः पञ्चदशेन कॢप्ताः समानमूर्ध्नीरभि लोकमेकम् ॥
त्रि[9]यंस्त्वंसारा[9] उपयन्ति निष्कृतं[10] समानं केतुं प्रतिमुञ्चमानाः ।
ऋतूं[9]स्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परियन्ति भास्वतीः ॥
ज्योतिष्मतीः प्रतिमुञ्चते नभो[11] देवी रात्री सूर्यस्य व्रतानि ।
विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे ॥
प्रथमा ह व्युवास सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहा[12] उत्तरामुत्तरा[9] समाम्[13] ॥ १० ॥

*Vgl TS 4, 3, 11 (vyushtyâkhyâ ishtakah), Kâth 39, 10*

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु[14] नक्तम् ॥

---

1) So Hg u A nur ohne Visarga, in M 3 u W आष्टा, B आष्टा, P आ । ष्टा ।; TS 4,3,11,4 आष्ट 2) P सत्य । अन्या. । 3) P यच्छं । अतिमा ।, in Hg °मतिमा ohne Accent 4) So wohl Hg, in M3 प्र युक्तं, W प्र युक्त, B प्रायुक्त, P प्र । युक्त । 5) P याम । उषा । (!), die Samh Mss यांममुषा 6) P वि । अवाट् ।, M3 व्युराट् 7) P दोहाः । 8) P ऋतवो अनु ।, s TS 4,3,11,4, Hg °मृतवो नु 9) P स्वसारः । 10) M3 निकृतं°, B निष्कृतं° 11) P नभ ।, B नभो 12) P दुहे ।; M3 दुहामुत्तराम°, so Kâth (ohne Accent) 13) W समा 14) Hg u M3 रिषस्पातु; W रिषस्पातु, B रिषः पातु, cf 1,2,4 ईशायाम्हर्दे, 1,3,39 रिषस्पाहि

त्वं[1] यविष्ठ दाशुषो नॄं[1]ष्पाहि[1] शृणुधी[2] गिरः ।
रक्षा[3] तोकमुत त्मना ॥
अग्ने धामानि तव जातवेदो देव स्वधावो ऽमृतस्य नाम ।
याश्च माया[4] मायिनां[1] विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो[5] ॥ ११ ॥

Vgl 3, 16 4 — (TS 1, 5 11, 1), Kaṭh 40,3 7, 16, VS 18, 73 u 77, 13, 52; RV 1, 2,, 8 84 (73) 3, 3 20,3

यवा अयवा[6] ऊमा[7] एवा अब्दः संगरः सुमेको ऽग्ने कशांमे किं[8]शिलांमे दुध्रांमे वन्यांमे[8] कक्ष्ये[8] यां ता[9] इषुर्युवा नाम तया विधेम[8] तस्यै ते नमस्तस्यास्ता[10] उप पत्सुतो[11] जीवा भूयास्म[8] ते यं द्विष्मो यश्च नो द्वेष्टि तमस्या[12] जम्भे दध्मः ॥ १२ ॥

Vgl TS 4,4 7,2 a E (bhuyaskṛdadaya ishṭakah), 5 3 9,1 (agnividhih, âhutyadikam), Kaṭh 40 3, (Man Çr 6, 2, 3)

यो अप्स्वन्तरग्निर्यो वृत्रे यः पुरुषे[13] यो अश्मनि ।
य[14] आविवेशौषधीर्यो वनस्पतीं[1]स्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥
यः सोमे अन्तर्यो गोष्वन्तर्वयां[1]सि य[14] आविवेश यो मृगेषु ।
य[14] आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥
येनेन्द्रस्य रथं[1] संबभूवुर्यो वैश्वानर[15] उत विश्वदाव्यः ।

---

1) Die Mss schwanken, Hg नॄंष्पाहि, M 3 u W नॄःष्पाहि wobei Visarga aus ꣵ entstellt sein dürfte, P नॄम् । cf RV 8 84 (73) 3, in Kâṭh 7 16 नॄ पाहि 2) W u P शृणुधि 3) P रंष । B रक्ष 4) P मायां । 5) P पृष्टबधो इति पृष्ट बधो । (s RV 3 20 3), M 3 u B पृष्टबधो, W पृष्टबधो ebenso Hg nur ist hier der Visarga später erst mit rother Tinte zugefugt. 6) P यवा । अयया । 7) P ऊमा ।, B ऊमा 8) P कषे । कश्च । कंषे । किंशिल । कषे । दद्रू(!)। कषे । वन्य । कंषे । 9) So im Anschluss an die Lesart von M 3 u W कक्ष्य, mit Hinweis auf 2, 9 6, Kâth 40 3, VS 16 34, die andern Mss, auch P, lesen काष 10) P त । 11) So Hg, P पत्सुतं इति पत् सुतं । B पत्सुतो, M 3 पदत्सुतो W °ताअपपत्सुतो 12) P अस्या ।, B °स्या 13) M 3 पुरुषे, Hg पुरुषो 14) P यं । 15) P वैश्वानरं ।

धीरो यः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥
विश्वादमग्नि[1] यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः ।
यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥
उक्षान्नाय वशान्नाय सोमपृष्ठाय[2] वेधसे ।
स्तोमैर्विधेमाग्नये ॥
वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ १३ ॥

(Vgl TS 1,3 14 7), Kāṭh 40 3 5

मा छन्दस्तत्पृथिव्यग्निर्देवता तेन छन्दसा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ प्रमा छन्दस्तदन्तरिक्ष[3] वायुर्देवता प्रतिमा छन्दस्तद् द्यौः सूर्यो देवतास्रीवीश्छन्दस्तद्दिशः सोमो देवता गायत्री छन्दस्तदजा बृहस्पतिर्देवता त्रिष्टुप्छन्दस्तद्धिरण्यमिन्द्रो देवता जगती छन्दस्तद्गौः प्रजापतिर्देवतानुष्टुप्छन्दस्तदायुर्मित्रो देवतोष्णिक्छन्दस्तच्चक्षुः पूषा देवता विराट् छन्दस्तदश्वो वरुणो देवता बृहती छन्दस्तत्कृषिः पर्जन्यो देवता पङ्क्तिश्छन्दस्तत्पुरुषः[4] परमेष्ठी देवता तेन छन्दसा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ १४ ॥

Vgl 2 8 3 — TS 4 3, 7 1 (bṛhatyākhya iṣṭakaḥ), Kāṭh 39 4 VS 14 18 20

पृथिव्यसि जन्मना वशा सोग्निं[5] गर्भमधत्थाः[6] सा मया संभवान्तरिक्षमसि जन्मना वशा सा[7] वायुं गर्भमधत्थाः सा मया संभव[8]

1) B यद्यो हवीपि 2) M3 सोमपृष्ठाय W सोमपृष्ठाय P सोमपृष्ठायेति सोम पृष्ठाय । 3) So Hg u W in M3 °क्षीवो छं° B स्त्रोवो छ°, P ganz corrupt स्त्रावी। (zig स्त्रावी । dann Visarga gestrichen) vgl oben 2 8 3 In Kaṭh 39 4 °स्त्रोवयश्छ° 4) M3 तत्पुरुष 5) Hg साग्नि M3 सो ग्निं, P मशा । सो । ग्निं । 6) So Hg, M3 °धथा , W धत्था (त्थ häufig für त्थ verschrieben), B °धस्था , P अधस्था । 7) Von hier bis संभव द्यौरसि (excl ) in B fehlend 8) सा in Hg ohne Accent

द्यौरसि जन्मना वशा सादित्यं गर्भमधत्थाः[2] सा मया संभव नक्षत्राण्यसि जन्मना वशा सा[1] चन्द्रमसं गर्भमधत्थाः[2] सा मया संभव ऋगसि जन्मना वशा सा[1] साम गर्भमधत्थाः[2] सा मया संभव विडसि जन्मना वशा सा[1] राजानं गर्भमधत्थाः[2] सा मया संभव वागसि जन्मना वशा सा[1] प्राणं गर्भमधत्थाः[2] सा मया संभवापोऽसि जन्मना वशा सा[1] यज्ञं गर्भमधत्थाः[2] सा मया संभव ॥ १५ ॥

Vgl Kath 39,8, (Mān Çr 6,2,3)

या देव्यसीष्टके कुमार्युपशीवरी सा मोपशेष्व जायेव संदमित्यन्ति[3] या देव्यसीष्टके प्रफर्व्युपशीवरी सा मोपशेष्व जायेव संदमित्यन्ति[3] या देव्यसीष्टके युवतिरुपशीवरी सा मोपशेष्व जायेव संदमित्यन्ति[3] या देव्यसीष्टक आयुर्दाः प्राणदा अपानदा व्यानदाश्चक्षुर्दाः श्रोत्रदाः पृथिव्यामन्तरिक्षे दिवः पृष्ठ उपशीवरी सा मोपशेष्व जायेव संदमित्यन्ति[3] या देवीः स्थेष्टकाः[4] सुशेवा उपशीवरीस्ता मोपशेध्वं जाया इव संदमित्यन्तिम् ॥ १६ ॥

Vgl Kath 39,9 (Mān Çr 6,2,3)

सवयसे त्वाभिवयसे त्वोर्ध्ववयसे त्वा बृहद्वयसे त्वा सहीयसे त्वा सहमानाय त्वा सासहये त्वा सहस्वते त्वाभीषाहे[5] त्वाभिभ्वे त्वाभिमातिषाहे त्वाभिमातिघ्ने त्वा ॥ १७ ॥

(Mān Çr 6,2,3)

भूयस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्ध्वास्यन्तरिक्षमस्योजोदां त्वौजसि सादयामि पयोदां त्वा पयसि सादयामि तेजोदां त्वा तेजसि

---

1) In Hg सा ohne Accent. 2) So Hg, M 3 °धथा, W °धत्था, B °धत्था 3) So Hg, in M 3 युवतीर्°, W युवतीर्°, P युवती । 4) Hg स्येष्टका 5) P मा । उप । शेष्व ।, B मोपशेष्व 6) P अभिषाहे । अभिषाह इत्यभि-साहे ।

सादयामि यशोदां त्वा यशसि सादयामि वर्चोदां त्वा वर्चसि सादयामि[1] पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा द्रविणे सादयामि दिवस्त्वा द्रविणे सादयामि दिशां त्वा द्रविणे सादयामि द्रविणोदां त्वा द्रविणे सादयाम्यप्सुषदसि गृध्रसंदसि श्येनसंदसि सुपर्णसंदसि नाकसंदसि ॥ १८ ॥

Vgl TS 4, 4, 7 (bhûyaskṛdadaya ishtakâh) und 6 (viçvajyotirâdyâ ishṭakâh), Kâṭh 39, 9, (Mân Çr 6, 2, 3)

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयाम्यूर्ध्वज्योतिषं त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि विश्वज्योतिषं त्वा सादयाम्यजस्रां त्वा सादयामि भास्वतीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं[2] त्वा सादयामि जाग्रतीं त्वा सादयामि बोधयन्तीं त्वा सादयामि ॥ १९ ॥

Vgl TS 1, 4, 34 (poshape dabe vinyaktâni yajâmahi); TÂ 3, 13, Kâṭh 40, 4, (Mân Çr 6, 2 3)

कृत्तिका नक्षत्रमग्निर्देवताग्ने रुचः स्थ प्रजापतेः सोमस्य धातुश्चीर्चे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा तेन छन्दसा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद् ध्रुवा सीद रोहिणी नक्षत्रं प्रजापतिर्देवतेन्वगा[3] नक्षत्रं मरुतो देवता बाहुर्नक्षत्रं रुद्रो देवता पुनर्वसुर्नक्षत्रमदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताश्लेषा[4] नक्षत्रं सर्पा देवता मघा नक्षत्रं पितरो देवता फल्गुनीर्नक्षत्रं भगो देवता फल्गुनी-

1) Von hier bis दिवस्त्वा (excl) in B fehlend   2) Kâth मल्मलाभवती   3) M 3 °तेन्वगो, P इत्वगा । wohl Schreibfehler für इन्वका ।; Kâṭh °तेन्वका   4) P श्लेषा ।

नक्षत्रमर्यमा देवता हस्तो नक्षत्र॰ सविता देवता चित्रा नक्षत्रं त्वष्टा देवता निष्ट्या[1] नक्षत्र॰ वायुर्देवता विशाखे[2] नक्षत्रमिन्द्राग्नी देवतानूराधा[3] नक्षत्रं मित्रो देवता ज्येष्ठा नक्षत्र॰ वरुणो देवता मूलं नक्षत्रं निर्ऋतिर्देवताषाढा[4] नक्षत्रमापो देवताषाढा नक्षत्र॰ विश्वे देवा देवताभिजिन्नक्षत्रं ब्रह्मा[5] देवता श्रोणा नक्षत्र॰ विष्णुर्देवता श्रविष्ठा नक्षत्र॰ वसवो देवता शतभिषं[6] नक्षत्रमिन्द्रो देवता प्रोष्ठपदा[7] नक्षत्रमहिर्बुध्न्यो देवता प्रोष्ठपदा[8] नक्षत्रमज एकपाद्देवता रेवती नक्षत्रं पूषा देवताश्वयुजौ नक्षत्रमश्विनौ देवता भरणीर्नक्षत्र॰[9] यमो देवता ब्राह्मणो नक्षत्र॰ सोमो देवताग्ने रुचः स्थ प्रजापतेः सोमस्य धातुर्ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा तेन छन्दसा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २० ॥

Vgl. TS 4,4,10 (nakshatreshṭakâh); Kâṭh 39,13; (Mân. Çr 6, 2, 3)

समीची नामासि प्राची दिक्तस्यास्ते ऽग्निरधिपतिरसितो[10] रक्षिता यश्च ते ऽधिपतिर्यश्च रक्षिता ताभ्यां नमो ऽस्तु तौ नो मृडतं[11] ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्म ओजऽस्या नामासि दक्षिणा दिक्तस्यास्त इन्द्रो ऽधिपतिस्तिरश्चीनराजी[12] रक्षिता

---

1) Die Mss schwanken; Hg निष्ट्ये oder निष्टि; M 3 निष्टं; B निष्टि; W निष्टि; P निष्ट: ।; Kâṭh 39, 13 निष्ट्या नक्षत्रम् 2) So Hg u. M 3, P विशाखमिति वि. शाख ।; W विशाय; nur B विशाखे; Kâṭh विशाखा नक्षत्रम् 3) P अनुराधेत्यनु राधा । 4) P अभिजिदित्यभि जित् ।; M 3 ॰भिर्न्न; W ॰भिन्नि 5) So Hg u. W; desgl. B, ohne Accent; P ब्रह्मा !; M 3 ब्रह्म 6) So Hg, W u. P; in M 3 शतभोष॰; B शतभिषद्, so auch Kaṭh 39, 13 7) W प्रोष्टपदा; dem entsprechend auch P; M 3 प्रोष्टपादो 8) W प्रोष्टपदा; M 3 प्रोष्टपादा 9) M 3 भरणी न॰, P भरणी । 10) M 3 ॰षीतो 11) P मृडेता । 12) P तिरश्चीनराजिरिति तिरश्चीन-राजि: ।

यश्च ते ऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु तौ नो मृडतां ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः प्राची नामासि प्रतीची दिक्तस्यास्ते सोमो ऽधिपतिः स्वजो रक्षिता यश्च ते ऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु तौ नो मृडतां ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः सुषदा नामास्युदीची दिक्तस्यास्ते वरुणो ऽधिपतिः पृदाकू रक्षिता यश्च ते ऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु तौ नो मृडतां ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मो ऽवस्था नामास्यवाची दिक्तस्यास्ते विष्णुरधिपतिः कल्माषग्रीवो रक्षिता यश्च ते ऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु तौ नो मृडतां ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मो ऽधिपत्नी नामास्यूर्ध्वा दिक्तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो रक्षिता यश्च ते ऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु तौ नो मृडतां ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः ॥ २१ ॥

Vgl TS 5, 5, 10 (sarpahutir mahâhomo mokaç ca)

स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः ।
प्रत्नं सधस्थमनुपश्यमाना आ तन्तुमग्निर्दिव्यं ततान ॥
त्वं तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः ।
त्वयाग्ने पृष्ठं वयमारुहेम यत्र देवैः सधमादं मदेम ॥
अतिसर्गं ददतो मानवायोर्ध्वं पन्थामनुपश्यमानाः ।
अजुषन्त मरुतो यज्ञमेतं वृष्टिद्यावानममृतं स्वर्विदम् ॥
आवर्तमानो भुवनस्य मध्ये प्रजाः कृण्वंजनयन्विरूपाः ।

1) W ते नो मृडता 2) M 3 मृदाकू, P मदाकु । 3) P चयसेत्यप स्वां ।
4) So Hg u M 3, P पशु पश्यमान ।, W °पश्यमाना, desgl B, ohne Accent

सं॑वत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः परस्मात्।
प्रजां ददातु परिवत्सरो नो धाता दधातु सुमनस्यमानः।
बह्वीः साकं बहुधा विश्वरूपा एकव्रता मामभिसंविशन्तु ॥ २२ ॥

Vgl Kath 40, 12, TBr 2, 4, 2, 5 u 6 (Mān Çr 6, 2 6)

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम
यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥
य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥
यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः।
दिशो यस्य प्रदिशः पञ्च देवीः कस्मै देवाय हविषा विधेम॥
येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं[10] येन नाकः।
यो अन्तरिक्षं विममे वरीमः कस्मै देवाय हविषा विधेम
य[11] इमे द्यावापृथिवी[12] तस्तभाने[13] अधारयद्रोदसी[14] ... माने

1) B यष्टी 2) P एक। 3) P दधार। 4) B निमिषश्च 5) P ओजोदा ईत्योज दा। बलदा इति बलदाः। 6) P छाया। अमृत। 7) P यस्य। इमे। 8) Dies Wort fehlt in B 9) So wohl Hg, in M 3 u W सहाहु, P सह। आहु। 10) B स्तभृतं, vgl den folgenden Vers 11) P यः। 12) So Hg M 3 u W (desgl Kath ), dem entsprechend P, in B द्यावापृथ्वी, das Metrum konnte ॰पृथ्वी vermuthen lassen, welche Form oben 2, 7, 15 sich zeigte, und auch unten 4, 10, 1, 4, 17, 7 (zugleich metrisch nothwendig) auftritt 13) M 3 तस्तभाने, desgl B, ohne Accent. 14) B आधारयद् auch M 3 eigentlich आधारयद्, aber dann in अधा॰ corrigirt

यस्मिन्नधि विततः सूरो[1] एति कस्मै देवाय हविषा विधेम।
आपो ह यन्महतीर्विश्वमायन्गर्भं[2] दधाना[3] जनयन्तीरग्निम्।
ततो देवाना निरवर्ततासुः कस्मै देवाय हविषा विधेम॥
आ नः प्रजा जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः।
सꣳवत्सर[4] ऋतुभिः सꣳविदानो मयि पुष्टिं पुष्टिपतिर्दधातु॥

॥ २३ ॥ Vgl (2 7 15 3 12 16 17) RV 10 121 TS 4 1 8 3 flg (prayājayājyā apr namakah) Kāṭh 40 1 (Mān Çr 6 2 3) VS 13 4 23 1 u 3 25 10—13 27 25 u 26 32 3 6 u 7

1) P सूरः। 2) P र्भा। श्यन्। 3) P दधाना। 4) P सꣳवत्सर।

॥ इति मध्यमकाण्डे त्रयोदशमः प्रपाठकः ॥

॥ इति मध्यमकाण्ड समाप्तम् ॥

# ॥ मैत्रायणी संहिता ॥

# MÂITRÂYAṆÎ SAṂHITÂ


HERAUSGEGEBEN

VON

Dr LEOPOLD VON SCHROEDER


## DRITTES BUCH


GEDRUCKT AUF KOSTEN DER DEUTSCHEN MORGENLÄNDISCHEN GESELLSCHAFT

LEIPZIG

IN COMMISSION BEI F. A. BROCKHAUS

188[illegible]

# ॥ मैत्रायणी संहिता ॥

# MÂITRÂYAṆÎ SAṂHITÂ

HERAUSGEGEBEN

VON

DR. LEOPOLD VON SCHROEDER

## DRITTES BUCH

GEDRUCKT AUF KOSTEN DER DEUTSCHEN MORGENLÄNDISCHEN GESELLSCHAFT

LEIPZIG

IN COMMISSION BEI F. A. BROCKHAUS

1885

# Vorwort.

Für die Ausarbeitung des vorliegenden dritten Buches der Maitrāyaṇī Saṃhitā hat mir leider nur ein sehr beschränktes handschriftliches Material zu Gebote gestanden, und sind auch weitere Mss dieses Buches bisher nicht bekannt geworden Vergebens hatte ich gehofft dass auch für dieses Buch, wie für alle andern, sich in Indien eine alte Handschrift werde auffinden lassen Es ist dies bis jetzt nicht der Fall gewesen

Die einzigen bisher bekannten und von mir benutzten Handschriften dieses Buches sind

1 Die Haug sche Handschrift, der Münchener Hof und Staatsbibliothek gehörig, von einem älteren Ms in Nasik im Jahre 1884 copiert, ich habe dieselbe schon in der Einleitung zum ersten Buche der Maitr Saṃh p XXXV erwähnt und mit H bezeichnet

2 Die Handschrift von Bombay, moderne Copie, aus derselben Quelle stammend, mit Bb bezeichnet (vgl Einleitung zum ersten Buche p XXXVI)

3 Die unaccentuirte Bühler sche Handschrift, von mir mit B bezeichnet, moderne Copie, ebenfalls aus Nasik stammend (s Einleitung zum ersten Buche p XXXVI)

Alle diese drei Handschriften sind ganz moderne Copieen und gehen ersichtlich auf dieselbe Quelle ein älteres, in Nasik (Dekhan) befindliches Ms zurück, sie vertreten demnach alle zusammen ein und dieselbe ältere Handschrift, und musste also der Text eigentlich nach einer einzigen Handschrift festgestellt werden. Dazu kam dann nun freilich noch der Padapatha und es ist auf denselben bei dem geringen sonstigen Material vielleicht mehr Gewicht gelegt worden, als dies sonst geschehen wäre

Unter solchen Umständen war die *Aufgabe* den *Text* des *vorliegenden* Buches lesbar und korrekt herzustellen keine ganz leichte Die Zahl der nothwendigen Verbesserungen die eine einzige ältere *Handschrift* uns *wohl* zum *grossen* Theil erspart hätte, war sehr beträchtlich und es werden Irrungen im Einzelnen

unvermeidlich gewesen sein. Auch haben einige Stellen in der völlig unverständlichen Form bleiben müssen, wie sie die Handschriften bieten, da sich für alle Schwierigkeiten eine befriedigende Lösung schlechterdings nicht finden liess.

Wenn ich nun auch nicht daran zweifle, dass ein schärferes Auge noch manche Schwierigkeit hätte lösen können, manche scheinbar gelöste richtiger gelöst hätte, so glaube ich doch, dass die oben dargelegten ungünstigen Handschriften-Verhältnisse mir für manchen bei der mühsamen Arbeit begangenen Fehler die Indemnität von Seiten der berufenen Richter sichern werden.

Eine Reihe von Berichtigungen und mehrere zum Theil evidente, zum Theil sehr beachtenswerthe Conjecturen, die ich meinem verehrten Freunde, Prof. B. Delbrück in Jena verdanke, sind als „Corrigenda" aufgeführt.

Endlich erfülle ich noch eine angenehme Pflicht, indem ich dem Hochverordneten Conseil der Kaiserl Universität zu Dorpat für die Verleihung des Heimbürgerschen Reisestipendiums meinen wärmsten Dank abstatte. Nur durch diese Unterstützung war ich im Stande, die erforderlichen handschriftlichen Studien in Deutschland auszuführen, namentlich auch das Ms. des *Kâṭhaka* in Berlin zu vergleichen.

Auch die Verwaltung der Königl Bibliothek zu Berlin, welche mir die Benutzung der Kâṭhaka-Handschrift möglich machte, bitte ich meinen Dank entgegen nehmen zu wollen.

Zum Schluss noch die Bemerkung, dass auch das vierte Buch der Mâitr. Saṃh. vollständig druckfertig in der Officin liegt und der Druck desselben unverzüglich in Angriff genommen werden soll.

Dorpat, im August 1885.

Dr. L. v. Schroeder.

# मैत्रायणी संहिता

जर्नविक्रमिणा थ्येना लीबोल्एयदेशोद्भवेन शोधिता

प्रुस्यनाम्नि राष्ट्रे वेर्लीणाख्यायां राजधान्यां मुद्रिता

सवत्सरे १८८५

जुहूमग्ने संमार्ष्टि जुहूर्वै यज्ञमुखं मुखतो वा एतद्यज्ञमालभ्य जुउह्वा[1] वै देवा विराजमह्वयन्त तं जुह्वा[2] जुहूत्वमेव वै विराडेवं जुहूरुक्तो ऽग्निं यज्जुह्वा जुहोत्यन्नस्य चार्कस्य चावरुद्ध्या अष्टौ कृत्वो जुह्वां गृह्णात्यष्टाक्षरा[3] गायत्री गायत्री यज्ञमुखं यज्ञमुखमेवालभ्य यत्सावित्राणि हूयन्ते प्रसूत्या अथो यजुषामेव नानावीर्यत्वायाग्निर्वै यत्र यथागच्छत्सवितान्वपश्यद्यत्सावित्राणि हूयन्ते ऽग्नेरेवानुख्यात्या[4] अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरदिति सविता वा एतदग्ने ज्योतिः पृथिव्याः समभरत्तस्मादेवमाह युञ्जन्ति च जुहोति[5] मनस्वती च युक्तेन हि मनसा यज्ञस्तायते षड्गृमाणि[6] भवन्ति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठत्यैति वा एष यज्ञमुखादुयो[7] ऽन्यामाग्नेय्या[8] अन्ये देवतामुपैति यत्सावित्राणि न स्तुरियात्सावित्रात्मसवाद्दृष्टौ[9] वा एतानि यजूंष्यष्टाक्षरा गायत्री गायत्री यज्ञमुखं तेन यज्ञमुखान्नैति यदु सावित्राणि तेन सावित्रात्मसवान्नैति छन्दोभिर्जुहोति छन्दोभिर्वा एतदग्नये बलिं हारयति वहन्वो हास्य बलिंहृतो भवन्त्यृग्वै यज्ञस्य नेदीयो यजुर्यजमानस्य यदि कामयेत यज्ञं यज्ञयशसेनार्पयेयमित्यृगुत्तमानि कुर्याद्यज्ञं वा एतद्यज्ञयशसे-

---

1) Die Mss जुह्वा  2) H u Bb जुह्वां, B जुह्वा  3) Das Verb = den Mss accentuirt गृह्णात्य॰  4) Die Mss ॰ख्यात्या॰  5) So Bb, in H accentuirt जुहोति  6) Die Mss रिग्माणि  7) Die उ fehlt in den Mss  8) Die Mss ॰येय्यौ  9) So corrigirt, die Mss स्तुरीयात्, cf unten 3, 3 3 a A

नार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमिति यजुरुत्तमानि कुर्याद्यजमानं वा एतद्यज्ञयशसेनार्पयत्याहुतीनां वा अभिक्रान्त्या यजमान आप्नोति यं कामयेत आप्नुयादिति तस्य सकृत्सर्वाण्यनुद्रुत्य जुहुयादाप्नोत्येव यं कामयेत पापीयान्स्यादिति तस्य नाना जुहुयात्पापीयान्भवत्यृचां स्तोमं समर्धयेत्याह समृद्ध्या एव गायत्रेण रथन्तरमितीयं वै गायत्रीयं रथन्तरमसौ बृहदनयोर्वा एषा लोकयोराप्त्या अनन्तरः क्रियते ऽष्टौ वा एतानि यजूंष्यष्टाक्षरा गायत्र्यक्षरशो वा एतद्गायत्रीं प्रीणात्येव यदाहुतिर्नवमी तेन त्रिवृतो यज्ञमुखान्नैत्येव यदेकामाहुतिमष्टाभिर्यजुर्भिर्जुहोति तस्मादेकस्मै सते बहवो बलिं हरन्ति बहवो हास्य बलिहृतो भवन्ति यजुरुत्तमानि भवन्ति ब्रह्म वै यजुर्ब्रह्मणि वा एतदन्ततो यज्ञस्य यजमानः प्रतितिष्ठति ॥ १ ॥

Vgl 2,7,1. — TS 5, 1, 1 (ukhyāgnih; sāvitrābhatir abhreç ca avikārah); Kap. S 29,7; Çat. Br. 6, 3, 1, 1 flg

सावित्रैरभ्रिमादत्ते प्रसूत्यै चतुर्भिरादत्ते चत्वारि वै छन्दांसि छन्दोभिरेवादत्ते ऽथो ब्रह्म वै छन्दांसि ब्रह्मणैवादत्त इयं वै गायत्र्यन्तरिक्षं त्रिष्टुब्द्यौर्जगती दिशो ऽनुष्टुप्सवितृप्रसूतो वा एतेभ्यो लोकेभ्यश्छन्दोभिर्दिग्भ्यो ऽग्निं संभरति यत्र वा अदो ऽग्निर्होत्रादभीपापाक्रामत्स सर्वेषु भूतेष्ववसद्वनस्पतिष्ववसत्स वेणाववसत्स यत्र निरदहत्तानि कल्माषाण्यभवन्येन समचरत्तत्सुषिरं यत्रावसत्तमवं यद्धिरण्यमभिभवति स्वेनैवैनं योनिना संभरति यो वै वनस्पतीनां फलग्रहितमः स एषां वीर्यवत्तमो वेणुर्वै वनस्पतीनां फलग्रहितमः स एषां वीर्यवत्तमो ऽन्नं वै फलमन्नमर्को ऽर्को

ऽग्निरर्केण वा एतदन्नमर्कमग्निं संभरति व्याममात्री कार्यैतावद्वै पुरुषे वीर्यं वीर्यसंमिता क्रियतेऽथो एतावान्वै पुरुषे महिमा महिम्नोऽवरुद्ध्या अरत्निमात्री कार्या यज्ञपुरुषासंमिता प्रादेशमात्री कार्या विष्णुना यज्ञेन संमितोभयतःक्ष्णुत्कार्योभयस्यान्नाद्यस्यावरुद्ध्या अन्यतःक्ष्णुत्कार्या अन्यतःक्ष्णुद्धि फालस्तावन्तमर्कं करोत्यन्नं वा अर्को ऽन्नाद्यस्यावरुद्ध्या औदुम्बरी कार्योर्ग्वा उदुम्बर ऊर्जोऽवरुद्ध्या अपरिमिता कार्यापरिमितस्यावरुद्ध्यै य एवं कश्च वृक्षः फलग्रहिस्तस्य कार्यान्नाद्यस्यावरुद्ध्यै ॥ २ ॥

Vgl 2, 7, 1. — Kāṭh 19, 1, Kap. S 29, 8, Çat Br. 6, 3, 1, 30 flg

अश्वेन वै देवा अग्रे विजितिं व्यजयन्त यदश्वेन यन्ति विजित्या अग्निं यत्र यथागच्छत्प्रजापतिरन्वपश्यत्प्राजापत्यो ऽश्वो यदश्वेन यन्त्यग्नेरेवानुख्यात्यै प्रजापतिर्वा अग्निं संभरिष्यन्स एभ्यो लोकेभ्यो ऽश्वं निर्माय दिग्भ्यश्चाग्निं समभरत्तदाह दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदिति यथादेवतं वा एतदेभ्यो लोकेभ्यो ऽश्वं निर्माय दिग्भ्यश्चाग्निं संभरति युञ्जाथां रासभं युवमित्याह युक्त्वा एव गर्दभेन संभरत्येष हि पशूनामनुपजीवनीयतमो ऽग्निर्वा एतस्याग्रे सृष्टस्य योने रेतो निरदहत्तस्मादेष समावदन्यैः पशुभी रेतो धत्ते ऽथ कनिष्ठो ऽश्वं पूर्वं नयन्ति गर्दभमपरं पापवसीयसस्य व्यावृत्त्यै तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान्पश्चादन्वेति यदि कामयेत पापवसीयसं स्यादिति गर्दभं पूर्वं नयेयुरश्वमपरं तेन वै विपूजनः सौराकिः पापवसीयसं चकार तत्पापवसीयसमेवैतेन करोति योगे योगे तवस्तरमित्यूतिर्मत्या वाजय-

1) Die Mss. पशुभि

त्वा यन्त्यन्नं वै वाजो गातुरूतिरवाय च खलु वै गातवे चाग्नि-श्चीयते यदूतिमत्या वाजवत्या यन्त्यन्नस्य च गातोश्चावरुद्धै भवति वा एष उद्यो ऽग्निं चिनुते सर्वो वै भवत इरस्यति वज्री वा एष प्राजापत्यो यदश्वो यदाह प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति वज्रेण वा एतदशस्तीररातीर्यन्तमवक्रामति रौद्रा वै पशवो ऽसौ रुद्रो यद्रुद्रा-त्पशूननिर्योच्याग्निं चिन्वीत रुद्रो ऽस्य पशूनभिमानुकः स्याद्यदाह रुद्रस्य गाणपत्यान्मयोभूरेहीति रुद्राद्वा एतत्पशून्निर्योच्याग्निं चि-नुते ऽघातुको ऽस्य पशुपतिः पशून्भवत्युर्वन्तरिक्षं वीहीत्याहैषां लोकानां विधृत्यै रक्षांसि वा एतौ जिघांसन्त्यग्निं संभरिष्यन्तौ यदाह स्वस्तिगव्यूतिरभयानि कृण्वन्निति स्वस्तिमेवाभ्यामकः पु-रीषं वा अग्नेरायतनमङ्गिरस एतमग्रे समभरन्यदाहाग्निं पुरीष्यम-ङ्गिरस्वदाभरेति सायतनमेवैनं देवताभिः संभरति येन पुरुषेण संग-च्छेत तमभिमन्त्रयेताग्निं पुरीष्यमङ्गिरस्वदच्छेमा इति वाजमेव तेन तस्माद्वृङ्क्ते प्रजापतये प्रोच्याग्निश्चेतव्या इत्याहुर्यतः सूर्यस्योदयनं ततो वल्मीकवपामपघ्नन्ब्रूयादग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामा इतीयं वै प्रजापतिस्तस्या एष कर्णो यद्वल्मीकस्तस्मा एव प्रोच्याग्निं चिनुते शृण्वन्ति हैनमग्निं चिक्यानमसा अग्निमचेष्टेति तस्मात्पापीयाञ्छ्रेयसः कर्णे आह कर्णेः कर्णायाह ॥ ३ ॥

Vgl 2, 7, 2 — TS 5, 1, 2 (mṛtkhanam gachann açvenâkramayed bhuvam), Kâṭh 19, 2, Kap S 29, 8, Çat Br 6, 3, 2 u 3 1–5

---

1) In den Mss nicht recht deutlich, B eher वै भवत, H u Bb संर्भवत्, wobei jedoch das भ sich einem entstellten सं in der Form nähert, vgl Kâṭh 19, 2 बहुर्वै भवतो भ्रातृव्यो भवति, s folg Anm 2) So B, ich übersetze jeder neidet den, dem es gut geht (भवते), wozu dann das Schutzmittel passt, welches gleich darauf empfohlen wird in H u Bb इतरस्यति 3) So corrigirt, die Mss °शस्तिरराती-र्यन्तमपक्रामति, vgl Kâṭh 19, 2 वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति

अन्वग्निरुषसामग्रमख्यदित्याहानुख्यात्या[1] एवागत्य वाज्यध्वानꣳ सर्वा मृधो विधूनुता इति मृध एव अपास्यतेऽच्छां एतं प्रजापतिः पूर्वयर्चाविन्ददुत्तरयैवापीदेवैनं पूर्वयर्चाविन्ददुत्तरया द्यौस्ते पृष्ठं पृथिवी सधस्थमिति द्यौ३र्ह्येतस्य[2] पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिरित्यात्मा ३ह्येतस्यान्तरिक्षꣳ[3] समुद्रो योनिर्विख्याय[4] चक्षुषा त्वमभितिष्ठ पृतन्यत इति पृतन्यन्तमेवाभितिष्ठति यं द्विष्यात्तं ब्रूयात् ॥ अमुमभितिष्ठ ॥ इति तमेवाभितिष्ठत्युत्क्रामेत्याहोत्क्रान्त्या एव यत्र वै यज्ञस्यानुरूपं क्रियते तद्यजमान आप्नोत्युत्क्रामोदक्रमीदित्यनुरूपꣳ वा एतत्क्रियते यज्ञस्यावरुद्ध्यै कृष्णो वै भूत्वाग्निरश्वं प्राविशत्स एतदगच्छद्यद्य मृगशफो यदश्वस्य पदे जुहोत्यग्निमत्येव जुहोत्यायतनवत्यग्नो ऽध्वर्युः स्याद्यदनायतने जुहुयादेतद्वै तद्यदाहुर्मृगशफमन्वगादिति मनस्वतीभ्यां जुहोति मनसा ह्याहुतीराप्यन्ते त्रिष्टुब्भ्यां जुहोतीन्द्रियस्यावरुद्ध्या अन्नवतीभ्यां जुहोत्यन्नाद्यस्यावरुद्ध्यै गायत्र्या परिलिखत्यस्या एवैनं तेन परिगृह्णाति त्रिष्टुभान्तरिक्षात्तेनानुष्टुभा परिलिखत्यनुष्टुब्वै सर्वाणि छन्दाꣳसि परिभूस्तस्मादनुष्टुभा परिलिखति सावित्रैरभिमादत्ते प्रसूत्यै द्वाभ्यां खनति द्विपाद्यजमानः प्रतिष्ठित्यै रुग्वा अस्य प्रजा आच्छति यस्याग्निः खायते चीयते वा यदाह शिवं प्रजाभ्यो ऽहिꣳसन्तमिति प्रजाभ्य एवैनꣳ शिवमकः ॥ ४ ॥

Vgl 2, 7, 2 — TS 5, 1, 2 u 3 (atikramayyaçvam bhasamakāro jalādubhih), Kath 19, 3 u 4, Kap S 30, 1, Çat. Br 6, 3, 3 6 ff

---

1) So corrigirt, H u Bb °ख्यदित्याहानुख्यात्या, B °ख्यदित्याहरनुख्यात्या, Kap S 30 °मग्रमख्यदित्यनुख्यात्या, Kath 19 3 °मग्रमख्यदित्यनुख्यात्या 2) Die ३ fehlt in den Mss 3) Die ३ fehlt in den Mss 4) So corrigirt, die Mss विचाय

अपां पृष्ठमसीत्याहापां ह्येतत्पृष्ठं' पृष्ठेनैवैनत्पृष्ठमकर्योनिरग्नेरिति' योनिर्वा एऽषो ऽग्नेर्यत्पुष्करपर्णं' नाभिर्वधकः' संयोनिरेवं सनाभिः संभ्रियते' दिवो मांत्रया वरिणा प्रथस्वेत्यनयो रेवैनं मांत्रया वरिणा प्रथयति' शर्म च स्थो वर्म च स्था' इति कृष्णाजिनं च पुष्करपर्णं च संस्तृणातीमे एवासा एतद् द्यावापृथिवी[1] संस्तृणाति' व्यचस्वती संवसेथामिति' न वा एतन्मनुष्या यन्तुमर्हन्त्याभ्यामेवैनं परिगृह्णाति' कृष्णाजिनेन संभरत्येषं हि पशूनामनुपजीवनीयतमो' ऽथो आरण्यानेवं पशूञ्छुचार्पयति' लोमतः संभरत्येतो वै कृष्णाजिनस्य संदेव' यज्ञेनैव यज्ञं संभरति' पुष्करपर्णेन संभरति' योनिर्वा एऽषो ऽग्नेर्यत्पुष्करपर्णं' स्वेनैवैनं योनिना संभरति' गायत्रीभिर्ब्राह्मणस्य संभरति' गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य' त्रैष्टुभो हि राजन्यो' जगतीभिर्वैश्यस्य' जागतो हि वैश्यो' यं कामयेत' स्वभुयादिति' तस्य गायत्रीभिश्च त्रिष्टुब्भिश्च[2] संभरेद्धौति' पुरीष्यो ऽसि विश्वंभरा अथर्वा त्वा प्रथमो निरमन्थदग्न इति' प्रजापतिर्वा अथर्वा' स एतमग्रे ऽमन्थत्सो ऽजनयत्स एवैनं मन्थति' स जनयति' तिसृभिः संभरति' त्रयो वा इमे लोका' एभ्य एवैनं लोकेभ्यः संभरति' यजुस्तुरीयं' दिग्भ्य एवैनं तेन संभरति' पुरोवातं वै वातं वर्षमनुप्रतितिष्ठति' वर्षमन्वोषधय' ओषधीरनु पशवः' पशूननु मनुष्या' एतां वै प्रतिष्ठां यजमानो ऽवरुन्द्धे' ऽपो देवीरुपसृज मधुमतीरित्याहौषधीनां प्रतिष्ठित्यै' तासामास्थानादुज्जिहतामोषधयः सुपिप्पला इति' तस्मादेतासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः' सं ते वायुर्मातरिश्वा दधात्विति' तस्मादेतस्या यत्कृष्यते य-

1) Die Mss द्यावापृथिवी 2) Die Mss त्रिष्टुभिश्च

ऽखायते तत्संधीयते यद्घृतेन जुहुयाच्छुचैनामर्पयेदथ यदजमुपसृजन्ति शमयत्येवैनां यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यमिति षड्वा ऋतव ऋतुषु वा एतद्दृंहति प्रतिष्ठापयति तस्मात्षडृतवो वृष्टिमन्तः सुजातो ज्योतिषेति स्वर्ग्यमेवैनमकर्वासो अग्ने विश्वरूपं संव्ययस्व विभावसो इति छन्दांसि वा अग्नेर्वासश्छन्दांस्येव यस्ते छन्दोभिरेवैनं परिददात्यागामुकमेनमस्मिंल्लोके वासो भवत्यनग्नो ऽमुष्मिंल्लोके भवति य एवं वेद वरुण्यमेनिर्वा एष एतर्ह्युदु तिष्ठ स्वध्वरोर्ध्वमेवं वरुण्यमेनिमुत्सृजति द्वाभ्यामुत्सृजति द्विपाद्यजमानः प्रतिष्ठित्यै स जातो गर्भो असि रोदस्योरित्यनयोर्वा एष गर्भ आभ्यामेयो ऽधिजायत आभ्यामेवैनमधिजनयत्यग्ने चारुर्विभृत ओषधीष्विति तस्मात्सर्वास्वोषधीष्वग्निः प्र मातृभ्यो अधि कनिक्रदत्गा इत्योषधयो[1] वा एतस्य मातरस्ताभ्य एवैनमधिप्रच्यावयते-ऽद्धा एतं प्रजापतिः पूर्वेणार्धर्चेनानूत्तरेणातिष्ठत्तेपीदेवैनं पूर्वेणार्धर्चेनानूत्तरेणास्थित ॥ ५ ॥

Vgl 2, 7, 3 — TS 5, 1, 4 (mṛdam khatva sambharec carmapattrayoḥ) u 5, Kaṭh 19, 4 u 5, Kap S 30, 2 u 3, Çat Br 6, 4, 1, 6 flg

स्थिरो भव वीड्वङ्ग इति गर्दभ आदधाति वीर्यमस्मिन्दधाति तस्मात्सर्वेषां पशूनां गर्दभो वीर्यवत्तमो वीर्यं ह्यस्मिन्दधातीश्वरो वा एष ऽन्तरिक्षसंभृतो प्रजां हिंसितोर्यदाह शिवो भव प्रजाभ्य इति प्रजाभ्य एवैनं शिवमकर्मो पाह्यायुषः पुरीष्यायुरेवास्मिन्दधाति समष्ट्यै वृषाग्निं वृषणं भरन्निति वृषा ह्येष वृषणं

1) So corrigirt, die Mss र्दप सुजति 2) Die Mss ॰नपो 3) In den Mss ohne Accent. 4) So corrigirt, die Mss वीड्वंगा 5) So corrigirt, die Mss हुं-क्षित् 6) So corrigirt in den Mss पर्यो

भरन्नपां गर्भं समुद्रियमित्यपां ह्येष गर्भः समुद्रियो ऽग्न आयाहि वीतय इत्यग्निना वै मुखेन देवा इमांल्लोकानभ्यजयन्नग्निना वा एतन्मुखेन यजमान इमांल्लोकानभिजयत्यृतं सत्यमृतं सत्यमृतं चैव सत्यं च प्रतितिष्ठतीयं वा ऋतमसौ सत्यमनयोरेव प्रतितिष्ठत्यहर्वा ऋतं रात्रिः सत्यमहोरात्रयोरेव प्रतितिष्ठत्योषधयः प्रतिगृभ्णीताग्निमेतमित्योषधीरेवैनं सम्यञ्चं दधाति पुष्पवतीः सुपिप्पला इत्योषधीरेव फलं ग्राहयति तस्मादोषधयः शीर्षन्फलं गृह्णाति वरुणमेनिर्वा एष एतर्ह्युपनद्धो वि पाजसा पृथुना शोशुचाना इत्यनुरूपेणैव वरुणमेनिं विष्यति द्वाभ्यां विष्यति द्विपाद्यजमानः प्रतिष्ठित्या आपो हि ष्ठा मयोभुव इत्यप उपसृजत्यापो वा अशान्तस्य शमयित्रिकास्तस्मादप उपसृजति शान्त्यै तिसृभिरुपसृजति त्रिवृ३द्ध्यग्निर्वरुणमेनिर्वा एष एतर्हि मित्रः संसृज्या पृथिवीमिति मित्रेणैव वरुणमेनिं संसृजति रुद्राः संसृज्या पृथिवीमित्येता वा एता अग्रे देवताः प्रजापतये समसृजंस्ताभिरेवैनां संसृजति पञ्चभिः संसृजति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य ॥ ६ ॥

Vgl 2, 7, 4 5 — TS 5, 1, 5 (sambhṛtam etam yajnabhumāu samābharet) u 6 (ukham nirmimīta), Kāṭh 19, 5 u 6, Kap S 30 4, Çat Br 6, 4, 4, 3 flg

मखस्य शिरो ऽसीत्याह यज्ञो वै मखस्तस्य वा एतच्छिरो यदुखा मुखतो वा एतद्यज्ञमालभ्य वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसेति छन्दोभिश्च वा एषा देवताभिश्च क्रियते छन्दोभिश्चैवैनां देवताभिश्च करोति ध्रुवासि पृथि३व्यसीति छन्दसामेवैषाशीरदित्या रास्नास्यदितिष्टे बिलं गृभ्णात्विति यजुषा करोत्ययजुषा हि मनुष्याः कुर्वन्ति

[1] Die ३ fehlt in den Mss

व्यावृत्त्यै तां पुत्रेभ्यः प्रायच्छददितिः श्रपयानित्यादित्या वा इदं स्रो यन्मनुष्या लोभ्य एवैना समादात् त्र्युद्धिः[1] का३र्या त्रयो वा इमे लोका एषां वा एषां लोकानामुखां प्रतिमां क्रियते ऽष्टस्तनां कार्या गायत्र्या रूपं चतुस्तनां कार्यादित्या दोहाय द्विस्तनां का३र्यान्तरिक्षं वा उखेमौ लोकौ स्तनौ प्रत्तौ ह वा इमौ लोकौ दुहे य एवं वेद व्याममात्री का३र्येतावद्वै पुरुषे वीर्यं वीर्यसंमिता क्रियते ऽथो एतावान्वै पुरुषे महिमा महिम्नो ऽवरुद्ध्या अरत्निमात्री कार्या यज्ञपुरुषासंमिता[3] प्रादेशमात्री का३र्या विष्णुना यज्ञेन संमितायो प्रजापतेरेवानतिवादाय सप्तभिर्धूपयति सप्त वै शीर्षन्प्राणाः शिर एतद्यज्ञस्य यदुखा शीर्षन्वा एतत्प्राणान्दधाति सप्तभिर्धूपयति सप्त वै छन्दांसि छन्दोभिरेवैनां धूपयत्यथो ब्रह्म वै छन्दांसि ब्रह्मणैवैनां धूपयति वैष्णवं वा एतत्पात्रं तत्स्वया देवतया धूपयति यदन्याभिर्देवताभिर्धूपयति यदाह विष्णुस्त्वा धूपयत्वङ्गिरस्वदिति स्वयैवैनं देवतया समर्धयत्यश्वशकेन धूपयति वृषा ह्यश्वो वृषाभिः समृद्ध्या अथो प्राजापत्यो वा अश्वः प्राजापत्यो ऽग्निस्तस्मादश्वशकेन धूपयति सयोनित्वाय ॥ ७ ॥

Vgl. 2, 7, 6 — TS 5, 1, 6 u. 7 (ukhâṃ nirmimīta; saṃskaroti tâm); Kâṭh 19, 6; Kap. S. 30, 4, Çat. Br. 6, 5, 2, 2 flg

प्रजापतिर्वा अमन्यत यो वा अस्या अग्रे विखनिष्यत्यार्तिं स आरिष्यतीति स एतद्यजुरपश्यददितिष्ट्वा देवी विश्वदेव्यवती[4] पृथिव्याः सधस्थे अङ्गिरस्वत्खनत्ववटेतीयं वा अदितिर्देवी विश्वदेव्यवत्यनया

---

1) Vgl. Kâṭh 19, 6 त्र्युद्धि und पयोधि 2) Die Mss. एषां cf 4, 1, 3. 3) Die Mss. °पुरुषासंमिता 4) B देवीर्विश्वदेव्यवती, Kap S 30, 5 देवीर्विश्वदेव्यावती, Kaṭh. 19, 7 देवीविश्वदेव्यावती

वै सं तदस्यामखनदहिंसायै न हि स्वः स्वं हिनस्ति देवानां त्वा पत्नीर्देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे इत्योषधयो वै देवानां पत्नीर्देवीर्विश्वदेव्यवतीरोषधीष्वेवैनां प्रतिष्ठापयति धिषणा त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धामुखे इति वाग्वै धिषणा देवी विश्वदेव्यवती वाचैवैनामभीन्द्धे ग्नास्त्वा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे इति छन्दांसि वै ग्ना देवीर्विश्वदेव्यवतीश्छन्दोभिरेवैनां श्रपयति वरूत्री त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत्पचतामुखे इत्यहोरात्रे वै वरूत्री देवी विश्वदेव्यवती अहोरात्राभ्यामेवैनां पचति जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे इति नक्षत्राणि वै जनयो ऽच्छिन्नपत्रा देवीर्विश्वदेव्यवतीर्नक्षत्रैरेवैनां पचन्त्येता वा एतामग्रे देवताः प्रजापतये ऽपचंस्तस्मादेतानि पङ्क्तिमन्ति यजूंषि तैरेवैनां पचति द्वाभ्यां पचति द्विपाद्यजमानः प्रतिष्ठित्यै वरुणमेनिर्वा एष एतर्ह्यभीद्धो मित्रस्य चर्षणीधृता इति मित्रेणैव वरुणमेनिमुपैति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिरिति सवितृप्रसूत एवैनामुद्वपत्यात्मनो ऽहिंसाया उत्तिष्ठ बृहती भवेत्याह धृत्या एवाव्यथमाना पृथिव्यामाशा दिश आपृणेति तस्मादग्निः सर्वा दिश आभाति ॥ मित्रैतां त

1) So corrigirt, B स्व, in H u Bb स्वं, TS 5, 1, 7, 1 स्वं, Kāth स्वस्व॰, Kap S स्वं स्व हि॰ 2) Von hier bis zum folgenden वै (incl.) in H fehlend, in Bb von विश्वदेव्यवती bis zum folgenden विश्वदे॰ fehlend, die Accente mussten daher nach den entsprechenden Stellen ergänzt werden, Kap S धिषणास्त्वा देवीर्विश्वदेव्यावतीरिति, B धिषणा त्वा देवीर्विश्वदेव्यवती, Kath 19 7 धिषणास्त्वेति 3) Die Mss ॰स्वदाभीधानाम॰ 4) Die Mss देवीर्विश्वदेव्यवती 5) Die Mss ग्नास्त्वा 6) B वरुत्री 7) B देवीर्विश्वदेव्यवती (s TS 5 1 7, 2), Kap S 30, 5 वरूत्रीस्त्वा देवीर्विश्वदेव्यावतीरिति, Kath 19, 7 वरूत्रीस्त्वेति 8) Von hier bis अहोरात्राभ्याम॰ in H u Bb fehlend, daher die Accente ergänzt 9) B देवीर्विश्वदेव्यवती

उखां परिददाम्यभित्त्या एषा मा भेदि ॥ इति मित्रायैवैनां परिददात्यभित्त्यै यदि मित्रायापरित्ता भिद्येत पुनः कार्या स्याद्वसवस्त्वाछृन्दन्तु[1] गायत्रेण छन्दसेति छन्दोभिश्च वा एषा देवताभिश्च क्रियते छन्दोभिश्चैवैनां देवताभिश्चाछृणत्ति स्वेनायतनेनाजक्षीरेणाछृणत्त्यामेयं वा एतत्पयो यदजक्षीरमामेयमेतत्पात्रं यदुखा स्वेन वा एतत्पयसा स्वं पात्रमाछृणत्ति परमं वा एतत्पयो यदजक्षीरं परममेतत्पात्रं यदुखा परमेण वा एतत्पयसा परमं पात्रमाछृणत्ति ॥ ८ ॥

Vgl. TS 5, 1, 7 (saṃskaroti tām); Kāṭh. 19, 7, Kap S. 30, 5; Çat Br. 6, 5, 4.

षडेतान्याधीतयजूंषि जुहोति षड्वा ऋतव ऋतुभिर्वा एतत्पृथिव्या वी३र्यमुद्यच्छते नाना जुहोति नानावीर्या ह्येमे प्राणाः प्राणानां विधृत्यै यं कामयेत बधिरः स्यादिति तस्य सकृत्सर्वाण्यनुद्रुत्य जुहुयात्प्राणानस्य संभिनत्ति बधिरो भवति तस्माद्बधिरो वाचा वदति न शृणोति वाचं ह्यस्येन्द्रियमनुपद्यते प्राणा वा एतानीतराणि छन्दांसि वागनुष्टुब्यदनुष्टुभा सप्तमं जुहोति वाचं वा एतत्प्राणैरुपसंदधाति तस्मादियं वाक्सप्तमी प्राणानां मा सु भित्था मा सु रिषा इति प्रवृणक्त्यसुरमाया वा एषासीत्तां देवा एतेन यजुषापावृञ्जतासुरी माया स्वधया कृतासीति तन्मायामेवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते द्वाभ्यां प्रवृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै प्रवृञ्ज्याद्भूतिकामस्य भविष्यन्वा इदमुपजीवामो भविष्यद्वेवोपैति श्वः श्वः श्रेयान्भवति जातमेवदध्याद्गतश्रीर्जातो वा एष यो गतश्रीर्जातेनैवैनं जनयति भ्रष्ट्रादाहरेद्यं कामयेतान्नादः स्यादित्येष वा अग्नीनामन्नादो ऽन्नकरणं भ्रष्ट्रमन्नाद्यमस्मा अवरुन्द्धे प्रदावादाहरेद्यं काम-

1) Die Mss छिदन्तु  3) Die Mss °षा

येत प्रसेनैनास्य राष्ट्रं जायुकᳫ स्यादिति प्रसेनैनास्य राष्ट्रं जायुकं भवति यतः कुतश्चाहृत्यावदध्याद्यं कामयेतास्य पाप्मा भ्रातृव्यो द्वितीयो जायेतेत्येतद्वै यजमानस्यायतनᳫ स्वे वा अस्मा एतदायतने पाप्मानं भ्रातृव्यं द्वितीयं जनयति द्रुवः सर्पिरासुतिरिति क्रुमुकं घृतान्वक्तमादधात्येषां वा अग्नेः प्रिया तनूर्यत्क्रुमुकस्तेजो घृतं प्रिययैवैनं तन्वा तेजसा च समर्धयति परस्या अधि संवत इत्यौदुम्बरीं देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठदौदुम्बर्यूर्जमेवावरुन्द्धे परमस्याः परावत इति वैकङ्कतीमग्निर्वै सृष्टस्य भा अपाक्रामत्सा विकङ्कतं प्राविशद्यद्वैकङ्कती भा एवावरुन्द्धे यदग्ने यानि कानि चेति शमीमयीᳫ शान्त्या अग्नये वै न किंचनापरशुवृक्णमस्वदत्तस्मै वा एतया सर्वः प्रयोगिः सर्वमस्वदयद्यदग्ने यानि कानि चेति तदस्मा एवैतया सर्वᳫ स्वदयति सर्वमस्मै स्वदितं भवति रात्रीᳫ रात्रीमप्रयावं भरन्त इत्याशिषमेवाशास्ते नाभा पृथिव्याः समिधानो अग्निमिति पृतनाजितमेवैनमकर्वाम वै सृष्टᳫ रक्षाᳫस्यजिघाᳫसᳫ स्तोनि वा एताभिरेवापाहत याः सेना अभीत्वरीरिति तदमेवैताभी रक्षाᳫस्यपहन्त्येता एव समिधा आदध्याद्यश्च रक्षोभ्यो बिभीयाद्रक्षसामपहत्या अथो याहुका ह ताᳫ समाᳫ स्तेनाभवन्ति तैस्तर्कीमभिचरन्नादध्यादेषं वै वनस्पतीनाᳫ वज्रस्तोजग्ध प्रमीयते यं द्विष्यात्तर्हि मनसा ध्यायेन्मनो वा आशीर्या वाचं आहुतिमेवैनं भूतमयं उपदधाति यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जना इति तस्मादग्निचितो ऽश्लीलं न कीर्तयितव्यं नो अग्निविदः संशितं मे ब्रह्म संशितं वीर्यं बलमिति ब्रह्मणा वा एतत्क्षत्रᳫ सᳫ-

1) Die Mss द्रपत्र, vgl aber 2 7, 7   2) Mss °स्तोभि

ष्यति[1] क्षत्रेण ब्रह्मौषो ब्रह्म चैवं क्षत्रं च सयुजा अकरेतद्वा एषाभ्यनूक्ता ॥ ब्रह्म क्षत्रं सयुजा न व्यथेते इति ब्रह्माह क्षत्रं जिन्वति क्षत्रियस्य ।

क्षत्रं ब्रह्म जिन्वति ब्राह्मणस्य यत्समीची कृणुतो वीर्याणि ॥ ९ ॥

Vgl 2, 7, 7. — TS 5, 1, 9 (vahoer ukhyasya janib) u. 10 (ukhyam dadhita), Kāṭh 19, 9 u 10, Kap ■ 30, 7 u 8, Çat Br 6, 6, 1, 15 flg

अग्निभ्यः ॥ इति कामायालभ्यन्ते यत्कामो भवति सं हास्मै स कामो नमत्याप्रीणन्ति यज्ञियानेवैनान्मेध्यान्कुर्वन्ति[2] पर्यग्निकृतानुत्सृजन्त्ययातयामत्वायैकेन संस्थापयन्ति यज्ञस्य संतत्या अविच्छेदाय पुष्करा भवन्ति सेन्द्रियत्वाय त्रिष्टुभो याज्यानुवाक्या भवन्तीन्द्रियस्यावरुद्ध्या अथैष ऽग्नये वैश्वानराय द्वादशकपालः संवत्सरो वा अग्निर्वैश्वानर एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रिययैवैनं तन्वा समर्धयत्यथो अयातयामत्वायैवायातयामा हि वैश्वानरो यद्येतं वायवे नियुत्वत आलभेत तेजस्कामो वायुर्वा अग्नेस्तेजस्तस्माद्वायुमग्निरन्वेति यद्वायवे ऽग्नेः सतेजस्त्वाय यद्वायव एकधा स्यादुन्मादुको यजमानः स्याद्यन्नियुत्वते द्वितीयत्वायाथो धृत्या अनुन्मादाय सर्वेषां वा एष पशूनां रूपाणि प्रति यद्वायव एकधा स्यादुन्मादुको यजमानः स्याद्यदेष प्राजापत्यो द्वादशकपालो द्वितीयत्वायाथो धृत्या अनुन्मादायाथैष आग्नावैष्णव एकादशकपालो ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैवं यज्ञं चालब्धाथैष आदित्यो घृते चरुरादित्या वा इत उत्तमाः स्वर्गं लोकमायंस्तेभ्य एवं प्रोच्य स्वर्गं लोकमेत्यादित्या वा अस्मिंल्लोक ऋद्धा आदित्या अमुष्मिन्पुरोडाशेन वै देवा

1) Die Mss ग्लंस्यति 2) Die Mss यज्ञियामेवैना मेध्यान्

अस्मिँल्लोकेऽसांभुवश्चरुणामुष्मिंश्चास्मिन्नेवं लोके पुरोडाशेन ऋध्नोति चरुणामुष्मिन्वैषैऽषो ऽग्नये वैश्वानराय द्वादशकपालो देवायतनं वा अग्निर्वैश्वानरो देवायतनं एव प्रतिष्ठायाग्निं बिभर्त्ययो कामो वै वैश्वानरो[1] यत्कामो भवति सं हास्मै स कामो नमति ॥ १० ॥

Vgl TS 5, 1, 8, 2 (paçavah); Kāth 19, 8; Kap S. 30, 6

॥ इत्युपरिकाण्डे[2] जुहूमयीयः[3] प्रथमः प्रपाठकः ॥

---

दृशानो रुक्म उर्व्या विभातीति रुक्मं प्रतिमुञ्चते ऽमृतं वै हिरण्यं मृत्योरेतद्रूपं यदग्निर्यत्प्राणो ऽमृतेनैव मृत्युमन्तर्धत्ते ऽथैते निर्बाधा देवाश्च वा असुराश्चास्पर्धन्त ते देवा एतान्निर्बाधानपश्यंस्तैरसुरानेभ्यो लोकेभ्यो निरबाधन्त तन्निर्बाधानां निर्बाधत्वं तदेतैरेव निर्बाधैर्यजमानो भ्रातृव्यमेभ्यो लोकेभ्यो निर्बाधत एकविंशतिनिर्बाधो[4] भवति प्रतिष्ठित्या उपरिष्टान्निर्बाधं बिभर्त्यधस्तान्निर्बाधं सादयति भ्रातृव्यस्य विनुत्त्यै नक्तोषासा समनसा विरूपा इत्यहोरात्राभ्यामेवाग्निमाधत्ते धापयेते शिशुमेकं समीची इत्येते ऽहोरात्रे धापयेते शिशुमेकं समीची द्यावाक्षामा रुक्मो अन्तर्विभातीत्येष उखेतयो रुक्मो ऽन्तर्विभाति देवा अग्निं धारयन्द्रविणोदा इति प्राणा वै देवा द्रविणोदाः प्राणैरेवाग्निमुद्यच्छते विश्वा रूपाणि

---

1) Von hier bis zum folgenden वैश्वानरो (incl.) in B fehlend 2) Das इति fehlt in den Mss 3) H u Bb जुहूमयीयः, B जुहूमयियः 4) Die Mss (H u Bb) betonen एकविंशतिनिर्बाधोः, v TS 5, 1, 10, 3

प्रतिमुञ्चते कविरिति' विश्वा हि रूपाण्यग्निः' प्रासावीद्भद्रं द्विपदे चतुष्पदा' इत्याह प्रसूत्या एव' वि नाकमक्शत्सविता वरेण्या इति' सवितृप्रसूत एवाग्निं बिभर्त्यनु प्रयाणमुषसो विराजतीति' तस्मादुषसो व्युष्टिमन्वग्निराधीयते' सुपर्णो ऽसि गरुत्मांस्त्रिवृत्ते शिरो' गायत्रं चक्षुरित्येषैवा एषा संभृतिर्यमिमेतत्संभरति' तस्मात्संभरति' तस्मात्सर्वैरङ्गैः पशुर्जायते' पशुरग्निर्दिवं गच्छ स्वः पतेत्याह स्वर्गस्य लोकस्य संमष्ट्या' अथैते क्रमा' देवाश्च वा असुराश्चास्पर्धन्त' ते देवा एतान्क्रमानपश्य॰स्तैरसुरानेभ्यो लोकेभ्यः प्राणुदन्त' ताननपजय्यमजय॰स्तदेतैरेव' क्रमैर्यजमानो भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुदते' ऽनपजय्य॰ ह जयति' षड्भाव॰ शिक्यं भवति' षड्वा ऋतव' ऋतुभिरेवाग्निं परिगृह्णात्युपरिनाभि बिभर्त्युपरिनाभि' ह्यात्मनः' सदेव॰' सदेव एव देवता आत्मन्बिभर्ति' यदधोनाभि बिभृयाद्योनिं निर्दहेदघो' ऽवधैनं घातुक॰ स्यात्प्रकामति' तस्माद्ग्राम्याः पशवः प्रेरते' ऽथ यत्पुनरभ्यावर्तते तस्मात्पुनः समावर्तन्त' ऊर्जो वा एष पशुभिरुत्क्रामन्सहोत्क्रामति' पुनरूर्जा निवर्तस्वेति' तदूर्जमेव पशून्पुनरवरुन्द्धे' पुनर्वतीर्भवन्ति समृद्ध्यै' चतसृभिरभ्यावर्तते' चतुष्पादो वै पशवः' पशूनेवावरुन्द्ध' इत्थं पर्यावर्तेत' एव॰ हि यज्ञः पर्यावर्तते' ऽथो अमुष्य वा एतदादित्यस्यावृतमनुपर्यावर्तते' आ त्वाहार्षमन्तरभूरित्यन्तर्ह्येष एतर्ह्युदुत्तम॰ वरुण पाशमस्मदिति' वरुणपाशमेवोन्मुञ्चत आत्मनो ऽहि॰साया' अग्ने बृहन्नुषसामूर्ध्वो अस्थादिति' ज्योतिषैवैन॰

1) Die ३ fehlt in den Mss 2) Die Mss तामपजय्य॰ 3) Die Mss मपजय्य॰, (B schreibt wieder मपजय्य॰) 4) Die Mss schreiben षड्भाव॰ 5) Die Mss ॰नाभौ, Kath 19 11 नाधोनाभि 6) In den Mss fehlt die ३ 7) So B (ohne Accent), H u Bb ॰द्यो 8) H u Bb घातु॰, B घातुक॰ 9) In den Mss पुन॰ ohne Accent 10) H u Bb त्वाहर्षम॰

समर्धयति हंसः शुचिषद्वसुरन्तरिक्षसदिति[1] सादयति सप्त[2] एवैनं होत्रासु प्रतिष्ठापयत्यथो सप्त वा एतेन साम्रान्यमेवाप्नोत्या[3] [4] सप्तमात्रपुरुषादन्वादौ भवति रेतो वा अग्निरन्तरिक्षं वै रेतो ऽनुषिच्यते यदधो निदध्यादधृताः पशूनां गर्भाः प्रपादुकाः स्युरथ यदुपरि सादयत्यन्तरिक्षसदमेवैनमकर्गर्भाणां धृत्यै सूयते वा एषो ऽग्नीनां[5] यच्चीयते तस्मादेषं आसन्दीसंस्तीद[6] त्वं मातुरस्या उपस्था इतीयं वा अस्यै योनिः स्व एवैनं योनौ संवेशयति तिसृभिरुपतिष्ठते त्रिवृद्ब्रह्मभिः[7] ॥ १ ॥

Vgl TS 5, 1, 10 (ukhyam dadhāti) u 9, Kath 19, 11, Kap S 32, 1, Çat Br 6, 6, 4 u 7, 2.

अथैतद्वात्सप्रमेतेन वै वत्सप्रीर्भालन्दनो ऽग्नेः प्रियं धामारा-ध्नोत्संदधे रैवतेन[8] प्रियं धाम राध्नोत्यागामुकमेनं[9] प्रियं भवति वत्सप्रियं वै भालन्दनमृषयो ऽध्यवदन्स्तेना[10] इति स एतत्सूक्तमपश्यत्तेनाधिवादमपाजयत्तेनोपचितिमगच्छत्तदधिवादमेवैतेनापजयत्युपचितिमेव गच्छति द्वादशभिरुपतिष्ठते द्वादश मासाः संवत्सरः संवत्सरमेवाप्त्वावरुन्द्धे त्रिष्टुभो भवन्तीन्द्रियस्यावरुद्ध्या अन्येद्युः प्रक्रामयत्यन्येद्युरुपतिष्ठते योगक्षेमं वा एतत्प्रजानां दाधार तस्माद्यायावरा अन्याः प्रजाः क्षेम्या अन्या अथ[11] यत्प्रक्रम्योपतिष्ठते तस्माद्यायावरः क्षेम्यमभिप्रयाति[12] तस्माद्यायावरस्य क्षेम्यो ऽन्नं बभूव

1) Die Mss. °षसतसदिति 2) Bb सप्त 3) Bb सप्तं 4) So corrigirt, H संभ्रान्य°; desgl B, ohne Accent, Bb साम्रान्य°, cf Kāṭh 19, 11 und Kap S 32, 1 साम्रान्येनैतया प्रीणाति 5) H u Bb °यं कृपो°, B ये कृपो° 6) In den Mss सीद ohne Accent. 7) So corrigirt, H u Bb त्रिवृ ह्मणि, B त्रिवृत् ह्मणि: 8) Die Mss धामाराध्नोत्त°, Kāth 19, 12 प्रिय धामावरुधायैरैवतेन प्रिय धामावरुधे 9) Die Mss राध्नोत्य°, vgl die vor Anm 10) H अध्यवदन् स्तेना 11) In den Mss ohne Accent 12) B प्रयाति

यदंहस्येप्यमाणः स्यात्तदंहसो भय[1] समस्येतमं च क्रामेदुप च तिष्ठेत योगक्षेमं[2] वा एतदवाप्य[3] यजमानो भ्रातृव्यस्य वृङ्क्ते उदु त्वा विश्वे देवा इति विश्वे ह्येदे देवाः सो यन्मनुष्या अग्ने भरन्त चित्तिभिरिति यस्मा एवं चित्तायाधिराधीयते तेनैनं चित्तेन समर्धयति प्रेदग्ने ज्योतिष्मान्याहीति ज्योतिषैवैन[4] समर्धयित्वा प्रवापयत्यक्रन्ददग्निः स्तनयन्निव द्यौरित्यनुब्रूयाद्यद्यंस उत्क्रन्देदीश्वरो वा एष उत्क्रन्देद्यजमानस्य प्रजां पशून्निर्त्विदस्त[4]क्रन्दितमेवास्याकर्यो शमयित्वेवाग्निपमाणास्ते समिधाग्निं दुवस्यतेति गायत्र्या ब्राह्मणस्यादध्याद्गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यो द्वाभ्यां गायत्रीभ्या[5] वैश्यस्य ये हि द्वे गायत्र्यौ सा जगत्यथो ब्रह्मणे वा एतद्विशमन्वं करोति यदि भस्म प्रतिपूर्येतास्सु प्रवेशयेदापो वा अस्यैयोनिः स्व एवैनद्योनौ दधाति पुरीषं कुर्यात्पशुकामस्य पशवो वै पुरीषं पशुमान्भवतीष्टका वा सं[6]पुयात्तेनास्य संवा आग्नेयीरिष्टका भवन्त्यूर्जो वा एष पशुभिरुत्सीदन्नुत्सहोत्सीदति पुनरूर्जा निवर्तस्वेति तदूर्जमेव पशून्पुनरवरुन्द्धे बोधा मे अस्य वचसो यविष्ठेति बोधद्वतीभ्यामुपतिष्ठते तस्मात्प्रजाः सुप्ता[7] पुनः प्रबुध्यन्ते द्वाभ्यामुपतिष्ठते द्विपाद्यजमानः प्रतिष्ठित्यै ॥ २ ॥

Vgl TS 5, 2, 1 (asandyam vahnyavasthitih vatsaprenapyupasthanam) u 2 (ukhya nayanam), Kath 19, 12, Kap S 32, 2, Çat Br 6, 7, 4, 6, 6, 4

1) S 2, 7, 10, Kap S 32, 2 भरत्, Kâth undeutlich, wahrscheinlich भरतु 2) B भयापय° 3) So wohl zu lesen in H u Bb यंद्वाच, B यद्वाच, Kath यदि स्रेदेत 4) Die Mss निर्त्त्विंदस्त° 5) So ist wohl zu schreiben, in B भस्मा प्र°, H u Bb भस्मात्प्र°, Kâth 19 12 भस्मैतदित्यप्सु भस्म प्रवपति 6) So B (ohne Accent), H u Bb सं°पुयात् 7) So meine Correctur, H u Bb सुप्ता, B सुप्ता

अपेत वीत वि च सर्पतात इत्याह यमदेवत्यो वा अयं लोको यमो ऽमुष्य लोकस्याधिपत्यमानश यद्यमादेवयजनमनिर्याच्याग्निं चिन्वीतायमदेवत्यो ऽस्याग्निः स्यादस्वर्ग्यो यदाहादाद्[7] यमो ऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मा इति यमाद्वा एतेनास्या देवयजनं निरयाचिष्ट सूते देवयजने ऽग्निं चिनुते यमदेवत्यो ऽस्याग्निर्भवति स्वर्ग्य उद्धु घ्नन्ति यदेवास्या अयज्ञियममेध्यं तदुद्घ्नन्ति[1] व्याममात्रमुद्घ्नन्त्येतावद्वै[2] पुरुषे वीर्यं वीर्यसम्मिते चीयते ऽथो एतावान्वै पुरुषे महिमा महिम्नो ऽवरुद्ध्या अवोक्षति यदेवास्या उद्घ्नन्तः[3] क्रूरमक्रं स्तदक्रूरमकस्तदथमयत्यथो आपो वा अग्नेर्योनिः स्व एव योनौ चीयते ऽग्नेर्भस्मास्यग्नेः पुरीषमसीति सिकता निवपत्यग्नेर्वा एतद्वैश्वानरस्य भस्म यत्सिकताः स्व एव भस्मञ्चीयते योनिर्वै सिकता रेत ऊषा यत्सिकता न्युप्योषान्निवपति योनौ वा एतद्रेतो दधाति तस्माद्योनौ रेतो हितं तस्माद्योने रेतः प्रजायते प्रजापतिः प्रजा असृजत ता वा ऊषेभ्य[4] एव योनेरसृजत प्रजननं वा ऊषाः[5] प्रजनने वा एतदग्निश्चीयत इमे वै सहास्तां ते वियती अब्रूतामस्तु नौ प्रियं धाम सहेत्यापो वा अस्या यज्ञिया मेध्यास्ता अमूष्या अमुष्या यज्ञिया मेध्यास्ता इमे यदापश्चोषाश्च भवन्ति यदेवैनयोर्यज्ञियं मेध्यं तदवरुन्द्धे ऽथो अनयोरेवैनं प्रिये धामन्निधत्ते संज्ञानं वा ऊषा उभये वा एतान्पशवो ऽभिसंजानते ये ग्राम्याः पशवो ये चारण्या उभये हैनं पशवो ऽभिसंजानते च-

1) B तदुद्घ्नन्ति 2) Die Mss °मुद्घ्न°, cf 4 1, 10 3) Bb उद्घ्नन्त, desgl. B, ohne Accent, cf 4 1, 10 4) So corrigirt, die Mss ऊषेभ्य (cf oben ऊषा) 5) So corrigirt, die Mss ऊषा 6) So corrigirt, die Mss °ऊषा 7) So corrigirt, die Mss उक्तं, cf TS 5, 2, 3 2 3

तस्रः प्राचीः सादयति 'चत्वारि वै छन्दांसि 'छन्दोभिर्वै देवाः स्वर्गं लोकमायंस्ते दिश आक्रमन्त[1] 'ता अव्लीयन्त 'ता एताभिरदृंहन्यदेता उपधीयन्ते दिशां धृत्यै 'पशवो वा इष्टका 'गार्हपत्यं वै पशवो ऽनूपतिष्ठन्ते 'द्वे समीची पुरस्तादुपदधाति 'द्वे समीची पश्चादुभयत एवास्मै समीचः पशूनुपदधाति पशूनां परिगृहीत्या 'अष्टावुपदधात्यष्टाक्षरा गायत्री 'गायत्रो ऽग्निर्यावानेवाग्निस्तं चिनुत 'एकविंशतिः कार्यो प्रतिष्ठित्यै 'प्रतिष्ठा ह्येकविंशो 'ऽथो एकविंशतिविधो हि गार्हपत्यस्त्रिचितिकः कार्यस्त्रयो वा इमे लोका 'इमानेव लोकानाप्नोति 'पञ्चचितिकः कार्यः 'पाङ्क्तो यज्ञो 'यावानेव यज्ञस्तमालब्ध 'चतुर्भिः संनिवपति 'चत्वारि वै छन्दांसि 'छन्दोभिरेव संनिवपत्यथो ब्रह्म वै छन्दांसि 'ब्रह्मणैव संनिवपति 'क्षत्रं वा एषो[2] ऽग्नीनां यच्चीयते 'क्षत्रं य उख्यो 'ब्रह्म यजुर्यद्यजुषा संनिवपति ब्रह्मणा वा एतत्क्षत्रं संनयति 'तस्माद्ब्रह्मणा क्षत्रं सं चैति वि च 'द्वौ वा एतौ व्याघ्रौ संपद्येते 'तौ ईश्वरौ संयान्तौ यजमानं हिंसितोर्यदाह 'भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति 'शमयत्येव 'शान्त एवं न्युप्यते यजमानस्याहिंसाया 'चतुर्भिर्वै पृथिव्यां चीयमुद्यतं 'तच्चतुर्भिः पुनर्विमुच्यते 'यदाह 'प्रजापतिर्विश्वकर्मा विमुञ्चत्विति 'प्रजापतिरेवैनं विश्वकर्मा विमुञ्चति ॥ ३ ॥

Vgl TS 5, 2, 3 (garhapatyam cinoti), Kāth 20, 1, Kap S 32, 3

अथैता नैर्ऋतीस्तिस्रस्तुषपक्वा भवन्त्येतद्वै नैर्ऋतमन्नस्य यत्तुषाः कृष्णा भवन्त्येतद्धि निर्ऋत्या रूपमेतां दिशं हरन्त्येषा हि निर्ऋत्या दिक्स्राः स्वकृता इरिणे पराचीर्निदधात्येतद्वै निर्ऋतिगृहीतं पृथिव्यां

1) B आक्रमत  2) So meine Correctur, die Mss एचो

निर्ऋतिगृहीत एव निर्ऋतिं निरवदयते प्राणमेवास्य प्रथमया मुञ्चत्यपानं द्वितीयया व्यानं तृतीययाथो त्र्यक्षरो वै पुरुषो यावानेव पुरुषस्तं निर्ऋत्याः पाप्मनो मुञ्चति निर्ऋतिर्वै कर्मण उपद्रष्टिका तां वा एतत्स्वेन भागधेयेन शमयित्वाथ सवितृप्रसूतो ऽग्निं चिनुते यं ते देवी निर्ऋतिराबबन्धेति जालमिष्टकास्वध्यस्यति[1] निर्ऋतिपाशमेवोन्मुञ्चत आत्मनो ऽहिंसायै ॥

यदस्य पारे रजसो महश्चित्रं ज्योतिरजायत ।
तन्नः[2] परिषदति द्विषो ऽग्ने वैश्वानरः ॥

स्वाहेत्ययः परिषिञ्चन्पर्येति निर्ऋत्या अनन्ववायाय भूत्यै नम इत्युक्त्वावर्तते भूतिरेव भूत्वावर्तत आत्मनो[3] ऽहिंसाया अनपेक्षमाणा आयन्ति निर्ऋत्या अनन्ववायाय परोगोष्ठं मार्जयन्ते परोगोष्ठमेव निर्ऋतिं निरवदयन्त इन्द्रियेण वा एष वीर्येण व्यृध्यते यो नैर्ऋतीरुपधत्ते निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इन्द्रियेणैवात्मानं समर्धयति त्रिष्टुभोपतिष्ठत ओजो वै वीर्यं त्रिष्टुबोजस्येव वीर्ये प्रतितिष्ठति गार्हपत्यो ऽग्ने चीयते प्रतिष्ठित्यै गार्हपत्ये वै देवाः प्रतिष्ठाय प्राञ्चः स्वर्गं लोकमभिजयन्त छायन्त्या-यान्पुरुष ऊर्ध्वबाहुस्तावता वेणुना विमिमीत एतावद्वै पुरुषे वीर्यं वीर्येणैव विमिमीते ऽथो एतावान्वै पुरुषे महिमा महिम्नो ऽवरुद्ध्यै यो वै वनस्पतीनां फलग्रहितमः स एषां वीर्यवत्तमो वेणुर्वै वनस्पतीनां फलग्रहितमः स एषां वीर्यवत्तमो ऽन्नं वै फलमन्नमूर्को ऽऊर्को ऽग्निरर्केण वा एतदन्नमर्कमग्निं विमिमीते सप्त पु-

1) So B, in H °त्यधेति, Bb °त्यधेती, Kap [illegible] 32, 4 °मवधेति छिक(त)मधिन्यस्यति, Kāṭh 20 2 जालमधिन्यस्यति 2) So im Anschluss an H u. Bb तं भ; B liest तेन 3) Die Mss. आत्मनो

रुषान्प्रमिमीतेˈ सप्तभ्य एवं पुरुषेभ्यो लोकं विन्दत्यो सप्तमात्पुरुषाद्वादो भवत्यरत्निमात्रे पक्षयोरत्युपदधातिˈ पक्षंबृहद्धिˈ वयःˈ षड्भिः कृषतिˈ षड्वा ऋतवˈ ऋतुभिरेवं कृषतीत्यंमभ्यावर्तन्तˈ कृषत्येषा हि देवानामावृदथो अमुष्य वा एतदादित्यस्यावृतमनुपर्यावर्तन्तेˈ तिस्रस्तिस्रः सीताः संपादयतिˈ त्रिवृ३द्यग्निर्द्वादश सीता भवन्तिˈ द्वादश मासाः संवत्सरःˈ संवत्सरस्य वा एयं विधामनुविधीयतˈ इयं वा अबिभेद्दग्निर्मातिधक्ष्यतीतिˈ यत्कृषत्यस्यां वा एतद् द्विगुणं क्रियते ऽनतिदाहायाथो पृथिव्यां वा एतद् द्विगुणेनार्येवीऽर्थमुद्यच्छन्तˈ एतां दिशमुत्सृजन्त्येषा हि देवानां दिगथो स्वर्गमेवैनं लोकमनूत्सृजन्ति ॥ ४ ॥

Vgl TS 5, 2, 4 (ukhyāgnim tatra samvapet) u 5 (krshati kshetram), Kāth 20, 2 u 3, Kap S 32, 4 u 5

कृष्टे वपतिˈ कृष्टे ह्योषधयः सेपिर्द्र प्रतितिष्ठन्त्यन्नस्यान्नस्य वपत्योषधीनामृग्भिर्ब्रह्म वा ऋग्ब्रह्मणैवास्मा अन्नाद्यमवरुन्द्धे चतुर्दशभिर्वपतिˈ द्वादश मासाः संवत्सरोˈ ऽथ य एते चतुर्दशे अहोरात्रे एवैतेˈ तत्संवत्सरेण च वावास्मा एतदहोरात्राभ्यां चान्नाद्यमवरुन्द्धेˈ ऽन्नं वै फलमन्नमर्को ऽर्को ऽग्निरर्केण वा एतदन्नमर्कमग्निं वपतिˈ यस्यान्नस्य निवपति यत्तस्याभीयाद्यान्यवरुद्धानि तैर्व्युध्येतेर्ध्ये तस्यापिकुर्यादथो तन्मनसा ध्यायेत्तेनैव तदवरुन्द्धेˈ यदि सर्वं न संविन्देद्यवान्मधूद्युतान्वपेद्यवा वा याम्या तेनान्नाद्यमवरुन्द्धे यन्मधारण्यं तेनˈ तेनैव तदुभयमवरुन्द्धेˈ ऽथैते संभाराˈ दिग्भ्यो वा

---

1) So die Mss, also ein Adjectiv पक्षबृहत्, Kāṭh 20, 3 u Kap S 32, 5 पच-प्रपयासि पयासि 2) In den Mss das Verb ohne Accent 3) Die ३ fehlt in den Mss 4) Die Mss °नुत्सृजन्ति

एतत्पृथिव्या ऊर्जꣳ संभरत्यूर्ज्यमग्निश्चीयते यां जनतां कामयेत क्षोधुका स्यादिती[1]यमूर्जमहमितं आदीति तस्या अधीदाददीत क्षोधुका ह सा जनता भवति कामं कामदुघे धुक्ष्वेत्यभिमृशति तेनास्य सर्वा इष्टकाः कामदुघा भवन्त्युत्तरवेदिं निवपत्युत्तरवेदिमित्येवास्याग्निश्चीयते ऽथो यज्ञपरुषो[2] ऽनन्तर्हित्या अग्निर्वा एष न्युप्यते यदुत्तरवेदिं यदुत्तरवेदिं न्युप्याग्निं चिनोत्यग्नौ वा एतदग्निश्चीयते ऽग्ने तव श्रवो वय इति सिकता निवपत्येता वै वैश्वानरीरिष्टका अपरिमिता एतदग्नेरपरिमितं चीयते ऽथैवा एतद्वैश्वानरस्य सूक्तमेषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायाꣳ वा एतत्तन्वामग्निश्चीयते संतनूरक्कौ निधीयते लोमशꣳ वा एतच्छन्दः[3] पशव्यमूनातिरिक्तं प्रजननायाशीत्यक्षरमेतेन वै देवाः स्वर्गं लोकमायꣳस्तदस्याशीत्यक्षरत्वꣳ समुद्रꣳ वा एतच्छन्दो योनिः समुद्रः सोमो रेतोधा यत्सौमीभ्याꣳ व्यूहति योनौ वा एतद्रेतो दधाति तस्माद्योनौ रेतो हितमाप्यानवती भवतस्तस्माद्योनौ रेत आप्यायते छन्दोभिर्वा अग्निरुत्तरवेदिमभिप्रह्रियते या अमी प्रह्रियमाणे ऽन्वाहुस्तां तर्हि मनसा ध्यायेच्छन्दो[4]भिरेवैनमुत्तरवेदिमभिप्रहरति[5] मनसान्वाहानिरुक्तमिव ह्येतदथ्यावृत्तꣳ[6] व्यावृतं पाप्मना भ्रातृव्येण गच्छत्यग्निं पुरस्तान्नयन्ति रक्षसामपहत्या आक्रमयन्ति य एवैनेन भ्रातृव्यः सहेङ् तꣳ वज्रेणावबाधन्ते प्राञ्चं प्रक्रमयन्ति य एवैनं भ्रातृव्यो ऽति तꣳ वज्रेण प्रणुदते प्रत्यञ्चमभ्यावर्तयन्ति य एवैनं भ्रातृव्यो ऽनु तꣳ वज्रेण प्रतिनुदते तद्भ्रा-

1) Bb स्यादिति; Kap S 32,6 स्यादमिति, aber Kāṭh 20,4 इयमूर्जमहमित आदीतीयमेवास्मा ऊर्जमादत्ते 2) So B (ohne Accent), in H u Bb यज्ञपरुषो; Kāṭh 20,4 u. Kap. S 32,6 अथो यज्ञपरुषैव cet 3) So corrigirt, B एतच्छदः; H एतत्संदः; Bb एतत्संदः; cf unten 4) Die Mss ध्याये छं॰ 5) So B (ohne Accent); in H u. Bb ॰मभिप्रहरति 6) So B (ohne Accent), in H u Bb व्यावृत्तं

तृव्यस्य वा एषं विनोदः'कृष्णो वै भूत्वाग्निरश्वं प्राविशत्स एतदग्छद्यं च मृगशफो'यदश्वमाक्रमयन्ति'यदेवानाग्नेर्न्यूक्तं तस्यावरुद्ध्यै॥५॥

Vgl 2 7, 13 — TS 5, 2, 5 (kṛshati kshetram) u 6 (atra sikatadhkam vapet), Kath 19, 3 a E u 4, Kap S 3?, 5—7

तपो योनिरसीति'पुष्करपर्णमुपदधाति'योनिर्वा एऽपो ऽग्नेर्यत्पुष्करपर्णं'नाभिर्वधकः'सयोनिरेव सनाभिश्चीयत'इयं वा अविभेदग्निर्मातिधक्ष्यतीति'यत्पुष्करपर्णमुपदधात्यस्या अनतिदाहायाधस्ताच्चाभि सादयत्योषधीनां प्रतिष्ठित्या'अथो इये ऽऽप्स्वथयस्तानेवावरुन्द्धे'प्रजापतिः प्रजा असृजत'याः पुरा ब्रह्मणो ऽसृजत ताभिर्नाराध्नोदथ'या ब्रह्ममुखा असृजत ताभिरराध्नोद्ब्रह्म'जज्ञानं प्रथमं पुरस्तादिति रुक्ममुपदधात्यृद्ध्या'चाभोत्येवापो मिथुनत्वाय'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्याहुरमृतं वै हिरण्यममृते वा एतदग्निश्चीयते'श्मशानचितो वा एते चीयन्ते'चित्यां चित्या हिरण्यशकलमुपास्यति'तेन वा एषो ऽश्मशानचित्तेन स्वर्गो ऽथैष पुरुषो हिरण्ययो'यजमानलोकमेवैष दाधारैष ॥ इत्येव यजमानो ऽग्निनामुष्मिंल्लोके सम्यङ् यस्यैष उपधीयते'ऽथो मध्ये ज्योतिरेव चीयते'द्रप्सश्चस्कन्द पृथिवीमनु द्यामित्यभिमृशति'होत्रास्वेवैनं प्रतिष्ठापयत्यथैतानि सर्पनामानि'मृत्युर्वै सर्पनामानि'यदुपदध्यात्प्रमायुकः स्यात्तस्मादनुदिशति'सोमे वा एका त्विषिर्व्याघ्र एका'सर्प एका'ता एवावरुन्द्धे'वामदेवस्य राक्षोघ्नेन व्याघारयत्ये'तेन वै

---

1) So ist wohl zu lesen die Mss °धक्षान्नाग्नि cf अधक्षाग्निर्बोधम् Çat. Br 7, 4, 1, 10 2) So corrigirt die Mss °नाराध्नोदथ cf folgende Anmerkung 3) So H u Bb, in H wieder °राध्नोत् 4) So corrigirt, die Mss एषो श्मशानचित्, s unten 3, 2, 7, 3 5 1 a A u TS 5, 2 8 5

वामदेवः कुसितायाः[1] शिरा आदीपयद्रक्षसामपहत्यै पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्याथो यावानेव यज्ञस्तस्माद्रक्षांस्यपहन्त्यथैते स्रुचौ काष्मर्यमयी दक्षिणतः सादयति रक्षसामपहत्यै दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसंस्तानि काष्मर्येणैवापाघ्नत यत्काष्मर्यमयीं दक्षिणतः सादयति रक्षसामपहत्यै घृतस्य पूर्णा भवत्येषा वा अग्नेः प्रिया तनूर्यद् घृतं प्रिययैवैनं तन्वा समर्धयति गायत्र्या सादयति तेजो वै गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्द्ध औदुम्बरीमुत्तरतः सादयति दध्नः पूर्णामूर्ग्वा उदुम्बरो ऽन्नं दध्यूर्ज्यैवास्यान्नं दधाति त्रिष्टुभा सादयत्योजो वै वीर्यं त्रिष्टुबोज एव वीर्यमवरुन्द्धे पूर्णे सादयत्यक्षिते यजमानलोकमुपतिष्ठेते मूर्धन्वतीभ्यां सादयति मूर्धन्यो ऽसानीति विराज्यमिष्वेतव्या इत्याहुः स्रुचौ वै विराजौ यत्स्रुचा उपदधाति विराजि वा एतदग्निश्चीयते ऽथैषा स्वयमातृण्णैव वै प्रथमा स्वयमातृण्णान्तरिक्षं द्वितीयासौ तृतीयेमानेव लोकानुपधत्ते ऽश्वमुपघ्राप्य सादयति प्रजापतिचित एवास्य भवत्यथो प्राणानामुत्सृष्ट्यै भूरसीति प्राचीमुदूहेद्यद्येनं भ्रातृव्यो ऽतीव स्याद्भूमिरसीति प्रतीचीं यद्यन्वेदितिरसि भूमिरसीति तिरश्चीं यदि सदृङ्ङिव वा संदितिरनेया वा एतद्यजमानो भ्रातृव्यं प्रभूतं प्रणुदते ऽनया प्रतिनुदते ऽनया विनुदते तद्भ्रातृव्यस्य वा एष विनोदः काण्डात्काण्डात्प्ररोहन्तीति दूर्वेष्टकामुपदधात्योषधीनां प्रतिष्ठित्यै काण्डात्काण्डा ह्येषा

1) So schreibe ich; die Mss कुसितायाः, den Nom कुसितायी s. oben 2, 1, 11. 2) Die Mss उदुम्बरो 3) So meine Correctur, Bb दध्यू३र्जैवास्यान्नं; H दध्यू३र्जैवास्यान्नं; B दध्यू३र्जैवास्यादन्नं 4) So corrigirt, die Mss विराजौ; cf. TS 5, 2, 7, 5. 5) Die Mss. °तृर्णीय° 6) So H u. Bb (desgl. Kap. 8); in B °मुदरेद् 7) B पूर्वेष्टकाम°

प्रतितिष्ठतीति[1] पशवो वा इष्टका न वै पशवा आयवसे रमन्ते[2] यद्दूर्वेष्टकामुपदधात्यायतनमिव[3] वा एतत्क्रियते पशूनां यत्या अथैषां वामभृद् हिरण्यं यजुर्यजमानलोकमन्येन[4] दाधार भ्रातृव्यलोकमन्येन[5] वृङ्क्त एतया वै देवा असुराणां वामं पशूनवृञ्जत तद्वामभृतो वामभृत्त्वं छन्दांसि वै देवानां वामं पशवश्छन्दांस्येवैतया वामं पशूंश्च यजमानो भ्रातृव्यस्य वृङ्क्ते ऽथैते रेतःसिचा[6] इयं[7] विराडसौ स्वराडसा एवं रेतः सिञ्चतीयं प्रजनयत्यग्निरत्त्यन्नादो[8] भवति यस्यैते उपधीयेते यदि पुषी चिन्वीत प्रथमायां चित्यामन्यामुपदध्यादुत्तमायामन्यां[9] रेतसः सिक्तस्य परिगृहीत्यै यद्यपुषः प्रथमायां चित्यामुभे उपधेये सम्यञ्चौ हि भूत्वा रेतः सिञ्चतः ॥ ६ ॥

Vgl 3, 7, 15 — TS 5, 2, 6 a E 7 (rukmâdy upadadhyat) u 8 (sthapayet svayamatṛnnâm), Kath 20, 5 u 6, Kap S 32, 7 u 8

अथैता विश्वज्योतिष एषु वा एतल्लोकेषु ज्योतिष्मन्तमग्निं निधत्ते ऽथो प्राणानां विधृत्या अथैषां व्यालिखितेमे[10] वै लोका व्यालिखितेमानेव लोकानुपाधत्त उभये वा एतामुपादधत देवाश्चासुराश्चोपरिष्टाल्लक्ष्माणीं देवा उपादधताधस्ताल्लक्ष्माणीमसुरास्ततो देवा अभवन्परासुरा उपरिष्टाल्लक्ष्माणीमुपदधीत भ्रातृव्यवान्यो वास्य प्रियः स्यात्तस्य भवत्यात्मना परास्य भ्रातृव्यो भवत्येषा[11] वा असपत्नेष्टकासपत्नो भवति य एतामुपधत्ते ऽथो देवलक्ष्मं वा एषा देवलक्ष्ममेवोपधत्ते या सौखाया[12] अधि मृदुच्छिष्यते[13] तस्या एतां कु-

1) Die Mss ॰ष्ठतीति 2) Die Mss रमन्ते 3) So corrigirt, in H u Bb यद्दूर्वेष्ट॰, B यत्पूर्वेष्ट॰ 4) So corrigirt, die Mss यजमानलोकम॰ 5) So corrigirt, die Mss भ्रातृव्यलोकम॰ 6) So corrigirt, H u Bb रेत सीचा, B रेत सीचा 7) H इयं॰, desgl B, ohne Accent 8) Die Mss ॰त्यपीर॰ 9) So die Mss 10) Die Mss स्त्र्यालि॰ 11) So die Mss 12) So corrigirt, die Mss सौपाया 13) Die Mss मृदुच्छिष्यते

यत्तेनास्य सर्वा आग्नेयीरिष्टका भवन्त्यथैषं कूर्मः श्मशानचितो वा एते चीयन्ते जीवः कूर्म उपधेयस्तेन वा एषो ऽश्मशानचिन्नोत्मात्ती पशूनां वा एष मेध एतं वै मेधं पश्यन्त एनं पशवो ऽमुष्मिंल्लोक उपतिष्ठन्ते प्रत्यञ्चं सादयति प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते द्यावापृथिवीयया सादयति द्यावापृथिवी हि पशवो ऽनूपतिष्ठन्ते पशुभिरेवैनं सम्यञ्चं दधाति विष्णोर्नाभ्यामधिष्ठेतव्या इत्याहुः प्रादेशमात्रमुलूखलं कार्यमेतावान्वै विष्णुर्विष्णोर्वा एतन्नाभ्यामधिष्ठीयत ऊर्ज्यधिष्ठेतव्या इत्याहुरूर्ग्वा उदुम्बरो यदौदुम्बरमुलूखलं भवत्यूर्जि वा एतदधिष्ठीयते वैष्णव्या सादयति वैष्णवं३ ह्युलूखलं स्वयैव देवतया धिपोषा पृथिव्या वा एतदोजो वीर्यं संक्षिपता ओजो वा एतद्वीर्यं मध्यतो ऽधीयते ऽपो मध्ये ज्योतिरेव चीयते यद्रिक्तामवेक्षेत क्षोधुको यजमानः स्याद्यत्पूर्णामवेक्षते तथा हास्याक्षोधुको भवति सिकताभिः पूरयितव्याग्नेर्वा एतद्वैश्वानरस्य भस्म यत्सिकताः स्वेनैवैनं भस्मना प्रीणाति दध्नः पूरयितव्योर्ग्वै दध्यूर्जमेवावरुन्द्धे घृतस्य पूरयितव्यैषा वा अग्नेः प्रिया तनूर्यद्घृतं प्रिययैवैनं तन्वा समर्धयति मधोः पूरयितव्या हास्य प्रजायां मधव्यो जायते प्राधीन्द्रियाणि वै पशुशीर्षाण्ययज्ञियान्यमेध्यानि यच्छिद्रेषु हिरण्यशकलान्यप्यस्यतीन्द्रियेणैवैनानि वीर्येण समर्धयति मेध्यान्येनानि यज्ञियानि करोत्यर्धो वै पुरुषः

---

1) Die Mss. schreiben एतान् und betonen कुर्यात्, Kāṭh. एतौ 2) So corrigirt, in den Mss. एषो श्मशानचित् (cf. Maitr. S. 3, 3, 1 u. TS. 5, 2, 8, 5) 3) In den Mss. ohne Accent 4) So corrigirt, in den Mss. यद्दुम्बरम° 5) Die ३ fehlt in den Mss. 6) So corrigirt; die Mss. °धिपीषा 7) So corrigirt, H u. Bb धीयते, B धीयते 8) ज्योतिर° in den Mss. ohne Accent. 9) So corrigirt, die Mss. °तद्योर्गं 10) Die Mss. यच्छि°

सहस्रस्य यच्छन्यर्धमितरे पशवस्तस्मादेतन्मध्यत उपदधात्यभिता इतराणि पशोः सवीर्यत्वायाथो सायतनत्वाय यं कामयेत पशुमान्स्यादिति तस्य समीचीनानि पशुशीर्षाण्युपदध्यात्समीच एवास्मै पशूननुपदधाति पशुमान्भवत्यथ यं कामयेतापशुः स्यादिति तस्य विषूचीनानि पशुशीर्षाण्युपदध्याद्विषूच एवास्मै पशूननुपदधात्यपशुर्भवत्येता वै साहस्रीरिष्टकाः पाश्विष्टकास्ताः सोमदक्षः कौश्रेयो विदांचकार ताः श्यापर्णायोपदधौ[1] स सहस्रं पशून्प्राप[2] प्र सहस्रं पशूनाप्नोति यस्यैता उपधीयन्ते यविष्ठो वै नामैषो ऽग्निस्तस्माच्चिन्वतास्मरा न ध्येतवै[3][4] यद्धीयात्प्राणानस्य शुचेतोत्सर्गैरुपतिष्ठत आरण्यानेव पशूञ्छुचमनूत्सृजति ॥ ७ ॥

Vgl TS 5 2, 8 u 9, Kath 20, 6 u 7, Kap S 32, 8 u 9

पुरुषशीर्षमुपदधात्येष हि पशूनां वीर्यवत्तमो वीर्यमस्मिन्दधात्येकमुपदधात्येकधास्मिन्वीर्यं दधाति सौर्या पुरुषशीर्षमभिजुहोति स्वर्गस्य लोकस्य समष्ट्यै सौरी वा एषा सती मैत्रावरुण्यहवै[5] मित्रो रात्रिर्वरुणो ऽहोरात्रयोरेव प्रतितिष्ठत्यर्धर्चाभ्यां जुहोतीयं वा अर्धर्चो ऽसावर्धर्चो ऽनयोरेव प्रतितिष्ठत्येष यदेकया स्रुचा द्विर्जुहोति[6] तस्मादेकः सन्पुरुषो द्विपाद्वेधा एतत्किं चाकर्योनिर्वा एतद्युक्यद्देता अपस्याः सादयति तस्मिन्नेवं योनौ रेतो दधातीयं

---

1) So meine Correctur, H u Bb ताश्यापर्णा° desgl B ohne Accent, Kap S 31 10 सोमदक्ष कौश्रेय श्यापर्णायोपदधौ Kath 20 8 सोमदक्ष कौश्रेयाय श्यामपर्णायो-पदधौ 2) In den Mss प्राप ohne Accent 3) In den Mss ohne Accent 4) Da die Mss dieses Buchs nur nach der gewohnlichen Weise des RV accentuirt sind, lässt sich nicht entscheiden ob sie ध्येतवै od ध्यैतवै lesen 5) So meine Correctur, Bb मैत्रावरुण्यहविर्वै desgl B ohne Accent, H मैत्रावरुण्यहवि वै 6) In den Mss द्विर् ohne Accent

वा अविभेदयिमौतिधक्ष्यतीति सैता इष्टका अपश्यदृषयो आहुः प्रजापतिरपश्यदिति ता उपाधत्त यदेता उपधीयन्ते ऽस्या अनन्तिदाहाय यदिदन्नमिति होवाचेयं॰ य एता उपदधाता इत्यन्नादो भवति यस्यैता उपधीयन्ते तस्माद्रेतसः सिक्तादेष पशुः संभवति यदेताश्छन्दस्याः पशवो वै छन्दांसि यद्दक्षिणत उपदध्यादभीपतः प्रजा वरुणो गृह्णीयादथ यदुत्तरत उपदधात्यपवाहत एवाथैताः प्राणभृतस्तास्मिन्पशौ संभूते प्राणं चक्षुः श्रोत्रं॰ वाचं तानि दधात्यक्ष्णया सादयति पशुं॰ वा एतदाक्रमयति तस्मात्पशवो ऽक्ष्णयाङ्गानि प्रहरन्तो यन्ति दशभिर्दशभिर्वा अन्ता इष्टकाभिर्व्रीयेय आध्रुवं॰स्तां चाष्टीचोऽभोति यस्यैता उपधीयन्ते ऽथैताः सं॰यतो रेतो वा एतत्सिच्यते यदग्निश्चीयते यदेता उपधीयन्ते रेतसः सिक्तस्य सं॰यत्यै लोकं पृण छिद्रं पृणन्त्येषा वा अछिद्रेष्टका अछिद्रा वा एतया चितयश्चीयन्त इन्द्राग्नी त्वा बृहस्पतिरित्योजो वै वीर्यमिन्द्राग्नी ओजसा वा एतद्वीर्येणाग्निश्चीयते ता अस्य सूददोहस इति परुषि परुष्येव रसं दधाति सोमं॰ श्रीणन्ति पृश्नय इत्यन्नं॰ वै पृश्न्यन्नमेवावरुन्धे जन्मन्देवाना॰ विश इत्याह प्रजात्या एव त्रिष्वा रोचने दिव इति सवनानि वै त्रीणि रोचनानि सवनचितमेवैनमकरनुष्टुब्वा एषा वाग्वा अनुष्टुप् प्राणो वै वाग्यदेषा सर्वा इष्टका अनुसंचरति तस्मात्प्राणः सर्वाण्यङ्गान्यनुसंचरत्याग्नेयी वा एषा वर्णेन

---

1) Die Mss schwanken, Bb तामिद्ध्यात्य॰, H ता मिद्ध्यात्य॰, B तामिद्धात्य॰, Kap S 39 11 प्राणभृत उपदधाति रेतसमके प्राण समयम् श्रोत्र वाच दधाति——— वाचमेव मध्यतो दधाति तस्माद्मध्यतो वाग् (व)दत्यक्ष्णयोपदधाति तस्मादक्ष्णया पद्‌पशव प्रहरन्तो यन्ति cet. 2) B त्वा

स्वेन वा एतच्छन्दसाग्निश्चीयते[1] नाध्वर्युः सर्वामार्तिमार्छति य एवं वेद ॥ ८ ॥

Vgl 2, 8, 1 — TS 5, 2, 9 u 10, Kāṭh 20, 8 u 9; Kap S 32, 10 u 11

उत्सन्नयज्ञो वा एष यदग्निश्चित्यः को ह तद्वेद यदेतस्य क्रियते यन्नाश्विनौ वै देवानां भिषजा अक्लृप्तस्य कल्पयितारौ यदेता आश्विनीरुपधीयन्ते ऽक्लृप्तस्य क्लृप्त्यै पञ्चोपदधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्यायो यावानेव यज्ञस्तमवीकॢपदयैता आश्विनीर्ऋतव्या अनूपधीयन्ते रेतसे वा एतत्सिक्ताय ऋतूननुपाधार्स्तस्मात्सर्वेष्वृतुषु रेतो हितं तस्मात्सर्वानृतूनेतो ऽनुप्रजायते ऽथैता ऋतव्या वायव्या अनूपधीयन्ते तस्मात्सर्वानृतून्वायुरन्वावरीवर्त्यथैता वायव्या अपस्या अनूपधीयन्ते तस्मात्पयो नानावताः[2] सन्तो ऽप एवाभि समवताश्चतस्रः पुरस्तादुपदधाति चतुर्विधं हि शिरः प्राणश्चक्षुः श्रोत्रं वाङ् मूर्धन्वतीभिः सादयति मूर्धन्यो ऽसानीति पञ्च पश्चाभिता उपदधाति पशोः सवीर्यत्वायाथो सायतनत्वाय तस्मात्पशुः पश्चार्धीयाञ्ज्योतिष्मत्तरस्तस्माद्[3] प्राङ् संहाना इन्द्राग्नी अव्यथमानामिष्टकां दृंहत युवमित्यन्तरिक्षं वा एषा चितिरन्तरिक्षमिमाः प्रजा इन्द्राग्नी वै देवानामोजोभृता ओजो वीर्यमिन्द्राग्नी ओजो वा एतद्वीर्यं मध्यतः प्रजानां धीयते ऽथैता दिश्या देवा वै स्वर्गं लोकमायंस्ते दिश आक्रमन्त ता अव्लीयन्त ता एताभिरदृंहन्यदेता उपधीयन्ते दिशां धृत्यै पञ्चोपदधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य दशैताः पुरस्तात्सादयति दशाक्षरा विराड् विराट् खलु

1) Die Mss एतच्छं° 2) H u Bb नानाभृता Kāṭh 20 10 नानाव्रताः 3) So corrigirt, die Mss ज्योतिष्मुत्तरस्

वै चक्षुर्ज्योतिश्छन्दसां चक्षुर्वा एतज्ज्योतिः पुरस्तात्पशोर्दधाति तस्मादिदं पुरस्ताच्चक्षुरथो अन्नं वै विराडन्नं वा एतन्मुखतो दधाति मा छन्दः प्रमा छन्दः प्रतिमा छन्द इतीयं वै मान्तरिक्षं प्रमासौ प्रतिमेमानेव लोकाननुपधत्ते ऽथो देवछन्दसानि वा एतानि देवछन्दसान्येवोपधत्ते द्वादश द्वादशाभिता उपदधाति तत्षट्त्रिंशत्षट्त्रिंशदक्षरा बृहती बृहती खलु वै छन्दसां स्वाराज्यमानशे गच्छति स्वाराज्यं यस्यैता उपधीयन्ते पशवो वै बृहती पशवो मध्यमा चितिस्तस्मादेतस्यां चित्यामेता उपधीयन्त आदित्यधामानो वा उत्तरे प्राणा अङ्गिरोधामानो ऽधरे मूर्धासि राडिति य उत्तरे प्राणास्तानेताभिर्दाधार यन्त्री राडिति ये ऽधरे प्राणास्तानेताभिर्दाधार तदेषां वावैताः प्राणानां विधृत्यै समावद्भाजः सादयति समावद्भाजो ह्यीमे प्राणाः प्राणानां विधृत्यै यं द्विष्यात्तस्याक्ष्णया सादयेत्प्राणानस्य मोहयति प्रमायुको भवति मूर्धन्वतीभिः सादयति मूर्धन्यो ऽसानीति ॥ ९ ॥

Vgl 2, 8, 1—3 — TS 5, 3, 1 u 2, Kāṭh 20, 10 u 11, Kap S 32 12 u 13

त्रिवृद्वतीं पुरस्तात्सादयति त्रिवृद्वै यज्ञमुखं मुखतो वा एतद्यज्ञमुखं दधाति सप्तदशवतीं दक्षिणतो ऽन्नं वै सप्तदशो ऽन्नं वा एतद्दक्षिणतो दधाति तस्माद्दक्षिणेन हस्तेनान्नमद्यते तस्माद्दक्षिणो ऽर्ध आत्मनो वीर्यवत्तरस्तस्माद्दक्षिणमर्धं यथास्यनुपर्यावर्तन्ते पञ्चदशवतीमुत्तरत ओजो वै पञ्चदश ओजो वा एतदुत्तरतो दधात्येकविंशवतीं पश्चात्प्रतिष्ठित्यै त्रिवृद्वतीं पुरस्तात्सादयति त्रिवृद्वै यज्ञमुखं मुखतो वा एतद्यज्ञमुखं दधाति पञ्चदशवतीं दक्षिणतः सादयति सप्तदशवतीमुत्तरतः पक्षयोः सवीर्यत्वायाथो सायतनत्वाय

तस्मादुभाभ्यां हस्ताभ्यामन्नमद्यते ऽथो वज्रो वै पञ्चदशो वज्रेण वा एतद्यजमानो भ्रातृव्यमुभयतो निर्भजत्येकविंशवतीं पश्चात्प्रतिष्ठित्यै प्रतिष्ठा ह्येकविंश ओ ऽर्कस्य वा एष विधामनुविधीयते ऽन्नमर्को ऽन्नादो भवति यस्यैता उपधीयन्ते ऽग्नेर्भागो ऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमा इति स्पृतो वै नामैता इष्टका एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तदस्पृणोद्यद्यदेवैताभिर्यजमानः[1] कामयते तत्तत्स्पृणोत्येकयास्तुवत प्रजा अधीयन्तेति सृष्टयो वै नामैता इष्टका एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तदसृजत यद्यदेवैताभिर्यजमानः कामयते तत्तत्सृजते ऽग्ने जातान्प्रणुदा नः सपत्नानिति पुरस्तात्सादयति ये एव जाताः सपत्नास्तानेतया प्रणुदते प्रत्यजाताञ्जातवेदो नुदस्वेति पश्चाद्ये एव जाताः सपत्नास्तानेतया प्रतिनुदते तद्भ्रातृव्यस्य वा एष विनोदश्चतुश्चत्वारिंशी स्तोमो वर्चो द्रविणमिति दक्षिणतः सादयति षोडशी स्तोमा ओजो द्रविणमि-त्युत्तरतश्चतुश्चत्वारिंशदक्षरा वै त्रिष्टुब्वज्रस्त्रिष्टुब्वज्रः षोडशी सव्यापप्रहणो वै वज्रो दक्षिणप्रहरणः सव्यापप्रहणं वा एतद्वज्रं दक्षिणाप्रहरणं यजमानो भ्रातृव्याय प्रहरति पुरीषवतीं मध्यतः सादयति पुरीषमिव ह्येतद् मध्यतः पशोः पुरीषं मध्यमात्मनः सात्मानमेवाग्निं चिनुते ऽथैता विराजो वाग्वै विराट् पशवो वा एता इष्टकाः पशुषु वा एतदुत्तमां वाचं दधाति तस्मात्पशुमानुत्तमां वाचं वदति ॥१०॥ Vgl 2,8 6 u 7 — TS 5 3 3—5 Kath 20 12 u 13, Kap.S 32,14—17

॥ इत्युपरिकाण्डे द्वशानो नाम द्वितीयः प्रपाठकः ॥

1) Die Mss यद्यद्देवैताभि॰ 2) H u Bb कामयेत, vgl aber gleich weiter unten die entsprechende Wendung wo die Mss übereinstimmen. 3) Das इति fehlt in den Mss

अथैताः स्तोमभागा एता वै बृहस्पतिरसुरेभ्यो ऽधि यज्ञस्य प्रतिष्ठामाहरद्यदेता उपधीयन्ते यज्ञस्य प्रतिष्ठित्यै यज्ञो वै देवानामपद्यत तं देवाः स्तोमभागाभिः प्रत्युदस्तभ्नुवन्यदेता उपधीयन्ते यज्ञस्योत्तब्ध्यै प्रजापतिर्वा एतत्पृथिव्यां अग्नेस्तेजः सममभरत्तद्य एवैतत्तेजः संभ्रियते ऽथैता नाकसदो नाको ह वा असा अग्निचित्यानाय भवति न वै तत्र किं चन जग्मुषे कं तस्मान्नाकसदो नाकसत्सु पञ्चचूडा अभ्युपदधाति स्वर्गस्य लोकस्य समष्ट्या एवं ह उ त्वेवं यजमानः पत्नीभिरग्निनामुष्मिंल्लोके सम्यङ् यस्यैता उपधीयन्ते ऽथो मध्ये ज्योतिरेव चीयत एता वा अमुष्मिंल्लोके यजमानस्य पत्नीस्तस्मादग्निचिता स्त्री नोपेत्यैषा हि सा पश्चात्प्राचीमुत्तमामुपदधाति पश्चाद्ध्येतं प्राची पत्न्यन्वास्ते ऽथैताः कूम्यः प्रजापतिः प्रजा असृजत ता एनं सृष्टा अत्यमन्यन्त स प्रजापतिरेता इष्टका अपश्यत्ता उपाधत्त ततो वा अकल्पन्त यदेता उपधीयन्ते प्रजानां कॢप्त्या अथैता वृष्टिसनयो वृष्टिर्वै देवेभ्यो ऽन्नाद्यमपाक्रामत्तत इदं सर्वमशुष्यत्ते देवाः प्रजापतिमेवोपाधावन्त्स प्रजापतिरेता इष्टका अपश्यत्ता उपाधत्त तैभ्यो वृष्टिमन्नाद्यमवारुन्ध यदेता उपधीयन्ते वृष्ट्या अन्नाद्यस्यावरुद्ध्या आवपनं वा उत्तमा चितिरन्या अन्या इष्टका उपदधात्यन्यानन्यानेवास्मै पशून्प्रजनयति प्राणो वै स्वयमातृण्णायुर्वालखिल्या समीची उपदधात्यायुश्चैव प्राणं च

---

1) So corrigirt, (s. auch Kap. 32,17), die Mss प्रत्युदस्तभ्नुवन्, Kāṭh. 21, 2 प्रत्युदस्तभ्नुवन् 2) In den Mss ज्योतिर° ohne Accent 3) H a Bb नोपेत्यैषा हि, B नोपेत्यैषा हि 4) Die ह fehlt in den Mss 5) In den Mss ohne Accent. 6) In den Mss °न्वास्ते 7) Die Mss एनं° 8) So corrigirt, die Mss °मवरुन्ध 9) So corrigirt, die Mss उपदध्यात°

सयुंजा अकार्थो समीचीनाभ्यां ह्यायुषा च प्राणेन च भुञ्जते प्राणो वै स्वयमातृण्णा तामुत्तमामुपदधात्युत्तमं ह्यायुर्यदन्यामुत्तरामुपदध्यात्प्राणमस्यापिदध्यात्प्रमायुकः स्यात्तस्मात्तामुत्तमामुपदधात्युत्तमं ह्यायुः ॥ १ ॥

Vgl 2, 3, 8—10 — TS 5, 3, 5—7, Kaṭh 21, 1—3, Kap S 32, 17

अथैषा छन्दश्चितिश्छन्दांसि वै देवानां वामं पशवश्छन्दसैवैतया वामं पशून्यजमानो ऽवरुन्द्ध एतां वै यज्ञसेनश्चैत्र[1] उपदधे[2] स आनर्ध ऋध्नोति य एतामुपधत्ते गायत्रीभिः पुरस्तात्सादयति तेजो वै गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्द्धे तिस्र उपदधाति त्रिवृद्ध्यग्निर्मूर्धन्वतीभिः सादयति मूर्धन्यो ऽसानीति त्रिष्टुब्भिर्दक्षिणत[3] ओजो वै वीर्यं त्रिष्टुबोज एव वीर्यमवरुन्द्धे जगतीभिः पश्चाज्जागताः पशवः पशूनेवावरुन्द्धे ऽनुष्टुब्भिरुत्तरतो[4] ऽनुष्टुब्वै सर्वाणि छन्दांसि सर्वाण्येवास्य छन्दांस्युपहितानि भवन्त्यथ पङ्क्तीरथ बृहतीरथोष्णिहो ऽथ ककुभो ऽथ विराज एवमस्य यथापूर्वं छन्दांस्युपहितानि भवन्ति द्विपदा उत्तमाः सादयति द्विपाद्यजमानः प्रतिष्ठित्यै छन्दांसि वै देवानां वामं पशवो यजमानायतनं वा आहवनीयो भ्रातृव्यायतनं[5] धिष्ण्या[6] यत्पश्चोपदध्याद्भ्रातृव्यायतने[7] वामं पशून्दध्यादथ यत्पुर[8] उपदधाति यजमानायतने वा एतद्वामं पशून्दधात्यष्टावुपदधात्यष्टाक्षरा गायत्री गायत्रो ऽग्निर्यावानेवाग्निस्तं चिनुते ऽष्टौ गायत्रीभिः पुरस्ताद्वहिः-

1) H u Bb यज्ञसेन° 2) B उपदधो 3) Die Mss त्रिष्टुभि°, so auch Kap S 4) H u Bb ऽनुष्टुप्भिरु°, Bb ऽनुष्टुभिरु°, in Kap S 32, 17 यथानुष्टुब्भिर° 5) So corrigirt, die Mss भ्रातृव्यायतन 6) H u Bb धिष्ण्या 7) Die Mss भ्रातृव्यायतने 8) H u Bb यत्पुरं

पवमानस्योपदध्याद्यद्येनं भ्रातृव्यो ऽतीव स्यादेकादश त्रिष्टुब्भिः[1] पुरस्तान्माध्यंदिनस्य पवमानस्य द्वादश जगतीभिः पुरस्तादार्भवस्य पवमानस्यैता एव पश्चात्पवमानानामुपदध्याद्यद्येनं भ्रातृव्यो ऽतीव स्यात्प्राणो[2] वै पवमानो ऽग्नेस्तेजः पवमानस्तेजसा वा एतद्यजमानो भ्रातृव्यं प्रभूतं प्रणुदते तेजसा प्रतिनुदते तेजसा विनुदते तद्भ्रातृव्यस्य वा एष विनोदो जानुदघ्नं प्रथमं चिन्वानश्चिन्वीत गायत्रीचितं नाभिदघ्नं द्वितीयं चिन्वानश्चिन्वीत त्रिष्टुप्चितं चुबुकदघ्नं तृतीयं चिन्वानश्चिन्वीत जगच्चितꣳ[3] यज्ज्यायाꣳसं चित्वा कनीयाꣳसं चिन्वीत कनीयाꣳसꣳ यज्ञक्रतुमुपेयात्कनीयसीं प्रजां कनीयसः पशून्कनीयो ऽन्नाद्यं पापीयान्स्यादथ यत्कनीयाꣳसं चित्वा ज्यायाꣳसं चिनुते ज्यायाꣳसमेव यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः पशून्भूयो ऽन्नाद्यꣳ वसीयान्भवत्येषा वा अग्नेरुत्तरवती नाम चितिरुत्तरमुत्तरꣳ श्वः श्वः श्रेयान्भवति य एवं वेद ॥ २ ॥

Vgl 2, 8, 11 — TS 5, 3, 8, Kāṭh 21, 4, Kap S 32, 19

पञ्चचितिकः कार्यः पाङ्क्तो यज्ञः पाङ्क्ताः पशवस्तस्मात्पञ्चचितिकः पञ्च चितयः पञ्च पुरीषाणि तद्विराजꣳ संपद्यते तद्वा विराजꣳ संपद्यते तदग्नेः स्तोमं कार्यꣳ यत्पञ्चचितिकः स्यादियाद्विराजो यद्दशचितिक इयाद्यज्ञाच्च पशुभ्यश्च यत्पञ्चचितिकस्तेन यज्ञाच्च पशुभ्यश्च नैत्यथ यत्पञ्च चितयः पञ्च पुरीषाणि तेन विराजो नैति तदुभाभ्याꣳ वावास्य एतद्वर्णाभ्यां पशूनवरुन्द्धे यदेषां पाङ्क्तꣳ यच्च वैराजं द्व्यक्षरं लोम द्व्यक्षरा त्वग् द्व्यक्षरं माꣳसं द्व्यक्षरमस्थि द्व्यक्षरो मज्जा तद्दश दशाक्षरा विराड्वैराजाः पशवः पशूनेवावरुन्द्धे पञ्च-

1) Die Mss त्रिष्टुभि 2) So H u Bb, in B प्राणो 3) Die Mss °चितं

चितिकः कार्य इमे वै लोकास्तिस्रश्चितयो यजमानो वै यजमानं वा एतदेषु लोकेषु प्रतिष्ठापयति का प्रथमा चितिः किं पुरीषमित्याहुरियं वाव प्रथमा चितिरोषधयः पुरीषं का द्वितीया चितिः किं पुरीषमित्याहुरन्तरिक्षं वाव द्वितीया चितिर्वयांसि पुरीषं का तृतीया चितिः किं पुरीषमित्याहुरसौ वाव तृतीया चितिर्नक्षत्राणि पुरीषं का चतुर्थी चितिः किं पुरीषमित्याहुर्यज्ञो वाव चतुर्थी चितिर्दक्षिणा पुरीषं का पञ्चमी चितिः किं पुरीषमित्याहुर्यजमानो वाव पञ्चमी चितिः प्रजा पुरीषमेतावद्वा अस्ति यावदेवास्ति तत्स्पृणोति तदवरुन्द्धे ऽथैता ऋतव्याः संवत्सरो वा अग्निर्वैश्वानर एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरस्तस्य वा अहोरात्राण्येवेष्टका उपधीयन्ते द्वे द्वे उपदधाति प्रतिष्ठित्या अवकामुपास्य सादयति शान्त्या अनिर्दाहाय चतस्रो मध्यमायां चित्यामुपदधात्यप्रतिष्ठितमिव ह्यन्तरिक्षं प्रतिष्ठित्यै द्वादशोपदधाति द्वादश मासाः संवत्सरः संवत्सरो वा अग्निर्वैश्वानर एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायां वा एतत्तन्वामग्निश्चीयते संतनूरको निधीयते ऽभेरन्तःश्लोऽपो ऽसीत्यैतस्य ह ऽस्येवाग्निः संश्लिष्टो यस्यैता उपधीयन्ते संश्लिष्टो वा एतस्याग्निर्यस्यैता उपधीयन्ते कल्पेतां द्यावापृथिवी इति कल्पते ह वा अस्मा अग्निं चिक्यानाय प्र समानानां ज्यैष्ठ्यमाप्नोति य एवं वेद सं वा एतदग्निमिन्द्धे यश्चिनोति तं दीपयत्येव ऋतव्याभिः ॥ ३ ॥

Vgl 2, 8, 12. — TS 5, 4, 2, Kāṭh 21, 5, Kap S 32, 20

तमो वै स्वर्गं लोकमन्तरा तिष्ठत्येता वै ज्योतिष्मतीरिष्टका यद्धिरण्यशकलैः प्रोक्षति विवासयति वा एतद्यजमानाय ज्योति-

रसिन्दधाति सहस्रं भवन्ति साहस्रो वै प्रजापतिः प्रजापतिमेवाप्नोति यावद्वै सहस्रं तावदितो ऽसौ लोकः स्वर्गस्य लोकस्य समष्ट्या इमा मे अग्न इष्टका धेनवः सन्त्विति धेनवो वै नामैता इष्टका एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तददुह यद्यदेवैताभिर्यजमानः कामयते तत्तदुहे घृतदुघाः स्थ घृतावृधा इत्यृतुस्था एवैना अकृत घृतावृधो घृतश्चुतो मधुश्चुता इति घृतश्चुत एवैना अकृत मधुश्चुता ऊर्जस्वतीः पयस्वतीरित्यूर्जस्वती रेवैना अकृत पयस्वतीः स्वधायिनीः कुलायिनीरिति कुलायिनीऽह्येता विराजो नाम कामदुघा इति यन्न वा अदो देवेभ्यः कामदुघाः काममदुह्र तदेता अपि दुदुहे तत्पुष्टिमेवैताभिरवरुन्धे ऽमुं चामुष्मिंल्लोके इत्यमुष्मै हि लोकायाग्निश्चीयते रुद्रो वै देवो यज्ञादन्तराय स्तानायतयाभिपर्यावर्तत तस्माद्वा अबिभयुस्ते देवाः प्रजापतिमेवोपाधावन्त्स प्रजापतिरेतच्छतरुद्रियमपश्यत्तेनैनमशमयद्यद्वा एष वेद वेदाहु वा एनं प्रजापतिर्नेनमेष देवो हिनस्ति यच्च रुद्रः प्रजाः शमायेत तदुदह्र परेत्येतदेव वेदाभ्यक्राम्येत स्वायां वा एतर्हिशि स्वेन भागधेयेन रुद्रं शमयति जानुदघ्ने प्रथमं जुहोत्यस्या एवैनं तेन शमयति नाभिदघ्ने द्वितीयमन्तरिक्षात्तेन छुबुकदघ्ने तृतीयं दिवस्तेन त्रिर्जुहोति त्रयो वा इमे लोका एभ्यो वा एतं लोकेभ्यो रुद्रं शमयति त्रिरमुतः पुनः प्रत्यवहारं जुहोति यानेवैतो रुद्रान्यजति तानमुतो ऽवयजति त्रिरितो जुहोति त्रिरमुतस्तत्षट् षड्वा ऋतव ऋतुभ्यो वा एतद्रुद्रमवयजति समावञ्शो विभाजं जुहोति समावद्भाजो हि रुद्राणां भागा ह्रासांहानि जुहो-

1) So corrigirt, die Mss सहस्रो 2) Die Mss betonen एवैना 3) Die Mss ऽशोता 4) Die Mss °मेवैताभिरवरुन्धे 5) Die Mss अविभयुस् 6) H u Bb जयति 7) B विभाज 8) So corrigirt, B समावद्भाजो, H u Bb समावत् भाजो

ति ह्रासाहैवैं स तमशमयद् ह्रासाहैरेवैनं[1] शमयत्यर्कपर्णेन जुहोत्यर्केण वा एतदर्कमवयजति यत्पात्रेण[2] जुहुयादुद्रं प्रजास्वन्ववनयेत्तस्मादारण्येन जुहोति पशुर्वा अग्निः स वै तर्ह्येव जायते यर्हि चीयते स भागधेयमिच्छति यथा वत्सो जातः स्तनमिच्छति सो ऽध्वर्युं च यजमानं च प्रेक्षते यच्छतरुद्रियं जुहोति स्वेनैवैनं भागधेयेन शमयति यासा उत्तरार्धे जघनार्धे श्रोणिस्तस्या होतव्य स्वायां वा एतद्दिशि स्वेन भागधेयेन प्रतिहत्य रुद्रं शमयत्यङ्गिरसो वै स्वयन्तो[3] ऽजायां घर्मं प्रासिञ्चन्[5] सा शोचन्ती पर्णं परामृशत्सो ऽर्को ऽभवत्तदर्कपर्णेन जुहोत्यर्केण वा एतदर्कमवयजति यं द्विष्यात्तस्य पशूना संचरे न्यस्येदेषः प्रथमं आक्रमति स आर्तिमार्छति ॥ ४ ॥

Vgl 2, 8, 14 — TS 5, 4, 2 (s oben) u 3 (çatarudriyahomah), Kâth 21, 6, Kap S 32 21

अश्मन्नूर्जं पर्वते शिश्रियाणामित्यपः परिषिञ्चन्पर्येति प्रजापतेर्वा एष रसः प्रजापतेरेव रसेन परिषिञ्चत्यग्निं वा एतत्क्षुदित्यश्मानमेव क्षुधार्पयति मयि ता ऊर्गित्यात्मन्नेवोर्जं धत्ते यं द्विष्मस्तं ते शुगृच्छत्विति यमेव द्वेष्टि तमस्याः शुचार्पयति त्रिः परिषिञ्चन्पर्येति त्रयो वा इमे लोका एभ्यो वा एतं लोकेभ्यो ऽस्याः शुचः शमयति त्रिः परिषिञ्चन्पर्येति त्रिरपरिषिञ्चंस्तत्षट् षड्वा ऋतव ऋतुभ्यो वा एतदस्याः शुचः शमयति यद्यभिचरेदेतदेव यजुर्वदन्नपरिषिञ्चन्पुनः परीयाद्धैवास्याः शुक्तयैनमर्पयति[6] यद्यभिचरेत् ॥ इदमहममुष्यामुष्या-

1) Die Mss तमशमयद्ध्रास° 2) Die Mss यत्पात्रेष 3) So H, in Bb °स्वत्वनये°, B °स्त्वपवमये° 4) So die Mss, cf auch 3, 6, 7, 3, 9, 6, 1, 9, 5 a. A., vgl TS 5, 4, 3, 2 u 3 5) So corrigirt, H u Bb प्रासिंचत्, B प्राश्चिचत् 6) Die Mss चैवांपि शुक्तेव°

याममुष्मात्त्वममुष्यां दिशि प्रक्षिणामि ॥ इति कुम्भं जघन्यायां श्रोण्यां प्रक्षिणीयाद्यन्मा क्षिणाति तस्यैवार्तिमन्वार्तिमार्छत्यथ यन्नाम गृह्णात्यायतनमेवास्य छिनत्त्याग्नेयपावमान्यां गायत्रं गायते प्राणो वै पवमानः शिरो गायत्री यदाग्नेयपावमान्यां गायत्रं गायते शीर्षन्वा एतत्प्राणान्दधातीयं वै रथन्तरमन्तरिक्षं वामदेव्यमसौ बृहत्त्रिधातुर्वा एतदर्को निधीयत आत्मा वै वामदेव्यं प्रतिष्ठा यज्ञायज्ञियं बृहद्रथन्तरे पक्षौ यद्बृहद्रथन्तरे अभितो गायत आत्मन्नेवं पक्षौ धत्ते यज्ञं वै देवानां रक्षांस्यजिघांसंस्तानि बृहद्रथन्तराभ्यामेवापाघ्नत यद्बृहद्रथन्तरे अभितो गायते रक्षसामपहत्यै प्रजापतेर्हृदयमपिपक्षं गायते तस्मादिदमपिपक्षमात्मनो हृदयमनूचं गायते तस्मादनस्थकं हृदयमुक्थैः सामभिरर्कं परिष्टुवन्ति स तनूरर्को निधीयते ॥ ५ ॥

Vgl 2, 10, 1. — TS 5, 4, 4 (parishecanam, vikarshanam), Kath 21, 7

वरुणमेनिर्वा एष एतदभीद्धस्तिष्ठति स एनं तदभीध्यायात्तस्य प्राणेन वीयान्मण्डूकेनाध्येति तस्यैव प्राणेन व्येति न ग्राम्यान्पशून्हिनस्ति नारण्यानवकया विकर्षत्यपां वा एषा योनिर्यदवकापां वा एतद्योनिनाग्नेः शुचं शमयत्यपां वा एतद्रूपं यदवकापां वा एतद्रूपेणाग्नेः शुचं शमयति वेतसेनाध्येत्यपां वा एतत्पुष्पं यद्वेतसोऽपां वा एतत्पुष्पेणाग्नेः शुचं शमयति सप्तभिर्विकर्षति सप्त वै छन्दांसि छन्दोभिर्वा एतदग्नेः शुचं शमयत्यथो ब्रह्म वै छन्दांसि ब्रह्मणा वा एतदग्नेः शुचं शमयत्यग्निं वै सृष्टं भागधेयमैच्छत्स प्रजापतिमेवोपाधावत्त-

1) In den Mss das Verb ohne Accent 2) B पक्षो 3) So corrigirt, die Mss प्रजापतिर्हृदयम॰, cf TS 5, 3, 4, 2 4) Die Mss एतदभीद्धस्, cf Kath 21, 7 वरुणमेनिर्वा एष संपत 5) B वीयान् 6) H o Bb [illegible] 7) B यद्वेतऽसो

स्रा ऽसं प्रायच्छत्कत्वाय तदस्मै कमभवद्ऽसं वै कर्मैन्नेन वा एतदग्निमुपचरति कत्वाय कं ह्यस्मा अग्निं चिक्यानाय भवति पराञ्चमध्येति पराङ् हि पशुः शान्तरथो[1] पराङ् हि पशुः रैतो दधात्यन्यांस्ते असंतपन्तु हेतयः पावको अस्मभ्यं शिवो भवेत्यन्नं वै पावकमन्नेन वा एतदग्नेः शुचमन्तर्धत्ते हिरण्यशल्कैर्व्याघारयत्यमृतं वै हिरण्यं तेजो ऽग्निरमृतेन वा एतत्तेजो व्याघारयति पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य द्वया वै देवा यजमानस्य गृहमागच्छन्ति यद्दध्ना मधुसंमिश्रेण व्यवोक्षति तानेव प्रीणाति सर्वमनु व्यवोक्षति सर्वानेवैनान्प्रीणाति तिसृभिर्व्यवोक्षति त्रिवृ३द्ध्यग्निस्त्रिष्टुब्भिर्व्यवोक्षतीन्द्रियस्यावरुद्ध्या अन्नवतीभिर्व्यवोक्षत्यन्नाद्यस्यावरुद्ध्यै दर्भगुरुमुष्टिना व्यवोक्षति स हि प्राजापत्यः प्राणैर्वा एष व्यृध्यते ३यो ऽग्निमध्येति यदाह प्राणदा अपानदा इति प्राणानेवात्मन्धत्ते प्रजया च वा एष पशुभिश्च व्यृध्यते ३यो ऽग्निमध्येति प्रजा वै वर्चः पशवो वरिवो यदाह वर्चोधा[3] वरिवोधा इति प्रजां चैव पशूंश्चात्मन्धित्वावरोहति ॥ ६ ॥

Vgl 2, 10 1 — TS 5 4 4 (parishecanam vikarshanam) u 5 (vyagharanam vai çvakarmanahutiç ca) Kath 21, 7

इन्द्रो वै वृत्रमहन्स प्राङपद्यत स पद्यमाना इन्द्रं षोडशभिर्भोगैः पर्यगृह्णात्स वा अग्निनैव वृत्रस्य भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनस्तमसो निरमुच्यताग्निस्तिग्मेन शोचिषेति यज्जुहोत्यग्निना वा एतत्पाप्मनो भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनस्तमसो निर्मुच्यते नाना जुहोति सूक्तयोर्नानावीर्यत्वाय षोडशगृहीतेन जुहोति

1) Die Mss शान्तरथो 2) In den Mss fehlt die ३, auch schreiben die Mss त्रिष्टुभि॰ 3) H u Bb वर्चोदा desgl Kath 21, 7

षोडशभिर्हि स तैर्भोगैः पर्यगृह्णादेतेन वै स वृत्रस्य भोगेभ्यो निरमुच्यत तत्पाप्मन एवैतेन भोगेभ्यो निर्मुच्यते ऽथैतदप्रतिरथमेतेन वै देवा असुरानभ्यजयंस्तदप्रतिरथस्याप्रतिरथत्वं तदभ्य३त्यैवैतेन यजमानो भ्रातृव्यं जयत्येतेनैवं याजयेत्संग्रामे जयति[1] संग्राममेतेनैवं याजयेद्भ्रातृव्यवन्तं यो वास्य प्रियः स्यात्स भवत्यात्मना परास्य भ्रातृव्यो भवत्येतेन वै भरद्वाजः प्रतर्दनं दैवोदासिं समनह्यत्स राष्ट्रमभवद्यं कामयेत राष्ट्रियमयं राष्ट्रं स्यादिति तमेतेन संनह्येद्राष्ट्रं ह भवत्येतेन वै देवा विराजमभ्यजयन्दशान्वाह[2] दशाक्षरा विराड् विराजमेवैतेनाभिजयति दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसंस्तानि वा अप्रतिरथेनैवापाघ्नत यदप्रतिरथं दक्षिणतो वदन्तीति[3] रक्षसामपहत्यै ॥ ७ ॥

Vgl 2, 10 2 u 3 — Tb 5, 4, 5 (vyāgharaṇam vaiçvakarmaṇāhutiç ca), Kath 21, 8

उदेनमुत्तरं नयेति समिधा आदधाति प्रह्रियमाणायैवास्मै भागमकस्तिस्र आदधाति त्रिवृ३द्ध्यग्निरिन्दुं त्वा विश्वे देवा इति विश्वे ३ह्यदे[4] देवाः स्तो यन्मनुष्या इमे भरन्त[5] चित्तिभिरिति यस्मा एव चित्तायाग्निराधीयते तेनैनं चित्तेन समर्धयति पञ्च दिशो दैवीर्यज्ञमवन्तु[6] देवीरितीमा एवैनं पञ्च दिशो ऽनु तेजस्विनं करोत्युपयमना इडचो गृभीत इत्युत्थमपनो ३ह्येयं परिगृह्य यज्ञमायन्निति परिगृह्य ३ह्येतं यन्ति हरिकेशः सूर्यरश्मिः पुरस्तादित्यसौ वा आदित्यो हरिकेशः सूर्यरश्मिः पुरस्तात्सविता ज्योतिरुदया अजस्रमित्याह प्रसूत्या.

1) H u Bb betonen जयति (so also die einzigen betonten Mss.) 2) B वैराजम॰, auch betonen die Mss. दशान्वाह 3) So B (ohne Accent), in H वदन्त्येति, Bb वं दन्त्येति 4) Die ३ fehlt in den Mss 5) H u Bb भरत, B भरतु, cf 2, 7, 10 u 3, 2, 2 6) B दैवीर्यं॰, vgl aber auch 2, 10, 5 u. A

एवं तस्य पूषा प्रसवे याति विद्वानिति पशवो वै पूषा पशूनेवावरुन्धे ततो वाका आशिषो नो जुषन्तामित्याशिषां वा एष दोह आशिष एवं दुहा इन्द्रं विश्वा अवीवृधन्निति वृधन्वत्या यन्ति वृद्धिमेवोपयन्त्यनुष्टुभा यन्ति वाग्वा अनुष्टुब्वैश्वदेवी वाग्वैश्वदेवो ऽग्निस्तस्मादनुष्टुभा यन्ति षड्भिराग्नीध्राद्यन्ति षड्वा ऋतव ऋतुभिरेव यन्ति विमान एष दिवो मध्य आस्त इत्यश्मानं सादयन्ति विमानो ह्यसा आदित्यः स्वर्गस्य लोकस्य सुमहूर्यज्ञ आ च वक्षद्यक्षदग्निर्देवो देवं आ च वक्षदित्याग्नीध्रे वैषा देवहूर्यज्ञ आ च वक्षद्यक्षदग्निर्देवो देवं आ च वक्षदित्याशिष एवैष परिग्रहो वाजस्य मा प्रसवेनोद्ग्राभेणोदजिग्रभदित्यसौ वा आदित्य उद्ग्राभ एष निग्राभ उद्यन्वा एतद्यजमानमुद्गृह्णाति निम्रोचन्नस्य भ्रातृव्यं निगृह्णात्युद्ग्राभश्च निग्राभश्चेति ब्रह्म वा उद्ग्राभो ब्रह्म निग्राभो ब्रह्मणा वा एतद्यजमानमुद्गृह्णाति ब्रह्मणास्य भ्रातृव्यं निगृह्णात्यधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामित्योजो वै वीर्यमिन्द्राग्नी ओजसा वा एतद्वीर्येण यजमानो भ्रातृव्यं विष्वञ्चं विनुदते चतुर्भिराहवनीयाद्यन्ति चत्वारि वै छन्दांसि छन्दोभिरेव यन्त्यथो ब्रह्म वै छन्दांसि ब्रह्मणैव यन्ति ॥ ८ ॥

Vgl 2, 10, 4 u. 5 — TS 5, 4, 6 (samudādhānam agnipraṇayanam tathā ; hotanvāha pratiratham daçarcam saṃkalpakam), Kāṭh 21 8

क्रमध्वमग्निना नाकमित्याह स्वर्गस्य लोकस्य समष्ट्यै दिवः पृष्ठं स्वर्गत्वेति पृष्ठेन हि यन्त्यूर्जं नो धेहि द्विपदे चतुष्पद इति द्विपात्सु चैव चतुष्पात्सु च पशुषूर्जं दधातीयक्षमाणा भृगुभिः सहेति भृ-

1) Die Mss आ च वक्षत्, vgl aber das Folgende, sowie 2, 10, 5. 2) Die Mss schreiben वक्षत् ॥ इत्याग्नीध्रे वैषा ॥, vgl aber das Folgende 3) Die Mss वक्षत् इत्य॰

गवो ह्यग्ने यज्ञेनाभुवन्नृद्धे पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमित्येषां वा एष लोकानां समारोहः पञ्चभिराक्रमते पाङ्क्तो यज्ञो यज्ञेन वा एतद्यज्ञमभ्यारोहत्यप्रतिनोदाय कृष्णायाः श्वेतवत्सायाः पयसा जुहोत्यहर्वै वत्सो रात्रिर्माताहर्वा एतद्रात्रीं प्रदापयति प्रत्ते ह वा अहोरात्रे दुहे य एवं वेद सर्वे वै पशवो नानारूपाः सन्तः पय एव प्रत्येकरूपा यदेवं प्रत्येकरूपास्तदेनान्प्रत्यवरुन्द्धे नक्तोषासाग्ने सहस्राक्ष सुपर्णोऽसि गरुत्मान्पृष्ठे पृथिव्याः सीदेत्येषु वा एतं लोकेषु ज्योतिष्मन्तमग्निं निधत्तेऽथो प्राणानां विधृत्यै द्वाभ्यां सादयति द्विपाद्यजमानः प्रतिष्ठित्या आजुह्वानः सुप्रतीकः पुरस्तादित्याह स्वर्गस्य लोकस्य समष्ट्यै तां सवितुर्वरेण्यस्य चित्रामि३त्येतं वै कण्वः श्रायस३सो ऽग्नेर्दोहं विदांचकारामेवो एष दोहो ऽग्निं वा एतेनाभिविदुहे सर्वान्ह वा अस्मा अग्निर्दोहान्सर्वान्कामान्दुहे य एवं वेद विधेम ते परमे जन्मन्नग्न इत्याह साक्षा एव प्रक्तो अग्ने दीदिहि पुरो न इत्येषा वै कर्णकवती सूर्म्यं जस्रं ज्योतिरजस्रं वा वा अस्मा एतज्ज्योतिरप्यधादेतां वै वासिष्ठः सात्यहव्यः सत्रिणा आसीनान्प्रप्रच्छ विद कर्णकवतीं सूर्मीमिति विद्मेति होतुर्या वनेषु तां विद्मेति पशवो वा एतस्याः कर्णाः पशुमान्भवत्येतां वै वज्रं शतघ्नीं विघ्नीं देवा असुरेभ्य उपप्रावर्तयंस्तेषां शततर्हमतृंहन्स्तेनामेवं वज्रं शतघ्नीं विघ्नीं यजमानो भ्रातृव्यायोपप्रावर्तयति शततर्हं ह तृंहत्यग्ने तमद्येति पङ्क्त्या जुहोति यजमानो वै पङ्क्तिर्यजमानं वा एतद्विराजि प्रतिष्ठापयामकर्यो पङ्क्त्यै वाहुत्या यज्ञमालभते सप्त ते अग्ने समिधः

1) Die Mss अग्निर्दोहान्सर्वान् 2) So H (ohne Accent), in H u. Bb कर्णवती

सप्त जिह्वा इत्येतावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त यो वा अस्यैता अग्निं चिक्यानो वितर्पयति वि ह तृप्यति ता एवास्य तर्पयति चित्तिं जुहोमि मनसेत्येषा वा अग्नेरदाभ्याहुतिर्वैश्वकर्मणी नैनं भ्रातृव्यो दभ्नोत्यग्निं चिक्यानं प्र समानानां ज्यैष्ठ्यमाप्नोति य एवं वेदाग्निर्वा अमन्यत न वा अहमिदमभागधेयस्तनो यक्ष्यामीति तदेतेन भागधेयेनायच्छदेतद्वा अग्निरग्निहोत्रमैयिं वा एतेनाग्निमिच्छति सर्वान्ह वा अस्मा अग्निर्दोहान्सर्वान्कामान्दुहे य एवं वेद सं वा एतदग्निमिन्द्धे यच्चिनोति तं दीपयत्येवाग्निरग्निहोत्रेण ॥ ९ ॥

Vgl 2, 10, 6 — TS 5, 4, 7 (citim śrubya vahnim tatra vinikshipet), Kāṭh 21, 9

अग्नये३ग्नये वैश्वानराय द्वादशकपालः संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो प्राहुतायैवास्मै[1] भागमकराहुतीनां वै प्रतिष्ठित्या यजमानः प्रतितिष्ठत्याहुतीनामप्रतिष्ठित्या न प्रतितिष्ठति यदेते जुहोत्याहुतीनां प्रतिष्ठित्यै ताः प्रतितिष्ठन्तीर्यज्ञो ऽनुप्रतितिष्ठति यज्ञं यजमानो[2] ऽथो कामो वै वैश्वानरो यत्कामो भवति सं हास्मै स कामो नमति यत्प्राङ् पर्यावर्तेत दैवीर्विशो मुह्येयुर्यद्दक्षिणा यमदेवत्या स्याद्यत्प्रत्यङ् सो३र्यो[3] यदुदङ् रौद्रं ऋजु[4] होत३व्यः प्रतिष्ठित्यै सर्वहुतं करोति प्रतिष्ठित्यै क्षत्रं वै वैश्वानरो विण्मारुता यदेतं हुत्वा मारुताञ्जुहोति विशं वा एतत्क्षत्राय नियुनक्त्यथो विशमेव क्षत्रायानुकां करोत्यग्निमुखान्वै प्रजापतिः पशूनसृजत पशवो मारुता यदेतं हुत्वा मारुताञ्जुहोत्यग्निमुखाने-

1) So schreibe ich, die Mss schwanken, H u Bb प्राहुताय वास्मै, B प्राहुतायै-वाद्ये 2) So corrigirt, die Mss यजमानो यो 3) Hier scheint B eine kleine Lücke anzudeuten durch Freilassung eines Zwischenraumes, wo mehrere Silben Platz hätten 4) So meine Correctur, die Mss सूउर्यो

वांसि प्रजापतिः पर्णूंमजनयति सप्तकपाला भवन्ति सप्त सप्त मारुता गणास्तस्मात्सप्तकपाला गणेन गणेन जुहोति गणश एव मरुतः प्रीणाति यो ऽरण्येऽनुवाक्यो गणस्तन्मध्यतो जुहुयात्क्षत्रं वा एष मरुता विंदितरे विशो वा एतत्क्षत्रं मध्यमेवं करोति यदि कामयेत विशं क्षत्रं हन्यामिति यो ऽरण्ये ऽनुवाक्यो गणस्तमितरैर्गणैर्मोहयेद्विशं वा एतत्क्षत्रं हन्ति यदि कामयेत क्षत्रेण विशं हन्यामिति यो ऽरण्येऽनुवाक्यो गणस्तेनेतरान्गणान्मोहयेत्क्षत्रेण वा एतद्विशं हन्ति तस्य त्रिष्टुभौ याज्यानुवाक्ये स्यातामोजो वै वीर्यं त्रिष्टुबोजो वा एतद्वीर्यं विश आदाय क्षत्रायापिदधाति यदि कामयेत क्षत्रेणास्य क्षत्रं हन्यां प्र स्वादायतनाच्च्यवेतेति यो ऽरण्येऽनुवाक्यो गणस्तेनापिष्टं रथवाहनं युञ्ज्यात्क्षत्रं वा एष मरुतामभिष्टं रथवाहनं क्षत्रियस्य क्षत्रं बिभर्ति क्षत्रेणैवास्य क्षत्रं हन्ति प्र स्वादायतनाच्च्यवते इन्द्रं दैवीर्विशो मरुतो ऽनुवर्त्मान इत्येतद्वै देवानामनुवर्त्म दैवीं च वा वा स एतद्विशं मानुषीं चानुवर्त्मानौ करोति सं वा एतदग्निमिन्द्धे यश्चिनोति तं दीपयत्येव मारुतैः ॥ १० ॥

Vgl. Kāṭh. 21, 10

॥ इत्युपरिकाण्डे सोमभागो नाम तृतीयः प्रपाठकः ॥

---

1) So corrigirt; die Mss. गणेयं 2) Die Mss. °नेतरान् 3) Die Mss. हन्या
4) Die Mss. स्वादायतनाच्य° 5) Das इति fehlt in den Mss.

वसोर्धारां जुहोत्यक्लृप्तस्य क्लृप्त्या अशान्तस्य शान्त्या अनभिजितस्याभिजित्या अनवरुद्धस्यावरुद्ध्यै संततं जुहोति प्राणानां संतत्या एषां लोकानां संतत्या अन्नाद्यस्य संतत्या अविछिन्नं जुहोत्यन्नाद्यस्याविछेदाय यद्विछिन्द्यात्प्राणान्विछिन्द्याद्दीक्षिः स्यात्तस्य विछिन्द्याद्न्नाद्यमस्य विछिन्नस्य क्षुधासं चेत्येतानि वा अन्नस्य रूपाणि रूपैरेवान्नमवरुन्द्धे ऽपिश्वापश्चेत्येषा वा अन्नस्य योनिः संयोन्येवान्नमवरुन्द्धे वसोर्मे धारासदिति वसोर्धारां जुहोति घृतस्य वा एषा धारा यजमानममुष्मिंल्लोक उपतिष्ठते द्वादश द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्सरमेवावरुन्द्धे ऽर्धेन्द्राणि जुहोत्यर्धेन्द्रं वै देवा इन्द्रियं वी३र्यमसुराणामवृञ्जतेन्द्रियमेवैतद्वी३र्यं यजमानो भ्रातृव्यस्य वृङ्क्ते देवाश्च वा असुराश्चास्पर्धन्त ते देवा इन्द्रमब्रुवंस्त्वया मुखेनेमाञ्जयामेति सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्सो ऽब्रवीदर्ध्यो वा अहं[1] देवतानामसानीति ततो वा अजयंस्तस्मादेशो ऽर्धभाग्देवतानां[2] यदर्धेन्द्राणि हूयन्ते विजित्या इन्द्रोत्तमानि भवन्तीन्द्रियं वै वी३र्यमिन्द्र इन्द्रियं वा एतद्वीर्यं ततो यज्ञस्य यजमानः प्रतितिष्ठत्यंशुश्च रश्मिश्चेति यज्ञमुखं वा अंशुश्च रश्मिश्च यज्ञमुखमेवावरुन्द्धे ऽधिपतिश्चादाभ्यश्चेति नैनं भ्रातृव्यो दभ्नोत्यपि विक्षाने प्र समानानां ज्यैष्ठ्यमाप्नोति य एवं वेदैते ग्रहा भवन्त्येतानि वै यज्ञस्य रूपाणि रूपैरेव यज्ञमवरुन्द्धे स्रुचश्च चमसाश्चेति यज्ञायुधानि संभरति यज्ञायुधान्येव संभृत्य यज्ञं प्रयुङ्क्ते

---

1) So meine Vermuthung H u. Bb °द३र्यो वाह, B °द३र्यं वाह, cf TS 5, 4, 8, 3 यत्सर्वेषामर्धमिन्द्र प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम, Kath 21, 11 यदर्धेन्द्राणि जुहोति तस्मादिन्द्रो देवतानां भूयिष्ठभाक् 2) So corrigirt, die Mss °देवी र्धभाग्

पात्राणि जुहोति' पात्रैर्वा अन्नमद्यते' ऽनुरूपेणैवान्नाद्यमवरुन्द्धे' वर्हिश्च वेदिश्चेत्याशीरेवैषावभृथश्च स्वगाकारश्चेति प्रतिष्ठित्यै ॥ १ ॥

Vgl 2 11, 5 — TS 5, 4, 8 (vasor dhârâ); Kâṭh 21, 11

अग्निश्च घर्मश्चेत्येताभ्यां अग्नेर्ब्रह्मवर्चसस्य[1]' रुचं चैवैतेन ब्रह्मवर्चसं चावरुन्द्धे' तेजस्वी ब्रह्मवर्चसी भवत्यृतुश्च व्रतं चेत्यहोरात्रे वा ऋतुश्च व्रतं चाहोरात्रे एवास्यैतेनाभीष्टे प्रीते भवत' एका च तिस्रश्चेति' देवछन्दसं वा एका च तिस्रश्च' देवछन्दसमेवावरुन्द्धे' चतस्रश्चाष्टौ चेति' मनुष्यछन्दसं वै चतस्रश्चाष्टौ च' मनुष्यछन्दसमेवावरुन्द्धे' देवलोक एव देवछन्दसेन ऋध्नोति' मनुष्यलोके मनुष्यछन्दसेनैका च तिस्रश्च चतस्रश्चाष्टौ चेति' रोहो वा एष एषां लोकानां' संक्रान्तिः[2] स्वर्गस्य लोकस्य' द्व्युत्तरेण वै स्तोमेनादित्याः स्वर्गं लोकमायंश्चतुरुत्तरेणाङ्गिरसो' यदेतौ स्तोमौ जुहोति स्वर्गस्य लोकस्य समष्ट्यै' युग्मद्युजौ वा एतौ स्तोमौ मिथुनौ प्रजननाय' रेत एव द्व्युत्तरेण दधाति' रेतो हितं चतुरुत्तरेण प्रजनयत्येका च तिस्रश्चेत्या त्रयस्त्रिंशतस्त्रयस्त्रिंशद्वै देवतास्ता एवास्यैतेनाभीष्टाः प्रीता भवन्ति' चतस्रश्चाष्टौ चेत्यष्टाचत्वारिंशतो' ऽष्टाचत्वारिंशदक्षरा जगती' जागताः पशवः' पशूनेवावरुन्द्धे' त्र्यविश्च त्र्यवी चेत्येतानि वै वयांसि पशूनां' पशव एव पशूनवरुन्द्ध' आयुर्यज्ञेन कल्पतां' प्राणो यज्ञेन कल्पतामिति' यज्ञस्य वा एषा क्लृप्तिर्यज्ञमेवैतदचीकॢपदोजाय स्वाहा' प्रसवाय स्वाहेति' त्रयोदश वा एता आहुतयस्त्रयोदश मासाः संवत्सरः' संवत्सरं वावास्मा एतदुपदधाति स्वर्गे लोके' तस्मिन्नेव प्रतितिष्ठति' स्तोमश्च यजुश्चेत्यन्नं वै स्तोमश्च यजुश्चान्नं वा एतदात्मन्धित्वान्नादो

1) So corrigirt, die Mss अर्पेत्र° 2) So corrigirt, die Mss संक्रांति

भूत्वा देवक्षेत्रमन्ततः प्रावसत्यग्निर्वै वसुस्तस्य वा एषा धारा' सर्वान्ह वा अस्मा अग्निर्दोहान्त्सर्वान्कामान्दुहे य एवं वेद' सं वा एतदग्निरन्नाद्यमिन्द्धे यं चिनोति' तं दीपयत्येवं वसोर्धारया ॥ २ ॥

Vgl 2 11 5 — TS 5, 4 8 (vasor dhara) Kath 21, 11

वाजप्रसव्यं जुहोति' वाजं वा एतेनाग्निरन्नाद्यमुदजयद्वाजमेवैतेनान्नाद्यं यजमान उज्जयत्यन्नस्यान्नस्य जुहोति वाजप्रसव्याभिरन्नं वै वाजो ऽन्नाद्यस्यावरुद्ध्या' उभयं ग्राम्यं चारण्यं च जुहोत्युभयस्यान्नाद्यस्यावरुद्ध्या' औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर' ऊर्जो ऽवरुद्ध्यै' देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या वाचा यन्तुर्यन्त्रेण बृहस्पतिं साम्राज्यायाभिषिञ्चामीत्यभिषिञ्चेद्यदि ब्राह्मणो यजेत' बृहस्पतिसवो ह्येष' इन्द्रं साम्राज्यायाभिषिञ्चामीत्यभिषिञ्चेद्यदि राजन्यो यजेतेन्द्रसवो ह्येष' कृष्णाजिने ब्रह्मवर्चसकाममभिषिञ्चेद्ब्रह्मणो वा एतदृक्सामयो रूपमृक्सामे ब्रह्मवर्चसं' ब्रह्मवर्चसमेवावरुन्द्धे' बस्ताजिने पशुकामं' पशवो वै बस्ताजिनं' पशूनेवावरुन्द्धे' सूयते वा एषो ऽग्निना यश्चीयते' स्वेनैवैनं सवेन समर्धयति' देवा ओषधीषु पक्वास्वाजिमयुस्तां अग्निरुदजयदग्नेर्वा एषो ऽभिषेको' ऽन्नस्य वा एतत्सूयते' सवानां वा एष एको' बृहस्पतिसवो वा एष' बार्हस्पत्यो ब्राह्मणो देवतया' स्वेनैव सवेन सूयते' तदाहुर्होतव्यमेव' न हि सुषुवाणः कं चन प्रत्यवरोहतीति' सुषुवाणो वा एष देवतया यो ऽग्निचिदृतवो वै सुषुवाणस्य

1) So H u Bb, in B °मेधे  2) In den Mss das Verb ohne Accent  3) In den Mss das Verb ohne Accent  4) So H desgl B (ohne Accent), in Bb °स्वार्थिम°, vgl aber 2, 1, 11  5) न हि in den Mss ohne Accent.  6) In den Mss कं ohne Accent  7) So wohl zu schreiben die Mss schwanken, Bb प्रत्यवरोहतीति, H प्रत्यवरोहतीति

राष्ट्रमनुविभ्रति षड्वा ऋतव ऋतवो राष्ट्रभृतो यत्षड्भिर्जुहोत्यृतुष्वेवास्य राष्ट्रं प्रतिष्ठापयति ते ऽस्मै राष्ट्रमनुविभ्रति द्वादशगृहीतेन[1] जुहोति द्वादश मासाः संवत्सरः संवत्सरमेवाप्त्वावरुन्द्धे मिथुना वा एता आहुतयस्तस्मै स्वाहा वट्[2] ताभ्यः स्वाहा वडिति[3] तास्वेवं मिथुने तेजो दधाति रथशीर्षे[4] सप्तमं जुहोति दिशामभिजित्यै दिश एवाभिजिता रथेन जीयन्ते[5] ऽथैते वातहोमा अग्निचितो वा अमुत्राहोरात्रे अग्निचिते ऽयं वायुः पवते प्राणो वै वायुः प्राणमेवावरुन्द्धे ऽञ्जलिना जुहोति न ह्येतस्यावदानमस्त्यथो परिगृहीत्या एव प्राणो वै वायुर्हस्तः प्राणायोपकृप्ततमस्तस्मादञ्जलिना जुहोति त्रिर्जुहोति त्रयो वा इमे लोका इम एवास्मै लोका वातं धुन्वन्ति समुद्रो ऽसि नभस्वानार्द्रदानुरित्येतानि वै वायो रूपाणि रूपैरेव वायुमवरुन्द्धे मारुतो ऽसि मरुतां गण इति मारुतो हि वायुः सं वा एतदग्निमिन्द्धे यच्चिनोति तं दीपयत्येव वातहोमैः ॥ ३ ॥

Vgl 2, 12, 1—3 — TS 5, 4, 8 (vajaprasavyah), Kath 21, 1!

प्राणो वै गायत्री गायत्रं हविर्धानमपानो जगती जागतं सदो व्यानस्त्रिष्टुप् त्रैष्टुभमाग्नीध्रमंसुः पृष्टिर्मध्ये दिव्यो निहितः पृश्निरश्मेत्यमुं वावास्यैतन्मध्यतः प्राणापानानां व्यवदधाति प्राणानां धृत्या अश्मन्वमा[8] आग्नीध्रे[9] सादयति नव वै प्राणाः प्राणानेवास्यैतद्यजमानलोके दधात्येकविंशतिं होत्रिये प्रतिष्ठित्यै प्रतिष्ठा ह्येकविंश एकादश

1) Die Mss द्वादशगृहीतेन 2) H u Bb वट् 3) H u Bb वडिति 4) H रथशीर्षे, Bb रथशीर्षे 5) So corrigirt, die Mss रथेनेजियते 6) Diese beiden Worte fehlen in H u Bb 7) Diese beiden Worte in den Mss ohne Accent 8) So R (ohne Accent), H u Bb अश्मनमा, cf aber das Folgende 9) H u Bb अग्नीध्रे

ब्राह्मणाच्छंस्या एकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्य एवं प्रतितिष्ठन्त्यष्टाव इतरेऽष्टाक्षरा गायत्री ब्रह्म गायत्री ब्रह्मण्येव प्रतितिष्ठति यत्समार्जालीये षड्वा ऋतव ऋतवो वा एते दक्षिणतः पर्येहरन्त पितरो वा ऋतवोऽथो षड् छन्दांसि छन्दांसि वावास्यैतद्यज्ञमुखे युनक्ति सजूरब्दो अयवोभिरित्येता वा अर्धदेवताः पुरस्ताद्भागास्ता एव प्रीणात्यथ वै देवानां प्रियास्तन्वस्ता एवावरुन्धे सजूरब्दो अयवोभिरिति संवत्सरो वा अब्द ऋतवा अयवानः संवत्सर एवास्यैतेना ऋतवोऽभीष्टाः प्रीता भवन्ति सजूरुषा अरुणीभिरित्युषसमेव प्रीणाति सजोषा अश्विना दंसोभिरित्यहोरात्रे वा अश्विनावहोरात्रे एवास्यैतेनाभीष्टे प्रीते भवतः सजूः सूर एतशेनेति सूर्यमेव प्रीणाति सजूर्वैश्वानर इडया घृतेन स्वाहेति संवत्सरो वै वैश्वानरः पशव इडा पशवो घृतं संवत्सर एवास्यैतेन पशवोऽभीष्टाः प्रीता भवन्ति दर्भस्तम्बे जुहोत्येषां वा अस्यामृतं चित्तनूरमृतं वा एतदग्निश्चीयते हिरण्यं निधाय जुहोत्यग्निमत्येव जुहोत्यायतनवत्यस्यो ऽस्यर्सुः स्यादनायतने जुहुयात्स्वर्गाय वै लोकाय देवरथो युज्यते कामाय मनुष्यरथोऽग्निं युनज्मि शवसा घृतेनेत्यग्निं वा एतद्युनक्ति तेन युक्तेन स्वर्गं लोकं गच्छति यत्सर्वाभिर्युञ्ज्याद्युक्तो ऽस्य यज्ञः स्यादप्रतिष्ठिता आहुतयो द्वाभ्यां नाग्नियुनक्त्याहुतीनां प्रतिष्ठित्यै ताः प्रतितिष्ठन्तीर्यज्ञो ऽनुप्रतितिष्ठति यज्ञं यजमानस्तिसृभिर्युनक्ति त्रिवृद्ध्यग्निर्यो वा नेयोऽग्निस्तं

1) Die Mss ब्राह्मणा शंस्या, Kath 21 12 ब्राह्मणाच्छंस्य 2) So die Mss, nur schieben sie einen Avagraha ein ष्टावष्टा ebenso ist zu schreiben I, 11, 10, cf 2,8,1 अग्निनाध्वर्यू 3) Die Mss पर्येहरत 4) In den Mss अब्द ohne Accent. 5) So die Mss, vgl Bd I, p 71 Anm 5 u p 110 Anm 4 6) So corrigirt, die Mss °होराव 7) In den Mss fehlt die ३

युनक्ति तस्मिन्युक्ते सर्वं हव्यं समाधीयते पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य सं वा एतमेतौ तपतो यश्चीयते यश्च वैश्वानरो यदप्सुमतीभ्यां पुरस्ताद्यज्ञायज्ञियस्य संमृशति शान्त्या एषा वै यज्ञस्य मात्रा यदग्निष्टोमो भूम ३लेवास्यात्[1] ऊर्ध्वं क्रियते ॥ ४ ॥

Vgl 2 12, 3 — TS 5, 4, 10 (vahniyogaç ca, punaçcitih), Kāṭh 21, 12 u 22, 1.

यो वा अग्निं योगा आगते न युङ्क्ते न युञ्जानेषु युङ्क्ते ऽये युक्ता हि येतवेत्यग्निं वा एतद्योगा आगते युङ्क्ते युङ्क्ते युञ्जानेषु यो वा अग्निं विमोक आगते न विमुञ्चते न विमुञ्चमानेषु विमुञ्चते वि ते मुञ्चामि रशनां वि रश्मीनित्यग्निं वा एतद्विमोक आगते विमुञ्चते वि मुञ्चमानेषु मुञ्चते यथा वै पुनराधेयमेवं पुनश्चितिर्यो वा आधेयेन नर्ध्नोति पुनः स आधत्ते ३यो ऽग्निं चिक्यानो मन्येत वि स्वा ऽरुध्यता इति स एतां पुनश्चितिमुपदधीतापि प्रथमं चिन्वानश्चिन्वीता ऽर्द्धा ऋध्नोत्येवाथो मिथुनत्वाय या वा अग्निचिदनिष्टका आहुतिं जुहोति स्रवति सा तां स्रवन्तीं यज्ञो ऽनुस्रवति यज्ञं यजमानो यदेतां पुनश्चितिमुपदधात्याहुतीनां प्रतिष्ठित्यै ताः प्रतितिष्ठन्तीर्यज्ञो ऽनु प्रतितिष्ठति यज्ञं यजमानो ऽष्टावुपदधात्यष्टाक्षरा गायत्री गायत्रो ऽग्निर्यावानेवाग्निस्तं चिनुते ऽष्टौ लोकंपृणा उपधाय पुरीषेणाभ्यूहत्यष्टाक्षरा गायत्री ब्रह्म गायत्री गायत्र्यैवैनं छन्दसा ब्रह्मणा चिनुत एकादश लोकंपृणा उपधाय पुरीषेणाभ्यूहत्येकादशाक्षरा

1) In den Mss भूम इवेवास्यात 2) In den Mss हि ये न° ohne Accent 3) So corrigirt, H u Bb lesen वित्स्वा ऋध्यता, B विस्वाऋध्यता, für die Dehnung des स्व in स्वा vgl Bd I, p 110, Z 8, oben 3 4 4 °तैना ऋतथो, desgl Bd I, p 71 Anm 5, vgl auch das folg चिन्वीता 4) S die vorhergehende Anmerkung 5) Die Mss लोकपृणां

त्रिष्टुब्वीर्यं त्रिष्टुभैवैनं छन्दसा वीर्येण चिनुते द्वादश लोकंपृणा उपधाय पुरीषेणाभ्यूहति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवैनं छन्दसा पशुभिश्चिनुत एषा वा अग्नेरुत्तरवेदिरेतदग्निरुत्तरवेदिमाꣳश्चीयते यो ऽस्यापि पुरा चितः स्यात्तमन्ववसाय यजेत यथा वा इदं दीयमाने भूयो ऽभ्यादधात्येवं वा अस्मिन्नेतदभि पूर्वं भूयस्तेजो दधाति तदाहुः कः श्रेयाꣳसꣳ विपुंसं बोधयिष्यतीति यद्वै जनता आहुत्यैवैनꣳ व्यर्धयति गृहान्वा एष कुरुते ऽयो ऽपि चिनुते यथा अन्यतो विन्दते गृहाꣳस्तदाहरति यं इष्ट्या वा पशुना वा सोमेन वा यजेत यो ऽस्यापि पुरा चितः स्यात्तमन्ववसाय यजेत यथा वा इदमन्यतो वित्त्वा गृहानाहरत्येवं तत्तदाहुः पुनर्वा एतद्यज्ञः क्रियते यथैव कृतं च यजेत तदेता एकविꣳशतिमुपधाय यजेत प्रतिष्ठित्यै प्रतिष्ठा ह्येकविꣳश इति ॥ ५ ॥

Vgl TS 5, 4, 10 (vahniyogaç ca, punaçcitih), Kāth 22, 2, Kap. S 34 a E.

समास्त्वाग्न ऋतवो वर्धयन्त्विति समाभिरेवैनमृतुभिश्च समिन्द्धे सं दिव्येन दीदिहि रोचनेनेति ज्योतिष्मन्तमेवैनं चिनुते विश्वा आ भाहि प्रदिशश्चतस्र इति तस्मादयꣳ सर्वा दिश आभात्यमुचभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चा इत्यामयाविनः कुर्यान्मृत्युर्वै यमो ब्रह्म बृहस्पतिर्यावदेव ब्रह्म तेनैनं भिषज्यति मृत्यूहताम-श्विना मृत्युमस्माद्दियश्विनौ वै देवानां भिषजौ तावस्मान्मृत्युं मृत्यूहता उद्वयं तमसस्परीति पाप्मानमेव तमो ऽपहत्य स्वर्गं लोकमभ्यारोहत्याहतौ वै हेतनामनः सर्वेतेरापाश्रेयोऽर्थिन्यस्य होत्रा-

1) In den Mss °रुत्तरवेदिमां°
2) In den Mss das Verb ohne Accent.
3) Die Mss बृहस्पते

सीत्तमब्रुवन्या अप्सुमतीस्ता इच्छेति तस्मै वा एता गन्धर्वाप्सरसः प्राब्रुवन्यदप्सुमतीः सामिधेनीर्भवन्ति शान्त्यै चतुर्विंशतिमन्वाह चतुर्विंशत्यक्षरा वै गायत्री गायत्री यज्ञमुखं यज्ञमुखमेवालब्धाथो चतुर्विंशतिर्वा अर्धमासाः संवत्सर एषा वा अस्थिता श्रीर्यत्संवत्सरो न वा एषं श्रियैलयति न हास्य श्रीरिलयति गायत्रीरन्वाह तेजो वै गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्द्धे त्रिष्टुभो ऽन्वाहौजो वै वीर्यं त्रिष्टुबोज एव वीर्यमवरुन्द्धे यज्ञायज्ञ्यश्च त्रिष्टुभश्च भवन्ति तेनैव तदुभयमवरुन्द्धे या आग्नेयीरनिरुक्तास्ताः का३र्या अनिरुक्तमिव ह्येतद्व्यावृत्तं व्यावृत्तं पाप्मना भ्रातृव्येण गच्छति ता अग्नीषोमीयस्य पशोः कुर्यात्ते हि देवक्षेत्रं हिरण्यारोक्ष्यन्तीति तिस्रो रात्रीर्भृत्वाभिषिञ्चेत३ष्या इत्याहुस्त्रिपदा विराड् विराजमेवाप्नोति षड्रात्रीर्भृत्वाभिषिञ्चेत३ष्या इत्याहुः षड्वा ऋतवः संवत्सरः संवत्सरमनु विराडायत्ता विराजमेवाप्नोति दश रात्रीर्भृत्वाभिषिञ्चेत३ष्या इत्याहुर्दशाक्षरा विराड् विराजमेवाप्नोति द्वादश रात्रीर्भृत्वाभिषिञ्चेत३ष्या इत्याहुर्द्वादश मासाः संवत्सरः संवत्सरमनु विराडायत्ता विराजमेवाप्नोति चतुर्विंशतिं रात्रीर्भृत्वाभिषिञ्चेत३ष्या इत्याहुश्चतुर्विंशतिर्वा अर्धमासाः संवत्सरः संवत्सरमनु विराडायत्ता विराजमेवाप्नोति मासं भृत्वाभिषिञ्चेत३ष्या इत्याहुर्मासश एव संवत्सरमाप्नोत्यष्टौ वा एतान्मासान् वसवो ऽबिभरुस्त इमं लोकमाजयन्गायत्रीं छन्द एकादश रुद्रा३स्ते ऽन्तरिक्षं लोकमाजयं-

1) Das Verb in den Mss ohne Accent 2) So H u Bb, B श्रियैलयति, Kaṭh 22, 1 नास्य श्रीस्तिष्ठते यस्यैता क्रियते 3) Die Mss त्रिष्टुभी 4) Die Mss त्रिष्टुभ्यश्च 5) Die Mss व्यावृत्त 6) Von hier bis zum folgenden इत्याहु॰ in H u Bb fehlend, die Accente daher ergänzt 7) Die Mss एतं मासौ 8) Die ३ fehlt in den Mss

त्रिष्टुभं छन्दो द्वादशादित्या ऽस्तैऽमुं लोकमाजयन्जगतीं छन्दस्तं आर्भुवन्नृध्नोति य एवं विद्वान्संवत्सरमग्निं बिभर्ति तस्मादाहुः संवत्सरभृत एवाग्निरित्यथैता आप्रियः प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत स एता आप्रीरपश्यत्ताभिरात्मानमाप्रीणीताग्निर्वै प्रजापतिर्यदेता आप्रियो भवन्त्यग्निमेवैताभिर्यजमान आप्रीणीते लोमशं वा एतच्छन्दः पशव्यमूनातिरिक्तं प्रजननाय विराजो भवन्ति विराड्वै सर्वाणि छन्दांसि सर्वाण्येवास्य छन्दांस्युपहितानि भवन्ति ता विश्वचितः कुर्यात्प्राणा वा एता ज्यायसीरिव च कनीयसीरिव च भवन्ति ज्यायांस इव च ह्यमी कनीयांस इव च प्राणाः प्राणानेवात्मन्धत्ते ॥ ६ ॥

Vgl 2, 12, 5 u 6 — Kâth 22, 1

यस्याग्निरुख्यो ऽनुगच्छति यथा पुत्रो जातः प्रमीयत एवं तद्य-द्यनुगच्छेत्तामेवास्य पुनः परीन्धीतेयं वा अग्नेर्योनिः स्वादेवैनं योनेः प्रजनयतीश्वरो वा एषो ऽप्रजनितोऽयो ऽग्निं चिनुते ॥

यास्ते अग्न आर्द्रा योनयो याः कुलायिनीर्ये ते अग्ना इन्दवो

या उ नाभयः ।

ताभिष्ट्वमुभयीभिः संविदानः प्रजानंस्त्वं ऽन्वेह निषीद ॥

इति यदेषार्द्रा योनिमति शान्त्यै प्रजा वै कुलायं पशवः कुलायं यत्कुलायिनीः प्रजात्यै हविर्भूतो वा एष ऽयो ऽग्निं चिनुते ऽयो ऽग्निं चित्वान्यस्य स्त्रियमुपैति यथा हविः स्कन्नमेवं स्याद्यथा हविये

1) Die Mss. तै ohne ३  2) So corrigirt B प्रश्नानो, Bb प्रचानो, H प्रपाणो  3) Die Mss. एतच्छेद्  4) So corrigirt, H u Bb °न्त्वो, B °न्त्वो  5) So corrigirt, H u Bb पुरीधीते°, B परीधीते°  6) So corrigirt, die Mss ऽयो  7) Die Mss हविर्भूतो s 3, 3 7 u a  8) Die ३ fehlt in den Mss  9) Die Mss चित्वान्यस्य

स्कन्नाय प्रायश्चित्तिमिछन्त्येवमस्मै प्रायश्चित्तिमिछेयुर्यद्युपेयान्मैत्रावरुण्यामिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनो ऽस्कन्नताय पशुर्वा अग्निर्यो वै पशुं पुरस्तादुपचरति हिनस्ति वा एनꣳ स तस्मात्पुरस्तात्प्रत्यञ्चं नाक्रामति तस्मादु पश्चात्प्राञ्चमुपचरत्यात्मनो ऽहिꣳसायै यो वै यथावृतमग्निं चिनुते यथारूपं प्रजाश्च ऋतवश्च कल्पन्ते या दक्षिणावृतस्ता दक्षिणत उपदधाति याः सव्यावृतस्ता उत्तरतस्त्र्यालिखिताः पश्चात्प्राचीरुपदधाति यथावृतꣳ वा एतदग्निं चिनुते यथारूपं प्रजाश्च ऋतवश्च कल्पन्ते संसत्यो ऽग्निश्चेतव्या इत्याहुः ॥ भूर्भुवः स्वः ॥ इति पुरस्तात्स्वयमातृण्णां यावदेतद्वै वाचः सत्यꣳ संसत्यमेवाग्निं चिनुते प्राणो वै स्वयमातृण्णामृतꣳ हिरण्यꣳ यद्धिरण्येष्टकामुपधाय स्वयमातृण्णामुपदधात्यमृत एवास्य प्राणान्दधाति तेजो ऽसि तेजो मे यच्छेति हिरण्येष्टका उपदधात्येताभिर्वा इमे लोका विधृता यथो एताभिरेवाग्निं चिनुत इमे लोकाः प्रभान्ति देवा असुरान्हत्वा मृत्योरबिभयुस्ते छन्दाꣳस्यपश्यꣳस्तानि प्राविशꣳस्तेभ्यो यद्यदछदयन्तेनात्मानमछादयन्त तच्छन्दसां छन्दस्त्वं चितिं चितिमुपधायामेय्या धाम छन्दो ऽभिमृशति स्वामेव देवतामुपप्रविशत्यात्मनो ऽहिꣳसायै ॥ श्येनचितिं चिन्वीत स्वर्गकामः श्येनो वै भूत्वा गायत्र्यमुं लोकमपतत्स्वर्गस्य लोकस्य समष्ट्यै रथचक्रचितिं चिन्वीत भ्रातृव्यवान् रथचक्रꣳ वै वज्रं कृत्वा देवा असुरेभ्य उपप्रावर्तयꣳस्तेषाꣳ शततर्हमहꣳहꣳस्तदेतामेव वज्रं कृत्वा यजमानो भ्रातृव्यायोपप्रवर्तयति शततर्हꣳ ह हन्ति प्रौगचितिं चिन्वीत

---

1) ) प्राय॰ in den Mss ohne Accent  2) In den Mss संसत्यम॰ ohne Accent, cf oben  3) H u Bb प्रं भांति, B प्रभाति

भ्रातृव्यवानुभयतो वै देवानसुराः परीयत्ता आसन्पुरस्तादन्ये पश्चादन्ये[1] तान्वा एतेन व्यनुदन्त तद्भ्रातृव्यस्य वा एष विनोदो द्रोणचितिं चिन्वीतान्नकामो द्रोणेन वा अन्नमद्यते ऽनुरूपेणैवान्नाद्यमवरुन्द्धे पश्चाच्चरुर्भवत्यनुरूपत्वाय श्मशानचितिं चिन्वीत यः कामयेताञ्जसा पितृलोकमुपेयामित्यञ्जसा पितृलोकमुपैत्युप[2] चान्य[3] चिन्वीत ग्रामकामो यथैवैतमुपचिनोत्येवमस्मै ग्राममुपचिनोति समूह्यं चिन्वीत पशुकामो यथैवैतं समूहत्येवमस्मै दिग्भ्यः पशून्समूहति ॥ ७ ॥

Vgl TS 5, 4, 11 (kāmyāni vihavyāç ca)

प्रजापतिर्वा एतमग्रे ऽग्निमचिनुत ऋतुभिः संवत्सरं वसन्तेन पुरस्तादचिनुत ग्रीष्मेण दक्षिणं पक्षं वर्षाभिरुत्तरं शरदा पुछं हेमन्तेन मध्यं ब्रह्मणैवं पुरस्तादचिनुत क्षत्रेण दक्षिणं पक्षं विशोत्तरं पशुभिः पुछमाशया मध्यमेतावद्वा अस्ति यावदेवास्ति तत्स्पृणोति तदवरुन्द्धे स्वर्गाय वै लोकायाग्निश्चीयते वज्र एकादशिनी यदेकादशिनीं मिनुयाद्वज्रः पुरस्तादवगृह्णीयादस्वर्ग्यः स्यादेकं मिनुयादपशुः स्यादेकयूप एकादश पशवो नियुञ्ज्यास्तेन[4] पशव्यास्तेन स्वर्ग्यो यत्पक्षसंमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्कनीयसीं प्रजां कनीयसः पशून्कनीयो ऽन्नाद्यं पापीयान्स्याद्[5]यद्वेदिसंमितां मिनोति ज्यायांसं चिनुते ज्यायांसमेव यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः पशून्भूयो ऽन्नाद्यं वसीयान्भवत्येषा वा अग्नेरुत्तरवती नाम चितिरुत्तरमुत्तरं श्वः श्वः श्रेयान्भवति य एवं वेद

---

1) So corrigirt; die Mss पश्चाद्न्ये 2) ˇउप in den Mss ohne Accent. 3) So B, ohne Accent; in H u Bb चान्यं; beachte den Accent. 4) Die Mss. नियुञ्ज्या° 5) Die Mss. पापीयान् स्या°; cf Einleitung zum ersten Buch, p. XLIII.

द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं गछत्यग्निं वा गछत्यात्मानं वा ॥

रुचं नो धेहि ब्राह्मणेषु रुचं राजसु धारय ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्[1] ॥

इति यज्जुहोत्यात्मानं वा एतदग्नेर्यशस्यार्पयतीश्वरो वा एष दुश्चर्मा भवितो३यो ऽग्निमध्येति ॥

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥

इति यज्जुहोति शान्तिर्वा एषाग्नेर्गुप्तिरात्मनो वयो वा अग्निस्तस्मादग्निचिता पक्षिणो नाशितव्यं नो अग्निविदा यदश्नीयात्तमेवाग्नीयात्स एनमार्तिं निनयेत्प्रजापतिर्वा एतमग्रे ऽग्निमचिनुत ज्यैष्ठ्यकामः स ज्यैष्ठ्यं महिमानमगछज्ज्यैष्ठ्यं महिमानं गछति य एवं विद्वानग्निं चिनुते प्रजापतिः प्रजाः सृष्ट्वा ता अनुप्राविशत्सो ऽब्रवीद्यो मेतः संचिनवदृध्नवत्स इति तं देवाः समचिन्वंस्त आर्ध्नुवंस्त-स्वित्यस्य चित्याय तद्य एवं विद्वानग्निं चिनोति प्रजापतिमेव संचिनोत्यृध्नोति तस्मादाहुः प्रजापतिचित एवाग्निरिति ॥ ८ ॥

Vgl TS 5 5, 7 (ekayupadhiradhayah), Kath 22, 4, Kap 35 8, l u 2

देवेभ्यो वा अग्निं चिक्यानेभ्यो न व्यौछ३त्ते ऽग्ना आहुतिमजुहवुस्तुभ्यमग्ने व्युछ तथास्मभ्यं विवत्स्यतीति तयाग्नये व्यौछ३ग्नये या औछन्नाहुत्यै व्यौछत्तस्या आहुत्यै यज्ञेन व्यौछद्याहुत्या औछन्न यज्ञाय व्यौछत्तस्मै यज्ञाय दक्षिणया व्यौछद्धि यज्ञायौछन्न दक्षिणायै व्यौ-

1) Dies Wort in den Mss ohne Accent
2) So corrigirt, B भवितो ३यो, H u Bb भवितोऽयो

छन्दस्यै दक्षिणायै वाक्सेन व्यौच्छद्दक्षिणाया औच्छद्ब्राह्मणाय व्यौच्छद्ब्राह्मणाय ब्रह्मणा व्यौच्छद्ब्राह्मणायौच्छद्ब्रह्मणे व्यौच्छद्ब्रह्मणे तपसा व्यौच्छदेता वै तपःपराधा व्युष्टयः प्रोषसीयस्यस्मै व्युच्छति य एवं विद्वान्व्युष्टीरुपधत्ते यो वै यथापूर्वं व्युष्टीर्वेद यथापूर्वमस्मै व्युच्छन्त्योपसी वाव प्रथमा व्युष्टिर्व्याडिति वा आहुर्यदोषस्युदेति यच्छुच्छति यदभिराधीयते यत्सूर्य उदेति यदस्ता अवनेनिक्ते यदश्नाति यत्पिबत्येता वै यथापूर्वं व्युष्टयो यथापूर्वमस्मै व्युच्छति य एवं विद्वान्व्युष्टीरुपधत्ते ॥ ९ ॥

यो वा अग्निमयोनिमनायतनं चिनुते ऽयोनिरनायतनो भवत्यापो वा अग्नेर्योनिर्यत्कुम्भेष्टका उपदधाति योनिमन्तमेवायतनवन्तमग्निं चिनुते योनिमानायतनवान्भवत्यधरसपत्नो ऽग्निश्चेतव्या इत्याहुरापो वा अग्नेः सपत्नो यत्कुम्भेष्टका उपदधात्यधरसपत्नमेवाग्निं चिनुते ऽधरो ऽस्मात्पाप्मा भवत्यधरः सपत्नः शुग्वा अग्निरापः शान्तिर्यत्कुम्भेष्टका उपदधाति शान्त्यै यत्कुम्भाश्च कुम्भ्यश्च तन्मिथुनं यद्द्वन्द्वं प्रजात्यै द्वादशोपदधाति द्वादश मासाः संवत्सरः संवत्सरमेवाप्त्वावरुन्धे नैवारश्चरवस्त्रयोदशो भवन्त्यस्ति मासस्त्रयोदशस्तमेवैतेनाप्त्वावरुन्धे पयसि भवति यत्पयो ग्राम्यं तेनान्नाद्यमवरुन्धे यन्नीवारा आरण्यं तेन तेनैव तदुभयमवरुन्धे ॥ १० ॥

॥ इत्युपरिकाण्डे वसोर्धारीयः चतुर्थः प्रपाठकः ॥

---

1) B प्रथ प्रथमा 2) Die Mss ॰राधीयते 3) पिनेष॰ ohne Accent in den Mss 4) Die Mss व्युष्टयो 5) Die Mss व्युष्टीर॰ 6) Die Mss चिनुते 7) Die Mss कुम्भेश 8) भवन्त॰ in H betont, in Bb zweifelhaft 9) H u Bb वरुन्धे 10) Das इति fehlt in den Mss

आ वा एष प्रजापतये वृश्चते यः शिर उपदधाति नैतराण्यङ्गान्यस्थिचिदस्य श्मशानचिद्भवति[1] यदेतां पुरुषचितिमुपदधाति न प्रजापतया आवृश्चते ऽनस्थिचिदस्याश्मशानचिद्भवति षट्त्रिंशतमेता उपदधाति षट्त्रिंशदक्षरा बृहती बार्हताः पशवो बार्हतः पुरुषः पुरुषस्य प्रतिमोपधीयते स उ३ह्येयं[2] धीयत एष ह उ३त्येव यजमानो ऽमुं लोकं नाति प्रमीयते यस्यैता उपधीयन्ते ॥ १ ॥

अथैताः पश्चापश्चीनाः शिथिर इव वा अग्निश्चित्यो यत्पश्चापश्चीना उपदधात्यधृत्या[3] अशिथिरत्वाय पञ्चोपदधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य भूयस्कृदसि वरिवस्कृदसीत्यथ एवं भूमानं दधाति भूयान्प्रजया पशुभिर्भवत्यप्सुषदसि गृध्रसदसीति वयो वा अग्निः समिद्धमेवैनं वयः करोति वयो भूत्वा स्वर्गं लोकमेति यस्यैता उपधीयन्ते ॥ २ ॥

चितः स्थ परिचितः स्थेति शर्कराः परिश्रयति यच्छर्करा अपरिश्रित्य सिकता निर्वपेद्रेतः सिक्तं[4] परासिच्येताथ यच्छर्करा अपरिश्रित्य सिकता निर्वपति रेतसः सिक्तस्य परिगृहीत्यै ॥ ३ ॥

वि वा एष यज्ञंश्छिद्यते यदेतंस्थितं पशुमुत्सृजन्ति स ह स्म वा एतमाशोकेयः[5] स्थापयत्याज्येन संस्थाप्य यज्ञस्य संतत्या अविच्छेदाय ॥ ४ ॥

---

1) Die Mss °स्याश्मशानचिद्भवति, vgl das Folgende 2) Die ३ fehlt in den Mss 3) धृत्या in den Mss ohne Accent 4) So B, ohne Accent, in H u Bb °द्रेतमेवैनं सिक्त 5) So corrigirt, die Mss °शोकेयं, bisher nur gana शुभ्रादि zu P 4, 1, 123 belegt

स्वर्गं वा एष लोकमन्वारोहति य एतमग्निं चिनुते यदन्वारोहाञ्जुहोति स्वर्गमेवैनं लोकं गमयित्वाथ कामं चरति ॥ ५ ॥

॥ इत्युपरिकाण्डे[1] पञ्चमः प्रपाठकः ॥

---

आग्नावैष्णवमेकादशकपालं निर्वपेदग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्याग्निर्वै यज्ञस्यान्तो ऽवस्ताद्विष्णुः[2] पुरस्तादुभयत एव यज्ञस्यान्तावालभ्य तदाहुर्न ह्युत इन्द्राय ज्ञो[3] ऽस्त्वेति[4] यदष्टाकपालस्तेनाग्नेयो यत्त्रिकपालस्तेन वैष्णवो यदेकादशकपालः संपद्यते तेनैन्द्रो ऽग्निर्वै यज्ञस्य पवित्रं[5] विष्णुर्यज्ञः पवित्रपूतमेव यज्ञमालभ्य मेधस्य वा एतद्यज्ञस्य रूपं यत्पुरोडाशस्तस्मात्पुरोडाश एव कार्यश्चरुं कुर्वन्ति धेन्वा वै घृतं पयो ऽनडुहस्तण्डुलास्तन्मिथुनं[6] मिथुनमेवास्य यज्ञमुखे दधाति तेजो वै घृतं तेजस एव प्रजायते[7] पुरुषो वा एष मेधायालभ्यते पुरुषस्येव ह्येषा प्रतिमा यत इव हि रूपं तस्मादध्वरेव कार्यो वेदिमति दीक्षते[8] विन्दा इति वै वेदिमति दीक्षते विन्दते ह वै यो वेदिमति दीक्षते ऽथो यज्ञपथ एवादीक्षिष्ट[9] वेद्या वै देवा इममसुराणामविन्दन्तेमामेव विन्दते यो वेदिमति दीक्षते ऽथो यज्ञपथमेवालभ्य प्राचीनवंशं कुर्व-

---

1) Das इति fehlt in den Mss 2) So corrigirt, die Mss °न्तौ °वस्ताद्, was nicht richtig sein kann, man vgl परस्तात् unten 3, 9, 4 3) So corrigirt; die Mss ह्युतं इंद्रो यज्ञो 4) So corrigirt, die Mss स्त्वीति 5) So H u Bb, in B चरु 6) B तन्मिथुनमेवास्य 7) So B (ohne Accent), in H u Bb प्रजापतये 8) So B (ohne Accent), H u Bb दीक्षिते 9) Die Mss एवादीक्षिष्ट

न्ति दिशो[1] यदिमा[2] व्यकल्पयन्निमामेव देवेभ्यो ऽकल्पयन्निमां पितृभ्य इमामसुरेभ्य इमां मनुष्येभ्यो देवत्तामेव उपैति यो दीक्षते देवानामेव दिशमुपावर्तते प्राचीनामेव दिशमुपावर्तते ऽथो देवक्षेत्रमेव प्रावस्यति परिश्रयन्त्यन्तर्हितो वै देवान्क्षयान्मानुषः[3] क्षयो मानुषादेवैनं क्षयादन्तर्दधत्यथो रक्षसामनन्ववचारायेति वा एऽषो ऽस्माल्लोकाद्यो दीक्षते जन[4] ह्येति देवलोकमभ्यारोहति परिश्रयन्तो ऽतिरोकान्कुर्वन्ति तेनास्माल्लोकान्नैति तेनास्मिंल्लोके धृतः पुरस्तात्प्रायणं कुर्यात्स्वर्गकामस्यासौ वा आदित्यः स्वर्गो लोकऽको ऽमुष्यैनमादित्यस्य सामक्षं गमयति दक्षिणतः प्रायणं कुर्याद्यं कामयेत पितृलोक ऋध्नुयादित्येषा वै पितॄणां दिक् पितृलोक एव ऋध्नोति पश्चात्प्रायणं कुर्यात्प्रजाकामस्य पश्चाद्धि रेतो धीयते रेतो दीक्षितो रेतो ऽस्मिन्दधात्युत्तरतः प्रायणं कुर्याद्यं कामयेत मनुष्यलोक ऋध्नुयादित्येषा वै मनुष्याणां दिङ् मनुष्यलोक एव ऋध्नोत्युत्तरतः पुरस्तात्प्रायणं कुर्याद्यं कामयेतोभयोर्लोकयोर्ऋध्नुयादित्युभयोर्वा एतल्लोकयोरुभयोरेव लोकयोर्ऋध्नोति सर्वतः प्रायणं कुर्याद्यं कामयेत सर्वासु दिक्ष्वृध्नुयादिति सर्वासु दिक्ष्वृध्नोति ॥ १ ॥

Vgl Kâth 22, 13

केशश्मश्रु[7] वपते दतो धावते नखानि निकृन्तते[8] स्नाति मृता वा एषा त्वगमेध्यं[9] या अस्यैतदात्मनि शमलं तदेवापहते मेध्य एव

---

1) Die Mss schwanken H u Bb कुर्वेति दिशो B कुर्व दिशो 2) So corrigirt, die Mss यदिमा 3) So corrigirt, die Mss देवा क्षयान् 4) So corrigirt, die Mss °र्येति 5) So corrigirt, die Mss स्मान् लोकान् यो 6) So H u Bb, in B दिक्षि ऋधूयादिति 7) Die Mss केशश्मश्रु 8) Die Mss नखा नि° 9) So H u Bb, in B त्वग् मेध्य°

मेधमुपेत्यप्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गं लोकमायन्यदप्सु स्नाति तामेव दीक्षामालभतेऽथ यदप्सो ऽवभृथमभ्यवैति तां वा एतद्दीक्षां पुनरप्सु प्रवेशयत्योषधे त्रायस्वैनमित्याह चात्या एव स्वधिते मैनं हिंसीरिति वज्रो वै स्वधितिः स ईश्वरो ऽशान्तो यजमानं हिंसितोर्यत्तृणमन्तर्दधाति यजमानस्याहिंसायै देवश्रुदिमान्प्रवपा इति देवश्रुऽएतान्प्रवपते स्वस्त्युत्तरं अशीयेति स्वऽस्त्यस्य यज्ञस्योदृचमशीयेति वा एतदाहापो मा मातरः सूदयन्त्वित्यापो हि यज्ञो घृतेन मा घृतप्वः पुनन्त्विति देवताभिरेवात्मानं पावयते विश्वं हि रिप्रं प्रवहन्तु देवीरिति यदेवास्य रिप्रममेध्यमात्मनि यमलं तदस्मादधि प्रवहन्त्युदिदाभ्यः शुचिरा पूत एमीति शुचिरेवाभ्यो यज्ञियो मेध्यः पूत उदेति हविर्वै दीक्षितो यदा वै हविर्यजुषा प्रोक्षत्यथ हविर्भवति यद्यजुषा स्नपयति हविरेवैनमकरश्नाति प्राणा वा अशनं प्राणानेवात्मन्धित्वा दीक्षते सुषिरो वै पुरुषः स वै तर्ह्येव सर्वो यर्ह्याशितो यदाशितो भवति मेध्य एव मेधमुपैति यथा वा इह दीक्षित एवं वा एऽएषो ऽमुष्मिंल्लोक एवं वा अत्याशितस्य तिष्ठति तस्मान्नात्याशितेन भवितऽव्यं तद्व सूक्ष्यमाशितेनैव भवितऽव्यं यथैव कनीयः कनीयो ऽश्नीयादेवमश्नीयाद्यद्धि दीक्षितः सन्कनीयो ऽश्नाति तेन दीक्षितं श्वाङ्क्ते ऽभ्यङ्क्ते वासः परिधत्त एता वै पुरुषस्य तऽन्वः सतनूरेव मेध्यमुपैति नवनीतेनाभ्युङ्क्ते घृतं देवानामायुतं मनुष्याणां निष्पक्वं गन्धर्वाणां स्वयं विलीनं पितृणां सर्वदेव-

1) Die Mss ईश्वरौ यातो 2) B यऽयम॰ H u. Bb यत्तृयम॰ 3) So B, ohne Accent, in H u. Bb स्वस्त्युत्तर, vgl 1 2, 1 4) So corrigirt, die Mss दीक्षिते 5) So H u. Bb; in B सुषिरो 6) Die Mss तिष्ठंति 7) B ॰तेनैवा 8) In den Mss ohne Accent. 9) Die Mss निं पक्व

ऽत्यं वा एतत्संसान्नवनीतेनाभ्यङ्क्ते दर्भपिञ्जूलाभ्यां समायौति तत्स्वदभ्यञ्जनमकरोथो अभ्येवैतद् धारयति मेध्यत्वाय महीनां पयो ऽसीत्याह महीनां ह्येतत्पयो ऽपामोषधीनां रसा इत्यपां ह्येष ओषधीनां रसो वर्चोधा असि वर्चो मे धेहीत्याशिषमेवाशास्ते ॥ २ ॥

Vgl 1, 2, 1 — TS 6, 1, 1 (adhvarâdînâṃ trayâṇâṃ vidhiḥ, prâgvaṃçaṃ kshura karmâdisaṃskṛtaḥ praviçet), Kâṭh 23, 13 u 23, 1, Kap S 35, 7

प्रस्ताङ्क्ते मुञ्जात्या ईषीकयाङ्क्ते शल३स्या हि मनुष्या आङ्क्ते सतूलयाङ्क्ते ऽपतूलया हि मनुष्या आङ्क्ते दक्षिणं पूर्वमाङ्क्ते सव्यं हि पूर्वं मनुष्या आङ्क्ते त्रिस्त्रिस्त्रिर्यदाङ्क्ते ऽपरिमितं हि मनुष्या आङ्क्ते न पुनर्निषिञ्चयति पुनरावर्तं हि मनुष्या आङ्क्त इन्द्रो वै वृत्रमहंस्तस्य कनीनिका परापतत्सा त्रिककुभमगच्छत्तदाञ्जनं त्रैककुभमाङ्क्ते सत्यं वै चक्षुर्नेव वाचे संदधाति सत्यमेवालभ्य दीक्षामुपैत्यन्तरहं त्वया द्वेषो अन्तरारातीर्दधे महता पर्वतेनेति पर्वतेन वा एतद् द्वेषो ऽरातीरन्तर्धत्ते चक्षुःपा असि चक्षुर्मे पाहीत्याशिषमेवाशास्त ऊर्ध्वं चावाञ्चं च पावयत्यूर्ध्वश्च ह्ययमवाङ् च प्राणो यं द्विष्यात्तमक्ष्णया पावयेत्प्राणानस्य मोहयति प्रमायुको भवति चित्पतिस्त्वा पुनात्विति यज्ञो वै चित्पतिर्वाचस्पतिस्त्वा पुनात्विति वाचस्पतिरेवैनं यज्ञाय पावयति देवस्त्वा सविता पुनात्विति सवितृप्रसूत एवैनं ताभिर्देवताभिर्मेधायात्मानं पावयते ऽच्छिद्रेण पवित्रेणेत्येतद्वा अच्छिद्रं पवित्रं यत्सूर्यस्य रश्मयो ऽच्छिद्रेणैवैनं पवित्रेण ·

1) Die Mss सर्वदेवत्य॰ 2) Die ३ fehlt in den Mss 3) So H, in B ईषिकया॰, welche Form ebenso berechtigt wäre (cf das Pet W s v), Bb इषीकया॰, so auch Kap S 35, 7 u Kâṭh 23, 1. 4) B ॰नैव 5) Diese Lesart ist wohl auch oben 1, 2, 1 mit M 1 in den Text zu setzen Die Mss unserer Stelle schreiben अन्तरारातीः॰

पुनाति तस्य ते पवित्रपते पवित्रेणेति यज्ञो वै पवित्रपतिर्यज्ञाय खलु वा एष तमात्मानं पावयते ॥ यज्ञं शकेयम् ॥ इतीन्द्रो वै वृत्रमहꣳस्तं व्यहꣳस्तस्य[1] यन्मज्ञियं मेध्यमासीत्तदुदक्रामत्ता इमा ओषधयोऽभवꣳस्तासां वा एतत्तेजो[2] यद्दर्भा एता वै शुष्का आपो यद्देवासस्तेजस्तदवरुन्द्धे यथेर्वा आपो दिव्याः पार्थिवाः समुद्रियास्ताः सर्वा दर्भो विवस्थैत्तस्माद्दर्भैः[3] पवित्रं द्वाभ्यां पावयति द्वे पवित्रे द्विपाद्यजमानो यावानेवास्यात्मा तं[4] पावयति त्रिभिः पावयति त्रिवृता हि देवा त्रयो वा इमे प्राणाः प्राणोऽपानो व्यानो[5] यावानेवास्यात्मा तं[6] पावयति सप्तभिः पावयति सप्त वै छन्दांसि छन्दोभिरेवैनं पावयत्यथो ब्रह्म वै छन्दांसि ब्रह्मणैवैनं पावयत्येकविंशत्या पावयति दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशो यावानेवास्यात्मा तं[6] पावयति यथा वै नैर्ऋता अक्षाः स्त्रियः[7] स्वप्नो यद्दीक्षते[8] तेनाक्षैश्च स्त्रीभिश्च व्यावर्तते यां प्रथमां दीक्षितो रात्रीं जागर्ति तया स्वप्नेन व्यावर्तते यां प्रथमां दीक्षितो वसति यज्ञं तयावरुन्द्धे यां सोमे क्रीते प्रजां तया यां श्वःसुत्यया पशूꣳस्तया ॥ ३ ॥

Vgl. 1, 2, 1 — TS 6, 1, 1 (s. oben), Kāth. 23, 1, Kap. S. 35, 7

आकूत्यै प्रयुजे ऽग्नये स्वाहेत्याकूत्या वा आकूतिर्यक्ष्यत इति प्रयुजः खलु वा एनं यज्ञाय प्रयुञ्जते मेधायै मनसे ऽग्नये स्वाहेति मेधया हि मनसा यज्ञमश्नुते दीक्षायै तपसे ऽग्नये स्वाहेति दीक्षया

1) Die Mss व्यह॰ 2) Die Mss तेजो ohne Accent 3) So H u. Bb!! In B विवस्थै तस्मा॰ 4) So corrigirt, die Mss ॰स्वात्मानं 5) So corrigirt; H u. Bb प्राणा, B प्राणो 6) So corrigirt, die Mss ॰स्वात्मानं 7) In den Mss ohne Accent 8) Das Verb in den Mss ohne Accent, B यद्दीक्षते

हि तपसा यज्ञमश्नुते सरस्वत्यै पूष्णेऽग्नये स्वाहेति वाग्वै सरस्वती वाचा व्याहरति यक्ष्यते स्वं इति पूषा खलु वा एनं यज्ञं प्रापिपद् एनमघूपुपदापो देवीर्बृहतीर्विश्वशंभुवा इत्यापो हि यज्ञो द्यावापृथिवी उरो अन्तरिक्षेति द्यावापृथिवी वा अन्वन्तरिक्षं यज्ञ उपश्रितस्तत एवं यज्ञमालभ्य बृहस्पतिर्नो हविषा वृधातु स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणा वा एतंपुरस्तात्सर्वान्कामानाप्त्वा दीक्षामालभते यत्र वा अस्य यज्ञः श्रितो यत्र यत्रोपश्रितस्ततस्ततो वा एतत्सर्वं ब्रह्मणा यज्ञं संभृत्यालभ्य न वा एकाहुतिर्दीक्षितं करोति यदेतानि जुहोति द्वितीयत्वाय प्रजापतिर्वै यत्किंच मनसादीधेत्तदाधीतयजुर्भिरेवाप्नोत्तदाधीतयजुषामाधीतयजुष्ट्वं तद्य एवं विद्वानाधीतयजूंष्यपि जुहोति यदेव किंच मनसा दीध्यञ्जुहोति तदाप्नोत्येते वै यज्ञस्य संभारा एष ह त्वेव संभृतसंभारेण यज्ञेन यजते यस्यैतानि हूयन्त एतद्ध स्म वा आहारुण औपवेशिः किमु स यज्ञेन यजेत यो यज्ञस्य संभारान्न विद्यादिति पञ्चभिर्जुहोति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य षड्भिर्जुहोति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति यज्ञो वै सृष्टः प्र सामाग्निनाग्रं यजुषस्तं वा ऋगेवायच्छदेका वा एनमृगयच्छद् द्वादश यजूंष्यपि नव सामानि तस्मान्नवभिर्बहिष्पवमाने स्तुवते नव ह्येनं सामान्ययच्छंस्तस्माद्धात्संबन्धविदो द्वादशभिरौद्ग्रभणैर्जुह्वति द्वादश ह्येनं यजूंष्ययच्छन्नेतर्हि खलु वा एषं सृज्यते यर्हि दीक्षते यदेवौद्ग्रभणैर्जुहोति यज्ञं

1) So B, ohne Accent, H u Bb यक्ष्यते 2) In den Mss प्रापिपद् ohne Accent 3) So corrigirt, H u Bb यत्र श्रितो, B यत्रा श्रितो 4) B सभृत्या° 5) So corrigirt, die Mss प्र सामाग्निना प्र°, s TS 6, 1, 2, 4 6) H u Bb °यच्छद्° 7) H u Bb वा त्संबधविदो, in B तस्माद्वाद्वात्संबधविदो cf übrigens TS 6, 1, 2, 5 8) So corrigirt, die Mss दीक्षिते

वा एतत्सृष्टमृचा यच्छति तस्मादारुणिविद[1] ऋचौद्ग्रभणं जुहुत्येका ह्येनमृचायच्छत् ॥ ४ ॥

Vgl 1, 2, 2 — TS 6, 1, 2 (dîkshâhutayah); Kâth 23, 2, Kap 8 35, 8

यज्ञो वै प्रजापतिः प्राजापत्यमेतच्छन्दो यदनुष्टुब्यदनुष्टुभा जुहोति स्वेनैवैनं छन्दसावरुन्द्ध एकया जुहोत्येको हि प्रजापतिरनिरुक्तया जुहोत्यनिरुक्तो हि प्रजापतिः पूर्णया जुहोति पूर्णो हि प्रजापतिर्यदूनया जुहुयाद्भ्रातृव्याय[2] लोकमुच्छिंषेदथ यत्पूर्णया जुहोति न भ्रातृव्याय लोकमुच्छिंषत्यूर्जो वा एतद्रूपं यत्पूर्णं यत्पूर्णया जुहोति यज्ञे वा एतदूर्जं दधाति विश्वो देवस्य नेतुरिति सावित्रं मर्तो वुरीत सख्यमिति पितृदेवत्यं विश्वो राय इषुध्यतीति वैश्वदेवं द्युम्नं वृणीतेति बार्हस्पत्यं पुष्यसा इति पौष्णं[3] सारस्वतः स्वाहाकारः सर्वदेवत्या वा एषा ऋक्तस्मादेषैका सत्यौद्ग्रभणं परिबभूव सर्वाभ्यो देवताभ्यो यज्ञ आलभ्या इत्याहुः सर्वदेवत्या[4] वा एषा ऋग्यदेतया ऋचौद्ग्रभणं जुहोति सर्वाभ्यो वा एतद्देवताभ्यो यज्ञमालभतेऽनुष्टुभो वा एतस्याः सत्यास्त्रीण्यष्टाक्षराणि पदान्येकं सप्ताक्षरं यत्सप्ताक्षरं तस्य चत्वार्यक्षराण्येकस्मिन्पद उपयन्ति त्रीण्येकस्मिन्नेव चत्वार्युपयन्ति सा जगती यत्र त्रीणि सा त्रिष्टुब्यदष्टाक्षरं तेन गायत्री यदनुष्टुभैनानुष्टुप्सर्वैरेवास्य छन्दोभिर्हुतं भवति छन्दःप्रतिष्ठानो[5] वै यज्ञश्छन्दःसु वावास्यैतद्यज्ञं प्रतिष्ठापयामकः[6] स्वाहा-

1) So corrigirt, B °द्राक्षविद, H u Bb °द्रारिविद 2) Von hier an bis zum folgenden लोकम्° in B fehlend 3) B पौष्ण्य° 4) Die Mss betonen सर्वदेवत्या 5) So corrigirt, die Mss betonen छन्द प्रतिष्ठानो, es liegt aber doch jedenfalls ein Compositum vor „auf die Metra gegründet, seine Grundlage in den M. habend“ 6) Die Mss betonen प्रतिष्ठापयामक, was offenbar ein Versehen ist.

कारेण खलु वा एषा पङ्क्तिः पाङ्क्तो यज्ञः पङ्क्तिप्रायणः[1] पङ्क्त्युदयनः[2] पङ्क्तिप्रायणमेवास्य[3] यज्ञं पङ्क्त्युदयनमकर्थो वाग्वै छन्दांसि वाच वा एतन्मध्यत आप्त्वावरुन्द्धे तस्मादियं वाङ् मध्यतो वदति मध्यतो ऽहीयं वाक् प्रजापतिर्वै स्वां दुहितरमभ्यध्यायदुषसं तस्य रेतः परापतत्ते देवा अभिसमगच्छन्त तस्माद्दीक्षितो न ददाति न पचत्यथैनमभिसं-[4]गच्छन्ते तदुदगृभ्णंस्तदौद्ग्रभणस्यौद्ग्रभणत्वं तेन यज्ञमतन्वत यज्ञो यदग्रे व्यभवत्स त्रेधा व्यभवत्सं वा ऋक्ष्वेवं तृतीयेनाभ्ययत्[5] सामसु तृतीयेन यजुःषु तृतीयेन या वा अस्य प्रिया तनूरासीत्तया[6] यजुष्मतोच्चैर्ऋचा क्रियत उच्चैः साम्नोपांशु यजुषा यज्ञस्य ह्येष प्रिया तनूर्यद्यजुषोच्चैः कुर्याद्यज्ञस्य प्रियां तनुमुद्धृतां कुर्यादब्रह्मवर्चसी[7] स्यान्नसंभावुकः[8] ॥ ५ ॥

Vgl 1, 2, 3 — TS 6, 1, 2 (dīkṣābhūtayaḥ, s oben), Kāṭh 23, 2, Kap S 35, 8

आहिताग्निर्वा एष[9] सन्नग्निहोत्रं जुहोति न दर्शपूर्णमासौ यजते तस्या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति कर्षयत आत्मानं तेनैवास्य तद्धुतं भवति देवा असुरान्हत्वेभ्यो लोकेभ्यः प्राणुदन्त[10] तेषामसवो मनुष्यानाविशंस्तदिदं स्विमे पुरुषे ऽन्तर्यो[11] कृष्णमिव चक्षुष्यन्तस्तन्नाश्नीयादसुर्यमेवापहते[12] यदा वै पुरुषे न किंचनान्तर्भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मैष्यो यदि कुर्यान्नक्तं कुर्यादसुर्या[13] वै रात्रिरसूर्यमेवासूर्यं[14] क्रियते वाचं वा एतद्दीक्षयन्ती-

1) So corrigirt, die Mss पङ्क्ति प्रायणः 2) H u Bb पङ्क्त्युदय 3) H u Bb पङ्क्ति प्राय॰ 4) Die Mss पचत्य॰ 5) Die Mss संजुषु 6) Das Verbum in den Mss ohne Accent 7) Die Mss betonen ॰दब्रह्मवर्चसी 8) Die Mss betonen स्याम् 9) वा in den Mss ohne Accent Auch schreiben die Mss एषा(!) 10) So corrigirt, die Mss प्रणुदन्त 11) In den Mss ॰र्यो ohne Accent 12) So H u Bb, in B ॰दसूर्यम॰ 13) H u Bb ॰दसुर्यो, B ॰दसूर्यो 14) So die Mss

ति ह स्माहारुणिरौपवेशिरुताश्नानो ऽप्यश्नानो ऽथ दीक्षितवादं वदति स वाव दीक्षित इति सायं प्रातर्वै मनुष्याणां द्वेवहितमशनमतिनीय[1] सायमशनमतिनीय[1] प्रातरशनं व्रतं व्रतयति मानुषस्य व्यावृत्त्या अदन्तीति वै गा[2] आहुरश्नन्तीति मनुष्याञ्जुहुधीति देवेभ्यो ऽथवा एतमाहुः ॥ व्रतमुपेहि व्रत्य ॥ इति व्रतं ३ ह्येतस्य व्रतेन यज्ञः संततो व्रतेनैव यज्ञं संतनोत्यभ्यर्धो वा ऋक्सामे यज्ञादास्तां तयोर्या[3] महिमाना आस्तां तावपिनिधाय यज्ञमुपावर्तेतां तौ महिमाना अहोरात्रे अभवतां तयोर्वा एतद्रूपं यत्कृष्णाजिनस्य यच्छुक्लं तदह्नो रूपं यत्कृष्णं तद्रात्रेस्तौ वा एतन्महिमाना अन्वारभते संपारणाय स मा पारयत इत्यहोरात्रे मिथुनं संभवतां तयोस्तेजो ऽपाक्रामत्तत्कृष्णं प्राविशत्तद्वा एतदन्वारभते द्यावापृथिवी मिथुनं संभवतां तयोर्वीर्यमपाक्रामत्तत्कृष्णं प्राविशत्तद्वा एतदन्वारभते यथा वा इदं नावं पारं तरिष्यन्नारोहत्येवं वा एतदृक्सामे आरुक्षन्ते[4] एनमा यज्ञस्योदृचः संपारयतो यतो वै लोमानि कृष्णाजिनस्य ततो यज्ञो यतो यज्ञस्ततो देवता यद्यहिलोमं पर्यूर्णुवीतान्तर्हितो दीक्षितो यज्ञात्स्याद्यदन्तर्लोममन्तर्हितो[5] यज्ञो देवताभ्यो द्वे विषूची प्रतिमुच्ये अनन्तर्हितो दीक्षितो यज्ञाद्भवत्यनन्तर्हितो यज्ञो देवताभ्यो यदेक[6] स्यादन्त[7] प्रतिभुञ्जेत्तेनैव तदुभयमाप्नोति हविर्वै दीक्षितो यदन्यत्र कृष्णाजिनादासीत यथा हविः स्कन्नमेवं स्याद्यथा हविषे स्कन्नाय प्रायश्चित्तिमिच्छन्त्येवमस्मै प्रायश्चित्तिमिच्छेयुश्छन्दांसि च वा एष देवताश्चाभ्यारोहति तान्येनमीश्वरा-

1) Die Mss betonen °नीतिनीय 2) So H, desgl Bb, ohne Accent, in B गाव 3) So corrigirt, die Mss °र्यो 4) Die Mss आरुक्षते 5) So corrigirt, H u Bb schreiben यत्र स्याद्, B यद्य स्याद् 6) Die Mss यदेकं 7) So H u Bb; in B °न्त

णा प्रतिनुदो यदाह नमस्ते अस्तु मा मा हिंसीरिति नमस्कारो वा एषो ऽप्रतिनोदाय देवता वै यज्ञस्य शर्म यज्ञो यजमानस्य यदाह विष्णोः शर्मासि शर्म मे यच्छेति देवता वा एतद्यज्ञस्य शर्मा कुर्याद्यजमानस्य प्रोर्णुते प्रावृत इव हि दीक्षितो ऽथो एतदिव हि दीक्षितस्य रूपं यत्प्रावृतं तस्मात्प्रोर्णुते वासः परिधत्ते सर्वदेवत्यं वै वासः सर्वाभिर्वा एतद्देवताभिरात्मानं परियन्ति ॥ ६ ॥

Vgl 1, 2, 2 — TS 6, 1, 3 (krshnajinena, vastrena diksha mekhalayâ, tatha krshna vishânayâ), Kath 23, 3, Kap S 35, 8 a E

यज्ञस्य वै सृष्टस्योल्बमन्वलुप्यत तद्वासः क्षौममभवत्तस्मात्क्षौमेण दीक्षयन्ति यज्ञस्य सयोनित्वाय प्राचीनमात्रा पत्नी दीक्षयन्तीन्द्रियस्य वै प्राचीनमात्रेन्द्रियं स्त्रियाः प्रजा यत्प्राचीनमात्रा पत्नी दीक्षयन्तीन्द्रियमस्यां दधाति योनिर्वै दीक्षितस्य दीक्षितविमितं जरायु कृष्णाजिनमुल्बं दीक्षितवासो नाभिर्मेखला गर्भो दीक्षितः स्वं वा एतद्योनिं दीक्षितं आययेत्तस्माद्दीक्षितेन दीक्षितविमितान्नानृतुभिः क्रम्यमेप उद्धेतस्य योनिरेतो ऽयेषो ऽधि प्रजायते गर्भो दीक्षितो यदेतं आविःकुर्वीत द्रवन्तो गर्भा जायेरन्यदनृतं संयेत तेजो ऽस्य परापातुकं स्यात्तस्मान्नानृतं सेतऽव्यं तेजसो ऽपरापाताया। अजातो वै पुरुषः स वै यज्ञेनैव जायते स वै तर्ह्येव जायते यर्हीदः सोमे क्रीते प्रोर्णुता इतो ऽयो प्रोर्णुते ऽथो ह्यये पुरुषो जायते स वै तर्ह्येव सर्वो जायते यर्ह्युदो ऽप्सो ऽवभृथमभ्यवैति

---

1) So corrigirt, die Mss betonen नमस्कारो 2) So ist wohl zu lesen; die Mss schwanken, H प्रावृतं, desgl B ohne Accent, Bb प्रावृतं 3) Die Mss प्राची-नमात्रे॰ 4) In den Mss यत् ohne Accent 5) H = Bb जरायुः 6) So corrigirt; die Mss ॰मितो वा॰ 7) Die Mss ॰र्याजातो 8) B क्रीयते 9) Die Mss ये

तर्हि स तस्मात्त्वचो निर्मुच्यते त्रिवृता वै स्तोमेन प्रजापतिः प्रजा असृजत यत्त्रिवृन्मेखला भवति प्रजननाय त्रिवृद्वै वज्र उदरं वृत्रः पाप्मा क्षुद्[1] भ्रातृव्यः पुरुषस्य यन्मेखलां पर्यस्यते वज्रमेव सपत्नाय भ्रातृव्याय प्रहरति यं द्विष्यात्तं तर्हि मनसा ध्यायेद् वज्रमेवास्मै[2] प्रहरति स्तृणुत एवाङ्गिरसो वै स्वर्यन्तो[3] यत्र मेखलाः संन्यास्यंस्ततः[4] शरो ऽजायत तस्माच्छरमय्यूर्ग्वा ओषधय ऊर्जं वा एतन्मध्यत आत्मनो धत्ते प्रजानां च योक्त्रेण पत्नी संनह्यते[5] मेखलया दीक्षितो[6] ऽथो मिथुनत्वायोर्ध्वं वै पुरुषस्य नाभेर्मेध्यमवाचीनममेध्यं यन्मेखलां पर्यस्यते मेध्यस्य चामेध्यस्य च विधृत्यै देवताभ्यो वा एष मेधायात्मानमालभते यो दीक्षते[7] बध्नीत इव वा एतदात्मानं यन्मेखलां पर्यस्यते तस्माद्वा एतस्यान्नमनाद्यमार्ति[8] इव ह्येष बद्धस्तस्माद् बद्धस्यान्नमनाद्यं[9] यथा वा इह गणी रेवं वा एषो ऽमुष्मिँल्लोके यो दीक्षितस्यान्नमत्ति यज्ञेन ह्येवास्य तता उन्मुक्तिर्हे विर्वै दीक्षितो यदस्य जुहुयात्तमेव जुहुयात्प्रमायुकः स्यात्सर्वाभ्यो वा एष देवताभ्य आपायते यो दीक्षते यदस्य जुहुयाद्यज्ञमस्य विदुह्यादुपधीतो ऽस्य यज्ञः स्यात्तं वा एतदागते काले सर्वं संस्फीतं[10] यज्ञं देवताभ्यो दुहे त्रेधा वा एतस्य पाप्मानं विभजन्ते यो दीक्षते ऽग्नो ऽस्यान्नमत्ति स तृतीयं यो ऽस्याश्लीलं कीर्तयति[11] स तृतीयं या एनं पिपीलिका दशन्ति तास्तृतीयं तस्माद्वा एतस्या-

---

1) In den Mss क्षुद् ohne Accent, cf TS 6, 1, 3 5 2) H •मेवास्मि 3) So die Mss ; cf 1, 9, 5, 5, 3, 4, 3, 9 6 4) So corrigirt B सन्यास्य॰स्तत , H u Bb सन्यास॰स्तत 5) So corrigirt, die Mss पत्नी॰ सं नह्यते 6) In den Mss das letztere Wort ohne Accent 7) So corrigirt die Mss दीक्षिते 8) So corrigirt, die Mss betonen •मन्नाद्यम• 9) Die Mss betonen •मन्नाद्य• 10) So B (ohne Accent), H u Bb सं॰स्फीत॰ 11) In den Mss das Verb ohne Accent

ञमन्वाद्यं[1] तस्मादस्याश्लीलं न कीर्तयितव्यं तस्माद्दीक्षितवासो[2] ऽभर्तव्यमेव हि ताः पिपीलिका या एनं दशन्ति ॥ ७ ॥

Vgl TS 6, 1, 3 (s am Schluss des vor Cap), Kath 23, 2—4, Kap. S 36, 1

दक्षिणा वै देवेभ्य आसीद्यज्ञो ऽसुरेषु तां दक्षिणां यज्ञो ऽभ्यकामयत तामभिपर्यावर्तत तां संमभवत्स इन्द्रो ऽवेद्यो वा अस्या योनेः संभविष्यति स इदं भविष्यतीति तामिन्द्रः[3] प्राविशत्तता इन्द्रः संमभवत्तता इन्द्रो ऽजायत स जायमानो ऽवेद्यो वा अस्या योनेरन्यो मत्संभविष्यति माहंक्संभविष्यतीति तया सहोपवेष्टयन्नजायत[4] यन्न्यवेष्टयत्तस्मान्निवेष्टिता[5][6] यन्निवेष्ट्यमाना[7][8] श्यावाभवत्तस्मात्कृष्णौ न्द्रं च वा एष प्रेप्सति दक्षिणां चेन्द्रस्य[9] च खलु वा एतद्योनिमालभ्य दक्षिणायाश्चात्मानमेषो संयोनिमेव यज्ञमालभते कृषि सुसस्यास्सुत्कृषा इति विषाणया भूम्यामुपहन्ति कृषिमेवास्य सस्येन संमर्धयति यंजुषा काण्डूयते यंजुषा[10] हि मनुष्याः काण्डूयन्ते व्यावृत्त्यै यंजुषा काण्डूयते तस्मात्प्रजा अंपामंभविष्णवः पामंभविष्णवः प्रजाः स्युर्यदयजुषा काण्डूयेत सुपिप्पला ओषधीस्कृधीति शिरः काण्डूयता ओषधीरेव फलं ग्राहयति तस्मादोषधयः शीर्षन्फलं गृह्णन्ति वाग्वै सृष्टा चतुर्धा व्यभवत्ततो या अत्यरिच्यत सा वनस्पतीन्प्राविशत्तैषा याक्षे या दुन्दुभौ[11] या तूणवे या वीणायां दण्डं प्रयच्छति तामेवास्मै वाचं प्रयच्छत्ययो वज्रमेवास्मै प्रयच्छति गोपीथायास्यदप्र[12] प्रयच्छत्ये-

1) Die Mss betonen °मन्वाद्यं 2) So H Bb दीक्षितवासो, vgl aber auch oben zu Anfang dieses Cap 3) So corrigirt, H u Bb तामिंद्र B तानिंद्र 4) Die Mss सहोपवेष्टय° 5) So corrigirt, H यन्यवे°, H u Bb य न्यवे° 6) H u Bb °ष्टिता 7) H u Bb यो नि° 8) Die Mss °माना 9) So corrigirt, die Mss चेंद्रस्य 10) So corrigirt, die Mss यजुषा, vgl für den Sinn auch Maitr S 3, 6, 9 यजुषा इस्ता अवनेनिक्ते यजुषा हि मनुष्या आवर्नेनिजते व्यावृत्त्यै 11) H u Bb दुदुभौ 12) So corrigirt, H u Bb °द्र्षे, B °दप

तावती ३ह्येयं वाग्वदन्त्यथो[1] एतावतो हि वाचो वीर्यं क्रियते यंद्दीक्षीयान्त्सं प्रयच्छेत्स्वां वाचं मैत्रावरुणो विभजेत्तं श्वःसुत्यायां मैत्रावरुणाय प्रयच्छति तां श्वो भूते मैत्रावरुण ऋत्विग्भ्यो विभजति ॥ होतर्यज पोतर्यज नेष्टर्यज॥ इति सा सह वषट्कारेणाहवनीयं गच्छति तां पुरो ऽध्वर्युर्विभजति ॥ होतर्यज पोतर्यज नेष्टर्यज ॥ इत्यध्वर्युः पुरो वाचं विभजति मैत्रावरुणः पश्चात् ॥ स्वाहा यज्ञं मनसा ॥ इति मनसा[4] यज्ञमभिगच्छन्ति तत एवं यज्ञमालभ्य स्वाहा दिवः स्वाहा पृथिव्या इति द्यावापृथिवी वा अन्वन्तरिक्षं यज्ञ उपश्रितस्तत[5] एव यज्ञमालभ्य स्वाहोरोरन्तरिक्षादित्यन्तरिक्षं वै यज्ञो यदि वातो यदि वा पवमानस्तत एव यज्ञमालभ्य स्वाहा वातात्परिगृह्णामि स्वाहेत्ययं वाव यः पवत एष यज्ञस्तमेवालभ्य वाचं यच्छति यज्ञं वा एतद्यच्छति यद्वाचं विसृजेद्यज्ञं विसृजेत्तदाहुः पुनर्दीक्षयित्वा वाग्यन्तव्येति यत्पुनर्दीक्षयेदाहुतीरतिरेचयेद्[6] वैष्णवीमनूच्य वाग्यन्त३व्या विष्णुर्वै यज्ञो यज्ञमेवालभ्याग्नावैष्णवीमनूच्य वाग्यन्त३व्याग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्य सारस्वतीमनूच्य वाग्यन्त३व्या वाग्वै सरस्वती वाचा यज्ञः संततो वाचैव यज्ञं संतनोति बार्हस्पत्यामनूच्य वाग्यन्त३व्या ब्रह्म वै बृहस्पतिर्ब्रह्मणा यज्ञः संहितो ब्रह्मणैव यज्ञं संदधाति ॥ ८ ॥

Vgl 1, 2, 2 — TS 6, 1, 3 (s oben) u 4 (daṇḍam âdaya mushṭikaranaṅgyamâu | krtvâsâu dîkshito bhûtvâ niyamân anutishthati), Kath 23, 4 u 5, Kap S 36, 1 u 2

1) H u Bb वाग्भाद्व्यथो 2) In den Mss ohne Accent 3) Die Interpunktion, die der Hiatus fordert, ist von mir ergänzt, dem entsprechend auch zu Anfang dieses Satzes 4) इति मनसा fehlt in H u Bb 5) So B (ohne Accent); in H u Bb यथंमुपश्रितस् 6) Die Mss schwanken, H u Bb °दाहुतीरतिरेचयेद्; B °दाहुतिरिति रेचयद्, Kap S 36, 1 °दाहुतीरिति रेचयेद्, auch in Bb, wie es scheint aus °दाहुतीरिति corrigirt, Kath 23, 5 यत्पुनर्दीक्षयेदाहुतीरभिरेचयेत्

दीक्षितो ऽयमसा आमुष्यायणः ॥ इत्युद्वदति वा आह प्रियो वै देवानां दीक्षितो देवेभ्य एवैनं प्राह त्रिराह त्रिषत्या हि देवा अथो त्रयो वा इमे लोका एभ्य एवैनं लोकेभ्य आवेदयति तस्माद्दीक्षितं दूराच्छृण्वन्त्येभ्यो ह्येनं लोकेभ्य आवेदयति नक्षत्रं दृष्ट्वा वाचं विसृजते द्वौ वा ऋतू अहश्च रात्रिश्चान्यमेव ऋतुं संप्राप्य वाचं विसृजते व्रतं चरतेति वाचं विसृजते व्रतं ह्येतस्य व्रतेन यज्ञः संततो व्रतेनैव यज्ञं संतनोति दैवीं धियं मनामह इति यजुषा हस्ता अवनेनिक्ते यजुषा हि मनुष्या अवनेनिजते व्यावृत्त्यै ब्राह्मणः सदेवत्वायाथो आपो मे दीक्षां नैत्समनुष्यानित्येन्न वै मनुष्येभ्य उदबीभत्सत तद्देवा मनुष्येष्वदिधीषंस्तदापो ऽब्रुवन्वयं व एतां शुन्धामाथो मावर्तस्वेति ततो ऽन्नं मनुष्यानुपावर्तत तं इदमन्नं मनुष्येषु धृतं तस्माद्ब्राह्मण आहार्या आहते हस्ता अवनेनिजीतान्नाद्यस्यावरुद्ध्या अथो अन्नाय वा एतदात्मानं पावयते ये देवा मनुजाता मनोयुज इति व्रतं व्रतयत्येते वै देवा मनुजाता मनोयुजो यदिमे प्राणा एषा वा अस्मिन्नेतर्हि देवता तां प्रीणाति तस्या हुतं व्रतयति यदेतो ऽन्यथा व्रतयेत्प्राणैरेनं व्यर्धयेत्प्रमायुकः स्यात्त्वमग्ने व्रतपा असीति वदेत्स्वप्स्यन्त्सुप्त्वा वा प्रबुध्य यदि वा[10] दीक्षितवादं[11] वदेदग्निर्वै देवानां व्रतपतिस्तस्मादेवाधि व्रतमालभते नोत्तानः शयीत[12] यदुत्तानः शयीतेमे लोका यथेयुर्नोपर्यधि प-

1) So corrigirt, die Mss प्रियो 2) So corrigirt, die Mss ऋतू 3) Die ३ fehlt in den Mss 4) So H u Bb, nur dass व्रतं ohne Accent ist, B नेत्समुद्स-नित्यन्न 5) Die Mss मनुष्येभ्या 6) Die Mss मनुष्येष्वदिधी॰ 7) So die Mss 8) So die Mss S 1, 2, 3 Auch Kâṭh 23 5 देवा मनुजाता 9) Die Mss ॰प्स्यंस्सु॰, cf Einleitung zum ersten Buch, § XLIII 10) H, Bb वा 11) In den Mss ohne Accent 12) Die Mss betonen शयीत

राद् पर्यावर्तेत यत्पर्यावर्तेत यज्ञात्पर्यावर्तेत नान्यत्र दीक्षितं दीक्षितविमितान्सूर्यो ऽभिनिम्रोचेन्नाभ्युदियाद्[1] दीक्षितव्रतमेव तद्यज्ञो वै देवानां न समभवत्तं भूत्या[2] समभावयन्भूतिं[3] वनुते यज्ञस्य संभूत्यै रास्वेयत्सोमे ऽति यद्भूयादेतावदस्य स्याद्यद्भूयो यदाहा भूयो भरेत्यपरिमितस्यावरुद्ध्यै देवः सविता वसोर्वसुदाव ऽति सवितृप्रसूत एवैताभिर्देवताभिरुप प्रतिगृह्णात्यात्मनो ऽहिंसायै वायुर्गोपास्त्वष्टाधिपतिः पूषा प्रतिग्रहीतेति वायुमेवासां गोप्तारमकस्त्वष्टारमधिपतिं पूषणं प्रतिग्रहीतारमापो वै यज्ञो यदपो दीक्षितो[4] ऽवगाहेत यज्ञमवकृष्णीयाद्यदाह देवीरापो अपां नपादिति यदेवासां यज्ञियं मेध्यं तन्नाक्रामति यदपो दीक्षितो ऽवगाहेत विहृदिनीः[5] स्युस्तस्मान्नावगाहेत[6] यद्यवगाहेत लोष्ट्र[7] विमृण्वत्[8] सेतुमेवानुसंतरति न वै दीक्षितं तरन्तं देवता अनुतरन्त्यरणिभ्यां सह तरति सहैव देवताभिस्तरति न वै दीक्षितं तरन्तं यज्ञो ऽनुतरति रथाङ्गेन सह तरति सहैव यज्ञेन तरति[9] ॥ ९ ॥

Vgl 1, 2, 3 — Tb 6, 1, 4 (s a E des vor Cap), Kath 23 5 u 6

अमुं वा आदित्यं सर्वा वाचो गच्छन्ति ता उद्यति[10] सर्वाः सृज्यन्ते यदाह याः पशूनामृषभे वाचा इति सृज्यमाना वा एतद्वाचं पुनरालभते वायवे त्वेति नष्टामनुदिशति वरुणाय त्वेत्यप्सु मग्नां

1) Die Mss नोभ्युदियाद्   2) So H u Bb in B भूत्वा   3) So H u Bb, auch Kath 23, 6 भूतिं, B भूतिं vgl unten 3, 6 III   4) So corrigirt, die Mss दीचितौ, s d Folgende   5) So corrigirt et Kath 23, 6 विहृदिनीरापस्स्यु, Bb विहृदिनी desgl B, ohne Accent, H विहृद्रीनी   6) So corrigirt, B °ञ्चावगाहेत; H u Bb °न्नावगाहेद्   7) H u Bb लोष्ट   8) So corrigirt, in H u Bb विमृत°, B wohl विमृत्त°, aber Kath 23 6 लोष्टं विमृद्यन्नासीत   9) H u Bb चरति   10) So corrigirt, die Mss उद्यति

रुद्राय त्वेति महादेवाहतां निर्ऋत्यै त्वेत्येवस्वामिन्द्राय त्वेति वृष्णकहतां[1] यां वा संशीर्यंत[2] मरुद्भ्यस्त्वेति[3] ह्रादुनिहतामे[4]ते[5] वै देवा भूत्यां स्वभागास्तानेव प्रीणाति देवेभ्यो वा अन्या दक्षिणा दीयन्ते मनुष्येभ्यो ऽन्या एता वै देवेभ्यः प्रत्यक्षं दक्षिणा दीयन्त एताभिर्वै भूयो[6] ऽवरुन्द्धे यदु चैतराभिर्देवाश्च वा असुराश्चास्पर्धन्तैतावान्वै तर्हि यज्ञ आसीदग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि ते देवा यज्ञमपश्यंस्तेनादीक्षन्त[7] तेषां यदग्निहोत्रमासीत्[8] तद्व्रतमुपायंस्तस्माद्व्रतेन भवित३व्यं[9] द्विरग्निहोत्रं हूयते यदग्नीषोमीयं पूर्णमासे हविरासीत्तमग्नीषोमीयं पूर्वेद्युः पशुमालभन्त यदैन्द्राग्नममावास्यायां तमाग्नेयं श्वो भूते पशुमालभन्त वैश्वदेवं प्रातःसवनमकुर्वत वरुणप्रघासान्माध्यंदिनं सवनं साकमेधान्पितृयज्ञं त्र्यम्बकांस्तृतीयसवनं तस्मात्तृतीयसवने विश्वं रूपं क्रियते विश्वं ह्येतद्रूपं तमेषां यज्ञमसुरा नान्ववायंस्तेन वा एनान्नपानुदन्त ततो देवा अभवन्परासुरास्य एवं वेद भवत्यात्मना परास्य भ्रातृव्यो भवति ते ऽध्वृतो[10] ऽयमभूदित्यपाक्रामंस्तदध्वरस्याध्वरत्वं तस्मादेकव्रतेन भवितव्यं[11] सकृदग्निहोत्रं हूयते ॥ १० ॥

Vgl 1, 2, 3 — Kath 23, 7, Kap S 36 4

॥ इति तृतीयकाण्डे[12] आग्नावैष्णवं[13] नाम षष्ठः[14] प्रपाठकः ॥

---

1) So H u. Bb, in B वृष्कहता॰, Kath 23 6, 37, 13 u 14 zeigt die Form वृष्क
2) H u Bb शीर्येति 3) Die Mss त्वेतिति 4) So corrigirt, B ह्रादुनिहिताम॰, H u Bb ह्रादुर्निर्हिताम॰ 5) So corrigirt die Mss तामेव 6) Die Mss भूयो
7) So corrigirt, die Mss तेन दीक्षन्त 8) In den Mss ist आसीत् ohne Accent
9) Die ३ fehlt in den Mss 10) So meine Vermuthung, die Mss schreiben, wie es scheint तेद्वृतो 11) Die Mss भवितव्य॰ vgl oben Z 8 12) Die Mss ॰काण्डे
13) Die Mss ॰ष्णव 14) Die Mss षष्ठम

अङ्कुशो वा इदमासीद्दिशो वा इमान्प्रजानंस्तद्देवा अन्योऽन्यस्मिन्नैच्छंस्तं नाविन्दंस्ते देवा अदितिमब्रुवंस्त्वया मुखेनेमा दिशः प्रजानामेति साब्रवीद्भागो मेऽस्त्विति वृणीष्वेत्यब्रुवन्सोऽब्रवीन्मद्देवत्यमेव प्रायणीयमसन्मद्देवत्यमुदयनीयं मामेवानुप्रायाय[1] मामनूद्यायैति[2] स एष आदित्यश्चरुरदितिर्वा एतदनुप्रयन्त्यदितिमनूद्यन्ति ततो वा इमा दिशः प्राजानन्पथ्यां यजतीमामेव तेन दिशः प्राजानन्यदग्निमिमां तेन[3] यत्सोममिमां तेन यत्सवितारमिमां तेन यददितिमियं वा अदितिरूर्ध्वा वा अस्या दिगूर्ध्वामेव तेन दिशं प्राजानंस्ततो वा अकल्पताकॢप्तस्य वै कॢप्त्यै[4] प्रायणीयस्तद्य एवं विद्वान्प्रायणीयेन चरति कल्पते कल्पन्ते हास्मा ऋतवस्ततो वा इमा दिशोऽन्वपश्यन्यत्पथ्यां यजतीमामेव तेन दिशमन्वपश्यन्यदग्नीषोमौ चक्षुषी वा अग्नीषोमा अनु ताभ्यां समपश्यन्यत्सवितारं सवितृप्रसूता एवेमा दिशोऽन्वपश्यन्यददितिमियं वा अदितिरस्यां वै प्रतिष्ठाय देवा यज्ञमतन्वत यत्पथ्यां यजति वाग्वै पथ्या वाचमेवावरुन्द्धे यदग्निं देवतास्तेन यत्सोमं यज्ञं तेन यत्सवितारं प्रसूत्यै यददितिमादित्या वा इमाः प्रजास्ता एवावरुन्द्ध ता आद्या अकृत यद्वै यज्ञस्यान्तर्यन्ति[5] तच्छिद्रं[6] तेन यज्ञः स्रवति तेन यजमानोऽग्ने समवद्यत्यग्निर्वै स्विष्टिरग्निः प्रतिष्ठितिः स्विष्ट्या एव प्रतिष्ठित्या अग्निं प्रथमं यजत्यग्निमुत्तमं समानी वा एषा देवता पाङ्क्त्याय पाङ्क्तो यज्ञो यावानेव यज्ञस्त-

---

1) So corrigirt, die Mss betonen °प्रायाय, es ist Conjunctiv des Präsens-Stammes अय 2) So corrigirt, die Mss schreiben मामनूद्यायैति, vgl das Vorhergehende 3) In den Mss तेन ohne Accent 4) कॢप्त्यै in den Mss ohne Accent, B दै म कृप्त्यै 5) Bb यज्ञस्यांतर्यंति, B यज्ञस्यांतर्यंति 6) Die Mss तच्छिद्रं

मालव्य स्वस्तिं यजति यज्ञस्य स्वस्त्यै पथ्यां यजति वाग्वै पथ्या वाचमेवानुप्रयन्ति तामुत्तमामुदयनीये यजति वाग्वै पथ्या वाचमेवानूद्यन्ति[1] मरुत्वतीः पथ्याया ऋचो भवन्ति देवविशा वै मरुतो देवविशामेवाचीकृपत्तां शान्तां कृप्तां मनुष्यविशा अनुकल्पन्ते स्तेनभविष्णुर्हविर्भवति ॥ १ ॥

Vgl TS 6, 1, 5 (prāyaṇīyā), Kāṭh 23 8 u 9, Kap S 36, 5—6

जुषाणेनान्य आज्यभागा इज्यन्तेऽथान्च ऋचौभयतो यजति द्रढिम्ने ऽशिथिरत्वाय सप्तदश सामिधेनीः काऽउर्याः पञ्च ऋतवो द्वादश मासा एषं संवत्सरः संवत्सरादेवाधि यज्ञमुखं प्रतनुते तदाहुः पञ्चदश सामिधेनीः काऽउर्या न सप्तदश संवत्सरीयस्यैवायनस्य सप्तदश कार्याः संवासंस्या चाद्या इति तन्न सूक्ष्यं सप्तदशैव कार्याः प्रयाजवास्यात्प्रायणीयमननुयाजमनुयाजवत्स्यादुदयनीयमप्रयाजमुभयतो वा एतत्प्रयाजानुयाजा यज्ञमभिसंधीयते समानो ऽह्येष यज्ञो निष्कार्ष च मेक्षणं च निदधाति तेन यज्ञः संतत आत्मा वै प्रयाजाः प्रयाजानुयाजा देवक्षेपं यज्ञो देवक्षेत्रमाक्रममाणः प्रजामन्तरियाद्यदनुयाजानन्तरियात्प्रयाजवत्स्यात्प्रायणीयमनुयाजवदनुयाजवत्स्यादुदयनीयं प्रयाजवत्पयसि प्रायणीयः स्यात्पयस्युदयनीयो ऽर्यां वा एतत्शुक्रियमपामेव शुक्रियमवरुन्द्धे पशवो वै शुक्रियं पशूनेवावरुन्द्धे ऽथो प्रायणे च वावासा एतदुदयने च पशून्दधात्यादित्यः प्रायणीयः स्यादादित्य उदयनीय इयं वा अदितिरस्यां वा

1) Die Mss °मेसानद्यन्ति 2) B ऋचो 3) In den Mss ता° ohne Accent 4) So H u. Bb, nur ohne Accent, B मानुष्यविशा, cf TS6, 1,5,3, Kath 23, ▮ देवविशामेव कल्पयति ता कल्पमाना मनुष्यविशानुकल्पते 5) So die Mss 6) Die ३ fehlt in den Mss 7) So corrigirt, die Mss प्रजामन्तरीयाद्यदनुयाजानंतरीयात्

एतद्यज्ञमुखेन प्रतितिष्ठत्यस्यामुपरिष्टाद्यच्च वै यज्ञस्यार्धे[1] ऽधे संमृद्धं क्रियते क्रियमाणं क्रियमाणं ह वा अस्य समृध्यते संस्थाप्य प्रायणीयं यज्ञस्य संमृद्धै याः प्रायणीये ऽनुवाक्यास्ता उदयनीये याज्याः स्युर्या उदयनीये ऽनुवाक्यास्ताः प्रायणीये याज्याः स्युः पथः प्रतिप्रज्ञात्या ऋधो अनुसतत्यै[2] यदतो ऽन्यथा कुर्युश्छम्बट्कुर्युः ॥ २ ॥

Vgl TS 6, 1, 5 (prāyaṇīya), Kath 23, 9, Kap S 36 6

इयं वै कद्रूर्वाक्सुपर्णी छन्दांसि सौपर्णानि गायत्री त्रिष्टुब्जगती सा[3] वै कद्रूः सुपर्णीमात्मानमयजत्साब्रवीत्सोममाहर तेनात्मानं निष्क्रीणीष्वेति सा छन्दांसि प्रैष्यदमुतः सोममाहरत तेन मा निष्क्रीणीतेति ततो जगत्युदपतत्सा पशुभिश्चागच्छद्दीक्षया च तस्मात्पशवा इति जगतीमाहुस्तस्माद्यदा पशून्विन्दते ऽथ दीक्षते ततस्त्रिष्टुबुदपतत्सा दक्षिणया चागच्छत्तपसा च तस्मात्त्रिष्टुभो लोके दक्षिणा दीयन्ते तस्मादु मध्यंदिने तपस्तपनीयमिति[4] ततो गायत्र्युदपतत्सा सोममाहरत्तमाह्रियमाणं सामिगन्धर्वो[5] विश्वावसुरमुष्णात्स तिस्रो रात्री[6]रुपहृतो[7] ऽवसत्तस्मात्तिस्रो रात्रीः क्रीतो वसति ते ऽब्रुवन्पुनर्याचामहा इति ते देवा अब्रुवन्स्त्रीकामा वै गन्धर्वा वाचमेव संभृत्य यथा योषिदनपक्षेयत्तमेव तया निष्क्रीणामेति तं वै निरक्रीणं[8]स्तस्मादाहुर्वाग्वै सोमक्रयणी वाचं वा एतं त्वा[9] नि-

1) H betont यज्ञस्यार्धे 2) Die Mss अनुसतत्यै, cf 2 2 8 3) सा in den Mss ohne Accent 4) So meine Vermuthung in H तपस्तपनीयति, desgl B ohne Accent, in Bb तपस्तपनीयति, vgl Kath 23 10 तस्मादाहुर्माध्यंदिनं सवनानां तपस्वितममिति 5) So corrigirt die Mss सामिगधर्वो, vgl 3 7 8 6) रात्री॰ in den Mss ohne Accent 7) B ॰हृती 8) Dies Wort in den Mss ohne Accent 9) So corrigirt H u Bb एतं॰त्वा B एतद्वा

च्क्रीणातीति ते ऽब्रुवन्नृतीयामहा[1] इति तामन्वार्तीयन्त[2] तदनृतस्य[3] जन्म तद्य एवं विद्वान्त्सत्यानृते वाचं वदति न हैनं दुनाति ते ऽब्रुवन् विह्वयामहा इति तां व्यह्वयन्त गाथां देवा अगायन् ब्रह्म गन्धर्वा अवदन्त्सा देवानुपावर्तत तस्माद्विवाहे गाथा[4] गीयते तस्माज्जायन्ति स्त्रियः[5] प्रियं य एवं विद्वान्गाथां[6] गायन्हस्तं गृह्णाति सं हि जीयतः[7] सर्वमायुरेति[8] नार्तिं नीतस्तदाहुर्न वै सा पुनरगच्छन्नैव[9] किं चन सोमक्रयणीति ॥ ३ ॥

Vgl TS 6, 1, 6 (aruṇayā krayaḥ), Kath 23, 10, Kap S 37, 1

या त्रिरूपा सा वार्त्रघ्नी यत्तया क्रीणीयाज्ज्यायुकमस्य राष्ट्रं स्यादथ यस्य तादृश्यनुस्तरणी भवति ताजगेयामपरः प्रमीयते या रौहिणी कृष्णाक्षी कृष्णवाला कृष्णशफा सा पितृदेवत्या यत्तया क्रीणीयात्प्रमायुको यजमानः स्यादथ यस्य तादृश्यनुस्तरणी भवत्यृतुमदेयामपरः[10] प्रमीयते यारुणा[11] बभ्रुलोम्नी[12] श्वेतोपकाशा शुच्यदक्षी[13] तत्सोमक्रयण्या[14] रूपं स्वेनैव रूपेण क्रीयते[15] काणा स्यादखर्वा श्रोणा समशफा[16] तया[17] सर्वया[18] क्रीयता[19] एकहायन्याक्रय्या[20] वाग्वै सोमक्रयणी तस्मात्प्रजाः संवत्सरे

---

1) So meine Correctur, H u Bb °ऽब्रुवतीयामहा, B °संनृतीयामहा, vgl das Folgende 2) So meine Vermuthung, H u Bb तामन्वार्त्तीयंत, B तामन्वार्त्तियित 3) Das तं fehlt in H u Bb, 4) So corrigirt, die Mss गाथा 5) Die Mss गायन् स्त्रियो 6) In den Mss गाथा ohne Accent 7) B स जीयत 8) Die Mss °रितो, s 1, 4, 7 9) Die Mss नैव 10) So meine Correctur, die Mss भवदृतुमदे° 11) H u Bb यावरुणा 12) So corrigirt, H u Bb बभ्रुलोम्नो, B बभ्रूलोम्नी 13) In diesem Compositum steckt wohl das Particip des bisher nur aus dem Dhâtup bekannten शुच्य्, शुच्यति, vgl die Einleitung 14) So corrigirt, H u Bb तत्सोमक्र°, B तत्सोमक्र° 15) So corrigirt, die Mss क्रीयते 16) Dies Wort in den Mss ohne Accent 17) So H u. Bb, in B vielleicht तया, vgl aber das Folgende 18) H u Bb सर्वया 19) So corrigirt, die Mss क्रियता 20) So corrigirt die Mss एकहायन्या°, B vielleicht एकहायन्या°

वाचं वदन्त्यप्सु क्रय्या[1] ओषधयो वै सोमा आपा ओषधीनां रसस्तथा स रसः क्रियते[2] क्रये[3] वा अहं सोमस्य[4] तृतीयं सवनमवरुन्धे वेदे॑ति ह स्माहारुणं औपवेशिः पशवो वै तृतीयं सवनं पशूनां चर्म यच्चर्मणि[5] निर्वपति तेनैव तृतीयं सवनमवरुन्धे रोहिते[6] निर्वपति तस्मात्पशूनां रोहितरूपमानडुहं[7] निर्वपत्यनड्वान्वै सर्वाणि वयांसि पशूनां सर्वाण्येव वयांसि पशूनामाप्त्वावरुन्धे ऽथो बह्वेव यज्ञस्यावरुन्धे सोमं विचिन्वन्ति पापवसीयस्य व्यावृत्त्या अथो देवेभ्य एवैनं शुन्धन्ति नाध्वर्युः सोमं विचिनुयान्न यजमानो न यजमानस्य पुरुषा नोपद्रष्टारो विचीयमानस्य स्युर्यदुपद्रष्टारो विचीयमानस्य स्युः क्षुधं[8] प्रजा नीयुरवर्तिर्यजमानं गृह्णीयात्क्षोधुको ऽध्वर्युः स्यात् ॥ शुन्ध[9] सोममापन्न निरस्य ॥ इति ब्रूयाद् ग्रसितं[10] वा एतत्सोमस्य यदापन्नं[11] ग्रसितमेतं सोमस्य निष्ठिवदन्ति[12] ये सोमं विचिन्वन्ति[13] तस्मात्सोमविक्रयिणो बहु क्रीणन्तो बहु विन्दमानाः[14] क्षोधुका ग्रसितं ह्येते[15] सोमस्य निष्ठिवदन्त्यासा३को[16] ऽसीत्यभित्तार एवास्येयं शुक्रस्ते ग्रहा इति शुक्रमेवास्य गृह्णात्यभि त्यं[17] देवं सवितारमिति सवितृप्रसूत[18] एवं गृह्णात्यतिछन्दसा गृह्णाति सर्वाणि वै छन्दांस्यतिछन्दाः सर्वैरेवैनं छन्दोभिर्गृह्णाति

---

1) Die Mss betonen क्रय्या 2) So die Mss 3) So corrigirt, die Mss schwanken, B क्रयये. Bb क्रये, H क्रये 4) B सोमस्या 5) B यच्चर्पर्णा 6) B अहिते 7) So meine Vermuthung, die Mss betonen रोहितरूपम॰, cf Kath 24, 2 रोहितरूप पशवो भूयिष्ठा 8) So corrigirt, die Mss क्षुधं 9) So corrigirt, in den Mss. शुन्ध ohne Accent 10) B ग्रहीतं 11) B यदान्न 12) Die Mss नि ष्ठिवंति 13) Das Verb in den Mss ohne Accent 14) So corrigirt, die Mss विन्दमानो: 15) Die ३ fehlt in den Mss 16) Das Verb in den Mss ohne Accent, auch schreiben die Mss नि ष्ठिव॰ 17) Dies Wort in den Mss ohne Accent 18) So corrigirt, die Mss सवितृप्रसुत

वर्ष्म वा एषा छन्दसां वर्ष्मेण[1] समानानां गमयति पञ्चभिर्गृह्णाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्यैकैकामुत्सर्जं[2] मिमीते ऽयातयाम्न्यायातयाम्न्यैवं[3] मिमीत एतावती वा आसामेकैकस्या वीर्यमाप्यते तस्मादिमाः कामं प्रसारयति कामं प्रत्यञ्चति दश कृत्वो मिमीते दशाक्षरा विराड् विराजमेवाप्नोत्यथो वैराजाः पशवः पशूनेवावरुन्द्धे द्विर्गृह्णाति द्वे हि सवने यावान्वै सोमो गृहीतः स यजमानस्य यमभ्यूहति[4] स सदस्यानां प्रजाभ्यस्त्वेत्यभ्यूहति[5] गोपाञ्जोपाद्धि प्रसर्पन्त्योषधयो वै सोमो ऽपरिमितं[6] जीवनं यत्परिमितं[7] गृह्णीयात्परिमितं जीवनं स्यादथ यदभ्यूहत्यपरिमितस्यावरुद्ध्यै[8] यजमानो वै प्रजापतिः प्रजा अंशवो यत्सोममुपनह्यति प्रजानां वा एतत्प्राणमुपनह्यति[9] यदाह प्रजास्त्वानुप्राणन्त्विति प्राणमासु दाधार क्षौममुपनह्यत्योषधं[10] वै क्षौममोषधयः सोमस्य योनिः स्व एवैनं योनौ दधाति यज्ञो यद्ये[11] देवानामगछन्त[12] रक्षांस्यजिघांसन्त्स[13] देवता व्यवासर्पन्त्सर्वदेवत्यं वै वासो यत्क्षौममुपनह्यति सर्वाभिर्वा एतद्देवताभिर्यज्ञाद्रक्षांस्यपहन्त्यथो[14] [15] सर्वाभिरेव देवताभिर्यज्ञं समर्धयति ॥ ४ ॥

Vgl. 1, 2, 3 — TS 6, 1, 6 (arunayā krayaḥ) u 9 (somonmānam); Kāṭh 24, 1 u 2; Kap 37, 2 u 3

1) So corrigirt, B वर्ष्येन॰; H वैर्ष्मेन॰, B वेर्ष्मेन॰ 2) In den Mss तस॰ ohne Accent 3) So corrigirt; B यातयाम्न्यायातयाम्न्यैव; H u. Bb यातयाम्न्यायातयाम्न्यैवं 4) So corrigirt; H u. Bb ॰भ्युहति, B ॰भ्युयति 5) So B, ohne Accent; H u. Bb ॰भ्यूहति 6) So corrigirt; die Mss सोमो परिमितं 7) So corrigirt; in den Mss परिमितं ohne Accent 8) So corrigirt, H u. Bb ॰दभ्युह॰, in B ॰दभ्यह॰ 9) So corrigirt, die Mss betonen प्राण॰ 10) So corrigirt; H ॰त्यायधं॰, Bb ॰त्योपधं॰; desgl. B, ohne Accent. 11) In den Mss ॰द्ये ohne Accent 12) So corrigirt; die Mss. देवानागछन्तं॰; H ॰न्तं॰ 13) So corrigirt, स in den Mss. ohne Accent. 14) So corrigirt; in den Mss ॰द्रक्षा॰॰ ohne Accent. 15) B ॰पहंत्व॰

चतुर्गृहीतमाज्यं भवति' चतुष्पादो वै पशवः' पशूनेवावरुन्द्धे' हिरण्यमवधाय जुहोत्याग्नेयं घृतमैन्द्र्य हिरण्य' संतनूरेवं सतेजा हूयत' एषा वा अग्नेः प्रिया तनूर्यद् घृतं तेजो हिरण्य' यद्धिरण्यमवधाय जुहोत्यग्नेर्वा एतत्प्रियां तऽन्वं तेजसा समर्धयत्यथो रूपाण्येव व्याहयति' पशवो वै घृत' तेजो हिरण्य' यद्धिरण्यमवधाय जुहोति पशुषु वा एतद्रेतो दधाति' तस्मादनस्थकाद्रेतसो ऽस्थन्वन्तः पशवः प्रजायन्ते' बद्धेन जुहोति' तस्मात्पशूनां गर्भा अप्रपादुकाः' प्रपादुकाः पशूनां गर्भाः स्युर्यदबद्धेन जुहुयाज्जूरसीति' यद्वाव जवत' इयमसा-ऽदित्यमसाऽदिति' तदस्या जूत्वं' धृता मनसेति' मनसा हि वाचं दाधार' जुष्टा विष्णवा इति' यज्ञायैवैनां जुष्टा विष्णवे ऽकस्तस्याग्ने सत्यसवसः प्रसव इति' वाचा हि प्रसूतं क्रियते' तन्वो यन्त्रमशीय स्वाहेत्याशिषमेवाशास्ते' शुक्रमसि' चन्द्रमसीत्युज्जरति स्वर्गस्य लोकस्य समष्ट्यै' वाग्वै सोमक्रयणी' शास्ति वावैनामेतत्तस्मात्प्रजाः सृष्टा प्रजायन्ते' वत्सो जातः स्तनमिच्छति' स्तनं कुमार इच्छति' चिदसीति' यद्वाव चिकित्सत' इयमसाऽदित्यमसाऽदिति' तदस्याश्चित्त्वं' मनासीति' यद्धि मनसा मन्यते यन्मनसाभिगच्छति तद्वाचा वदति' धीरसीति' यद्वाव ध्यायतीत्यमसाऽदित्यमसाऽदिति' तदस्या धीत्वं' दक्षिणासीति' यत्त्विवाचा दीयते तदस्या दक्षिणात्व' यज्ञियासीति' वाग्घि यज्ञियां' क्षत्रियासीति' य' हि वाग्जुषते स क्षत्रियो' ऽदितिरस्युभयतःशी-

1) So corrigirt, die Mss चतुर्गृहीतम॰ 2) So corrigirt, die Mss betonen स तनूर॰ 3) Das Verbum in den Mss ohne Accent 4) So B, ohne Accent, H u Bb ॰दन्धस्थकाद्रे॰ 5) So H, in Bb ॰दबद्धेन, B ॰दयबद्धेन 6) Die ३ fehlt in H u Bb 7) So corrigirt, H u Bb ॰श्चित्त्वं मासीति, B ॰श्चित्व मनासीति, (s 1, 2, 4) 8) In den Mss ध्यायती॰ ohne Accent 9) So B ohne Accent In H u Bb ॰सीतीय॰

र्षीति[1] यत्स्विदादित्यः प्रायणीय आदित्य उदयनीयस्तदस्या उभयतःशीर्षत्वं[2] सा नः सुप्राची सुप्रतीची भवेति सुप्राची ३ह्येषा प्रायणीये सुप्रतीच्युदयनीये ॥ ५ ॥

Vgl 1, 3, 4 — TS 6 1, 7 (tatprakârah), Kath 24, 3, Kap S 37, 4

यत्कर्णगृहीतया क्रीणीयाद्दार्वाघ्नी स्यादङ्गुष्ठाभिहितया मनुष्यदेव३त्या[3] यत्पदि बद्धया पितृदेव३त्या यदबद्धयायता स्याद्यदाह मित्रस्त्वा पदि बध्नात्विति मित्रस्यैवैनां पाशेन यच्छति पूषाध्वनः पात्वितीयं[4] वै पूषेयमेवास्या[5] अध्वानं[6] संभरतीन्द्रायाध्यक्षायेतीन्द्रो वै देवानामोजिष्ठस्तमेवास्या अध्यक्षमकरनु त्वा माता मन्यतामनु पितेत्यनुमत एवैनं मात्रा[7] पित्रा भ्रात्रा[8] सख्या क्रीणाति सा देवि देवमच्छेहीति देवी ३ह्येषा[9] देवः सोम इन्द्राय सोममितीन्द्राय३ह्येषा सोममच्छैति[10] रुद्रस्त्वावर्तयत्विति[11] रुद्रमेवास्याः परस्ताद्दधाति स्वस्ति सोमसखा पुनरेहीति प्रत्यक्षमेवालभ्य रुद्राय वा एतत्पशूनपिदधाति यदाह रुद्रस्त्वावर्तयत्विति यदाह स्वस्ति सोमसखा[12] पुनरेहीति स्वस्तिमेवास्यै पुनरावृत्तायै दधाति वाग्वै सोमक्रयणी सा देवरूपाणि प्रविशति यदाह[13] वस्व्यसि रुद्रासीतीदमसीदमसीति[14] वाग्वा एनामेतदाह यद्यद्भवति यद्वा एतत्किंच वदन्त्येतां वा एतदाप्नो- वरुन्द्धे षट् पदान्यनु निष्क्रामति[15] षड्वा अहानि[16] वाग्विभज्यते न वै

1) So corrigirt, die Mss betonen चर्विंयो दितिर॰, Kap S चदितिरस्यु॰ cet
2) So corrigirt, die Mss betonen उभयत शीर्षत्व॰ 3) So corrigirt, H u Bb मनुष्य-देवत्या, B मनुष्यदेव॰त्या 4) B पवत्वित 5) Die Mss betonen पूषेयमेवास्या 6) So corrigirt, die Mss तामेवास्या 7) Die Mss मात्रा 8) Dies Wort in den Mss ohne Accent 9) Die ३ fehlt in den Mss 10) So betonen die Mss 11) H u Bb रुद्रास 12) H u Bb सोमसख्या 13) So corrigirt, die Mss यदाह 14) So corrigirt, H u Bb रुद्रासीति इमसीदमसीति, B रुद्रासीति इमसीति 15) Die Mss षट् पदा- न्यनुनि क्रामति 16) In den Mss dies Wort ohne Accent, B आहानि

षष्ठमहर्वागतिं वदन्ति सर्वो वै षष्ठे ऽहन्वागाप्यते[1] यावत्येव वाक्तामाप्नोति दक्षिणेनार्धेन दक्षिणमर्धमनु निष्क्रामति तस्माद्दक्षिणेन हस्तेनान्नमद्यते तस्माद्दक्षिणो ऽर्ध आत्मनो वीर्यवत्तरस्तस्माद्दक्षिणमर्ध[2] वयाऽस्यनु पर्यावर्तन्ते सप्तमे पदे जुहोति सप्त छन्दाऽसि छन्दाऽसि वाग्यावत्येव वाक्तामाहुत्याप्त्वावरुन्द्धे सप्त छन्दाऽसि सप्त होत्राः सप्त ग्राम्याः पशवः पशूऽस्तानेवावरुन्द्धे बृहस्पतिष्ट्वा सुम्ने रण्वात्विति[4] ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैना[5] यच्छति रुद्रो वसुभिराचक इति रुद्रमेवास्या वसुभिराकर्तारमकः पृथिव्यास्त्वा मूर्धन्नाजिघर्मीत्येष[6] वै पृथिव्या मूर्धा यद्देवयजनमिडायास्पद[8] इति गौर्वा इडा तस्या वा एतत्पदं घृतवति[10] स्वाहेति स्वाहाकारेणैवैना[9] यच्छति ॥ ६ ॥

Vgl. 1, 2, 4 — TS 6, 1, 7 (tatprakṛtaḥ) u. 8 (padasaṃgrahaḥ), Kāṭh. 24, 3 u. 4; Kap. S. 37, 4 u. 5

हिरण्यं निधाय जुहोत्यग्निमत्येवं जुहोत्यायतनवत्यन्धो ऽध्वर्युः स्याद्यदनायतने जुहुयात्पशवो वै घृतं पशवः पदं वज्र स्फ्यो यत्स्फ्येन[11] पदं परिलिखति[12] वज्रेण वा एतद्यजमानाय पशून्परिगृह्णाति त्रिपाण्यानुपरिलिखति संयोनीनेवास्मै[13] पशून्परिगृह्णाति स्थाल्यां पदं संवपत्यस्यां वा एषाधिक्रियत इयं हि पशूनां योनिः स्व एवैनान्योनौ दधाति शोचन्ति[14] वा एतत्पशवो योने-

---

1) So corrigirt, B हन्वागाप्यते, H हन्वागाप्यते, Bb हन्वागायप्यते 2) Die Mss °मार्धेन 3) Die Mss °मनुर्नि क्रामति 4) H u Bb रण्वार्त्विति 5) H u Bb °णाथ्यन 6) H u Bb °मोर्धिर्य 7) So corrigirt, die Mss पृथिव्यास्त्वा, vgl auch TS 6, 1, 8, 2 8) पद in den Mss ohne Accent 9) H °मीडाया° 10) So corrigirt, cf 1, 2, 4, H u Bb घृतवति H घृत घृतवती 11) So corrigirt, H स्फ्यो यस्य येन, Bb स्फ्यो यस्य येन, B स्येयाय स्येन 12) So corrigirt, die Mss. परिलिखति 13) B °नेवास्मै 14) So corrigirt, H u Bb शोचति, B शोचति

ग्छिन्ना[1] यदेव उपसृजति शमयत्येव यजमानाय पदं प्रयच्छति तदध्वर्युरपशुर्भवति[2] यजमानाय हि पशून्त्संप्रादादिति यदाह तव राया इति तदध्वर्युं पशुष्वाभजति तेनाध्वर्युः पशुमान्गृहेषु पदं निदधाति गृहेष्वेवास्य पशून्दधाति स्वर्गो वै लोक आहवनीयो यदाहवनीय उपवपेदन्यलोके[3] ऽस्य पशून्दध्याद्गार्हपत्य उपवपति गार्हपत्यं[4] हि पशवो ऽनूपतिष्ठन्ते पशुभिरेवैनं[5] सम्यञ्चं दधाति पशवो वै मदं-मेमी रुद्रो यदग्निमत्युपवपेद्रुद्रायास्य[6] पशून्दध्याद्यच्च शान्तं तदुपोप्य पशूनामप्रदाहाय यत्सोमक्रयण्या पत्नी[7] संक्षापयन्ति मिथुनत्वाय त्वष्टिमन्तस्त्वेति त्वष्टा हि रूपाणि विकरोति सपेमेति सपाद्धि[8] प्रजाः प्रजायन्ते सूर्यस्य चक्षुरारुहमित्येषं[9] वा अपरिपरः पन्था अरक्षस्यो येनासा आदित्य एत्यमुष्य[10] वा एतदादित्यस्य पथ इति वृणक्ति विन्दते वस्विति वसो३श्रेय[11] विन्दते यः सोमं क्रीणाति ॥ सोमविक्रयिन्त्सोमं ते क्रीणानि महान्तं बहुर्हं बहु शोभमानं[12] कलया ते क्रीणानि कुष्ठया ते क्रीणानि शफेन ते क्रीणानि पदा ते क्रीणानि ॥ इति गौर्वा[13] एतन्महिमानमुदाचष्टे ऽथो महयत्येवैनामेषो अक्षरशो वा एतद्यज्ञं मिमीते सुवाङ्भ्राडङ्कारे[14] बम्भार[15] इत्येते वै देवानां सोमरक्षय एतेभ्यो वा अधि छन्दांसि सोममाहरंस्तेभ्य एवैनाननुदिशत्यथो यदेवात्र यज्ञस्योपशिष्टं[16] तत्परिक्रीणीते दशभिः क्रीणाति

---

1) In den Mss °ग्छिन्ना ohne Accent 2) In den Mss पशु° ohne Accent. 3) So meine Correctur, die Mss betonen °दन्यलोके 4) So betonen die Mss 5) So corrigirt, die Mss °मर्धि 6) So corrigirt, die Mss °पिमत्यु° 7) So corrigirt, B सक्षापयति, H u Bb सकक्षापयति Kap S 37, 5 सक्षापयन्तिति 8) H सपात् हि, während H u Bb संपात् हि 9) H u Bb प्रजा° 10) In den Mss das Verb ohne Accent 11) So die Mss 12) So B, nur ohne Accent, H u Bb शो-भयमान 13) B गौर्वा 14) So corrigirt, gemass 1, 2, 5 w s, H u Bb सुवाड्भ्राड°, B सुवाड भ्राड° 15) H u Bb बभरा 16) H u Bb °पशिष्ट

दशाक्षरा विराट् तथा वैराजः क्रियत एकादशभिः क्रीणाति दश वै पशोः प्राणा आत्मैकादशस्तथा सर्वः क्रियते धेन्वा क्रीणात्याशिरमेवास्य क्रीणात्यथो वाचमेव गृह्णाति हिरण्येन[1] क्रीणाति शुक्रमेवास्य क्रीणात्यथो तेज एव गृह्णाति वाससा क्रीणाति सर्वदेवत्यमेवास्य क्रीणात्यजया[2] क्रीणाति तप एवास्य क्रीणाति यच्च वा अदश्छन्दांसि सोममाहरंस्तानि तमसा न प्राजानंस्ततो[3] गायत्र्यजामादायोदपतत्सा वा एभ्यः प्रारोचयत्ततो[4] वै छन्दांसि सोममाहरंस्तत्सोमं[5] ना आजामिति वा वाजानडुहा क्रीणाति वहूचेवास्य[6] क्रीणात्यृषभेण क्रीणाति सेन्द्रमेव[7] क्रीणाति यद्दृषभेण क्रीणीयात्प्रजापतिना विक्रीणीते वत्सतरेण सांडेन क्रय्यस्यैन्द्रमहः क्रीणाति न प्रजापतिना विक्रीणीते मिथुनाभ्यां गोभ्यां क्रीणाति मिथुनमेवास्य क्रीणाति ॥ ७ ॥

Vgl. 1, 2, 4 u 5 — TS 6, 1, 8 (padasamgrahah) (9 somonmânam) u 10 (anyâç ca tatkrayah); Kâṭh 24, 5 u 6, Kap S 37, 5 u 7

सोमो वा अमुष्यासीत्ते देवा गायत्रीं प्राहिण्वन्त्सोममाहरेति सा वितता यज्ञमेवापश्यत्सैक्षत यद्यहंस्यान्तरेयाम्यात्मानमन्तरेयामीति[8] तस्यै वा एतं सोमो जीवग्रहं प्राब्रवीत्स्वजा असि स्वभूरसीति सोमस्य वा एष जीवग्रहः सोमस्य वा एतज्जीवग्रहं गृह्णीते नाध्वर्युः[9] सर्वातिमार्छति य एवं वेद वरुणो वा एष एतर्हि वरुणदेवत्यो यद्युपनद्धो[10] वरुण एनं भूत्वा प्रविशेदित्याह मित्रो

---

1) So corrigirt, die Mss हिरण्येन 2) So corrigirt, die Mss. °जया 3) B तमसानुप्रजान° 4) H u Bb प्रारोचयन्त° 5) Die Mss. सोममा 6) So H u Bb; in B यद्बूचास्य 7) H u Bb °मेवा 8) Die Mss यद्यहंस्यान्तरेयाम्यात्मानमन्तरेयामिति 9) H u. Bb गृह्णीतेना° 10) So lese ich, die Mss schwanken, H u Bb यर्ह्युपनद्धो; B यर्ह्युपनद्धा

ना एहि सुमित्रधा इति मित्रमेवैनमकः शमयत्येवैन्द्रस्योरुमाविश दक्षिणमित्यैन्द्रो वै यज्ञ इन्द्रः सोमस्य योनिः स्व एवैनं योनौ दधातीन्द्रो वा एतमया आगतमूरू न्यगृह्णीत[1] तां वा एतदनुकृतिमूरा आसादयते ऽपोर्णुते यथा श्रेयस्यायत्यपोर्णुत एवं तदु३र्वन्तरिक्षं ३वीहीत्यन्तरिक्षदेव३त्यो[3] वा एष एतर्हि प्रच्युत[4] इतो ऽप्राप्तो[5] ऽमुं चादित्याः सदा आसीदेत्यादित्यो वै यज्ञो ऽदितिः सोमस्य योनिः स्व एवैनं योनौ दधाति वरुणं वा एनमेतत्सन्तं मित्रमकस्तेनैनं स्वया देवतया व्यर्धयति यदाह ॥

अस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥

इति वरुणमेवैनमकः स्वयैवैनं देवतया समर्धयति वनेषु व्यन्तरिक्षं ततानेति वाससा पर्यानह्यति सर्वदेव३त्यं वै वासः सर्वाभिर्वा एतद्देवताभिर्यज्ञं क्रीतं परिष्यति धूरसि ध्वर ध्वरन्तमित्याह रक्षसां धरायै रक्षसामन्तर्हित्यै वारुणमसि वरुणस्त्वोत्तभ्नात्विति वारुणं ३ह्येष एतर्हि वरुणदेव३त्यं मनसाऽ यन्ति महिमानमेवास्याऽ यन्त्यनसा वहन्ति तस्मादनोवाऽह्यमोषधयः[6] फलं पच्यन्ते शीर्षोहार्यमोषधयः फलं पच्येरन्यत्सोमं[7] क्रीतं शीर्ष्णा हरेयुस्तस्माच्छिरा ओषधयः शीर्षाहार्यं[8] फलं पच्यन्ते शीर्ष्णा हि सोमं क्रीतं हरन्ति प्र च्यवस्व भुवनस्पत इति भूतानां ३ह्येष पतिर्विश्वान्यभि धामानीति विश्वानि ३ह्येष धामान्यभि प्रच्यवते[9] मा त्वा परिपरिणो मा परिप-

1) So meine Vermuthung, B न्निगृह्णीत, H u Bb न्निगृहीत 2) Die ३ fehlt in den Mss. 3) Die Mss चीहि॰ 4) B प्रच्युत 5) Die Mss इतो प्राप्तो, cf Kâth 23, 1 प्रच्युतो ऽप्राप्तोऽवादप्राप्त, vgl unten 1, 9, 1, 3, 9, 7, 3, 10, 1 6) H u Bb वाऽह्य॰ 7) cf 1, 6, 6 u 1, 8, 1 8) So corrigirt gemäss dem Obigen, B शीर्षोहार्यं, H u Bb शीर्ष्णोहार्यं 9) B प्रधावते

न्यंन्नो मा त्वा वृका अघायवो विदन्निति यत्र वा एनमद आह्रियमाणं सामिगन्धर्वो[1] विश्वावसुरमुष्णात्ताहं रक्षोभ्यो[2] वा वासा एतद्रक्षोभ्यो भीषा स्वसितमकर्वरुणो वा एष क्रीतो यजमानस्य गृहमोह्यते स ईश्वरो[3] ऽशान्तो यजमानं हिंसितोर्यदाह नमो मित्रस्य वरुणस्य चक्षसा इति शमयत्येव शान्त एवोह्यते यजमानस्याहिंसायै सर्वाभ्यो वा एष देवताभ्य उह्यते[4] यदेकोल्मुकेन प्रतितिष्ठेत्पितृदेवत्यो ऽस्य यज्ञः स्यादग्निमेहत्समाधेयो ऽग्निर्वै सर्वा देवताः सर्वाभिर्वा एतद्देवताभिर्यज्ञमायन्तं प्रतितिष्ठत्यग्नीषोमौ वा एतौ संभवतो यजमानं वा एता अभिसंभवेतां यजमानस्य वा पशूंस्तद्य एष पशुर्धार्यते तमेव भागधेयमभिसंभवतो देवता वा एते पशुं धार्यमाणं नाभिप्राच्यवन्तोऽस्मिन्यज्ञ आगंसमानाऽह्यो ऽयमितरस्तमग्नीषोमा[5] उपप्राच्यवेतां तस्माद्द्वेष्यो ऽग्नीषोमीयो[6] ऽग्नीषोमाभ्यां वा एष मेधायात्मानमालभते यो दीक्षते स वा एतेनैव पशूनात्मानं निष्क्रीणीते स्थूलः पीवा स्यादात्मनो निष्क्रीत्यै तस्मादग्नीषोमीयस्य[7] पशोर्नाशितव्यं पुरुषो ह्येतेनात्मानं निष्क्रीणीते तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहे[8] ऽशितव्यं तर्हि निष्क्रीतो ऽनृणो वार्त्रघ्नं वा एतत्सोमो वै वृत्रः पूर्वेद्युर्वा इन्द्रो वृत्रमहन्पूर्वेद्युर्वा यैनमेतत्स्तृत्वाथापरेद्युरभिषुणोति वरुणपाशाभ्यां वा एष यो ऽभिधीयते यो दीक्षते[9] ऽहोरात्रे वरुणपाशौ यद्दिवा संस्था-

---

1) Die Mss सामिगन्धर्वो, cf 3 7, 3 2) So corrigirt, die Mss °रमुष्णा°, cf aber 3, 7, 3 3) So corrigirt, die Mss betonen ईश्वरो 4) So die Mss 5) Die Mss schwanken, B यमितरस्त्वम°, H a Bb यमितितस्तम° 6) So corrigirt, die Mss °द्वेष्यो पीषोमीयो 7) So corrigirt, die Mss °पीषोमीयस्य 8) So corrigirt; die Mss गृहे 9) Das Verbum in den Mss ohne Accent

पयेदनुन्मुक्तो वरुणपाशाभ्यां स्यादेकं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यत आत्मनो ऽहिंसायै ॥ ८ ॥

Vgl. 1, 2, 6 — Kath. 24, 7 u. 8, Kap. S. 37, 7 f.

युक्तो ऽन्यो ऽनड्वान्भवति विमुक्तो ऽन्यो ऽथातिथ्यं निर्वपति यज्ञस्य संतत्यै पत्न्या हस्तान्निर्वपति पत्नी वै पारिणह्यस्येशे[2] पत्न्यैव रातमनुमतं क्रियते यद्वै पत्नी यज्ञे करोति तन्मिथुनं मिथुनत्वाय वै पत्न्या हस्तान्निर्वपत्यपि वै पत्न्या यज्ञस्यान्वारम्भो यद्यज्ञे करोत्यन्वारम्भाय वै पत्न्या हस्तान्निर्वपत्यग्नेस्तनूरसि विष्णवे त्वेति गायत्रीं तेन छन्दसा गृह्णाति सोमस्य तनूरसि विष्णवे त्वेति त्रिष्टुभं तेनातिथेरातिथ्यमसि विष्णवे त्वेति जगतीं तेनाग्नये त्वा रायस्पोषदे विष्णवे त्वेत्यनुष्टुभं तेन श्येनाय त्वा सोमभृते विष्णवे त्वेति गायत्री वै श्येनः सोमभृतां[5] वा एतत्पुनरालभते ऽयातयाम्नी[6] पाङ्क्त्वाय पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्यैतद्वै छन्दांस्यगृहीतैश्छन्दोभिर्गृहीतैर्यज्ञं गृह्णाति यावन्तो वा अतिथिमन्वायन्त्यपि[8] तेषां भागश्छन्दांसि[9] वा एतममृतो[10] ऽन्वायन्ति तेभ्य एष भागः क्रीयते वरुणो वै यज्ञः क्रीतो[11] विष्णुः प्रततः प्रततो वा एतर्हि यज्ञस्तस्माद्वैष्णवो नवकपालो भवति त्रिवृतं वा एतद्यज्ञमुखे व्यायातयन्ति[12] त्रिवृता प्रयन्ति ते वै नवस्त्रिकपालास्त्रिकपालो वैष्णवो देवतया विष्णुं वै

1) So corrigirt, die Mss betonen न्यौ  2) So die Mss., wohl in पारीणह्य° zu corrigiren  3) B क्रीयते  4) So corrigirt, die Mss त्रिष्टुभ  5) So corrigirt, die Mss सोमभृता°  6) So corrigirt, die Mss betonen °ते यातयाम्नी  7) So schreibe ich im Anschluss an H छन्दांस्यगृहीतैश्छ° Bb छन्दांस्यगृहीतैश्छ°, H छन्दांसि गृहीतो छ°  8) So corrigirt, in den Mss °त्यपि ohne Accent, und zwar schreiben H u. Bb °न्वार्यत्यपि B °न्वायत्यपि  9) In den Mss भाग° ohne Accent  10) So corrigirt, die Mss °मृतो  11) Die Mss betonen क्रीतो  12) Die Mss व्यायातयति

देवा अग्निमन्वामनं कृत्वा यावदयं विविक्रमते तदस्माकमिति स वा इदमेवाग्रे व्यक्रमताथेदमथादस्तस्मात्त्रिकपालो वैष्णवः सोमस्य वा एतदातिथ्यं यदातिथ्यमथवा एतदग्नेरातिथ्यं यदग्ना अपि मन्थन्त्यथो यज्ञाय वा एतत्क्रीताय देवता जनयन्त्यथो तेज एवास्मै जनयन्त्यथो उपसंसु वावास्मा एतद्वीरं जनयन्त्या हास्य वीरो जायते ये वै देवाः साध्या यज्ञमत्यमन्यन्त तेषां वा एतदद्तिरिक्तं यज्ञे क्रियते ऽतिरिक्तं वा एतद्यज्ञे क्रियते यदग्ना अपि जुह्वति यच्चषालादुपर्यूपस्य तदेवैनां स्पृशति संस्थाप्या३न्न संस्थाप्या३मिति मीमांसन्ते यत्संस्थापयेद्यज्ञमुखे यज्ञं संस्थापयेदातिथ्यं वा उपसदां प्रयाजास्तानूनप्त्रमाथोस्तस्मादिडान्तमेवं कार्यमातिथ्यं वा उपसदां प्रयाजास्तस्मात्ता अप्रयाजा उपसदो वा आतिथ्यस्यानुयाजास्तस्मात्तास्तिस्रस्त्रयो ह्यनुयाजाः शिरो वा आतिथ्यं ग्रीवा उपसदो ऽथैष इतरो यज्ञः संहितः प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला अस्य भ्रुवा इक्षुकाण्डे यज्ञमुखं प्रजापतेर्यज्ञमुखादेवाधि यज्ञमुखं प्रतनुते ऽश्वो वै मेध्यो यज्ञः प्रजापतिः प्राजापत्यो ऽश्वस्तस्मादाश्ववालः प्रस्तरः कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै ॥ ९ ॥

Vgl 1, 2, 6 — TS 6, 2, 1 (Atithyeshtib), Kâth 24, 8, Kap S 33, 1

---

1) So corrigirt, die Mss देवा 2) Die Mss जनयन्त्यथो 3) In den Mss °द्तिरिक्त° ohne Accent 4) So corrigirt, die Mss क्रीयते 5) So mit der eigenthümlichen Verschmelzung von ह् und स् sind die Mss offenbar zu verstehen, H u Bb यच्चषालादुपर्यूपस्य, B यच्चषालोदुपर्यूपस्य 6) So corrigirt, die Mss संस्थाप्या३न्न, cf 1, 8, 7 7) So corrigirt, die Mss संस्थाप्या३मिति, cf 1 3, 7, 1, 10, 20 u dgl 8) So B, in H u Bb °मते 9) So meine Vermuthung H u Bb चभ्रुवा, B चभ्रुवाः oder ist vielleicht यदर्भुवा zu lesen, Kap S 33, 1 आश्ववाल प्रस्तरो भवत्यिषुकाण्डुवा-वापन्न इव वै तत्प्रजापतिरासीत्तस्येमे वाला वासन्न अश्ववाला एते वाह यास्तुवाको

देवा वा अन्योन्यस्य श्रैष्ठ्ये[1] तिष्ठमानाश्चतुर्धा[2] व्युदक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैस्तान्वा[3] एतेन बृहस्पतिरयाजयंस्तेषामिन्द्रो ऽभवत्तद्य एतेन यजते भवति ते वा अन्योन्यस्याभिद्रोहादबिभयुस्तेषां याः प्रियास्तन्व आसंस्ताः समवाद्य ताः समवामृशन् ॥ यो नस्तन्नपाद्यो[4] नो ऽन्योन्यस्मै द्रुह्यादितं एवं सं निर्गृह्णात्[5] ॥ इति ते यदा समवामृशंस्ततो देवा अभवन्परासुरास्तद्य एवं विद्वांसः[6] समवमृशन्ति भवन्त्यात्मना परेषां भ्रातृव्या भवन्ति यं कामयेत ऋध्नुयादिति तं प्रथममवमर्शयेदृध्नोति यदि कामयेत सर्वे सदृशाः स्युरिति सर्वान्सहावमर्शयेत्सर्वे ह सदृशा भवन्ति ये वै ते समवामृशन्नपि[7] वा इदानीं त ऽन्योन्यस्मै न द्रुह्यन्ति तस्मात्तानूनप्त्रिणे[8] न द्रोग्धवै[9] यद् द्रुह्येतिमियायै[10] तन्वै[11] द्रुह्येते वा अमुष्मिन्नादित्ये प्रियास्तन्वः संन्यदधत तस्मादेष तेजिष्ठं तपति तस्मात्सूर्यदेवत्या हि सर्वे सोमा गृह्यन्ते ऽथो अथ वै देवानां प्रियास्तन्वस्तां[12] एवावरुन्द्ध आपतये[13] त्वा गृह्णामीत्यग्नये तेन वसुभ्यो गृह्णाति परिपतये त्वेति सोमाय तेन रुद्रेभ्यस्तनूनप्त्र इतीन्द्राय तेन मरुद्भ्यः शक्मने शाक्वरायेति वरुणाय तेनादित्येभ्य[14] एतेभ्यो वै तद्देवेभ्यो ऽयं गृह्यते[15] तेभ्य एवैनं गृह्णाति चतुर्गृह्णाति चतुर्धा हि ते[16]

1) So corrigirt, H u Bb श्रैष्ठे, B श्रेष्ठे 2) B तिष्ठमाना° 3) So corrigirt, die Mss वरुणादित्यै° 4) So die Mss ! In TS 6, 2, 2 न प्रथमो, Kath 24, 9 एषा नस्तन्न पाद्यो नो न्यो न्यस्मै द्रुह्यादिति, Kap 8, 38, एषा नस्तन्व पाद्यो नो न्यो न्यस्मै द्रुह्यादिति 5) So H u Bb, in B सनिर्गेक्षात् 6) So corrigirt, H u Bb विद्वांसन्तसमवमृशति, B विद्वांस समवमृशति 7) So corrigirt, die Mss समवामृशन्नपि 8) So betont H, in Bb तानूनप्त्रिणे 9) So corrigirt, in H ganz ohne Accent, in Bb द्रोग्धवै 10) So corrigirt, in den Mss द्रुह्येत् ohne Accent 11) H u Bb तन्वी 12) So corrigirt, in den Mss प्रियास् ohne Accent 13) H u Bb अपतये 14) B ते तेनाद्° 15) So corrigirt, H देवेभ्यो ये गृह्यते, Bb देवेभ्यो गृह्यते, B देवेभ्यो मे गृह्यते 16) In den Mss ते ohne Accent

ध्युदंक्रामन्नोपतये त्वा गृह्णामीत्यात्मानमेवं तेन गृह्णाति परिपतये त्वेति प्रजां तेन तनूनप्त्रा इति यज्ञं तेन शक्मने शाक्वरायेति पशूंस्तेन यो वै देवान्त्साध्यान्वेद सिध्यति ह वा अस्मै यंच कामयेत इहं मे सिध्येदितीमे वै लोका देवाः साध्या आत्मानमेवं दीक्षया स्पृणोति प्रजामवान्तरदीक्षया संतरांमेखलामायछन्ते कनीयो व्रतमुपैत्यन्तरां उह्यात्मानं प्रजा द्विव्रतेन भवितव्यं द्वौ वा ऋतू संहृष्ठ रात्रिश्च यदेकव्रतः स्यात्पत्नीमन्तरियाद्या ते अग्ने रुद्रिया तनूरिति व्रतं व्रतयत्येषा वा अस्मिन्नेतर्हि देवता तां प्रीणाति तस्याः हुतं व्रतयति यदेवंतो ऽन्यथा व्रतयेद्रुद्र एनमभिमानुकः स्यादेवताभिर्वा एष सायुज्यं गछति यो दीक्षते यच्छीताभिर्मार्जयेत प्रमयेयुर्यो यंथेदमग्निरपरिरूपसृष्ट एवं स्यादथ यच्छप्ताभिर्मार्जयते शान्त्या अथो तेजो वै मदन्तीस्तेज एवावरुन्द्धे ॥ १० ॥

Vgl 1, 2, 7 — TS 6, 2, 2 (tânunaptram), Kaṭh 24, 9, Kap. S 38, 2

॥ इत्युपरिकाण्डे[10] सप्तमः प्रपाठकः ॥

---

1) Bb शंक्मने 2) So corrigirt, H u Bb पशूंस्तेन यो वै, B पशूंस्तेन एवै 3) Die Mss दैवांस्स॰ 4) So B ohne Accent, H u Bb प्रजामेवान्तरदीक्षया, Kap S 38 2 प्रजामवान्तरदीक्षया 5) So corrigirt, in den Mss सतरम् ohne Accent, Kap S 38 2 सथरा मेखलाम॰ cet , TS 6 2 2 7 सततराम् 6) So corrigirt, die Mss betonen व्रतमुपैत्यंतरा 7) So corrigirt, H u Bb ॰ह्मान॰, B ॰ह्मान 8) Bb या ते अग्ने 9) So corrigirt, die Mss यदेतो 10) Die Mss schreiben इति उपरि॰

असुराणां[1] वा एषु लोकेषु पुर आसन्नयस्मय्यस्मिंल्लोके रजतान्तरिक्षे हरिणी दिवि ते देवाः सꣳस्तम्भꣳ सꣳस्तम्भं पराजयन्त तेऽनायतना[2] ह्यासꣳस्त एताः प्रतिपुरोऽमिन्वत हविर्धानं दिव्याग्नीध्रमन्तरिक्षे सदः पृथिव्यां तेऽब्रुवन्नुपसीदामोपसदा वै महापुरं जयन्तीति त उपासीदꣳस्त उपसदामुपसत्त्वं[5] तानेभ्यो लोकेभ्यः प्राणुदन्त त एभ्यो लोकेभ्यः प्रणुत्ता[6] अहरश्रयन्त यत्प्रातरुपसदमुपायन्नह्न एनाꣳस्तेन प्राणुदन्त तेऽह्नः प्रणुत्ता रात्रीमश्रयन्त यत्सायमुपसदमुपायन्रात्र्या एनाꣳस्तेन प्राणुदन्त ततो देवा अभवन्परासुरास्तथैवꣳ विद्वानुपसदमुपैत्यहोरात्राभ्यामेव भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुदते भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यथ वै तर्हि नेषुरासीत्ते देवा एतामिषुꣳ समस्कुर्वन्नग्निꣳ शृङ्गꣳ सोमꣳ शल्यं विष्णुं कुल्मलं तेऽब्रुवन्क इमामिषुमवसक्ष्यतीति[8] ते देवा अब्रुवन्नयमेव[9] रुद्र इति सोऽब्रवीद्भागो मेऽस्त्विति वृणीष्वेत्यब्रुवन्सोऽब्रवीन्नैवमेकश्चनेषुमस्ताꣳ मीमाꣳसाता[10] इति तस्मादेतस्यैषुरस्ता न मीमाꣳसितव्या ॥ सत्यꣳ हम्[11] ॥ इत्येव ब्रूयात्[12] स वै रुद्रो व्यसृजदेष हि देवानां क्रूरतमस्तयेमाः पुरोऽभिनदग्निना वै स तास्तेजसाभिनत्तस्मादग्निः प्रथमं इज्यते यदन्यां देवतां पूर्वां यजेद्वीर्यवतीः स्रुचौ कृत्वा जुह्वा गृह्णाति चतुरुपभृति पूर्वार्धो ह्येषोः समाहिततमः सकृत्पराङति॰

---

1) So corrigirt, H ॰न्नयस्मय्यस्मिंल्लोके, Bb न्नयस्मय्यस्मिन्लोके, B ॰न्नयस्मि॰ यस्मिंल्लोके, cf aber TS 6, 2 3, Ait. Br 1 2, 3, Çat Br 3 4, 4 3 2) In den Mss ohne Accent 3) So B, ohne Accent, H u Bb ॰नायतना 4) Dies Wort fehlt in H u Bb 5) H u Bb उपसीद॰ 6) Von hier bis zum folgenden प्रणुत्ता in H u Bb fehlend, daher die Accente ergänzt 7) So corrigirt die Mss schreiben साम॰ 8) So corrigirt, die Mss ॰सपतीति 9) So corrigirt, die Mss betonen ॰न्नयमेव 10) So corrigirt, die Mss schreiben ॰मस्तान् 11) So H u Bb, in B सत्यह 12) In den Mss ब्रूयात्

क्रामति[1] सकृदुह्येवैषुः[2] पराच्यमेतदतिक्रम्याश्रावयति यज्ञस्याभिजित्यै यदनतिक्रम्याश्रावयेदनभिजितो[3]ऽस्य यज्ञः स्यात्स्रुवेणोपसदो जुहोति पुरो वा एष जितानामन्वारोह एकामेकाहं जुहोत्येकामेकाहमेका हि तमेकाहमजयन्नेकामेकाहं तिस्र उपसदो जुहोति त्रयो वा इमे लोका एषां लोकानामभिजित्या अग्निना वै मुखेन देवा इमांल्लोकानन्ववायन्नुपसद्भिरसुरान्पराणुदन्ताग्निना वा एतन्मुखेन यजमान इमांल्लोकानन्ववैत्युपसद्भिर्भ्रातृव्यं पराणुद्य याः सायमनुवाउक्यास्ताः प्रातर्याज्याः स्युर्याः प्रातरनुवाउक्यास्ताः सायं याज्याः स्युस्तथोभयीर्वीर्यवतीर्भवन्ति ॥ १ ॥

Vgl. TS 6, 2, 3 (upasad), Kâth 24, 10 u 25, 1; Kap. S 38, 3 u 4.

अयः प्रथमायामवधाय जुहोति रजतं मध्यमायां हरितमुत्तमायामेतद्वै बृहस्पतिर्देवेभ्यः पूर्जयनमकरोद्यत्र पुरं युध्येयुस्तदेताभिर्जुहुयात्संरो वा एषा यज्ञस्य तस्माद्यत्किंच प्राचीनमग्नीषोमीयात्तदुपांश्वनु चरन्त्यथ वा एतदग्नीषोमीयं प्रति वाचं विसृजन्ते यज्ञमेवाप्त्वा[4] वाचं विसृजन्ते घृतं वै देवा वज्रं कृत्वा सोममघ्नन्स्रुचौ[5] बाहू तस्मात्स्रुची सौमीमाहुतिं नाश्नाते अन्ववधिषुर्वा एतत्सोमं यदस्य स्रुचौ चाज्यं चान्तिकमभ्यागुर्यद्दोहो गुरो गुप्ते देव सोमाप्यायतामिति यदेवास्य प्रन्तः[6] क्रूरमक्रंस्तदक्रूरमकस्तदाप्याययति[7] सर्वे ऋत्विज आप्याययन्ति सर्वे हि तानो[8] भिषज्यन्ति यन्ति वा एउते

---

1) So corrigirt, in den Mss सकृत्पर॰ ohne Accent. 2) So corrigirt; H u. Bb सकृदुह्येवेषु; desgl. B, ohne Accent. 3) So corrigirt, die Mss ॰यदेनभिजितो 4) So corrigirt, die Mss ॰मेवाप्त्वा 5) Bb ॰मघ्नन्स्रुची, B ॰मघ्नन् स्रुचौ 6) So corrigirt; die Mss प्रेत. 7) So corrigirt, die Mss तदक्रूरमकस् 8) H u Bb तातें; B तात

ऽस्माल्लोकाद्दिवं सोममाप्याययितुमुदस्युः[1][2] पराञ्चो हि यन्तीश्वराः प्रमेतोर्यदाहेष्टा राया[3] एष्टा[4] वामानि[5] प्रेषे भगायेति तेनास्माल्लोकान्नैति तेनास्मिँल्लोके धृता अनयोर्वा[6] एष गर्भ आभ्यामेष आवृश्चते यः सोमं हन्ति यदाह नमो दिवे नमः पृथिव्या इत्याभ्यामेव नमो ऽकरातिथ्यं वा उपसदां प्रयाजास्तानूनप्त्रमाशीस्तस्मान्न होतारं वृणीते नार्षेयम्[7] ॥ सीद होतः ॥ इत्येवाह चतुर्व्रतस्तिस्रश्चत्वारि[8] हीषोः पर्णानि त्रिव्रतस्तिस्रस्त्रिषन्धिर्हीषुः[9] शृङ्गं[10] शल्यः कुल्मलं द्विव्रतस्तिस्रो द्विषन्धिर्हीषुः शल्यश्च कुल्मलं चैकव्रतस्तिस्र एका ह्येवैषुरेषा[11] वै[12] परोवरीयसी दीक्षा कनीयो व्रतमुपैति ज्यायांसं लोकमभिजयत्यैकव्रतास्तिस्रो द्विव्रतास्तिस्रस्त्रिव्रतास्तिस्रश्चतुर्व्रतास्तिस्र एषा वा उत्क्रामन्ती स्वर्गकामस्योत्तरमुत्तरं श्वः श्वः श्रेयान्भवति य एवं वेद यद्द्वादशाग्निष्टोमस्योपसदः स्युरशान्ता निर्दहेयुर्यत्तिस्रो ऽहीनस्य[13] यथा[14] गरीयान्भारं उपाहृतो निःशृणात्येवं[15] तत्तिस्र एवाग्निष्टोमस्योपसदः कार्या द्वादशाहीनस्य सवीर्यत्वाय ॥ २ ॥

Vgl. 1, 2, 7. — Kāṭh. 25, 1; Kap. 8. 38, 4.

अभ्यर्धो वै देवेभ्यो यज्ञ आसीत्तेनाविदुरिह वा स इह वेत्यस्ति यज्ञ इति त्वविदुस्तेन[16] वै सं सृष्टिमैछंस्ते[17] प्रेपमैछंस्तेनाविन्दंस्ते

---

1) In den Mss सोम° ohne Accent. 2) So corrigirt; die Mss. °माप्याययितुमु° 3) So die Mss; cf 1, 2, 7 4) So corrigirt; die Mss. एद्य; cf. 1, 2, 7. 5) So corrigirt; die Mss वामानि. cf 1, 2, 7 6) H अनयोर्वा; desgl B, ohne Accent. 7) So corrigirt; die Mss. नार्षेयं 8) So corrigirt, die Mss चतुर्व्रत° 9) So corrigirt; die Mss त्रिषृत° 10) So corrigirt; die Mss bloss शृ° 11) Die Mss. betonen °एषा; (Bb °एरेषा 12) H u Bb वै 13) Cf den Schluss des Capitels. 14) Die Mss. यथा 15) So H u. Bb; in B निःशृणात्येव 16) In den Mss. तेन ohne Accent. 17) So corrigirt; in den Mss. सं सृष्टि° betont

वयांस्युपर्युपरि नात्यायतंस्तमिन्द्र उपर्युपर्यत्यक्रामत्तमवायत्सो ऽवेदृचिकेन[1] मेति सो ऽब्रवीत्को ऽसा इत्यहं दुर्गे हन्तेत्यथ[2] कस्त्वमसीत्यहं दुर्गादाहर्तेति सो ऽब्रवीद् दुर्गे वै हन्तावोचथा[3] अयं वराहं वामुषं एकविंशत्याः पुरां पारे ऽश्ममयीनां तस्मिन्नसुराणां वसु वाममन्तस्तं जहीति तस्येन्द्रो[4] दुंभूल्यांभ्यायत्य[5] पुरस्ताद्भित्त्वा हृदयं प्रावृश्चदेतद्वा एषाभ्यनूक्ता ॥

अतिविद्धा विथुरेणा चिदस्तास्त्रिःसप्त[6] सानु संहिता गिरीणाम्[7] ।
न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥

इति सो ऽब्रवीद् दुर्गाद्वा आहर्तावोचथा[8] एतमाहरेति तं वै विष्णुराहरद्यज्ञो वै विष्णुर्यज्ञो वै तद्यज्ञमसुरेभ्यो[9] ऽध्याहरद्यज्ञेन वै तद्यज्ञं देवा असुराणामविन्दन्तैतद्वा एषाभ्यनूक्ता ॥

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
शतं महिषान्क्षीरपाकमोदनं वराहमिन्द्र एमुषम्[10] ॥

इति तद्वै देवा यज्ञमविन्दन्यद्वै तद्यज्ञमविन्दंस्तद्देवयजनस्य[11] देवयजनत्वं यद्देवयजनमिच्छन्ति यज्ञमिच्छन्ति यद्विन्दन्ति[12] यज्ञं विन्दन्ति यद्वा वै यजमानो जोषयते तद्देवयजनं यज्ञं वा वै तद्यजमानो[13] जोषयते

---

1) H u Bb ॰चिकेर्दे 2) So corrigirt, die Mss हन्तेत्यथ, vgl aber weiter unten sowie TS 6, 2, 4, 2 3) So B nur ohne Accent, in H u Bb हन्तावोचथ; cf TS 6, 2, 4, 2 4) So corrigirt, die Mss तस्य इंद्रो 5) So die Mss, Kath 25, 2 तमिन्द्रो दर्भपुञ्जीलमभिवितृद्य पराभिनत् 6) So die Mss, vgl dagegen RV 8, 85 (96), 2 चिदस्त्रा त्रिः सप्त 7) Dies Wort in den Mss ohne Accent 8) So corrigirt, die Mss betonen चाहर्ता, cf oben 9) So corrigirt H u Bb ॰भ्यो भ्यो, B भ्यो भ्यो 10) So corrigirt, die Mss एमुख, fehlerhaft für das एमुषम् RV 8, 66 (77), 10, ख u ष sehr häufig in unsern Mss verwechselt 11) So corrigirt, in den Mss. ॰मविद॰ ohne Accent 12) H u Bb, विदंति 13) So corrigirt, die Mss यजमाना (ohne Accent)

ऽसुराणां वा इयमग्र आसीद्यावदासीनः परापश्यत्तद्देवानां ते देवाः सलावृकीमब्रुवन्यावदियं त्रिः समन्तं पर्येति तदस्माकमिति सा वा इमां त्रिः समन्तं पर्यैत्तद्वै देवा इमामविन्दन्त तद्वेद्या वेदित्वं विष्णुं वै देवा आनयन्वामनं कृत्वा यावदयं त्रिर्विक्रमते तदस्माकमिति स वा इदमेवाग्रे व्यक्रमताथेदमथादस्तद्वै देवा इह मामविन्दन्त तद्वेद्या वेदित्वं सर्वा वा इयं पृथिवी वेदिरियं[9] मेखलमिति उत्तेवास्या यजमानः परिगृह्णीते यावद्यावद्वै[10] यजमानो वेद्याः कुरुते तावत्तावत्तात्पृथिव्यां जयति तस्मान्महती कार्या ज्यायसी ज्यायसी देवाश्च वा असुराश्चास्पर्धन्त तद्यत्किंचासुराणां स्वमासीत्तद्देवा वेद्याविन्दन्त तद्वेद्या वेदित्वं तेषां यत्प्रियं वस्वासीत्तेनापाधावंस्तेन[11] चिन्मुच्यामहा इति तद्देवा उत्तरवेद्याविन्दन्त तदुत्तरं वै श्रेयो विदामहीति तदुत्तरवेद्या उत्तरवेदित्वं तद्य एवं विद्वान्वेदिं चोत्तरवेदिं च कुरुते ऽभिपूर्वमेव सपत्नस्य भ्रातृव्यस्य वसु वेदो वृङ्क्ते एति ॥ ३ ॥

Vgl TS 6,2, 4 (vedih), Kāṭh 25, 2, Kap S 39, 5.

षट्त्रिंशत्प्रक्रमाः प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन तथा विराजा संमितायो छन्दांसि वै विराट् छन्दांसि वावास्यैतद्यज्ञमुखे युनक्त्येतद्वा एषाभ्यनूक्ता ॥

---

1) In den Mss वा ohne Accent 2) In den Mss. °श्यत् ohne Accent. 3) So Bb; B सलावृकाम°, H ursprünglich सलावृकाम् geschrieben, dann in °कीम् corrigirt 4) In den Mss पर्येत् ohne Accent 5) So corrigirt; die Mss तद्वेद्या 6) So corrigirt, H u Bb ईया B येया 7) B इदमा° 8) So corrigirt; die Mss तद्वेद्या 9) So corrigirt, die Mss °रिय 10) So corrigirt, H u Bb यावद्यावद्वै, desgl B, ohne Accent. 11) So corrigirt, die Mss betonen यस्यासी° 12) So corrigirt, in den Mss ईति

इन्द्राणी पत्या सुजितं जिगायोदंशेन पतिविद्ये बिभेद ।
त्रिंशदस्या जघनं[1] योजनान्युपस्था इन्द्रं स्थविरं बिभर्ति ॥

इति यद्वाव प्राचीनप्रवणं तद्देवयजनं प्राञ्चं हि तं शयानमविदन्नथ यत्प्राचीनप्रवणमुदीचीनापनतं तद्यजेत यः कामयेतोभयोर्लोकयोर्ऋध्नुयामित्युभयोर्वा एतल्लोकयोरुभयोरेव लोकयोर्ऋध्नोत्यथ यस्य देवयजनस्योत्तरादन्यद्देवयजनं तद्यजेत यः कामयेताभि मोत्तरो यज्ञो नमेदित्येतद्वा उत्तरावन्नाम देवयजनमभ्येनमुत्तरो यज्ञो नमत्यथ यस्य देवयजनस्य मध्यतो बहुला ओषधयस्तत्पशुकामो यजेत पशवो वा ओषधयः पशुमान्भवति यत्समं प्रतिष्ठितं तद्गतश्रीर्यजेत प्रतिष्ठितं वा एतदप्रतिष्ठित एष यो गतश्रीस्तदेवैनं प्रतिष्ठापयति पापो हि स ततः प्रच्यवमानोऽथ यस्य देवयजनस्यापः पुरस्तात्तद्यजेत[3] यः कामयेताभि मोत्तरो यज्ञो नमेदित्येतद्वै पुरोहविर्नाम देवयजनमभ्येनमुत्तरो यज्ञो नमत्यथ यस्य देवयजनस्य पन्थाः पुरस्तादिरिणं वा कर्तो वा भ्रातृव्यवान्यजेतैतद्वा आर्तं[5] देवयजनं सदेवं यर्हि देवयजनाद्देवयजनमुज्झिंषेद्भ्रातृव्याय लोकमुज्झिंषेदथ[6] यस्य देवयजनस्याहवनीयादन्याः प्राचीरापो धावन्ति गार्हपत्यादन्याः प्रतीचीस्तद्यजेत[7] यं तल्पे वा पार्श्वे वा मीमांसेरन्ननुषक्तो हि वा एष पाप्मनांह्येतन्मीमांसन्त[8] एतद्वै व्यावृत्तं पाप्मना पाप्मनैवैनं व्यावर्तयन्ति यर्हि यज्ञः संतिष्ठते प्राचीनमस्य समृद्धमेति प्रतीचीनं

---

1) So meine Vermuthung, B यस्यास्तघन॰, Bb यस्या मघन॰, H यंस्या नदन॰, cf oben 2) So corrigirt, die Mss एतल्लोक॰ 3) In den Mss पुरस्तात् ohne Accent 4) So vielleicht zu lesen, s TS 6,2,6,1, H कर्तोपाद्वा॰, desgl B, ohne Accent, Bb कर्तोविद्वा 5) Die Mss चार्तं, cf TS 6,2,6,1 6) Die Mss betonen ॰मुज्झिं॰षे॰ 7) So corrigirt, die Mss schreiben प्रचीची॰ 8) So corrigirt, die Mss पाप्मना॰

र्ध्नं पशवो वै यज्ञस्य समृद्धमापः खलु वै पशवो यत्प्रत्यङ्ङवभृथमभ्यवेयाद्यज्ञस्य व्यृध्येन व्यृध्येताथ यत्प्राङवभृथमभ्यवैति यज्ञस्य वा एतत्समृध्येन समृध्यते यत् उन्नतं तद्भ्रातृव्यवान्यजेत यस्याहवनीयं च हविर्धानं चान्तरोन्नतं यस्य हविर्धानं च सदश्चान्तरोन्नतं यस्य सदश्च गार्हपत्यं चान्तरोन्नतमतो वै विष्णुरिमांल्लोकानुदजयद्विष्णोरेवोज्जितमन्विमांल्लोकानुज्जयति[1] एभ्यो[2] लोकेभ्यो भ्रातृव्यं नुदतेऽथ यस्य देवयजनस्य दक्षिणत उन्नतं तद्भ्रातृव्यवान्यजेतैतां वै दिशं देवा असुरान्प्रणुद्य स्वर्गं लोकमायंस्तेभ्यो ऽमुमादित्यं परिधिं पर्यदधुरपुनराभावायैतां वा एतर्हि दिशं यजमानो भ्रातृव्यं प्रणुद्य स्वर्गं लोकमेत्यथास्मा अमुमादित्यं परिधिं परिदधात्यपुनराभावाय स्थले यजेत यः कामयेतोभयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति प्रकाशो वै नामैतद्देवयजनमुभयेषां देवमनुष्याणां प्रकाशं गच्छत्यभिशस्यमानं याजयेत्परोक्षं गुहा वने परोक्षं मृष्टान्यपेयुः परोक्षं वा एष एनमभिशंसन्ति परोक्षमेवास्माद्गुहा पापीयां[5] वाचं करोत्यथ यस्य होता प्रातरनुवाकमनुब्रुवन्नभिमपः सूर्यं[6] तानि पश्येत्तं ब्रह्मवर्चसकामो यजेत ब्रह्मवर्चसं वा अग्निर्ब्रह्मवर्चसमापो ब्रह्मवर्चसमसावादित्यो ब्रह्मवर्चसमेव संदधाति ब्रह्मवर्चसी भवत्यथ यस्य देवयजनस्यान्या अन्या मध्यतो बहुला ओषधयोऽतो वा अङ्गिरसः पशूनसृजन्त तत्पशुकामो यजेताथ यस्य देवयजनस्य मध्यत उन्नतमतो वा अङ्गिरसः स्वर्गं लोकमायंस्तत्स्वर्गकामो यजेत निर्वेष्के[8]

1) So H u. Bb, in B °रेवोज्जितम° 2) Die Mss °भ्यो 3) So corrigirt, alle Mss °पुरस्ता° 4) Von hier bis zum folgenden प्रकाशं in H u. Bb fehlend; die Accente mussten daher ergänzt werden 5) Wohl पापीयांसं zu lesen? 6) Die Mss. सूर्यं 7) So corrigirt, in allen Mss तत् ohne Accent 8) So B, aber ohne Accent; H निर्वेस्के; Bb निर्वेष्के

ऽभिचरन्यजेत यथैवैतं निर्ऋयत्येवं तं निर्ऋयति यमभिचरति यत्कार्यमिव स्यात्तद्यजेत यः कार्य इव स्यादात्मा वै देवयजनं करोत्येवैनं ये युवान आर्षेया ऋत्विजो बहूयस्तद्देवयजनं तस्मादाहुर्युवैवार्त्विजीना[1] इत्ये-मिर्वाव देवयजनं तद्ध एवं विद्वान्यत्रैव स्रुचामिमामाधाय यजते देव-यजन एव यजते ॥ ४ ॥

Vgl. TS 6, 2, 4 (vedih) u 6 (kâmyâ yâgabhûmih), Kâṭh 25, 3; Kap S 39, 6

यद्वा अस्यां यज्ञियं मेध्यं यत्सदेवं तदुत्क्रम्यातिष्ठदन्तरा देवासुरान्त्संयतान्त्सिंहीरूपमिव भूत्वा ते ऽविदुर्यतरान्वा इयमुपावर्त्स्यति[2] ते इदं भविष्यन्तीति तस्यां वा उभय ऐच्छन्त सा नान्यतरांश्चनोपावर्तत तां देवा अपाशासुरुप ना आवर्तस्वेति साब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्त्साब्रवीन्मामेव पूर्वामग्नेर्व्याघारयासै[3] यत्कामो[4] मां व्याघारयासमेव[5] स कामममश्नुवदिति[6] तां देवाः पूर्वामग्नेर्व्याघारयंस्ततो[7] देवा अभवन्परासुरास्तद्य एवं विद्वानितो[8] पूर्वामग्नेर्व्याघारयति भवत्यात्मना परास्य भ्रातृव्यो भवति यद्वै तदुत्क्रम्यातिष्ठदन्तरा देवासुरान्त्संयतान्त्सिंहीरूपमिव[10, 11] भूत्वा सा वा उत्तरवेदिस्तमायनी मे ऽसीति तमा हि ते तामविन्दन्विन्नायनी मे ऽसीति विन्ना हि ते तामविन्दन्तावतान्मा[12] नाथितमिति नाथिता हि सा तानावदवतान्मा व्यथितमिति व्यथिता हि सा तानावदेतद्देतद्वा एतया देवा असुराणामविन्दन्तैतदेतदेवैतया यज-

---

1) H u Bb °वार्त्वीजीना 2) So corrigirt, H u Bb ईयमपावर्त्स्येती, B ईयमपावर्त्स्यीति 3) B °चे व्या°, vgl unten 4) So corrigirt, die Mss यत्कामो 5) B तमेव 6) So corrigirt, die Mss कामम° ohne Accent 7) H u Bb °र्ये व्या° 8) So corrigirt, die Mss °नेता 9) B bloss यता 10) So corrigirt, H देवासुरान्सं°यत्ता°सि°, Bb देवासुरांस्सं°यता°न्सि°, B दिवासुरान्सं°यत्ता°न्सि° 11) So corrigirt, die Mss °मिव 12) So corrigirt, die Mss °वतान्म, s 1, 2, 8

मानो भ्रातृव्यस्य वृङ्क्ते ऽग्ने अङ्गिरो ३यो ऽस्यां पृथिव्यामध्यसीति य एवैषु त्रिषु लोकेष्वयंयस्तानेवावरुन्द्धे विदेरसे नभो नाम यत्ता इति नभो हि नाम ३सो ऽग्निरासीज्जानुदघ्नं खेयमेतावती वा अस्याः पृथिव्या जीवं[6] यज्ञियं तदेवावरुन्द्धे सिंहीरसि महिषीरसीति सिंहीरूपमिव हि तन्महिषीरूपमिव भूत्वातिष्ठद्देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेति देवेभ्य एवैनां[7] शुन्धन्ति देवेभ्यः शुम्भन्ति[8] निःसारयति यद्देवास्या उद्दृंहन्तः[9] क्रूरमक्रंस्तदक्रूरमकस्तन्निःसारयतीन्द्रघोषास्त्वा[10] पुरस्ताद्वसुभिः पान्त्वित्येतद्वै वऽत्या वा इमा दिशो यथादेवतमेवैनां प्रौक्षीदेतो वै देवा असुरान्मनसा विनुद्य स्वर्गं लोकमायंस्त एता देवता अन्ततो ऽदधतासुराणामनन्वभावायैतो[11] वा एतद्यजमानो भ्रातृव्यं मनसा विनुद्य स्वर्गं लोकमेति स एता देवता अन्ततो धत्ते भ्रातृव्यस्यानन्वभावाय[12] ते ऽकामयन्त सपत्नं भ्रातृव्यं सहेमहीति सिंहीरसि सपत्नसाही स्वाहेति तमेव तेन काममाप्नुवत सपत्नं भ्रातृव्यं साढ्वा ते ऽकामयन्त पशवो नः[13] स्युरिति सिंहीरसि रायस्पोषवनिः स्वाहेति तमेव तेन काममाप्नुवत सपत्नं भ्रातृव्यं साढ्वा पशूभिस्त्वा ते ऽकामयन्त प्रजा नः[14] स्यादिति सिंहीरसि सुप्रजावनिः स्वाहेति तमेव तेन काममाप्नुवत सिंहीरस्यादित्यवनिः सजातवनिः स्वाहेत्यादित्याभिर्हि सा प्रजाभिः सह ते[15] ऽकाम-

1) So corrigirt, die Mss सै, s 1, 2, 3 2) So corrigirt, die Mss अपिरो, s 1, 2, 3 3) So corrigirt, in den Mss नभो ohne Accent, s aber 1, 2, 3 4) So corrigirt, H u. Bb °द्घ्नं, desgl. B ohne Accent 5) wohl in °तावद् zu corrigiren 6) B जीव° 7) So Bb, H शुंधति, B शुधति 8) So corrigirt; die Mss शुभति 9) So corrigirt, H u. Bb उद्दृंहन, B उद्दृंहत 10) In den Mss °मक° ohne Accent 11) So meine Vermuthung, die Mss °मनन्वभावायातो 12) So meine Vermuthung, die Mss °स्यानन्वभावाय 13) Die Mss म 14) So corrigirt, die Mss मे 15) So corrigirt, Bb सहंते oder सहंत्तु, H wahrscheinlich ebenso, vielleicht संहेति oder सहेंत्तु, B सहेत्ते

यन्न देवानो यज्ञं विद्युरिति सिंहीरस्यावह देवान्देवायते यजमानाय स्वाहेति तमेवं तेन काममाश्नुवत भूतेभ्यस्त्वेत्युद्दिशति देवा३ह्येवं भूतां यच वा अ३दोऽग्निर्होत्रादपाक्रामत्स सर्वेषु भूतेष्ववसद्यां पशुष्वंवसत्तामनाछिन्नत्सुकस्यान्तराशृङ्गमवसद्यां वनस्पतिषु पूतुद्रौ यामोषधीषु तां सुगन्धितेजने यत्संभारांत्संभरति यद्देवा चार्येन्यूक्तं तत्संभरति यानि वा अ३दो ऽग्निरस्यान्यधूनुत स पूतुद्रुरभवद्यन्मांसं तद्गुग्गुलु यत्पूयितं सुपष्ठिर स सुगन्धितेजनो यदेते संभारा भवन्ति यद्देवाचार्येन्यूक्तं तस्यावरुद्ध्यै विश्वायुरसि पृथिवीं दृंहेत्येषां वा एते लोकानां विधृत्यै परिधीयन्ते ध्रुवक्षितिरस्यन्तरिक्षं दृंहेत्यन्तरिक्षं हि यज्ञो[10] ऽच्युतक्षिदसि दिवं दृंहेति दिवमेवैनमजीगमदग्नेर्भस्मास्यग्नेः[11] पुरीषमसीत्यग्ने३र्ह्येतद्भस्माग्नेः पुरीषं देवपात्रं वा उत्तरवेदिं देवेभ्यो देवपात्रं प्रोच्य वैभ्राजा देवा यदाह विभ्राड् बृहत्पिबतु सोम्यं मध्विति देवेभ्यो वा एतद्देवपात्रं प्राह प्र वसीयसः पापमाप्नोति ब्राह्मणं तु पात्रे न मीमांसेत यः पापिय इव स्यात्[12] ॥ ५ ॥

Vgl 1, 2, 8 — TS 6, 2, 7 (vedir uttara) u 8 (vyāghāraṇam), Kāth 25, 6, Kap S 39, 2—4

एतावती वा इयं पृथिवी यावती वेदिरपरिमिताद्यां[13] एतद्भ्रातृव्यं निर्भज्य यजमानाय परिगृह्णात्यृक्षं[14] वा अमेध्यमापो हविर्यत्प्रो-

1) Die Mss विद्यु॰ 2) So corrigirt, in den Mss वा॰ ohne Accent 3) So corrigirt, H u Bb वनस्पतीषु, desgl B, ohne Accent 4) So corrigirt, H u Bb पुतुद्रौ, desgl B, ohne Accent, cf unten, Kath [illegible] 6 या द्वितीया सा वनस्पतिषु पोतुद्रारौ तस्मात्पोतुद्रारुर्भवति 5) So corrigirt, die Mss सभारांत्स॰ 6) Bb betont यत्र 7) So meine Vermuthung, die Mss पुतुद्रुरभवद्॰ 8) So corrigirt, die Mss पत्य॰ 9) So corrigirt, die Mss ॰स्यात॰ 10) So corrigirt, die Mss betonen यज्ञो 11) So meine Vermuthung die Mss ॰मजीमद्॰ 12) So corrigirt, in den Mss trägt dieses Wort den Svarita 13) So corrigirt, die Mss वेदि॰ 14) So corrigirt, H ॰क्षुर्षं॰, desgl B, ohne Accent, Bb betont ॰क्षुर्षं॰ oder क्षुर्ष॰

क्षंति मेध्यमेवैनत्करोत्यमृक्षं वा अमेध्यं यद्बर्हिः स्तृणाति मेध्यामेवैनां करोत्येतावती वा इयं पृथिवी यावती वेदिः प्रजा बर्हिर्यद्बर्हिः स्तृणात्यस्या वा एतत्प्रजाः प्रतिष्ठापयति यजमानो वै प्रस्तरः प्रजा बर्हिर्यत्प्रस्तरमुत्तरं बर्हिषः सादयति यजमान वा एतदुपरिष्टादासां प्रजानां दधात्यथ यत्तृणे अन्तर्दधाति तेन यजमानो यजमानेन व्यावर्तते बहुलं बर्हिः स्तृणात्यक्षोधुका अस्य पशवो भवन्ति प्राचीनं बर्हिः स्तृणाति प्राङ् हि यज्ञो यत्प्रतीचीन स्तृणीयात्प्रत्यादाज्यास्य राष्ट्रं घातुक स्याद् देवेषुर्वै वेदिर्यैव वै देवेभ्यां संनतया कामयते तद्धन्ति यद्वेदिं कल्पयति देवेषुं[7] वा एतत्संनमति[8] तया संनतया[9] यत्र यजमानः कामयते तद्धन्ति चयो वै पूर्वे ऽग्नयः प्राधन्वन्हव्यं देवेभ्यो वहन्तो वषट्कारः प्रावृश्चदेष उयो ऽयमिदानी स भीषापाद्रवदीद्गु[10] स आरिष्यतीति तं देवा अपायासुह्व[11] ना आवर्तस्वेति सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्त्सो ऽब्रवीत्त्रयो वै मे पूर्वे भ्रातरः प्राधन्वन्हव्यं[12] देवेभ्यो वहन्तो वषट्कारः प्रावृश्चत्तेषां भाऽगो ऽस्त्विति वृणीष्वेत्यब्रुवन्त्सो ऽब्रवीद्यदेव किंचाहुतं बहिष्परिधि[13] स्कन्देत्तदेवं[14] तेषां भागधेयमसदिति[15] तेपा वा एतद्भागधेयमस्यन्वन्तो हिं वै तं आसतेम तें प्राधन्वन्त्सो ऽब्रवीदस्यानि नु धविष्ये ऽथोपावत्स्यामीति तें वा अन्वायत्तिं समस्तं पर्यविशन्य-

1) So corrigirt, die Mss °लृमृघं° 2) So corrigirt, die Mss यमेध्यं° 3) So corrigirt, in den Mss °मुत्तर ohne Accent. 4) In den Mss हि ohne Accent 5) So die Mss ! 6) Die Mss schreiben सततया 7) So meine Correctur; die Mss देवेषु 8) Die Mss सतमति 9) Dies Wort fehlt in B, H u Bb सततया 10) So mein Versuch zu corrigiren, die Mss schreiben ganz unverständlich भीषापाद्रवदीद्गु 11) So B, ohne Accent, in H u Bb अपायासुह्व 12) So corrigirt, die Mss. प्रधन्व 13) Die Mss. बर्हिष्परिधि, vgl aber weiter unten 14) So corrigirt in den Mss स्कन्देत् unbetont. 15) So corrigirt, die Mss °मसदिति

ज्ञस्य गोपीथायायं वाव यज्ञायोपधीयते ऽयं यजमानायायं भ्रातृव्यायेमौ प्रतरं करोतीममपतरं[1] यज्ञेन वा एतद्यजमानं प्रतरं करोति यज्ञेनास्य भ्रातृव्यमपतरं करोति संधिं प्रतिजुहोति न ३ह्यमिमाहुतिस्तरति[2] मुखत एवैनाम्रीणात्यथो सुतीर्थेन वा एतदाहुतीस्तारयत्ययं वाव भूपतिरयं भुवनपतिरयं भूतानां पतिरय ३यो ऽयमिदानीं स भूतिर्यदाहुतं बहिष्परिधि स्कन्देत्तदभिमन्त्रयेत ॥ भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा ॥ इति भागधेयं वावैषामेतत्प्रीणात्यथैवैनानथो हविषा वा एतत्स्कन्नेन द्वितीयामाशिषमवरुन्द्ध एतद्ध स्म वा आहारुणिरौपवेशिः किमु स यज्ञेन यजेत यो हविषा स्कन्नेन द्वितीयामाशिषमवरुन्धं न विद्यादिति तद्द्वितीयामेवैतेनाशिषमवरुन्द्धे ॥ ६ ॥

Vgl Kāṭh 25, 7, Āp Ś 30, 2 u 5

ये पुरा यन्त्ययो भवन्ति तान्विस्रंसयन्ति मानुषस्य व्यावृत्त्यै प्रणेनिजति[5] यदेवैनयोरभिनिषण्णं[6] शमलममेध्यं तच्छुन्धन्ति युञ्जते मन उत युञ्जते धिया इति जुहोति युक्त्वा एव सावित्र्या[7] जुहोति सवितृप्रसूते एव प्रवर्तेते हविर्वै हविर्धाने यदुपानक्ति हविर्भूत एव प्रवर्तेते अयो अभिवृत्ते एव पत्न्युपानक्ति यद्वै पत्नी यज्ञे करोति तन्मिथुनं मिथुनत्वाय वै पत्न्युपानक्त्यथो वै पत्न्या यज्ञस्यान्वारम्भो यद्यज्ञे करोत्यन्वारम्भाय वै पत्न्युपानक्ति प्राचीनमुपानक्ति प्राङ् हि यज्ञ-

---

1) So corrigirt, die Mss °ममतर°  2) So H = Bb, in B °हुतीस्तरति  3) So corrigirt, die Mss schwanken, H u Bb स्रुदे°, M एनदे°  4) So corrigirt, die Mss स्कन्नेत  5) So meine Vermuthung (cf Pa. 6 1 5 Sch.), die Mss प्राणनिजति, Kāṭh 25, M हविर्धाने प्रणेनेक्ति  6) So corrigirt, H u Bb °भिनिषष°, M भिनिषण्ण°  7) So corrigirt, die Mss सावित्र्या

स्त्रिरन्यं त्रिरन्यं यदुपानक्त्यपरिमितं हि मनुष्या उपाञ्जन्ति' दक्षिणतं उपानक्त्युदीची उद्धोतें मनुष्यलोकमुपावर्तन्ते' निर्ऋतिगृहीतो वां एष उभयतः संदष्टः शुष्कौ[1]' यदुपानक्ति शमयत्येवं शुष्कौ[2] वा एष दुर्वाग्यजमानस्य गृहमावदति' सं ईश्वरो ऽशान्तो यजमानं[3] हिंसितोस्तदनुगृह्णन्तो[4] यन्ति' यद्युक्त्वैतदेसुवागावद' देव दुर्योनिति वदेऽशमयत्येवाथो[5] शमयित्वैवाशिषमाशास्ते[6]' हविर्वै हविर्धाने' स्तीर्णे वै बर्हिषि हविरासादयन्ति' तस्मात्प्रस्तरं स्तीर्णे प्रवर्तयन्ति' हविर्वै हविर्धाने' अनूच्यमानासु वै सामिधेनीषु हविरासादयन्ति' तस्मात्प्रवर्त्यमानयोर्होतान्वाहे[7]' मे वा एते' इमे वा एतत्प्रवर्तयन्ति यद्धविर्धाने' तस्मात्पूर्वस्या जनताया अपरा जनता[8] क्षेममभ्यारोहुका' तं यर्हि प्रवर्तयेयुस्तर्हि होतानुब्रुवन्मनसा पदा तां[9] जनतां प्रतिनुदेदपजन्यं भयं नुदेति' विड्वा[10] एषा' विशं वा एतत्प्रतिनुदते ऽनभ्यवचारुकास्य[11] विट् क्षेमं भवति' नीयानं[12] वै रक्षांसि यज्ञमवयन्ति' यद्वर्त्मनि जुहोति रक्षसामपहत्यै' वैष्णव्या जुहोति' विष्णुर्वै यज्ञो' विष्णुनैव यज्ञेन यज्ञाद्रक्षांस्यपहन्ति[13]' यद्गायत्र्या जुहोतीमां तेनाक्रमते[14]' यत्त्रिष्टुभान्तरिक्षं तेनाथ यदाहवनीयं गच्छतः स्वर्गं तेन लोकं' त्रीन्प्रक्रमान्प्रतिविक्रमते' त्रयो वा इमे लोकाः' इमानेव लोकान्यजमानायाभिजयति' वैष्णवमसि' विष्णुस्त्वोत्तभ्नात्विति' वैष्णवं हि हविर्धाने' दिवो विष्णा[15] उत वा पृथिव्या' इति दक्षिणस्य हविर्धानस्य

1) So meine Correctur, die Mss शुष्को 2) So meine Correctur; die Mss शुष्को 3) So corrigirt, die Mss यजम॰ 4) Die Mss हिं॰सो॰ 5) So corrigirt, die Mss यद्युक्तैदे॰ 6) So corrigirt, die Mss ॰वाशिषम॰ 7) Die Mss ॰र्होतान्वाहेमे 8) So corrigirt, die Mss जनता 9) In den Mss ता ohne Accent 10) Die Mss विड्वा 11) So corrigirt, die Mss betonen ॰दते ऽनभ्यवचारुकास्य 12) So die Mss. 13) Die Mss यज्ञाद्रक्षां॰ 14) Die Mss तेनाक्रमते 15) Bb विष्णा cf 1, 2, 9

मेथीर्निहन्ति मुखत एव यज्ञस्याशिषमवरुन्द्धे यमध्वर्युः प्रथमं ग्रन्थिं ग्रथ्नाति तं प्रथमं विस्रंसयति यदन्यं पूर्वं विस्रंसयेत्प्रमेहेन प्रमीयेत विष्णोर्नु कं वीर्याणि प्रवोचमित्युत्तरस्य हविर्धानस्य मेथीर्निहन्ति वैष्णव्या वैष्णवं हि हविर्धानं स्वयैवं देवतया यो अस्कभायदुत्तरं सधस्थमित्यदो वा उत्तरं[1] सधस्थममुष्मिन्नेव हविर्धानं संमिनोति ॥

आ वामुपस्थमद्रुहा देवाः सीदन्तु[2] यज्ञियाः ।
इहाद्य सोमपीतये ॥

इति य एव देवा यज्ञियास्तान्हविर्धाना आसादयति तां म्वो भू३तै ऽभियजते[3] दण्डो वा एतदीपरो वषट्कारेण निरहन्यच्छदिरभिनिदधात्यपिहित्या[4] अच्छिद्रत्वाय विष्णोः पृष्ठमसीत्यद एव विष्णो रराटमसीत्यद एव विष्णोः श्नप्त्रे स्था इतीमे एव मुखतो वा एतत्स्वया देवतया शिरो यज्ञस्य संभरति विष्णोः स्यूरसीति[5] तस्मादिदं शिरः पोटाविष्कृतं प्र तद्विष्णुः स्तवते वी३र्येणेति प्राङुत्क्रम्य वदत्येतो वै विष्णुरिमांल्लोकानुदजयद्विष्णोरेवोज्जितिमन्विमांल्लोकानुज्जयति[6] एभ्यो लोकेभ्यो भ्रातृव्यं नुदते ॥ ७ ॥

Vgl. 1, 2, 9 — TS 6, 2, 9 (havirdhânam), Kâṭh 25, 8; Kap. S 40, 1.

देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनामादत्ते[7] ऽश्विनोर्बाहुभ्यामित्यश्विनौ वै देवानामध्वर्यू[8] पूष्णो हस्ताभ्यामिति देवताभिरेवाभिरसि नारिरसीति क्रूरमिव वा एतद्यदभ्रिः शमय-

---

1) उत्तर॰ in den Mss. ohne Accent 2) Die Mss betonen सीदन्तु; cf. RV 2, 41, 21. 3) So corrigirt, die Mss मियजते 4) Die Mss दंश्छदि° 5) So corrigirt; die Mss स्तुर°, cf aber 1, 2, 9 6) So corrigirt; die Mss. °मुंदजयति एभ्यो 7) H u Bb °मादयते 8) So die Mss, vgl unten 3, 9, 6

त्येवेदमहं[1] रक्षसो ग्रीवा अपिकृन्तामीत्याह रक्षसां धृत्यै रक्षसामन्तरित्या इदमहं सोमे समानो यो ऽसमानो ऽरातीयति[2] तस्य ग्रीवा अपिकृन्तामीति समानो वा ह्यसमानो वारातीयति[3] सर्वमेवैतया पर्यापत्प्राणा वा उपरवाः शिरो हविर्धानं शीर्षन्वा इमे प्राणास्तस्माद्धविर्धाने ऽन्तर्वा इमे शीर्षन्प्राणास्तस्मादन्तश्चत्वारो वा इमे शीर्षन्प्राणास्तस्माच्चत्वारः संतृणाः[4] परः संतृणा[5] हि परः प्राणा विधृता उपरिष्टाद्विधृता ह्य्ऽमि उपरिष्टात्प्राणाः पूर्वार्धे वा इमे मुखस्य[6] प्राणा[7] एतत्खलु वै हविर्धानस्य पूर्वार्धं यद्दक्षिणं हविर्धानं तस्माद्दक्षिणे हविर्धाने बृहन्नसि बृहद्ग्रावा[8] इति देवा ह्येवं[9] बृहद्बृहतीमिन्द्राय वाचं वदेत्यैन्द्री[10] हि यज्ञो रक्षोहणं वलगहनमित्याह रक्षसां धृत्यै रक्षसामन्तरित्यै वैष्णवीमिति विष्णुर्हि यज्ञो ऽसुरा वा एतान्वलगान्देवेभ्यः प्राणेषु न्यखनंस्तान्बाहुमात्रे ऽन्वविन्दंस्तस्माद्बाहुमात्रं खेयं यद्वाव कृत्यां यज्ञपर्षं यदभिचरति तदेतदुद्वपति प्राणा वा उपरवा यदवसिञ्चति तस्मादिमे उदन्वन्तः प्राणाः प्राणा वा उपरवा यदवस्तृणाति तस्मादिमे लोमशाः प्राणा अथ यदवसिञ्चत्यथ च स्तृणाति मस्तिष्को[11] वा एष क्रियते हनू अधिषवणे शिरो हविर्धानं शीर्षन्वा इमे हनू तस्माद्धविर्धाने ऽन्तर्वा[12] इमे शीर्षन्हनू तस्मादन्तरिमे वा एते यत्संतृन्द्यादिमे एवं संतृन्द्यात्तस-

---

1) So corrigirt, die Mss betonen °त्येवेदं° 2) So corrigirt; Bb रातीयती, desgl B, ohne Accent, H रातीपती 3) So corrigirt, H u Bb रातीपती, B रामीयती 4) So corrigirt, die Mss संवृणा, cf Çat Br 3, 5, 4, 14 5) So corrigirt; die Mss संवृणा 6) B मुखस्य 7) In den Mss प्राण ohne Accent 8) cf 1, 2, 10 9) So meine Correctur, die Mss bloss ह्य 10) So meine Correctur, die Mss यदैन्द्री 11) Die Mss. schreiben मस्तिष्को 12) In den Mss वा ohne Accent

पांद्ये एवं अङ्गुलमन्तरां कार्यं अङ्गुलं ऽहीदमन्तरां वै नाकेव[1] शिरो हविर्धानं पृष्ठमाग्नीध्रमुदरं सदः प्राङ् हि यज्ञः संहितो हनू अधिषवणे जिह्वाधिषवणं ग्रावाणो दन्ता मुखतो वा एतत्प्रजापतेः सोमं पिबन्तीन्द्रो वै वृत्रमहन्स इमां प्राविशत्तं देवताः[3] प्रैषमैच्छंस्तन्नाविदंस्ते भूतान्युपारवन्त यो नो ऽधिपतिरभूत्तं विन्दामा इति तदुपरवाणामुपरवत्वं यत्तदुपारवन्त[4] तच्चतुर्धावस्ता-देवैच्छन्नेकधा[6] परो ऽन्वविन्दंस्तस्माच्चतुर्धावस्तादेकधा परो यदुपरवाननुमृशतीन्द्रियस्यावरुद्ध्यै ॥ ८ ॥

Vgl 1 2, 10 — TS 6, 2, 10 (sadah) u 11 (uparav3h), Kath 25, 9, Kap S 40, 2

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति प्रोक्षत्येषां लोकानां विधृत्यै मीयते त्रिः प्रोक्षति त्रिषत्या हि देवा ऽथो त्रयो वा इमे लोका एभ्य एवैनां लोकेभ्यः प्रोक्षीदन्नं वै यवा ऽङ्गुदुम्बरो यद्यवमतीभिः प्रोक्षत्यूर्जो वा एतदन्नं समर्धयत्यूर्ग्वा अमेध्यमापो हविर्यदवसिञ्चति मेध्यमेवैनत्करोत्यूर्ग्वा अमेध्यं यदवस्तृणाति मेध्यमेवैनत्करोति पितृदेवत्यं वै निखातममेध्यमन्यदेवत्यमस्याः[7] खलु वा इमा उत्तमार्धे[8] ओषधयो यदवस्तृणात्यस्या एवैनामुत्तमार्धे मिनोत्यनिखातेवाभूदन्नं वै यवा ऽङ्गुदुम्बरो यद्यवमवास्यत्यन्ने वा एतदूर्जं दधाति न ह्यवमृत ऊर्जो धिनोति नो धूर्गृते[9]

---

1) So die Mss, Kath 25, 9 अङ्गुलमन्तराधिषवणे भवति तस्माद्धिचमन्तरा हनू रास्नाविव, Kap S 40, 2 तस्माद्दिद्मन्तराखिके च oder °खिके च    2) Die Mss °हस्त
3) Die Mss देवाता    4) Die Mss °रवत auch Bb eigentlich so, dann corrigirt in °रपत    5) H तचतु°, Bb eigentlich ebenso dann corrigirt in तच्चतु°, B त चतु°
6) So meine Correctur, H u Bb मैच्छन्नेषा° B सोचल्लेषा°    7) Die Mss °मन्यदेवत्यम°    8) So B, ohne Accent, in H u Bb °मार्धे    9) So meine Correctur, H u Bb धूर्धूते, B धूर्धृते

ऽन्नाद्भिनोति नितानस्त्वा मारुतो निहन्त्विति मनो वै नितानः प्राणा मारुता मित्रावरुणौ ध्रुवेण धर्मणेति मित्रमेवैनां दाधार वरुणः कल्पयति विधृत्यै च खलु वा एषां प्रजानां कॢप्त्यै च मीयते मित्रावरुणौ वै देवानां धर्मधारयौ[1] दैव[2] वा एतद्धर्ममदीधरता[3] यदौदुम्बरी ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामीत्याशीरेवैषा ब्रह्म ह[4]ह क्षत्रं ह[4]हेत्याशिष एवैष[5] परिग्रहो घृतेन द्यावापृथिवी आपृणेति घृतेनैव द्यावापृथिवी ध्रुवनत्युदर[6] वै सदा ऊर्गुदुम्बरो यदौदुम्बर्यूर्जे[7] वा एतन्मध्यत आत्मनो धत्ते प्रजानां च प्रजापतेर्वा एतदुदर[8] यत्सदः प्राजापत्य उद्गाता तस्मादुद्गातान्वारभते यजमानो वा औदुम्बरी वर्षिष्ठा काश्यां वर्ष्मेन[9] समानानां गमयति विश्वजनस्य छायासीति छदिरभिनिदधाति गोधाभ्यो धाहि प्रसर्पन्त्युदर[6] वै सदो यदन्येनान्येन संमिनोति तस्मादुदरमन्येनान्येनामेन संततं उदर[6] वै सदो यदनूचीनं मिनुयात्पराचीनं जग्धमतीयादथ यत्तिरश्चीनं मिनोति तस्माज्जग्ध[8] सर्वाण्यङ्गान्यनुवेति प्रजा वा एतत्समीचीनं मिनोति समीचीरेनं प्रजा अभिसमावर्तन्ते सत्यात इव स भवति समानं[9] सांकाशिनं[10] कार्यं[9] समानां ऽहोमे प्राणा ये द्विष्यात्तस्याक्ष्णया मिनुयात्प्राणानस्य मोहयति प्रमायुको भवति यदि कामयेत[11] वर्षेत्पर्जन्य इति नीचैः सदो[12] मिनुयाद्वृष्टिमेव नियच्छति

1) So meine Vermuthung, die Mss schreiben धर्मधारयौ, cf Pa 3, 1, 138 2) So B, aber ohne Accent, H u Bb दैव॰ 3) So H u Bb, in B ॰वरी 4) So corrigirt, die Mss ह्व॰हेत्य॰ 5) So corrigirt, die Mss एवैष 6) So die Mss 7) So B, ohne Accent, H u Bb ॰वामेन dürfte hierin das von einigen Grammatikern überlieferte घम oder ग्राम „krankheit" stecken? 8) So corrigirt, die Mss जग्धम॰, vgl das Folgende 9) So corrigirt, die Mss च 10) So H u Bb, in B साकाशिम 11) B कामयते 12) Von hier bis zum folgenden सदो in H u Bb fehlend, die Accente mussten daher ergänzt werden

यदि कामयेत न वर्षेत्पर्जन्य इत्युच्चैः[1] सदो मिनुयाद् वृष्टिमेवापायहीन्नवच्छदिरग्निष्टोमे स्यात्त्रिवृता संमितं पञ्चदशच्छदिरुक्थ्ये[2] पञ्चदशेन वज्रेण संमितꣳ सप्तदशच्छदिरतिरात्रे सप्तदशो वै प्रजापतिः प्राजापत्या रात्रिरानुष्टुभो यज्ञक्रतूनामेवैषां व्यावृत्तिः प्राचीनवꣳशꣳ हविर्धानं मिनोत्यूर्ध्वा हि द्यौः प्राचीनवꣳशमाग्नीध्रमूर्ध्वꣳ ३ह्यन्तरिक्षं[3] तिरश्चीनवꣳशꣳ सदस्तिरश्ची[4] ३हीयꣳ यजुषा हविर्धानं मिनोति निरुक्ता हि द्यौर्यजुषा सदो निरुक्ता ३हीयमयजुषाग्नीध्रमनिरुक्तमिव ३ह्यन्तरिक्षमर्धमाग्नीध्रस्यान्तर्वेदि मिनोत्यर्धं बहिर्वेद्यर्धꣳ ३ह्यन्तरिक्षस्यास्मिंल्लोकेऽर्धममुष्मिन् ॥ ९ ॥

Vgl 1, 2, 11 — TS 6, 2 11 (sparavah), Kath 25, 10, Kap 40 3.

सुवाङ्भ्राडङ्घारे[6] बम्भारा इत्येते वै देवानाꣳ सोमरक्षय एतेभ्यो वा अधि छन्दाꣳसि सोममाहरꣳस्ते सोमपीथेन व्यार्ध्यन्त त एतानि द्वितीयानि नामान्यधत्तमङ्गलेष्ठाये[7] सोमपीथो[8] ना उपनमादिति[9] तस्मादेते द्विनामानस्ते वा अन्वायꣳस्ते न प्राभुवꣳस्तस्मादेतेऽतिहाय वषट्क्रियन्ते[10] न हि प्राभुवꣳस्तेषाꣳ वा एष लोको यावदभि न्युप्यते तद्यो ऽविद्वानाक्रामत्यार्तिमार्छत्यथ य एवं विद्वानाक्रामति न सदऽस्यामार्तिमार्छति तेषाꣳ वा एष भागो यद्धाधार्यन्ते त एवास्मै[11] तेनाभीष्टाः प्रीता भवन्ति यज्ञमुखꣳ वै पवमानो यत्पवमाने

1) So meine Correctur, die einzige Hdschr in welcher sich diese Partie findet, B, liest इति नीचैः सदः cf Kath 25 10 यदि कामयेत न वर्षे दित्युच्चैरिव हि दीरवर्षिष्यन्तो भवन्ति 2) So H ohne Accent, in H u Bb °रुक्थ्ये 3) B °न्तरिचे 4) So corrigirt, in den Mss तिरश्ची ohne Accent 5) Die ३ vor ह्यतं° fehlt in den Mss 6) So corrigirt, die Mss सुवाड् भ्राडघारे, s 1, 2, 5, 3, 7 7 7) Mir ganz unverständlich so Bb, in H °धत्तमगलेष्ठाये H धत्तमगष्ठाये 8) So corrigirt, die Mss सोमपीथो 9) So H ohne Accent, H u Bb उपमा° 10) So corrigirt, die Mss क्रीयन्ते 11) H u Bb एवास्मै

स्तुवते ऽग्नयो विह्रियन्ते यज्ञमुखादेवाधिविह्रियन्ते जम्भो वै नामासुर आसीत्स यज्ञमगिरत्स आग्नीध्रं न प्राप्नोत्तमाग्नीध्रात्पुनर्व्यूहज्देत्तं ह्वै जीवं तस्मादाग्नीध्राद्विह्रियन्ते दक्षिणतो वै देवानसुरा यज्ञमजयंस्तं उदञ्चा आग्नीध्रं समातिष्ठंस्तमाग्नीध्रात्पुनरभ्युजयन्नेतद्वा अनभिजितं तस्मादाग्नीध्राद्विह्रियन्त एतत्प्रति वै देवानसुरा यज्ञमजयंस्त आग्नीध्रादधि बहिष्पवमानेन यज्ञमभिजित्याग्नीनाधाय बर्हिरस्तृणत पराजिह्नाना वा एतत्सर्पन्ति यद्बहिष्पवमानं स्तोष्यन्तः सर्पन्ति यद्बहिष्पवमाने स्तुत आह ॥ अग्नीदग्नीन्विहर बर्हिः स्तृणाति ॥ इत्याग्नीध्राद्वा एतदधि बहिष्पवमानेन यज्ञमभिजित्याग्नीनाधाय बर्हिः स्तृणते ऽच वा एतर्हि यज्ञो यद्वास्तुतं स्तोत्रं यच्चैव यज्ञस्तदभिपर्यावृत्य जुहोति शुक्रवती वै पूर्वे सवने ऽशुक्रं तृतीयं सवनं यज्ज्योतिष्मतीस्तृतीयसवने व्याघारयन्ति तेन तृतीयसवनं शुक्रवत्संवत्सरो वा अग्निष्टोमस्तस्य वा एतास्तन्वो यद्धिष्ण्यास्ता[10] वा अस्यैतत्समुद्दर्पयित्वा[11] ज्योतिष्मतीः कृत्वाथाग्निष्टोमेन स्तुवते संवत्सरो वा अग्निष्टोमो द्वादश मासाः संवत्सरो यत्प्राचीराहुतयो हूयन्ते[12] प्रत्यञ्चो धिष्ण्या[13] व्याघार्यन्ते संवत्सरस्य विधृत्या उभयतो वै देवानसुराः परीयत्ता[14] आसन्पुरस्तादन्ये पश्चादन्ये यत्प्राचीराहुतयो हूयन्ते ये पुरस्तादासंस्तांस्तैनापानुदन्त यत्प्रत्यञ्चो धिष्ण्या व्या-

---

1) So corrigirt, die Mss यज्ञमगिरत् 2) So ist wohl die Schreibung der Mss zu bessern, H u Bb तमाग्नीध्रात्पुनर्व्युहज्दे॰, B तमाग्नीध्रात्पुनर्व्युहज्दे॰ 3) Die Mss तमाग्नीध्रात् 4) Die Mss schreiben बहि पव॰ 5) In den Mss ॰मभिजित्या॰ ohne Accent 6) Die Mss बहि पवमाने॰ 7) Die Mss बहि पवमाने 8) So corrigirt, in den Mss आह ohne Accent 9) So corrigirt, B यज्ज्योतिष्मतिस्तृतीयसवने, H यज्ज्योतिष्मतिस्तृतीय सवने, B यज्ज्योतिष्मति तृतीय सवने 10) So corrigirt, H u Bb यद्धिष्ण्या॰, desgl. B, ohne Accent. 11) Die Mss betonen समुद्दर्पयित्वा 12) B हूयंते 13) So corrigirt, die Mss धिष्ण्या 14) So B, ohne Accent, in H u Bb परीयत्ता

धार्यन्ते ये पश्चादासंस्तांस्तेनापानुदन्त[1] तद्भ्रातृव्यस्य वा एष विनोदो[2] ऽध्वर्युणा वै यज्ञो विधृत इदमिव वा एतद्यज्ञस्य यद्धिष्ण्या[3] यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयात्प्राणान्त्संकर्षेत[4] प्रमायुकः स्याद्यदतीयाद्यज्ञपरुश्चतीयादैन्द्रीमनुब्रूयादैन्द्रं हि सदः स्वयैवैनं देवतयोपचरत्यात्मनो[5] ऽहिंसायै प्राचीनं वै धिष्ण्येभ्यो ऽध्वर्योर्लोको यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयादन्यजनतास्य क्षेचमभ्यारोहुका[6] स्या३न्यन्य[7] उपयन्ते[8] नान्ये[9] तदेषां मिथुनं प्रजायै[10] निरुक्ता अन्ये ऽनिरुक्ता[11] अन्ये ये निरुक्ता३स्ते ऽस्मै लोकाय ये ऽनिरुक्ता३स्ते ऽमुष्मै लोकाय यथा वा इदं मेखला पर्यस्यते मेध्यस्य चामेध्यस्य च विधृत्या एवं वा एते न्युप्यन्ते यज्ञस्य विधृत्यै यत्प्राचीनं धिष्ण्येभ्यस्तद्देवानां यत्प्रतीचीनं तन्मनुष्याणां तस्मात्सोमं पिबते[12] प्राञ्चो धिष्ण्या नातिसृपे जनं ह्येति देवलोकमभ्यारोहति चात्वालाद्धि ह्रियन्त एष वा अमीनां योनिः स्वादेव योनेर्विह्रियन्ते[13] ऽस्कन्नताय तेषां वा एतदभ्यवायनं[14] चोदयनं च यदन्तरा चात्वालं चाग्नीध्रं चैतद्वै यज्ञस्य तीर्थं तस्मादेतेन संचरति तेन वा ऽविद्वान्त्संचरत्यार्तिमार्छत्येष[15] य एवं विद्वान्त्संचरति[16] न सद३स्यामार्तिमार्छति ॥ १० ॥

Vgl TS 6, 3, 1 (dhishnyâh); Kâṭh 26, 1; Kap S 40, 4.

॥ इत्युपरिकाण्डे[17] असुराणां नाम अष्टमः प्रपाठकः समाप्तः ॥

---

1) In den Mss. °द्यास° ohne Accent 2) So corrigirt; in Bb ohne Accent; in H विनोदो 3) So B, ohne Accent, Bb यद्धिष्ण्या, H यद्धिष्ण्या 4) H u Bb धिष्ण्याम° 5) B देवतयापचर° 6) So B, ohne Accent, in H u Bb यंचम° 7) Die Mss. schreiben स्या३न्यन्यं 8) H u. Bb उपयंते 9) Die Mss schreiben नान्ये 10) Die Mss betonen प्रजायै 11) Die Mss. betonen निरुक्ता 12) H u Bb पिबत 13) So corrigirt; die Mss. योनि विहियंते 14) So corrigirt, die Mss. °वायनं 15) So Bb; in H विद्वांसर्च°; desgl. B, ohne Accent 16) So corrigirt; d. Mss विद्वांसंच°; s. Einl. z. I. Th. p XLIII 17) So corrigirt; in Bb fehlt das इति; in H u. B इति उपरि°

यज्ञो वा एष संक्रामन्नेति प्रायणीयादध्यातिथ्यमातिथ्यादध्युपसदः स उपसद्भ्यो[1] ऽधि प्राङ् प्रणीयते यदगृहीताज्यानि प्रणयेयुरपगीत यजमानमथ यद्गृहीताज्यानि प्रणयन्ति यज्ञो वा एतद्यजमानो ऽन्वारभते प्राञ्चः सौमेन प्रयन्ति प्राची पत्नी पूर्वमग्निमभ्युदैति[2] सोमेन वा एतद्राज्ञाभिजयन्तो यन्ति यस्य वै मनुष्यराज्ञो गृहमागच्छति तस्य वै तर्हि तदैश्वर्यं यदा वै स ततः प्रायते ऽथ तेषां तत्पुनर्भवति तस्मादाहुरपिप्रता इत्यपि ह्येषां तस्मिन्नृते सौमो वा एतद्राजा गृहं प्राप तस्य वै तर्हि तदैश्वर्यं यदा वै स ततः प्रच्यवते ऽथ स तेभ्यो विसृजते तद्विसर्जनाना वैसर्जनत्वं त्वं सोम तनूकृद्भ्य इति यदेव तनुकृतं चान्यकृतं चैनस्तदेतेनावयजति द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नेय्याग्नीध्रे ऽन्तरिक्षमेव प्राप्यान्यदेव रूपमकर्वैष्णव्या हविर्धाने ऽद एव प्राप्य विष्णुर्वै यज्ञो विष्णुमेव यज्ञमकरसुरा वा एतं देवानामादित्सन्त तं देवा अमुं कृत्वामुं लोकमहरन्यदमुमत्या जुहोत्यमुमेवैनं कृत्वामुं लोकं हरन्ति सर्वेभ्यो वा एष भूतेभ्य आह्रियते यत्सौम्या जुहोति मनुष्येभ्यस्तेनाह्रियते यदमुमत्या पितृभ्यस्तेन यदाग्नेय्या देवेभ्यस्तेन यद्वैष्णव्या यज्ञाय तेन सर्वा वा एतत्प्रजा वरुणो गृह्णाति यत्सौम्या जुहोति

1) So corrigirt, die Mss उपसद्रो 2) So H u Bb, in B °मभ्युदैयते (doch reicht das Zeichen des ऐ im Ms abnormal bis an den oberen Theil des द hinüber) 3) B यज्ञो 4) So schreiben hier alle vorliegenden Mss (nur ohne Accent); aber 1, 2, 13 hatten die alten Mss तनुकृद्भ्यो was wir darum dort in den Text nehmen mussten, H, Bb u B lasen auch dort तनु°, im Hinblick auf die älteren Mss für 1, 2, 13 möchte man auch in unserer Stelle तनुकृद्भ्य lesen, es würde daraus aber wohl die Aenderung des gleich folgenden तनुकृत in तनूकृत sich ergeben, was uns hier doch zuweit von den vorliegenden Mss abführt 5) So die Mss 6) So B, ohne Accent; H u Bb यज्ञोपयेन

मनुष्या॰स्तेन वरुणान्मुञ्चति' यदमुमत्या पितृ॰स्तेन' यदाग्नेय्या देवा॰स्तेन' यदैन्द्राग्न्या यज्ञं तेन' सर्वा वा एतत्प्रजा वरुणान्मुञ्चत्यग्निना वै मुखेन देवा इमांल्लोकानभ्युजयन्गार्हपत्येनामुं लोकमाग्नीध्रेणान्तरिक्षमाहवनीयेनामुं लोकं' तस्मात्त्रेधा अग्नय आधीयन्त एषां लोकानामभिजित्या' इन्द्राग्नी वा अवरा अग्नी' अग्निरपर' इन्द्रः पूर्वः' प्रजापतिराहवनीयस्तस्मादेषं ज्योग्न्ने साद्यता' उत्तरो हि पिता पुत्रादुत्तरो भ्रातृव्याद्भवति य एवं॰ वेदाग्रेण प्रणयेन्नतश्चीः प्रिय एव परिगृहीत्यै' सौम्यो वै ब्राह्मणो देवतया' स्वयैव देवतया' प्रजा वै पशवो ऽ॰गवो' रुद्र आहवनीयो' यदग्रेण प्रणयेद्रुद्रायास्य पशूनपिदध्यात्पश्चादिव प्राङ् प्रणीयः पशूनां गोपीथायो' उर्वन्तरिक्ष॰ उवीहीत्यन्तरिक्षदेवत्यो वा एष एतर्हि' प्रच्युत इतो ऽप्राप्तो ऽमुतोऽदित्याः सदा आसीदेत्यादित्यो वै यज्ञो' ऽदितिः सोमस्य योनिः' स्व एवैन॰ योनौ दधाति' देव सवितरेष ते सोमा इति' मनुष्येषु वा एष पुराभूद्देवेभ्य एवैन॰ संप्रादादेतत्त्वं देव सोम देवानुपावृता इति' देवो उह्येष देवानुपावर्तत' इदमहं मनुष्यानसहं रायस्पोषेण प्रजया' चोपावर्तेता' इत्याशिषमेवाशास्ते' नमो देवेभ्यः' स्वधा पितृभ्य इति' नमस्कारो देवाना॰' स्वधाकारः पितॄणां' निर्वरुणस्य पाशादमुक्षीति' वरुणपाशादेव निर्मुच्यत आत्मनो ऽहि॰सायै स्वरभिव्यख्यमिति' यज्ञो वै स्व॰ यज्ञमेवाभिविपश्यति' ज्योतिर्वैश्वानरमित्यसौ वा आदित्यो ज्योतिर्वैश्वानरमेतेना वा एष तन्व॰ विपरिधत्ते यो दीक्षते'

---

1) H u. Bb so, oder ज्योग्ने, B उपोग्ने 2) So corr., die Mss इतो प्राप्तो! Kap S 40, 6 प्रच्युतमितो प्राप्त सदस्व सोमेति, s 3,9,7 u 3,10,1, 3,7,8 3) B °पावृति 4) B °ष्यानसह, H u Bb ष्या सह 5) H प्रजाया, Bb प्रजायां, desgl. B, ohne Accent 6) So corrigirt, H स्वरभिव्यूंख्यमिति, Bb स्वरभिव्यूंख्यमिति, desgl. B, ohne Accent

ऽसौ रुद्रो[1] यदमिना पुनर्यथायथं तऽन्वं नो विपरिदधीत रुद्र एनमभिमानुकः स्याद्यदाहेमे व्रतपते या तव तनूर्मय्यभूदेषा[2] सा त्वयीमे व्रतपते या मम तनूस्त्वय्यभूदियं[3] सा मयीत्यमिना वा एतत्पुनर्यथायथं तन्वः[4] विपरिधत्त आत्मनो ऽहिंसायै ॥ १ ॥

Vgl. 1, 2, 13 — TS 6, 3, 2 (agnishomapraṇayanam); Kāṭh 26, 2; Kap S. 40, 5.

न यूपसंछेप्यतो[5] होतऽव्यं[6] न हि दीक्षितस्याग्नौ जुह्वति वैष्णवीमनूच्याहैत्यो वैष्णवो हि यूपस्तदाहुर्होतव्यमेव परुष्येव जुहोत्यायतना इति तस्य सूक्ये[7] यूपस्यैवाग्ने ऽग्निं मथित्वाथ होतऽव्यं तत्त्विदुभयमकर्जुहोत्याह न दीक्षितस्याग्नौ जुहोत्यन्त्यानगा[8] नान्यानुपागामित्यत्तो[9] ऽसन्यानेति नान्यानुपैत्यर्वाक्[10] त्वा परेभ्यः परो ऽवरेभ्यो ऽविदमित्यर्वाग्घ्येन[11] परेभ्यः परो ऽवरेभ्यो विन्दति तं त्वा जुषामहे देवयज्याया इत्येतत्[12] ऽहोषं[13] जुषते जुष्टं[14] विष्णवा इति यज्ञायैवैनं जुष्टं विष्णवे ऽकर्विष्णवे त्वेति पर्येनक्ति हविर्भूतमेवैनं वृश्च्यपो ऽभिघृतमेव य इत्थं वेत्यवबाहुर्णो[15] मेधाऽत्तो ऽपावृत्तो य ऋजुरूर्ध्वशल्कः स वाव मेधमुपस्थितो य ऋजुरपरिशादुपावनतो यो ऽधिशाख्यो[16] योनिः स[17] यो वा अस्या अधिजायते स योनिमानियं हि वनस्पतीनां योनिः परुषि वऽश्चो[18] यदपरुषि[19] वृश्चेद्यथा

1) So corrigirt; die Mss पिरुद्रो 2) Die Mss. त्वर्ह 3) So corrigirt; die Mss मय्यभू° 4) Die Mss. त्वय्यभू° 5) So corrigirt; H u Bb °संछेप्यते; desgl. B, ohne Accent; Kāṭh 26, 3 न दीक्षितेन होतव्यं 6) So corrigirt, B ऽव्य; H u Bb ऽव्ये 7) So die Mss 8) Die Mss °नंगामा 9) So die Mss 10) So corrigirt; die Mss. नांन्यानु° 11) Die Mss °र्वाक् ह्येन 12) Die ३ fehlt in den Mss 13) So corrigirt. H u. Bb त्वेति, B त्विति 14) In den Mss wie es scheint एकं° येर्ह geschrieben; 15) H u Bb बाहुर्णो; B बाहुर्णो 16) So corrigirt; die Mss धिशाख्य 17) So corrigirt; die Mss. betonen योनिः स 18) Die Mss वऽश्चो 19) H u. Bb °पुर्वपि

पर्युवकृत्तमेवं[1] स्यादनक्षसङ्गं स्यादुरुज्जिशयो यदक्षसङ्गं स्या-दुरुज्जिश्यैहं वज्रो भूत्वा यजमानस्य पशून्प्रतिहन्यात्पञ्चारत्निः कार्यः पङ्क्त्या संमितः षडरत्निः कार्यश्चतुर्भिः संमितः सप्तारत्निः कार्यः सप्तपदया शक्वर्या संमितो ऽष्टारत्निः कार्यो गायत्र्या संमितो नवारत्निः कार्यस्त्रिवृता संमितो दशारत्निः कार्यो विराजा संमित एकादशारत्निः कार्यस्त्रिष्टुभा संमितो द्वादशारत्निः कार्यो जगत्या संमितस्त्रयोदशारत्निः कार्यस्त्रयोदशेन प्रजापतिना संमितः पञ्चदशारत्निः कार्यः पञ्चदशेन वज्रेण संमितः सप्तदशारत्निः कार्यः सप्तदशेन प्रजापतिना संमित एकविंशत्यरत्निः[2] कार्य एकविंशेन संमितस्त्रयोविंशत्यरत्निः कार्यस्त्रयोविंशेन संमितः पञ्चविंशत्यरत्निः कार्यः पञ्चविंशेन संमितः सप्तविंशत्यरत्निः कार्यस्त्रिणवेन संमित एकत्रिंशदरत्निः कार्य एकत्रिंशेन संमितस्त्रयस्त्रिंशदरत्निः कार्यस्त्रयस्त्रिंशेन संमितो यावान्पुरुष ऊर्ध्वबाहुस्तावान्कार्यो यदि वा यावानृथे तिष्ठन्यावान्वै पुरुष ऊर्ध्वबाहुः सैतस्यावमा मोचाय[3] ततो वर्षीयान्वर्षीयानेव कार्यो यो बहुशाखो बहुपर्णः स कार्यो भूम्न एव भूमानं ह्येष एतस्य जयाह भूमानमस्य गृह्णाति भूमानमस्य पशवो ऽनूपतिष्ठन्ते ॥ २ ॥

Vgl. 1, 2, 14 — TS 6, 3, 3 (yûpakhaṇḍanam), Kâṭh 26, 3 u 4; Kap S 41, 1 u. 2.

ओषधे त्रायस्वैनमित्याह त्राता एव स्वधिते मैनं हिंसीरिति वज्रो वै स्वधितिर्वज्रादेवास्मा एतदन्तर्दधात्यहिंसायै यो वा एतस्याभिहतस्यापि[4] शकलः परापतति तमस्य तेजो ऽन्वपक्रामति ॥

1) H °पृद्यं° 2) Die Mss. °विंशत्यरत्नि 3) Die Mss. मोचाय 4) °स्यापि in den Mss ohne Accent

यत्तं पुनराहरति सतेजस्त्वाय[1] प्राञ्चं प्रह्लापयति मेधमेवैनमनुपर्यावर्तयति वज्रो वै यूपस्तस्माद्वा इमे लोका नीयमानाद्बिभ्यतीश्वरो[2] ह्येयो ऽशान्तो नीयमान इमांल्लोकान्हिंसितोर्यदाह दिवमग्रेण मा हिंसीरन्तरिक्षं मध्येन पृथिव्याः संभव भ्राजं गछेति शमयत्येवं शान्त एवं नीयत एषां लोकानामहिंसायै सर्वस्य वा एष मित्रं यो दीक्षितः स एतमहिंसीदीश्वरो वनस्पतयो ऽपिधिष्णुं भवितो यदाव्रश्चने जुहोति पुनरेवैनं प्रजनयति तस्मादाव्रश्चनाद्भूयांसः प्रजायन्ते पशुना संमितः कार्यो दश वै पशोः प्राणा आत्मैकादशो ऽष्टाश्रयो ब्रह्मणो दशमं आत्मैकादशस्तथा पशुना संमितो ऽष्टाश्रिः कार्यो गायत्र्यो रूपं गायत्रो हि यूपो गायत्र्या वै पतन्त्या यत्र पर्णं परापतत्ततः पर्णो ऽजायत तस्मात्पर्णमय एतत्खलु वै पर्णस्य सारं यत्खदिरस्तस्मात्खादिर इह वा असा आदित्य आसीत्तमितो ऽध्यमुं लोकमहरंस्तदंतो ऽध्यमुं लोकमहरंस्तस्माज्ज्योतिषो बिल्वो ऽजायत तस्माद्बैल्वो ब्रह्मवर्चसकामेन कार्यो ब्रह्मवर्चसस्य समष्ट्या अथो ज्योतिषैव तमस्तरतीन्द्रो वै यतीन्सालावृकेयेभ्यः[10] प्रायच्छत्तेषां वा एयं ब्रह्मचारी चमसाध्वर्युरासीद्धो[11] ऽयं हरिणस्तस्य यः सोमपीथ आसीत्स स्वजो[12] ऽभवत्तस्माद्धरिणः[13] स्वजं खादति सोमपीथो ह्यस्यैष स यत्र चमसं न्यौब्जत्ततो[14] रोहितको[15] ऽजायत

---

1) Die Mss सतेजस्त्वाय 2) B ॰भ्याया 3) B ॰श्वयोमंश्राणी 4) So meine Correctur, cf unten, H यार्यो, desgl B, ohne Accent, Bb याहो यो॰ 5) So corrigirt, die Mss. यथ 6) So corrigirt, H u Bb संयतो, desgl B, ohne Accent 7) B बिभ्यो 8) B ॰द्वैल्यो 9) So corrigirt, H u Bb तमसस्तर॰, B तमसस्तर॰ 10) Die Mss यतीतस॰ 11) So corrigirt, die Mss betonen चमसोध्वर्यु॰ 12) आसीत् in den Mss ohne Accent; H u Bb सं स्वजो, desgl B, ohne Accent. 13) So corrigirt; die Mss अभवंस्था॰ 14) Die Mss न्यौब्जत् 15) So die Mss

तस्माद्रोहीतकस्तस्माद्रोहीतको रोहितको स्वजः पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति प्रोक्षत्येषां ऽह्येष लोकानां विधृत्यै मीयते त्रिः प्रोक्षति त्रिपत्या हि देवा अथो त्रिपद्यैवैनं गायत्र्या प्रोक्षीद्वज्रो वै यूपो ऽन्न यवो यद्यवमीभिः प्रोक्षति वज्रेण वा एतदन्नं जयति तेजो वै यूप एष खलु वा ओषधीनां तेजो यद्यवस्तस्मादेत शिशिरे ओषधयो ऽनुप्राणन्ति यद्यवमयास्यति तेजसि वा एतत्तेजो दधात्यृक्ष वा अमेध्यमापो हविर्यदवसिञ्चति मेध्यमेवैनत्करोत्यृक्ष वा अमेध्य यदवस्तृणाति मेध्यमेवैनत्करोति तक्षितो वा एष नग्नो यच्चांकमवास्यत्यनपमेवैनमकः स्व एवैनं स्थाने दधात्यवृक्ण एवाभूद्घृतेन द्यावापृथिवी आपृणेति तेनैव द्यावापृथिवी आपूरयति यजमानो वा अभिष्ठास्तेजो घृतमान्तमविछिन्नमनक्ति[10] यजमानमेव[11] तेजसानक्ति देवस्त्वा सविता मध्वानक्त्वित्येतद्वै देवानां मधु यद्घृतं[12] सवितृप्रसूत एवैनं मध्वानक्तीन्द्रस्य चषालमसीत्यैन्द्रं हि चषालं सुपिप्पला[13] ओषधीस्कृधीत्योषधीरेव[14] फलं ग्राहयति तस्मादोषधयः शीर्षन्फलं गृह्णन्ति दिवमग्रेणोत्तभानान्तरिक्षं मध्येनापृण पृथिवीमुपरेण दृंहेत्येषां ऽह्येष लोकानां विधृत्यै मीयते तां

1) So corrigirt; H u Bb °द्रोहीतकस्त°; desgl B, ohne Accent. 2) So die Mss. 3) Die Mss. पृथिव्यै 4) Die Mss. °षां° 5) So corrigirt; die Mss यूपो 6) So meine Correctur, die Mss स्वोनं 7) So vielleicht zu lesen, H u Bb °वृक्; B etwa वृक्ष 8) So meine Correctur; H u Bb एवाभूद्घृतेन, desgl B, ohne Accent. 9) So corrigirt, in B अभिष्ठास्तेजो; H u Bb अभिष्टा तेजो; cf. 3, 9, 4; vgl. aber Kāṭh 26, 5 घृतेनाभिष्ठामनक्ति तेजो वै घृत यजमानो ऽभिष्ठास्तेजसैव यजमान समर्धयति, ähnlich in demselben Capitel noch einmal, ferner Kap S. 41, 3 तेनाभिष्ठामनक्ति तेजो वै घृतं यजमानो ऽभिष्ठास्तेजसो वै यजमान समर्धयत्यांत सतमनक्ति; ähnlich weiter unten noch einmal 10) So B, nur ohne Accent (घृतमांतमवि°); in H u Bb घृतेमामंतवि° 11) So corrigirt, die Mss °मेवे 12) So corrigirt; H u. Bb यंदघृतं°, desgl B, ohne Accent. 13) So corrigirt; Bb सुपिःप्पला; H सुपिप्पला, desgl B, ohne Accent, Kap S 41, 3 सुपिप्पला, Kāṭh. 26, 5 सुपिप्पला 14) Die Mss. °धीस्तुधी°

ते धामान्युश्मसि गमध्या इत्यवदधाति वैष्णव्या वैष्णवो हि यूपः स्वयैव देवतया विष्णोः कर्माणि पश्यतेति संकल्पयति संमितत्वाय ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामीत्याशीरेवैषा ब्रह्म दृ॑ह क्षत्रं दृ॑हे-त्याशिष एवैष[1] परिवड्ढो ऽपो ऽनुपरिषिञ्चति धृत्यै ॥ ३ ॥

Vgl 1, 2, 14 — TS 6, 3, 3 (yupakhandanam), Kath 26, 5, Kap. S 41, 3

वज्रो वै यूपो यदन्तर्वेदि मिनुयान्निर्दहेद्यद्बहिर्वेद्यनवरुद्धः स्यादर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेद्यवरुद्धो ह भवति न निर्दहति नोपर-स्याविः कर्तवै यदुपरस्याविः[2] कुर्याद्रघेष्ठः[3] स्यात्प्रमायुको[4] यजमानो नातिस्थूलः कार्यः क्षुधं प्रजा नीयुर्नो क्षत्यणुरुभयमेवान्तरा य-ज्ञेन वै देवाः स्वर्गं लोकमायꣳस्ते ऽमन्यन्तानेन वै नो ऽन्ये लोकम-न्वारोक्ष्यन्तीति तꣳ यूपेनायोपयꣳस्तद्यूपस्य यूपत्वꣳ यद्यूपः पुरस्ता-न्मीयेत[5] स्वर्गस्य लोकस्यानुख्यात्यै तद्विष्णोः परमं पदमिति समुन्मा-र्ष्टि स्वर्गस्य लोकस्य समष्ट्यै नाभिदघ्ने परिव्ययत्यूर्ग्वा ओषधय ऊर्जꣳ वा एतन्मध्यत आत्मनो धत्ते प्रजानां च यदि कामयेत क्षुधं प्रजा नीयुरित्यरशनान्यूपान्मिनुयात्क्षुधं प्रजा नियन्ति[6] यदि कामयेत व-र्षेत्पर्जन्य ऊर्जा यजमानꣳ समर्धयेयमिति परिवीयोर्ध्वामुदूहेद्वृ-ष्ट्या एवैमां[7] न्यूहत्यूर्जा यजमानꣳ समर्धयति यदि कामयेत न वर्षे-त्पर्जन्य ऊर्जा यजमानꣳ व्यर्धयेयमिति परिवीयावाचीमवोहेद्वृ-

1) Die Mss एवैष 2) So corrigirt Bb यदुपरस्याविः, H यदुपर स्याविः, desgl B, ohne Accent, Kath 25 6 यदाविष्परस्य कुर्याद्वर्तमिरस्यात् 3) So meine Vermuthung, Bb कुर्याद्रतेष्ठ, H कुर्याद्रतिष्टा, B कुर्याद्रत्तीष्टा, Kath 25 6 गर्तमित्, s die vor Anm 4) So corrigirt, die Mss प्रमायुका 5) So B, nur ohne Accent, H u Bb मीयंते 6) So corrigirt, die Mss नीयति 7) So corrigirt, die Mss एवैमा

ष्यैवेमां न्यूहन्नूर्जो यजमानं व्यर्धयति सर्वदेवत्यो वै यूपो यन्निखातं तत्पितॄणां यदूर्ध्वं तन्मनुष्याणां यच्च रशना तदोषधीनां यदूर्ध्वं रशनायास्तद्विश्वेषां देवानामिन्द्रस्य चषालं ये वै देवाः साध्या यज्ञमत्यमन्यन्त तेषां वा एतद्यदुपरिष्टाच्चषालस्याङ्गुलिमात्रं कार्यमङ्गुलिमात्रं हि तद्या आसीद्यत्ततो वर्षीयः कुर्याद्वज्रो भूत्वा यजमानस्य पशूनभवतिष्ठेदिन्द्रो वै वृत्राय वज्रमुदयच्छत्सोऽब्लीयत तस्य वा एतदनुनष्टं यच्चषालं पृथुमात्रं कार्यं पृथुमात्रं हि तद्या आसीद्यद्दक्षिणमतोऽगृह्णात्तस्माद्दक्षिणमतो यदिन्द्र उदयच्छत्तस्मादैन्द्रं यदि कामयेतान्योऽस्य लोकमन्वारोहयेयुरित्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्योऽस्य लोकमन्वारोहन्ति यदि कामयेत प्रजामनुसंतनुयादिति यूपस्य स्वरुं कुर्यात्प्रजामेवानुसंतनोति यजमानो वा अग्निष्ठांस्तेजोऽग्निर्यदितिर्यं वेष्यं वा मिनुयाद्यजमानं तेजसा व्यर्धयेद्यदग्निना संहितं मेतव्या यजमानस्य सतेजस्त्वायो वृक्ष ह स्म वै पुरा संस्थिते यज्ञेऽग्नौ यूपं प्रास्यति संभज्य स्रुचस्ते देवा अमन्यन्त यज्ञवेशसमिदं कुर्म इति तेऽब्रुवन्परिधिभिरेव नः स्रुचः स्वगाकृताः सन्तु स्वरुणा यूपः प्रस्तरेण सदा इति तेषां वा एषं स्वगाकारो न ह स्म वै पुरा पुरुषं महादेवो हन्ति तत इदं रुद्रोऽन्ववातिष्ठत्ते देवा एतां रुद्रस्यावेष्टिमपश्यन्स्विष्टः परस्तादनक्ति चिरवत्साभ्यपद् यद्वा ऋतव ऋतुभ्यो वा एतद्रुद्रमवयजन्त्याहुतिभाजो वा ऋतवोऽस्तोमभाजस्ते[6] एवास्यैतेनाभीष्टाः प्रीता भवन्ति यद्यूपाञ्जुहोति व-

1) H u Bb °द्रक्षा 2) So corrigirt, die Mss °दनुनष्टौ 3) So corrigirt; die Mss. °ग्निष्ठा तेजो; vgl aber oben 3, 9 3 4) So corrigirt, die Mss °यदित्यं वेष्यं 5) In B Lücke von °यदजत्वा bis zum folgenden (चोप) घोष्यतेन 6) So corrigirt; die Mss ऋतवो स्तोमभाजस्त

नस्पतिभ्यस्तेनावयजति यद्रशनाया ओषधीभ्यस्तेन यदात्मनो मनुष्येभ्यस्तेन यदाह दिवं ते धूमो गच्छत्विति हविर्धानात्तेनान्तरिक्षं ज्योतिरित्याग्नीध्रात्तेन पृथिवीं भस्म स्वाहेति सदसस्तेन सर्वतो वा एतद्रुद्रमवयजत्यो वा एतं वनस्पतिभ्यः प्रच्यावयन्त्युपयज्य मनुष्याः प्रयन्ति तत्स्वाया[1] देवताया अन्तर्धीयते[2] यूपो[3] वै यज्ञस्य दुरिष्टमामुञ्चते यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चेत[4] तस्माद्यूपो नोपस्पृश्यः पुण्वा एष मीयते स ईश्वरो ऽयान्त इमांल्लोकाञ्छुचार्पयितोर्यद्येकः स्यात् ॥ एष ते वायो ॥ इति ब्रूयाद्यदि बहवः ॥ एते ते वायो ॥ इति ब्रूयाद्वायुगोपा[5] वै वनस्पतयः स्वामेवैभ्यो देवतामपिसृजत्येषां लोकानामहिंसायै यथा वै प्रौगं[6] रज्जुभिर्युक्तमेवमिमे लोका यूपैर्युक्तास्त एनमार्तिं[7] नियन्ति यदाह ॥ नमः स्वरुभ्यः ॥ इति तेभ्य एव[8] नमो ऽकस्ते ऽसौ विजिहते ते ऽसौ लोके विन्दन्त्येते वै देवानामृडयाता[9] ऽस्मिंल्लोके सन्नाः[10] स्वरवो[11] ऽभिरोढारो यान्न पश्यति ते सन्ना अथ यान्पश्यति ते बृहन्त ऊर्जो यदाह ॥ नमः स्वरुभ्यो बृहद्भ्यो मारुतेभ्यः सन्नान्मावगाम् ॥ इति तानेव परिवृणक्त्येते वा अमुष्मिंल्लोके ऽस्य प्रदातारस्ते ऽस्मा अन्नं प्रयच्छन्ति ॥ अपश्चाद्दघ्वान्नं[12] भूयासम् ॥ इत्यपश्चाद्दघ्वान्नं[13] भवति ॥ ४ ॥

*Vgl* 1 2, 14. — TS 6 3, 4 (*sthapayed yupam*), Kath 26 6, Kap S 41, 4

---

1) So corrigirt, die Mss स्वाया 2) So corrigirt die Mss अन्तर्हीयते 3) In den Mss ohne Accent. 4) So corrigirt in den Mss °मुचेत 5) Die Mss betonen वायुगोपा 6) So H Bb प्रौग° desgl B ohne Accent wohl in प्रउग° zu corrigiren 7) Die Mss betonen एनम° 8) So corrigirt die Mss एवें 9) So die Mss mir unverständlich 10) So corrigirt die Mss सन्नां 11) So corrigirt die Mss स्वरावो 12) So corrigirt B अपश्चाद्दध्वान्न H u Bb अपपश्चाद्दध्वान्न 13) So meine Corrector, H u Bb इति पश्चाद्दध्वानः desgl B, ohne Accent.

साध्या वै देवा आसन्नथ वै तर्हि नान्याहुतिरासीत्ते देवा अग्निं मथित्वापो अजुहवुस्ते वै तयैवाहुत्या पशून्सृष्ट्वाथ पशुमालभन्त यदग्निं मथित्वाग्नौ जुहोति तया वा एतदाहुत्या पशून्सृष्ट्वाथ पशुमालभन्ते ऽथो पशवो वा एतदालब्धा यद्देवता जनयन्त्यथो तेज एवास्मै जनयन्त्यग्नेर्जनित्रमसीत्यायतनमिव वा एतत्क्रियते वृषणौ स्थ इति रेत एवैतद्दधाति न हि तस्य रेतो धीयते यस्यैतौ न भवत उर्वश्यसीति वाग्वा उर्वशी पुरूरवा असीति प्राण एव तन्मिथुनमायुरसीति समनक्ति तस्मिन्नेव मिथुने रेतो दधाति गायत्रमसि त्रिष्टुबसि जगदसीति छन्दोभिरेवैनं प्रजनयति सावित्रीं प्रथमामन्वाह प्रसूत्यै सवितृप्रसूता हि प्रजाः प्रजायन्ते ऽथ द्यावापृथिवीयामपि हि द्यावापृथिव्योः पशुषु द्यावापृथिवी हि पशवो ऽनुप्रजायन्ते गायत्रीरन्वाह गायत्रो ह्यग्निर्गायत्रं छन्दो ऽपरिमिता अन्वाहापरिमिता ह्यग्नेस्तन्वो ऽग्निना वा अनीकेनेन्द्रो वृत्रमहंस्तस्य समासृप्तस्य भीतस्य यत्र व्याध्यत ततो भूम्नो असृज्यत तस्माद्धर्मवती नानूच्या वृष्णा[10] हि सा रक्षसामनन्ववजयाय[11] परिधयः परिधीयन्ते यत्समर्यं[12] परिधीन्प्रहरेत्तदनु रक्षांसि यज्ञमवजयेयुरयेण परिधयः प्रहृत्या[13] रक्षसामनन्ववजयाय क्रूरमिव वा एतद्यज्ञे क्रियते[14]

---

1) Die Mss schreiben पशू॰ सृष्ट्वाथ, cf weiter unten, sowie die Einleitung zum 1 Buch p XLIII — Von hier an bis zum folgenden सृष्ट्वाथ incl ist in H u Bb eine Lücke, die Accente mussten daher ergänzt werden 2) B, die einzige für diese Stelle vorhandene Handschrift, schreibt पशून् सृष्ट्वाथ 3) Das Verb in den Mss ohne Acc. 4) Die Mss betonen पुरूरवा 5) So corrigirt die Mss गायत्रीर॰ 6) Dies Wort in den Mss ohne Accent. 7) So corrigirt die Mss ह्यग्ने॰ 8) So corrigirt, H u Bb भूम्नो, desgl B ohne Accent 9) Die Mss तस्माद्धर्मवती 10) So B, ohne Accent, in H u Bb वृष्णा 11) So corrigirt, die Mss. ॰न्ववजया 12) So die Mss 13) So meine Correctur, die Mss परिधीन्प्रहृत्यौ, s übrigens Whitney, Ind Gramm § 1215, a 14) Die Mss क्रीयते

यदग्रा अग्नौ जुह्वति यदाह भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति शमयत्येवै शान्त एव प्रह्रियते यजमानस्याहिंसायै स्रुवेणाभिजुहोति संजग्मानाभ्यामेवाभ्यां भागधेयमपिदधाति यः कूटो घाकर्णौ वा काणौ वा शुष्कौ वावर्तेत तस्य यातयामा स यो ऽपन्नदन्मलं तत्पशूनामाग्नेयः पशुरग्निष्टोम आलभ्य आग्नेयो ह्यग्निष्टोम ऐन्द्राग्नः पशुरुक्थ्य आलभ्य ऐन्द्राग्नानि ह्युक्थ्यान्यैन्द्रो वृष्णिः षोडशिन्यालभ्य ऐन्द्रो वै वृष्णिरैन्द्रः षोडशी सारस्वती मेष्यतिरात्र आलभ्या वाग्वै सरस्वती वागनुष्टुबानुष्टुभी रात्रिर्यज्ञक्रतूनामेवैषा व्यावृत्तिर्यथा वै मत्स्यो ऽविचितो जनमवधूनुत एवं वा एते प्रजायमाना जनमवधून्वते यस्त्वा एतानेवं वेद तमेतेनावधून्वते कथं सवनानि पशुमन्ति येऽछति पृछेद्यद्वपया प्रातःसवने चरन्ति तेन प्रातःसवनं पशुमद्यत्पुरोडाशेन माध्यंदिने सवने तेन माध्यंदिनं सवनं पशुमद्यदङ्गैस्तृतीयसवने तेन तृतीयसवनं पशुमत्कियता तत्पशोश्चरन्ति यद्वपया चरन्ति कियता तद्यत्पुरोडाशेः कियता तद्यदवदानै रूपेण तत्पशोश्चरन्ति यद्वपया चरन्त्यात्मना तद्यत्पुरोडाशेः शरीरेण तद्यदवदानैः कस्मै पशुः प्रत्यङ् नियुज्यत उदङ् प्रणीयते दक्षिणत उपसाद्यते प्राङ् हूयता इति पृछेद्यत्प्रत्यङ् नियुज्यत इमां तेन दिशमभिजयति यद्दक्षिणत उपसाद्यत इमां तेन यत्प्राङ् हूयत इमां तेन यदुदङ् प्रणीयते मनुष्यलोकं तेनाभिजयति यद्दक्षिणत उपसाद्यते पितृलोकं तेन यत्प्राङ् हूयते देवलोकं तेन यदाहुत्या ऊर्ध्वो धूम उदयते स्वर्गं तेन[10]

1) Die Mss. घावर्त्तेत 2) So corrigirt, H u. Bb तत्पशुनाम°, desgl. B, ohne Accent. 3) So corrigirt, H u. Bb °क्थ्यू, B °क्थ्य 4) So corrigirt, die Mss °क्थ्यान्यै° 5) So meine Correctur, die Mss षोडषीन्य° 6) H u. Bb °माध्यंदिन्यवते 7) Die Mss. °डाशैर्मा° 8) In den Mss. ohne Accentbezeichnung. 9) So corrigirt, die Mss. कियता 10) In den Mss ohne Accent

लोकं यदिडोपहूतं प्रत्यङ् हरन्तीमं तेन लोकं संवा वा इमा दिशः पशुयाऽज्यभिजयति सर्वाल्लोकान्त्सर्वा एवास्येमा दिशो ऽभिजिता भवन्ति सर्वे लोकाः ॥ ५ ॥

Vgl 1, 2, 7 — TS 6, 3, 5 (vahnim mathnāti), Kāth 26, 7 u 8, Kap. S 41, 5

आप्रीभिर्यजेता आप्रियः प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत स एता आप्रीरपश्यत्ताभिरात्मानमाप्रीणीत यज्ञो वै प्रजापतिर्यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमाना आप्रीणीते वपया वै पशोर्देवाः प्रातःसवने स्वर्गं लोकमायन्यद्वपया प्रातःसवने चरन्ति वपया वा एतत्पशोर्यजमानः प्रातःसवने स्वर्गं लोकमेति ते वै स्वर्यन्तो ऽस्थानि शरीराण्यधून्वत यदङ्गैस्तृतीयसवने चरन्त्येता शरीराणि निष्क्रीणीते पशुं श्रपयन्ति यदेवास्याभिनिषण्णं शमलममेध्यं तच्छुन्धन्ति पशुमुपाकृत्याग्निं मन्थन्ति पशूनामवरुद्ध्यै द्वौ वै वज्रौ घोऽरो ऽन्यः शिऽवो ऽन्यो यः शुष्कः स घोरो य आर्द्रः स शिवो वज्रेण खलु वै वीर्यं क्रियते वज्रं वा एतदादत्ते वीर्यमेवेतीषं एवैनमुपाविरसीत्युप ह्येषो ऽवत्युपो देवान्दैवीर्विशः प्रागुरित्येता वै दैवीर्विशो यत्पशवो वह्नय उशिजा इत्येते वै वह्नय उशिजो यदृत्विजश्च धिष्ण्याश्च बृहस्पते धारया वसूनीति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैना यच्छति हव्या ते स्वदन्तामिति स्वदितमेवैनमालभते[10] देव त्वष्टर्वसु रण[11] इति त्वष्टा हि रूपाणि विकरोति रेवतीरमेध्यमिति[12]

1) Die Mss •कांग् सर्वा, s Einl z 1 Buch, p XLIII 2) Die Mss schreiben चरिचानो 3) So B, in H •मेति betont 4) So die Mss 5) So die Mss, cf चिरां 6) Die Mss निष्क्रीणी 7) So corrigirt, H u Bb •निषए॰, B •निषणा॰ 8) Die Mss क्रीयते 9) So meine Vermuthung, die Mss सैतीषु (sic) 10) Die Mss schwanken, H u Bb •नमालभते, B •मलभते 11) S 1, 2, 15 12) So corrigirt, die Mss, रेवतीरमेध्यमति

पशवो वै रेवती यच्छत्येवैना देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनामादत्ते ऽश्विनोर्बाहुभ्यामित्यश्विनौ वै देवानामध्वर्यू[2] पूष्णो हस्ताभ्यामिति देवताभिरेव द्वौ वै पाशौ घोरो ऽन्यः शिवो ऽन्यो यो यज्ञियः स घोरो यो ऽयज्ञियः स शिव ऋतस्य त्वा देवहविः पाशेनेति य एव यज्ञियः पाशस्तेनैनमालभते प्रतिमुञ्चामीत्यभि हि मनुष्या दधत्यमुष्मै त्वा जुष्टमिति यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमकर्धर्षा मानुषा इति मनुष्या हि धारयन्ति पुंष्को वा एषो ऽमेध्यो यत्पशुं नियुनक्त्युभा एवैनौ मेध्यौ करोति प्राञ्चं नियुनक्ति प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते प्राचीषु वा एतस्य देवता उपस्थिता यत्पशुं नियुनक्ति प्रतीचीरेवास्मै देवता नियुनक्त्यद्भ्यस्त्वौषधीभ्य इत्यद्भ्यो ह्येष ओषधीभ्यो जुष्टं प्रोक्षामीति यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमकरनु त्वा माता मन्यतामनु पितेत्यनुमत एवैनं मात्रा पित्रा भ्रात्रा सख्यालभते ऽनुमानावह देवान्देवायते यजमानायेति देवताभ्य एवैनं निर्दिशत्यपां पेरुरसीत्यपा ह्येष पेरुः स्वात्त सद्धविरापो देवीः स्वदन्त्विति[10] स्वदितमेवैनमालभते ऽथ यदुप गृह्णात्युप च सिञ्चति सर्वत एवैनं मेधेन समर्धयति सं ते वायुर्वातेन गच्छतामिति वातमेवास्य प्राणमन्ववार्छति सं यजत्रैरङ्गानीति यज्ञियमेवैनमकः सं

1) Die Mss °श्विनो 2) So die Mss, cf oben 3, 8, 3, TS 6, 3, 6, 3 3) Dies Wort in den Mss. ohne Accent 4) So corrigirt, die Mss एवैनो 5) So H u B; in B प्रत्यञ्चो हि पशवो मेध यत्पशु नियुनक्त्युभा एवैमुपतिष्ठते, cf Kap 41, 6 पुरस्ताद्वै पशवो मेधमुपतिष्ठते 6) So corrigirt; H u Bb इतिद्भ्यो, desgl. B, ohne Accent 7) In den Mss ist जुष्ट ohne Accent 8) In den Mss भ्राचा ohne Accent. 9) In den Mss fehlt die ३ 10) In den Mss स्वद° betont, cf aber 1, 2, 15

यज्ञपतिराशिषेति यजमानमेव यज्ञस्याशिषा समर्धयति शिरो[1] वा आघार आत्मा हविर्यदाघारमाघार्य[2] पशुना समनक्त्यात्मन्वा[3] एतच्छिरो यज्ञस्य प्रतिदधाति वज्रो वै स्वरुर्वज्रः स्वधितिर्यत्स्वधितिनानक्ति वज्रेणैवैनं स्तृणुते यात्का[4] तया शृतस्यावद्यति हविर्भूता वा एषा हविष एव हविषो ऽवद्यति ॥ ६ ॥

Vgl 1, 2, 15 — TS 6, 3, 6 (niyunakti paçum) u 7, 3—4 (âghârâu), Kâṭh 26, 8, Kap S 41, 6 u 7

अग्निना वै मुखेन देवा इमांल्लोकानभ्यजयन्यत्पर्यग्निं करोत्यग्निना वा एतन्मुखेन यजमान इमांल्लोकानभिजयति रक्षांसि वा एतं जिघांसन्ति यत्पर्यग्निं करोति रक्षसामपहत्यै त्रिः पर्यग्निं करोति त्रयो वा इमे लोका एभ्यो वा एतल्लोकेभ्यो[5] यज्ञाद्रक्षांस्यपहन्ति[6] चात्वालमपि पर्येत्येषा वा अग्नीनां योनिः स्कन्दति वा एतद्धविर्यद्विद्योतति यद्विलिप्यते[7] ऽग्निर्वै सर्वा देवता अथ वै सापि देवता यस्या आलभ्यते यत्पर्यग्निं करोति तामेवैनज्ञमयति कियद्वाहैतत्पशोः कियद्वा यत्प्रयाजा एतर्हि खलु वै सर्वो यज्ञोऽभीतस्तस्मादाश्राव्यो ऽपप्रेष्यति[8] देवताभ्यो वै पूर्वमाश्रावयदथ वा अथ पशोराश्रावयति तस्मादाश्राव्यो ऽपप्रेष्यत्युभये वा एते बध्यमानमनुबध्यन्ते ये ग्राम्याः पशवो ये चारण्या ये बध्यमानमनु बध्यमाना अन्वैक्षन्त मनसेति

---

1) So B, ohne Accent, in H u Bb शिरो, auch Kap S 41, 6 liest शिरो वा एत यज्ञस्य यदाघार, weiter unten aber auch शिर एव यज्ञस्यात्म प्रतिदधाति, Kâṭh 26, 8 शिरो वा एतद्यज्ञस्य यदाघार 2) So die Mss, dagegen Kap S 41, 6 यदाघारमाघार्य पशु समनक्ति शिर एव यज्ञस्यात्म प्रतिदधाति 3) So corrigirt, H समनक्त्यात्मं वा, Bb समनक्त्यात्मं वा, B समनक्त्योत्मन्वा 4) So corrigirt, die Mss schreiben eigentlich योत्का 5) So corrigirt, die Mss एतं लोकेभ्यो 6) In den Mss °द्रक्षा° ohne Accent 7) So corrigirt, die Mss योक्ति लिप्यते 8) So corrigirt, H u Bb °थ्यो प्रपेप्यति, B °थ्यो प्रपेप्यति, s d Folgende

यज्जुहोति तेषां वा एषोऽन्मोक्षो यच्च जुहुयादनुन्मुक्ताः स्युरु३र्वन्तरिक्षं ३वीहीत्यन्तरिक्षदेवत्यो वा एष एतर्हि रक्षांसि वा एतं जिघांसन्ति प्रच्युतमितो ऽप्राप्तममुं चामिं पुरस्ताद्धरन्ति रक्षसां पराणुत्त्यै रक्षसामपहत्या अंयो ह्यायं वा एतं प्रणीयमानाय देवताः पुरस्ताद्धरन्त्यग्निं पुरस्ताद्विदधात्यस्कन्नत्वाय पशोर्वै मारुणायानीयमानस्याहवनीयं मेध्यो ऽभ्युपक्रामति यो वै तर्हि पशुमन्वारभते तं यज्ञस्याशीर्गछति यदाह रेवति प्रेधा यज्ञपतिमाविशेति यच्च वा एतत्कंच यजमानं सन्तं यज्ञस्याशीर्गछति वपाश्रपणीभ्यामन्वारभते तत्स्विदुभयमकरो अन्तरिक्ष समूर्देविन वातेनेत्यन्तरिक्षं वै पशवो वातः प्राणः प्राणानस्मिन्दधाति त्मनास्य हविषो यजेति देवता एव प्रीणाति समस्य तन्वा भवेति पुनरेवैनं संभावयति वर्षीयो वर्षीयसा इति तेन यजमानो वसीयान्भवति यद्यज्ञं पशुमाहुर्यत्तमभिमन्यन्ते३ऽ तर्हि यज्ञो भवतीति यदाह यज्ञं यज्ञपतौ धा इति यज्ञपतौ वा एतद्यज्ञं प्रतिष्ठाप्याथ पशुमालभन्ते स्कन्दति वा एतद्धविर्यद्विष्योतति यन्निलिप्यते मंतृणमुपास्यत्यस्कन्नताय प्रत्यञ्चं संज्ञपयन्ति प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्त उदीचीनपादं व्यावृत्त्यै ॥ ७ ॥

Vgl 1, 2, 15 — TS 6, 3, 8 (lupsatam paçoḥ)

ऋत्विजो वृणीते छन्दांसि वा ऋत्विजश्छन्दांसि वा एतद्दृ-

1) So corrigirt, die Mss. युञ्जुहोति 2) So corrigirt, die Mss यंचु 3) So corrigirt; die Mss schwanken, B या, H u Bb यो, vgl aber unten 3, 10 1 4) So corrigirt, H u Bb प्रंच्युतमितो, B प्रच्युतमितो cf 3, 10 1 u 3, 9, 1 5) So corrigirt, die Mss. मोतम॰, s 3, 10, 1 u 3, 9, 1 6) So corrigirt, die Mss मारुणया॰ 7) Die Mss schwanken, B मध्यो ऽभ्युपक्रामति, H u Bb मेध्या ऽभ्युपक्रामति 8) So corrigirt, die Mss वपाश्रपणीभ्याम॰ 9) In den Mss ohne Accent (d h ohne die ३)

णीते यद्धोतारं वृणीते जगतीं तद्वृणीते यदध्वर्युं पङ्क्तिं तद्यदग्नीधमतिछन्दसं तद्यन्मैत्रावरुणं गायत्रीं तद्यद्ब्राह्मणाच्छंसिनं त्रिष्टुभं तद्यत्पोतारमुष्णिहं तद्यन्नेष्टारं ककुभं तद्यदाह ॥ अग्निर्दैवीनां विशां पुरएता ॥ इति यजमानं वा एतद्वृणीते स वृतो वषट्करोति नाछावाकं वृणीते पश्चाजेव वा एषा होत्राः स्वऽर्ग्यां यदछावाक्या त्रिदेवत्याः शंसति त्रिपाद्यजमानः प्रतिष्ठित्या अथ यदग्नीधं मध्यतो वृणीते तस्मादयमग्निर्मध्यत ओषधीनां यदुत्तमः संयजतां संयजति तस्मादुपरिष्टान्मथ्यमानः प्रजायत एतद्वा अस्य छन्दांसि वृतानि युक्तान्यभूवन्यदवृता वषट्कुर्युर्भ्रातृव्यं यज्ञस्याशीर्गछेदेष यद्वृतो वषट्कुर्वन्त्येकधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठति तस्मादेकः पशोर्वषट्करोत्येकं हि वृणुते दश वै पशोर्देवता दशास्मिन्प्राणा यद्दश प्रयाजा या एवास्मिन्देवतास्ता एतद्यजत्यथ य एष एकादशो यस्या एव देवतायै पशुरालभ्यते तामेवैतद्यजत्यथ यदेकादशानुयाजा या एवैतद्देवता संयाक्षीत्ता एतेनानुप्रीणाति हतो वा एष मृतो ऽमुत्र भूतो दश वै पशोर्देवता दशास्मिन्प्राणाः प्राणाः खलु वै पशोर्देवता यद्दश प्रयाजाः प्राणानेवास्य प्रयजत्यात्मा वै प्राणानामेकादश आत्मा वपा पशोर्यदेष एकादशः प-

---

1) So corrigirt, die Mss °ध्वर्यु 2) B पङ्क्ति 3) In den Mss तद्यद्° ohne Accent 4) Das Zeichen ॥ fehlt in den Mss, ist aber durch den Hiatus sowie das erste ॥ schon gefordert. 5) So die Mss, Kaṭh 26 9 पश्चाजमिव वा एतच्छन्दो यदनुष्टुप्पश्चाजेवैषा होत्रा यदच्छावाक्या, Kap S 41 7 पश्चाजमिव वा एतच्छन्दो यदनुष्टुप्पश्चाजेवैषा होत्रा यदच्छावाक्या 6) So stand ursprünglich in H, dann corrigirt in °त्यां, in Bb °त्यां 7) So corrigirt, die Mss तस्मादयम° 8) So corrigirt, die Mss यज्ञत्वा, 9) So corrigirt, die Mss वृणुते

रिशय आत्मा वा एतदात्मानं परिश्रयें ऽथ यदेकादशानुयाजाः प्राणानसिन्दधाति ॥ ८ ॥

Vgl TS 6, 3 7, 5 (prayajah), Kath 26, 9, Kap 8 41, 7

॥ इति तृतीयकाण्डे नवमः प्रपाठकः ॥

---

पत्नी वै प्रच्यवमानामुष्यादित्यस्य लोकमभिप्रच्यवेत[1] हिनस्ति खलु वा एष त᳚ यो ऽस्य लोकमभिप्रच्यवते यदाह नमस्त आतानेत्यमुष्मा एवं नमो ऽकरनर्वा प्रेहीत्यनेना प्रेहीति वा एतदाह यजमानाय घृतस्य कुल्यामनु सह रायस्पोषेणेत्याशिषमेवाशास्ते देवीरापः शुद्धा यूय देवान्युयुध्वमित्यपो वा एतद्यूपन्ति पूताभिरद्भिः पूताश्चरन्ति तस्मादा एता बहु रिप्रममेध्यं चरन्तीरापो न हिंसन्ति हतो वा एष मृतो ऽमुं च भूतो ऽद्भ्यो वै प्रजाः प्रजायन्ते पत्नी प्रजनयति यदद्भिरभिषिञ्चति पुनरेवैनं प्रजनयति सर्वान्प्राणान्त्संमृशति सर्वाण्यङ्गान्येतावान्हि पशुः पशोर्वै मार्यमाणस्य प्राणाञ्छुगृच्छति यदाह वाचमस्य मा हिंसीः प्राणमस्य मा हिंसीरित्यद्भिर्वा अस्यैतत्प्राणाञ्छुचो मुञ्चति यत्ते क्रूरं यदास्थितं तदेतेन शुन्धस्व देवेभ्यः शुम्भस्वेति यदेवास्य शमयन्तः क्रूरंक᳚स्तदं क्रूरमकास्तं ऽशमयति ये वा एते स्तोका अवपद्यन्ते तं इमामशान्ता ऋच्छन्ति तत इमां ऽगृच्छति यदाह शमद्भ्य इति शमयत्येवं

---

1) Das इति fehlt in den Mss 2) So H u Bb, in B °च्यवते 3) So die Mss
4) Die Mss प्राणांश्चंमृशति, s Einl z I Buch, p XLIII

शान्ता एवैनमामृछन्त्यहिंसाया ओषधे त्रायस्वैनमित्याह त्रात्या एवं स्वधिते मैनं हिंसीरिति वज्रो वै स्वधितिर्वज्राद्वावास्मा एतद-न्तर्दधात्यहिंसायै सर्वाभ्यो वै देवताभ्यः पशुरालभ्यते यदाह रक्ष-सां भागो ऽसीत्येतेन वा एतद्भागधेयेन रक्षांसि पशोर्निर्भजतीद-महं रक्षो ऽवबाध इदमहं रक्षो ऽधमं तमो नयामीत्याह रक्षसां ध्वरायै रक्षसामन्तरित्यै पशवो वै वपा यदुपतृन्द्यात्पशून्हिंस्याद्यन्नो-पतृन्द्यादमताः स्युर्यथा तन्विष्टं तदुपतृन्द्यात्पशूनां यत्या इषे त्वोर्जे त्वेति पै ३ इषेपोर्जे ३ होषा देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेति देवे-भ्य एवैनां शुन्धति देवेभ्यः शुम्भति घृतेन द्यावापृथिवी प्रोर्णुवा-थामिति घृतेनैव द्यावापृथिवी प्रोर्णोत्यमुष्मै त्वा जुष्टमिति यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमकर्नमः सूर्यस्य संदृशे इ-त्यमुष्मा एव नमो ऽकरित्यथ पर्यावर्तत एवं हि यज्ञः पर्यावर्तते ऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तत उ३र्वन्तरिक्षं ३न्वीहीत्यन्तरिक्षदेवत्यो वा एष एतर्हि रक्षांसि वा एतं जिघां-सन्ति प्रच्युतमितो ऽप्राप्तममुम्[10] काश्मर्यमयी वपाश्रपणी भवति र-क्षसामनपहत्यै यस्मा एवामुतो[11] ऽग्निं पुरस्ताद्धरन्ति तस्मा इतो देवता वा एतद्यज्ञमनुपर्यावर्तमानमेति चरमत उपमतिगृह्णात्यधस्ताद्धाराय यदतिहरेदेतमेवातिहरेद्विश्वतोमुखो ऽह्यग्निः प्रत्युष्टं रक्षः प्रत्युष्टारा-तिरित्याह रक्षसां ध्वरायै रक्षसामन्तरित्यै वायोः स्तोकानामिति

1) In den Mss das Verbum ohne Accent 2) So meine Vermuthung; in Bb रक्षो यया; in H ebenso oder यया, in B यया (vielleicht auch यया) 3) So die Mss 4) So corrigirt; die Mss. betonen तदुपतृन्द्या॰ 5) Die Mss ॰र्यमिं 6) Die 3 fehlt in den Mss 7) So B, ohne Accent, in Bb शुंधति H शुर्धति, vgl. das Folgende. 8) So corrigirt; H u. Bb प्रोर्णुवाथा॰ B प्रोर्णोथा॰ 9) Die Mss एवं 10) ॰मितो मामम॰; cf oben 3, 9, 7; 3, 9 1, 3, 7 3. 11) So corrigirt, die Mss एवामुतो

तृणमुपास्यति स्तोकानां विधृत्यै वायुऽर्होतानमुतो विसृजन्ति प्रजानां कृप्त्या अयं वा एतद्वयंस्योयमौषधीनामेवेशेवाय संमर्धयत्येषो अप्याय वा एतद्वयंस्यायमौषधीनामिध्मं चिनोतीति हविषो वा एते स्तोकाः स्कन्दति वा एतद्धविर्यद्विषौततति यद्विलिप्यते यदाह ॥

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् ।
हव्या जुह्वान आसनि ॥

इति तेनैवास्य ते हुता अस्कन्ना वषट्कृता भवन्ति नानादेवऽत्या वा एकादशिन्यां पशवा आलभ्यन्ते ऽथाग्नेयी प्रथमानूच्यते ऽग्निर्वै सर्वा देवता अन्व वै सापि देवता यस्या आलभ्यते तामेवैनन्नमयति यर्हि लोहिनीव शृता तर्हि रौद्री यर्हि जुहुयाद्रुद्रायास्य पशूनपिदध्याद्यर्हि श्येनीव शृता तर्ह्याग्नेयी तर्हि होतऽव्या तथास्य रुद्रः पशूननभिमानुको भवति कव्यं वा एतर्हि पशुर्यर्ह्यशृतो यद्वपामभिघार्य पृषदाज्यमभिघारयेद्रुद्रायास्य पशूनपिदध्यादथ यत्पृषदाज्यमभिघार्य वपामभिघारयति यथापूर्वं वा एतत्पशुमुपैत्येथो एवमस्य रुद्रः पशूननभिमानुको भवति पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा अन्ये त उभये ऽस्ये मेध्ये ऽवरुध्यन्ते ॥ स्वाहा देवेभ्यः ॥ इति पुरस्ताद्वपाया जुहुयात् ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥ इत्युपरिष्टात्तथास्य त उभये ऽवरुद्धा भवन्ति पशोर्वै मायमाणस्य प्राणांत्संगृह्णाति प्राणान्त्संगृह्य वपामुपविसृजेदात्मा वपा प-

---

1) Die ३ fehlt in den Mss 2) So corrigirt, die Mss betonen ॰द्वयंस्यायम॰ 3) Die Mss एकादशिन्या 4) Die Mss शृता vgl aber das Folgende 5) So die Mss (उभयेऽस्ये) 6) So B, desgl in H durch Corrector, wo ursprünglich वरुधे stand in Bb वरुधेते 7) Bb ॰मुपविसृषेद्॰

घोरात्मंत्वेवास्य प्राणान्दधाति दक्षिणस्य पूर्वपदस्यावद्येयमिति ह स्माहुर्दाक्षायणाः सर्वथास्य सर्वस्य पशोरवत्तं भवतीति स्वाहोर्ध्वनभसं[1] मारुतं देवं गच्छतमिति वपाश्रपणी अनुप्रास्यत्यूर्ध्वनभसो वा एते मारुतस्य भागधेयं तमेवैनेन गमयतीमे वा एते विषूची अनुप्रास्यत्येनयोर्विधृत्यै ॥ १ ॥

Vgl 1, 2, 16 — TS 6, 3, 8 a. E (s. oben) und 9 (vapāhomah)

पुरुषं वै देवा मेधायालभन्त तस्य मेधोऽपाक्रामत्सोऽश्वं प्राविशत्तेऽश्वमालभन्त तस्य मेधोऽपाक्रामत्स गां प्राविशत्ते गामालभन्त तस्य मेधोऽपाक्रामत्सोऽविं प्राविशत्तेऽविमालभन्त तस्य मेधोऽपाक्रामऽ३त्सोऽजं प्राविशऽ३त्तेऽजमालभन्त तस्य मेधोऽपाक्रामत्स यवं प्राविशत्ते यवमालभन्त तस्य मेधोऽपाक्रामत्स व्रीहिं प्राविशत्ते व्रीहिमालभन्त तं व्रीहा आप्नुवन्यद्व्रीहिमयः पुरोडाशो भवति मध्यतो वा एतत्पशोर्मेधो धीयते सुषिरो वै तर्हि पशुर्यर्हि वपामुत्खिदन्ति[10] यद्व्रीहिमयः पुरोडाशो भवत्यपिहित्या असुषिरत्वाय[11] द्वादशकपालो भवति द्वादश मासाः संवत्सरः संवत्सरमनु पशवः प्रजायन्ते प्रजननायैकादशकपालः कार्य एकादशाक्षरा त्रिष्टुबैन्द्रमे-तच्छन्दो[12] यत्त्रिष्टुबैन्द्राः पशवः पशुष्वेवास्य पशून्दधाति देवा अ३-न्योन्यस्मै पशुमालभं स्वर्गं लोकमायंस्तेऽमन्यन्तानेन[13] वै नोऽन्ये

---

1) So corrigirt, die Mss °नभस, cf das Folgende u oben 1 2 16 2) Die Mss betonen मोऽत्तस्य 3) So corrigirt, H u Bb ऽत्सोऽश्वं desgl B ohne Accent. 4) So corrigirt, H u Bb ते ऽश्वमालभंत desgl B ohne Accent 5) So corrigirt, H u Bb ऽत्सोऽविं desgl B ohne Accent 6) So corrigirt H u Bb ते ऽविम°, desgl B, ohne Accent. 7) So corrigirt H u Bb °शऽ३ँतेऽजम°, desgl B ohne Accent. 8) So B, ohne Acc. Bb व्रीहिं H व्रीहिं 9) So corrigirt, die Mss मध्यतो 10) So wohl in Bb durch Corrector, H °मुत्खिदंति, desgl B, ohne Accent 11) So corrigirt; die Mss °सुषिर° 12) So corrigirt, die Mss °मरात्त्रिष्टु° 13) So corrigirt, die Mss तच्छंदो 14) So corrigirt, H °य° स्त मंन्यता°, Bb °य°स्त मंन्यंता°, B य° स्ते मन्यता

लोकमन्वारोक्ष्यन्तीति तस्य मेधं प्राक्षारयन्त्स[1] प्लक्षो ऽभवत्तत् प्लक्षस्य प्लक्षत्वं क्रोम्नो वै[3] तं हृदयात्[4] प्राक्षारयंस्तस्मादेतत्सुषिरं यत् प्लक्षशाखाया[5] अवद्यति मेधादेवाध्यवद्यति पृषदाज्यस्योपहत्य परैति ॥ शृतं हविः शमितर ॥[6] इति शृतत्वाय त्रिराह त्रिषत्या हि देवा ऋषयो यथेदं[7] ब्राह्मणेभ्य ओदनं पक्वं प्राहैवं वा एतद्देवेभ्यो हविः शृतं प्राहोत्तरतः परीत्याभिघारयति पशूनामवरुद्ध्यै प्राणापानौ वै पृषदाज्यमात्मा हृदयं यत्पृषदाज्येन हृदयमनक्ति मध्यतो वा एतत्पशोः प्राणापानौ दधाति सोमस्य वा एतद्बर्हिर्यद्बर्हिरेव वा एतत्पशोर्यदुत्तरबर्हिर्बर्हिः[8] प्रेद्धा[9] एतद्धव्यमकरंस्तन्नमयिक्षुब्धं मे हव्यं देवता गच्छदिति देवानां वै सर्वेषां मनांसि गच्छति[10] पशा आलभ्यमाने मनो वै मनोता[11] यन्मनोताया[12] अन्वाह मनांस्येवैषां संभावयति हतो वा एष मृतो ऽमुं च भूतो मनो वै मनोता यन्मनोताया[12] अन्वाह पुनरेवैनं संभावयति ॥ २ ॥

Vgl TS 6, 3, 9 (s. oben) u. III (avadānāni).

हृदयस्यावद्यति मनस एवं तेनावद्यत्यथो यावानेव पशुस्तस्यावत्तं भवति जिह्वाया अवद्यति वाच एवं तेनावद्यत्यथो एतया ह्यया ओषधीनां रसं प्राश्नाति श्येनस्यावद्यति वक्षस एवं तेनावद्यत्यथो अत्र हि स रसः प्रतितिष्ठति दोष्णो[13] ऽवदाय पार्श्वयोरवद्यति यज्ञस्य परि-

1) Die Mss °यन्स 2) So corrigirt, Bb संचो भव°, H सचो भ°, 3) B वा 4) So corrigirt, die Mss हृदयान् 5) So corrigirt, die Mss सचशाखया 6) Das ॥ fehlt in den Mss 7) B यदेव 8) In den Mss fehlt der Visarga 9) So die Mss 10) So die Mss 11) So corrigirt, die Mss संचोता, 12) So corrigirt; die Mss मतोतायां . 13) So corrigirt, die Mss दोष्णौ

गृहीत्वै यज्ञो ऽवद्यति मध्यस्यैवं तेनावद्यति मतस्नयोरवद्यति[1] रूपस्यैवं तेनावद्यति श्रोण्या अवदाय गुदस्यावद्यति तदुत्तमस्यावद्यत्युत्तमं[2] ह्यायुर्यदन्यस्योत्तरस्यावद्येत्प्राणमस्यापिदध्यात्प्रमायुकः स्यात्तस्मात्तस्योत्तमस्यावद्यत्युत्तमं ह्यायुर्हृदयस्यावदाय जिह्वाया अवद्यति यथापूर्वं वा एतत्पशुं सुपेत्य[3]थो एवमस्य सर्वस्य पशोरवत्तं भवत्येकादश कृत्वो ऽवद्यति दश वै पशोः प्राणा आत्मैकादशस्तथास्य सर्वस्य पशोरवत्तं भवत्येकादश वा एतान्यवदानानि तानि द्विर्द्विरवद्यति तद्द्वाविंशतिस्त्रीणि त्र्यङ्गानि तत्पञ्चविंशतिः पञ्चविंशेन वै स्तोमेन मनुः प्रजा असृजत तन्मनुस्तोमो वा एष प्रजननायैतर्हि सर्वस्य पशोरवत्तमेष[5] वै प्राणस्यापानस्य व्यानस्य तेषामनवत्तं यत्त्र्यङ्गाणामवद्यति तेनैव प्राणस्यापानस्य व्यानस्य तेषामवत्तं भवति विश्वरूपो वै त्वाष्ट्रः पशूनभ्युयमत्तस्मात्पशवो विश्वरूपा अभिवान्त्यो वै पशुः पूयितस्तस्मात्पृष्टीनां[6] मज्जा नाद्यः[7] स वा[8] अधस्तात्प्राप्नोदेतर्हि[9] जीवं तस्मादेतो ऽवद्यत्यक्ष्णयाङ्गानामवद्यति पशु[10] वा एतदाप्नुमयति[11] तस्मात्पशवो ऽक्ष्णयाङ्गानि प्रहरन्तो यन्त्याग्नेयो वै सर्वः पशुरेष वा उतान्यस्यै देवताया आलभ्यते यद्दोष्णः पूर्वार्धादग्नये ऽवद्यति गुदस्य मध्यतः श्रोण्या जघनतस्तथास्य सर्वस्य पशोरग्नये ऽवत्तं भवति त्रेधा गुदं करोति त्रेधा ह्येतर्हि[12] पशु३स्त्र्यङ्गाणि समवत्तमवदानानि[13] यावानेव पशुस्तस्मिन्नायुर्दधाति त्रेधा मेदः करोति मेदोरूपा[14] हि पशवः

1) So corrigirt, H u. Bb मतस्नयोरवयति, B मतस्नयोरव्स्यति. 2) So corrigirt; H u. Bb °दक्षिणसम°, B °दक्षिणसम° 3) In den Mss °सुपे ohne Accent. 4) B °वत ततस्मपु° 5) So B, ohne Accent, in H u. Bb °मथैव 6) Die Mss पृष्टीना; 7) So corrigirt, die Mss नार्द्य. 8) So corrigirt, die Mss सर्वा. 9) So corrigirt; H u. Bb प्राप्नोदेतर्हि, B प्राप्नोदेहि od हि. 10) So B, ohne Accent; H u. Bb पशु° 11) So die Mss! 12) Die ३ fehlt in den Mss 13) Die Mss समैमसम° 14) So corrigirt, die Mss मेदोरूपो.

सर्वाणि वै पशोर्मेध्यतो ऽङ्गानि मेधन्ति यावानेव पशुस्तस्मिन्मेदो रूपं दधाति बहुमयो[1] यज्ञकृणवी[2]ति ह स्माह यज्ञवचा राजस्तम्बायनः प्र वा इतो मनुष्याः पशुं च्यावयन्ति नामुत्र गच्छतीति यद्धिरण्यमवधाय जुहोति हिरण्यज्योतिषमेवैनं स्वर्गं लोकं गमयति ॥ ३ ॥

Vgl. Ts 6,3,10 (avadânâni)

वसाहोमं प्रयौति रसं वा एतत्प्रयौति स्वधितिना प्रयौत्ये तेन हीतरेषामङ्गानामवद्यति तत्स्विदवदानमकर्येो वज्रेणैवाहुतिमवरुन्द्धे यूपं एतयान्वित[3] शमयत्यूर्ग्वै रसो यूर्ज्जो वा एतद्रसेन पशुं संमर्धयत्यथो यावानेव पशुस्तस्मिन्त्संदधाति पार्श्वेनाभिदधात्यूर्जः परिगृहीत्यै हतो वा एष मृतश्नो ऽमुत्र भूतो यत्पशुं संमृशति पुनरेवैनं संभावयति हव्यं पूर्वे देवता गमयित्वाय शरीरमन्वारोहयित३व्यमित्याहुर्यदाहुतीर्हुत्वा पशुं संमृशति हव्यं वा एतत्पूर्वे देवता गमयित्वाथ शरीरमन्वारोहयत्यर्धर्चे जुहोतीयं वा अर्धर्चा३चो ऽसा अर्धर्चो ऽन्तरेणै अन्तरिक्षमन्तरिक्षमिमाः प्रजाः प्रजास्वेव रसं दधाति वनस्पतिं यजति सोमो वै वनस्पतिः सौमीरिमाः प्रजाः प्रजास्वेव रसं दधाति प्राणापानौ वै पृषदाज्यमात्मा हविर्यत्पृषदाज्यं जुहोत्यात्मन्वा एतत्पशोः प्राणापानौ दधाति दिग्भ्यो जुहोतीमा एव दिशो रसेन युनक्ति प्राचीमुत्तमां जुहोति प्राचीमेव दिशं पुनरुपावर्तन्ते

1) Die Mss बहुमया 2) Dies Wort in den Mss ohne Accent. 3) So ist vielleicht zu lesen, H schreibt यूपं एवयान्वित°, Bb यूपं एवयान्वित°; in B यपलया-न्वित°; (das स aber undeutlich) 4) Die Mss शमयंत्यू° 5) Die Mss. तस्मिन्सं° 6) So die Mss (°न्वारोहयित३व्य°) 7) So corrigirt; die Mss. ह्युर्यदा 8) B प्राचीमुत्तमा: 9) So corrigirt; die Mss पुनरूपा

ऽध्यूध्नी[1] होत्रे हरन्ति वैश्वदेवो वै होता वैश्वदेवीरिमाः प्रजा ऊधः खलु वै प्रजा अनूपजीवन्ति सर्वा एवैनाः[2] पयस्विनीः करोति गुदेनोपयजति प्राणो वै गुदः प्राणादधि प्रजाः प्रजायन्ते प्रजननाय[3] स्थविमत उपयजति[4] स्थविमतो हि प्रजाः प्रजायन्ते यदणिमत उपयजेत्प्रजननमपिहन्यात्तस्मात्स्थविमत उपयजत्यसंभिन्दन्नुपयजति प्राणानामसंभेदाय यत्संभिन्द्यात्प्राणांस्तं भिन्द्याद्यं द्विष्यात्तस्य संभिन्द्यात्प्राणानस्य संभिनत्ति नोपयज्य[5] यदुपयजेत्प्राणानुपयजेत्प्रमायुकः स्यात्तदाहुरुपयज्यमेव प्रजननं[6] वा उपयजो ऽपि ह स प्रजायते य उपयजतीत्याभारद्वाजेति ह स्माह शुचिवृक्षो गौपालायनः किं तर्हि प्रजा आसन्यर्हि यज्ञो नानोपयड्भिरासीच्च[7] प्रजाः प्राजायन्त[8] नौषधयः फलमगृह्णन्यदा वाव यज्ञ उपयड्भिः समभवदथ प्रजाः प्राजायन्ताथौषधयः[10] फलमगृह्णन्नेकादश प्रयाजा एकादशानुयाजा एकादशोपयजस्तत्त्रयस्त्रिंशत्त्रयस्त्रिंशद्देवतास्ता एवास्यैताभिरभीष्टाः[11] प्रीता भवन्त्यैतर्ह्यस्य पशोरनवाङ्गिष्टो ऽनभीष्टो ऽभूद्यास्य मात्रा तामेन[12] गमयति स्वर्ग्यो वै सर्वः[13] पशुर्[14]यदन्यत्राहवनीयाज्जुहुयादस्वर्ग्यः स्यात्पशुर्यत्प्रणादपि-माहरन्ति तेन स्वर्ग्यः सर्वः पशुर्यत एव पूर्वमवादास्ततो ऽपरमवद्यति तस्मात्समानाद्योनेर्नानारूपाः पशवः प्रजायन्ते यज्ञो वै देवानामत्यनेदत्तं देवा उपयड्भिरप्यवपन्ननतिनेदाय[15] यदेता उपयजो भ-

---

1) B ध्युध्नी° 2) So B ohne Accent H u Bb एवैना° 3) So corrigirt, die Mss प्रजननाय 4) B उपजयति 5) Die Mss °यार्नस्य 6) Die Mss नोप° 7) So corrigirt, die Mss नानोपयड्भिर° 8) So corrigirt, die Mss प्रजायत 9) So corrigirt, die Mss उपयंड्भि 10) So corrigirt, die Mss प्रजायंता° 11) So corrigirt, die Mss °रभीष्टो 12) So corrigirt, die Mss प्रीतो . 13) So H, ohne Accent, H u. Bb मांत्रोतामेन 14) Von hier bis zum folgenden सर्व° (incl.) in B fehlend 15) Die Mss schreiben उपयंड्भि°

वन्ति यज्ञमेवैताभिरपिवपन्त्यनतिनेदाय यदा वै पुरुषः प्रत्यङ् छिद्र एवं यज्ञः प्रत्यङ् छिद्रस्तं देवा उपयद्भिरप्यदधुरच्छिद्रत्वाय यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिदधात्यच्छिद्रत्वाय ॥ ४ ॥

Vgl 1, 2, 17. — TS 6, 3, 11 (anûyâjâḥ)

ये केचार्वाचीनमेकादशिन्याः पशवस्तानुत्तरमर्धं यूपस्य नियुञ्ज्याद्रौद्रा वै पशवो ऽग्निर्विधृतिर्दक्षिणे हविर्धाने सोममासादयन्ति तथास्य रुद्रः पशूननभिमानुको भवति पाचेषु वा अहमध्वर्युं चानध्वर्युं च विजानामीति ह स्माहारुण औपवेशिः कति पाचाणीति पृच्छेद्द्वादश पाचाण्युपानुसवनस्त्रयोदशं यत्तन्मीमांसन्ते पाचा३ं पाचा३मिति मीमांसन्ते हि त्रयोदशं मासं मासा३न्न मासा इति पञ्च प्रातःसवने पुरोडाशाश्चत्वारो माध्यंदिने सवने चत्वारस्तृतीयसवने इतो वा एतां निरमिमीत प्रजापतिरात्मन एव यत एवैतां निरमिमीत तदेतैरपिधीयते देवाश्च वा असुराश्चास्पर्धन्तायतनवन्तो ऽसुरा आसन्ननायतना देवा इमे लोका असुराणामायतनमासंस्ते देवाः स्तम्भंस्तम्भं पराजयन्तानायतना ह्यासंस्ते वै सवनान्येवायतनमचायंस्तानि प्राविशंस्तानि नाध्रियन्त ते वै पुरोडाशानेव सवनानामायतनमचायंस्तान्निरवपंस्तान्यध्रियन्त ततो देवा अभवन्परासुरा स य एवं वेदायतनवान्भवति भवत्यात्मना परास्य भ्रातृव्यो भवति तस्मादनुसवनं पुरोडाशा निरुप्याः सवनानां धृत्यै तस्मादनुसवनं पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै घृतं वै

1) So corrigirt, H °र्यनेतिनेदाय, desgl B, ohne Accent, Hb °र्यनेतिनेदाय
2) So die Mss
3) So corrigirt, die Mss उपयंद्भि°
4) So B, ohne Accent; in H u Hb दक्षिणो
5) Die Mss चानध्वर्यु
6) Die Mss पृच्छेद्दा°
7) So die Mss, wohl पाचा३म् zu accentuiren
8) So die Mss, wohl पाचा३मिति zu schreiben
9) So die Mss
10) So die Mss

देवा वज्रं कृत्वा सोममघ्नन्नभि[1] खलु वा एतं घारयन्ति यत्प्राश्नीयात्सोमपीथꣳ हन्याद्यन्न प्राश्नीयात्सोमपीथेन व्यृध्येत यन्नानभिघृतं तत्प्राश्यः सोमपीथस्य धृत्यै तन्न सूर्क्ष्यं प्राश्य एवैन्द्रो[2] वै वृत्रमहꣳस्तन्न किं चनाधिनोत्स पुरोडाश एवाधिनोत्तस्मात्पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै पञ्च प्रातःसवने पुरोडाशाः पुरोडाशः परिवापो धानाः करम्भः पयस्या सा पुरोडाशपङ्क्तिर्द्विनाराशꣳसाः[3] प्रातःसवने द्विनाराशꣳसा माध्यंदिने सवन एकनाराशꣳसास्तृतीयसवने सा नराशꣳसपङ्क्तिस्त्रीणि सवनान्यवभृथो[4] ऽनुबन्ध्या सवनानां पञ्चमी सा सवनपङ्क्तिरेषा वै सा पङ्क्तिर्यामाहुर्ब्रह्मवादिनो वेथ्य[5] तां[6] पङ्क्तिꣳ यया न स्तुवते[7] न शꣳसन्त्यथ[8] यज्ञꣳ वहन्त्यथ यज्ञꣳ सꣳस्थापयन्ता[9] इति ॥ ५ ॥

Vgl. Kâth. 29, 1

देवाश्च वा असुराश्चास्पर्धन्त[10] तेषां वा इन्द्रियाणि वीर्याण्यपाक्रामन्नृक्सामे वा एभ्यस्तदपाक्रामताम्[11] पशवो वागिन्द्रियं प्राणापानौ तैर्वा इन्द्रोऽकामयत सायुज्यं गच्छेयमिति ॥ हरिवाꣳ इन्द्रो धाना अत्तु ॥ इत्यृक्सामे वा इन्द्रस्य हरी ऋक्सामाभ्यामेव सायुज्यमगच्छत् ॥ पूषण्वान्करम्भः[12] ॥ इति पशवो वै पूषा पशुभिरेव सायुज्यमगच्छत् ॥ सरस्वतीवान्भारतीवान्परिवापः ॥ इति वाग्वै सर-

1) So corrigirt, H u Bb सोममघ्नन्नभि, B सोममघ्नन्नभि 2) So B, ohne Accent; in H u Bb एवैन्द्रो 3) In den Mss ohne Visarga, Kath 29,1 द्विनाराशꣳसाः 4) So corrigirt; in den Mss °वभृथो ohne Accent (dagegen नुबन्ध्या) 5) So meine Vermuthung; H u Bb lesen वैथ्य°, in B वेथ्य 6) B ता (also वेथ्यता, während H u Bb वैथ्य तां) 7) स्तुवते in den Mss ohne Accent 8) Das Verbum in den Mss ohne Accent 9) So corrigirt, die Mss °पयन्ता 10) Die Mss °र्धन्त° 11) Die Mss betonen एभ्य° 12) So meine Correctur, H u Bb करम्भो, B करम्भं

स्वतो वाचैवं सायुज्यमगछत् ॥ इन्द्रस्यापूपः ॥ इतीन्द्रियं वा इन्द्र इन्द्रियेणैव सायुज्यमगछत् ॥ मित्रावरुणयोः पयस्या ॥ इति प्राणापानौ वै मित्रावरुणौ प्राणापानाभ्यामेव सायुज्यमगछंस्ततो देवा अभवन्पराऽसुरा य एवं वेदैतैरेवेन्द्रियैर्वीर्यैर्मूर्तैर्महिमभिः सायुज्यं गछति भवत्यात्मना परास्य भ्रातृव्यो भवति दीर्घजिह्वी वै देवानां प्रातःसवनमवालेट् तद्व्यमाद्यत्सा पयस्याभवत्सा सात्मयऽस्या विमदित्तद्रूपेव मैत्रावरुणी प्रातःसवने स्यात् प्राणापानौ वै मित्रावरुणौ प्राणापानौ वा एतन्मुखतो यज्ञस्य धीयेते न गुदः पर्याकर्तवै यद्गुदं पर्याकुर्यादुदावर्तः प्रजा हन्याद्रक्षसामनन्ववजयाय यूपः पुरस्तान्मीयते मध्यमेन यूपं पशुं हरेयुस्तदनु रक्षांसि यज्ञमवजयेयुरन्तरा मिं च यूपं च हत्यो रक्षसामनन्ववजयाय ॥ ६ ॥

Vgl Kath 29, 1 u 2

समुद्रं गछ स्वाहेत्यपस्य वा एतद्यजत्यन्तरिक्षं गछ स्वाहेति रेत एवैतद्दधाति देवं सवितारं गछ स्वाहेत्याह प्रसूत्या एवाहोरात्रे गछ स्वाहेत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते मित्रावरुणौ गछ स्वाहेति प्राणापानौ वै मित्रावरुणौ प्राणापानावेवास्मिन् दधाति द्यावापृथिवी गछ स्वाहेत्याभ्यामेवैनाः सृष्टाः परिगृह्णाति छन्दांसि गछ स्वाहेति वाग्वै छन्दांसि वाचमेवास्मिन् दधाति सोमं गछ स्वाहेत्यन्नं वै सोमो

1) So meine Vermuthung, H u Bb lesen दीर्घजिह्वी, B दीर्घोजीह्वी, aber auf unsere Stelle bezieht sich aller Wahrscheinlichkeit nach das ved Citat beim Schol zu Pâ 4, 1 59 दीर्घजिह्वी वै देवाना हव्यमलेट्, vgl auch Ait. Br 2?, 2, das Femininum wird auch durch das Folgende सा पयस्याभवत् etc gefordert 2) So corrigirt, die Mss प्रातःसवनमवामेट्, vgl die longe Anm sowie bei Ait Br 22, 2 3) So corrigirt, B यद्गुरं, H u Bb यद्गुरं, 4) So B ohne Accent, in H u Bb मध्यमेण 5) So corrigirt, H °रन्तरामि, Bb °रन्तरामि, desgl B, ohne Acc. 6) So corrigirt, die Mss. यु, 7) Statt dessen schreibt B स्वाहेति रेत एवैतदाह 8) In den Mss. °स्थस्य° ohne Accent

ऽन्नमेवास्मु दधाति यज्ञं गच्छ स्वाहेति यज्ञिया एवैना[1] अकर्दिव्यं नभो गच्छ स्वाहेति वृष्टिमेवाभ्यो निनयन्त्यग्निं वैश्वानरं गच्छ स्वाहेति संवत्सरो वा अग्निर्वैश्वानरः संवत्सर एवैनाः प्रतिष्ठापयति संवत्सरायुपमेनाः करोति मनो हार्दिं यच्छेत्याह प्राणानां गोपीथायौषधीभ्यस्त्वेत्योषधीष्वेव रसं दधाति यो वै विद्वान्वाविद्वान्वोपयजो मिथुनं योप यजति प्राणान्वा एतन्मिथुनयांकुरुते यदाह मनो हार्दिं यच्छेति प्राणान्वा एतद्दतुशः[2] कल्पयते[3] पशुर्वा आलब्धः शोचति तस्य मध्यं शुगभिसमेति सा हृदयेऽभ्यागच्छति यत्सुरूपमुपस्पृशेन्मनुष्याञ्छुगृच्छेद्यज्ञमुपस्पृशेत्पशूञ्छुगृच्छेद्यद्वारूपस्पृशेद्वनस्पतीञ्छुगृच्छेद्यत्तृणमुपस्पृशेदोषधीः[5] शुगृच्छेद्यदुदकमुपस्पृशेदपः[6] शुगृच्छेद्यदार्द्रमनूदकं तत्स्यान्ते तयोपौप्य तद्देवता[4] शुचमवयजति ॥ ७ ॥

Vgl 1, 2, 18 — TS 6, 4, 1 (gudayagah)

॥ इति तृतीयकाण्डे पात्नीवन्ता नाम दशमः प्रपाठकः ॥

---

समिद्धो इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥
नराशंसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन्हिरण्यैश्चन्द्री[10] यजति प्रचेताः ॥
इडितो[11] देवैर्हरिवाँ[12] अभिष्टिराजुह्वानो हविषा शर्धमानः ।

1) Die Mss एवैना 2) So meine Correctur, die Mss एतदृतुनश 3) die Mss कल्पयते, 4) So corrigirt, die Mss पशुञ्छ 5) So corrigirt, die Mss यत्नुरु° und °षधी, 6) So corrigirt, die Mss पुमृशे°, 7) So die Mss (पात्नीवता) 8) So corrigirt, die Mss देवत त्रि°° 9) In den Mss ohne Accent s VS [illegible] 36 10) So B, ohne Accent, in H u Bb हिरण्यधीयद्री Kāṭh 38 6 हिरण्ये चन्द्री 11) So die Mss auch Kāṭh. इडितो 12) So B, ohne Accent, H u Bb हरिवा, wohl हरिव z l

पुरंदरो गोचभृद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनꣳ सीदात्प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तꣳ वसुभिः सजोषाः ॥
इन्द्रं दुरः कवष्यो धावमाना वृषाणꣳ यन्ति जनयः सुपत्नीः ।
द्वारो देवीरभितो विश्रयन्ताꣳ सुवीरा वीरं प्रथमाना महोभिः ॥
उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
पेशस्वती[2] तन्तुना संवयन्ती[3] देवानां देवꣳ यजतः सुरुक्मे ॥
दैव्या मिमाना मनसा पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः[4] ॥
तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः ।
अच्छिन्नं तन्तुं[5] पयसा सरस्वतीडा[6] देवी भारती विश्वतूर्तिः ॥
त्वष्टा दधदिन्द्राय शुष्ममपाको ऽचिष्टुर्यशसे पुरुक्षु[7] ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥
वनस्पतिरवसृष्टो न पाशैस्त्मन्या[8] समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानः स्वदातु हव्यं मधुना घृतेन ॥
स्तोकानामिन्दुं प्रति शूरा[9] इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।

---

1) So die Mss 1 (गोचभृद्), ich habe diese var. lectio für गोचभिद् nicht zu ändern gewagt, Kāth 38, 6 गोचभिद् 2) So corrigirt, die Mss पेशस्वती, Kāṭh 38, 6 पेशस्वती 3) So corrigirt, die Mss. सन्वयति, Kaṭh 38, 6 सव्ययती 4) So B, desgl Kaṭh 38 6, vgl VS 20 42, in H ursprgl धातुत geschrieben, dann am Anfang über der Zeile वा eingefügt und bei वृ Umstellung angemerkt, so dass wir वावृधाते erhalten, in Bb वावृधाने oder वावृधाते 5) So H, in Bb तंतु, desgl B, ohne Accent. 6) So corrigirt die Mss °तीडी, cf RV 2,3,8 u a., Kāṭh 38,6 7) Die Mss पुरुक्षी 8) So der P, die Saṃh Mss त्संन्या (sic)! auch Kaṭh 38, 6 त्सन्या 9) P शूर ।

घृतप्रुषा[1] मनसा हव्यमुन्दन्स्वाहाकृतं जुषता[2] हव्यमिन्द्रः ॥१॥

Vgl Kâṭh 38,6, VS 20,36—46, TBr 2,6,8

होता यक्षत्समिधाग्निमिडस्पदेऽश्विनेन्द्रं सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजं[2] मधुशष्पैर्न तेज इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो[3] न भेषजं पथा मधुमदाभरन्नश्विनेन्द्राय वीर्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः[5] पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज होता यक्षन्नराशंसं न नग्नहुं पतिं[6] सुरया भेषजं मेषः सरस्वती भिषग्रथो[7] न चन्द्र्यश्विनोर्वपा इन्द्रस्य[8] वीर्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य[9] होतर्यज होता यक्षदिडेडित[10] आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय[11] भेषजं यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य[12] होतर्यज होता यक्षद्बर्हिरूर्णम्रदा[13] भिषङ्नासत्या[14] भिषजाश्विनाश्वा[15] शिशुमती भिषग्धेनुः सरस्वती भिषगिन्द्राय दुह[16] इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य[17] होतर्यज होता यक्षद्दुरो दिशः कवष्यो न व्यच-

1) So corrigirt, die Mss घृतप्रुषा 2) So Bb, in H कुवलै°, in H eigentlich कुंवलै° geschrieben, später in कुवलै° corrigirt, P कुवलैः । cf VS 21,29 3) So betonen H u Bb, dagegen P मधु । शष्पैः । न । cf VS 4) H u Bb मेषो 5) B तोक्मानि 6) P सुरायाः । VS 21,31 सुरया 7) Die Mss भिषग्रथो 8) So die Saṃh Mss, aber P वपा । इन्द्रस्य । demgemäss वपेन्द्रस्य zu schreiben 9) In den Mss वेत्वाज्यस्य ohne Accent, aber cf dasselbe oben und unten 10) P इडा । ईडितः । cf dagegen 1,1,12 11) P गवा । इन्द्रियम् । अश्विना । इन्द्राय । 12) So corrigirt, die Mss व्यन्त्वाज्यस्य. P व्यन्तु । cf oben 13) P ऊर्णम्रदाः । 14) So ist wohl zu lesen, B भिषक् नासत्या Bb भिषङ्नासत्या in H hat zwischen भिषं und ना° noch etwas gestanden was aber durch einen grossen Klex ausgemerzt ist, P भिषक् । नासत्या cf übrigens VS 21,33 15) P भिषजा । अश्विना । अश्वा । 16) Bb दुहे 17) Die Mss व्यन्त्वाज्यस्य

स्वतीरश्विभ्यां न दुरो दिशा[1] इन्द्रो न रोदसी दुघे[2] दुहे धेनुः सरस्वती शुक्रं न ज्योतिरिन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य[3] होतर्यज' होता यक्षत्सुपेशसोषे[4] नक्तं दिवाश्विना[5] संजानाने[6] सुपेशसा समञ्जाते[7] सरस्वत्या त्विषिमिन्द्रेण[8] भेषजं° श्येनो न रंजसा हृदा पयः सोमः परिस्रुता घृतं मधु वीतामाज्यस्य होतर्यज' होता यक्षद् दैव्या होतारा भिषजाश्विनेन्द्रं[9] न जागृवि दिवा[10] नक्तं न भेषजैः शूष°[11] सरस्वती भिषक्सीसेन दुह[12] इन्द्रियं पयः सोमः परिस्रुता घृतं मधु वीतामाज्यस्य होतर्यज' होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवो ऽपसो[13] रूपमिन्द्रो[14] हिरण्ययमश्विनेडा न भारती वाचा सरस्वती मह[15] इन्द्राय दुह[16] इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य[17] होतर्यज' होता यक्षत्त्वष्टार° रूपकृत° सुपेशस° वृषभं नर्यापसं[18] त्वष्टारमिन्द्रमश्विना भिषजं नः सरस्वतीमोजो[19] न जूतिरिन्द्रियं° वृको न रभसो भिषग्यशः सुराया[20] भेषजं° श्रिया न मासरं पयः[21] सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज' होता यक्षद्वनस्पतिं° शमितार° शतक्रतुं भीमं न मन्यु° राजान° व्याघ्रं[22] नमसाश्विना भाम° सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं

---

1) P दिश । 2) P दुघे इति दुघे । 3) Die Mss सुत्वाज्यस्य, P व्यंतु । 4) P सुपेशसा । उषे इत्युषे । 5) P दिवा । अश्विना । 6) Die Samh Mss सजानाने, P सञ्जानानेति स जानाने । 7) Hu Bb समञ्जाते, B समञाते, P सं । अञ्जाते इत्यञ्जाते । 8) P इन्द्रे । न । (!) 9) Hu Bb भिषजाश्वि° 10) So P, in Hu Bb दिवा 11) So corrigirt, P शूष ।, Hu Bb शूष° desgl B ohne Accent ॥ VS 21,36 12) P दुहे । 13) So corrigirt Hu Bb यशो, desgl B ohne Accent °P अपस । 14) So H, Bb u P, in B °मिद्रो 15) So corrigirt, Hu Bb महा, P मह । 16) Bb दुहं, P दुहे । 17) Die Mss सुत्वाज्यस्य, aber P व्यंतु । 18) P नर्यापसमिति नर्यं अपस । 19) Die Mss °मोजी, P ओज । 20) P सुराया ।, cf oben, VS 21,39 सुरया 21) *In den Samh. Mss ohne Accent, in P nicht vorhanden* 22) *So der P* (व्याघ्रं । नमसा ।), in den Samh Mss व्याघ्रं°, s VS 21,39

चित्र[1] आदित्यानामुष्ट्रो घृणावान्वार्ध्रीनसस्ते[2] मत्या[3] अरण्याय[4] सृमरो रुरु[5] रौद्रः कुवयः[6] कुटरुर्दात्यौहस्ते वाजिनां कामाय[7] पिकः ॥ २० ॥

Vgl VS 24, 39, Kath 5, 7, 9 u a

खड्गो वैश्वदेवस्तरक्षुः श्वा कृष्णः[8] कर्णो गर्दभस्ते रक्षसामिन्द्राय सूकरः सिंहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै[9] विश्वे- 1
भ्यो देवेभ्यः पृषतः ॥ २१ ॥

Vgl VS 24, 40, Kath 5, 7

॥ इति तृतीयकाण्डे चतुर्दशमः प्रपाठकः ॥

---

शादं दद्भिरवकां दन्तमूलैर्मृदं[10] बस्वैस्तेगान्[11] दंष्ट्राभ्यामवक्रन्देन[12] तालु वाजं हनुभ्याम् सरस्वत्या[13] अग्रजिह्वं जिह्वाया[14] उत्सादमप[15] आस्येन वृषणा[16] आण्डाभ्यामादित्याञ्छ्मश्रुभिः[17] पन्था[18] भ्रूभ्यां द्यावापृथिवी वर्तोभ्यां[19] विद्युतं कनीनिकाभ्यां कर्णाभ्यां श्रोत्रं श्रोत्राभ्यां

---

1) P चित्रे । 2) So ist wohl zu lesen, B घृणावान्वार्ध्रीनसस्ते, H u Bb घृणावान्वार्ध्री नसा॰ P घृणावानिति घृणा वान् । वार्ध्रीनसः । 3) P मर्त्यै । 4) P अरण्याय । 5) P रुरु । 6) P कुर्वयि । 7) H u Bb कोताय 8) So im Anschluss an P तरक्षु । श्वा । कृष्णः ।, H u Bb तरक्षुश्वाकृष्ण (in H aber erst durch Correctur so, urg तरक्षुश्वाकृष्ण, so auch B, ohne Accent), s VS 9) P शरव्यायै । 10) P मृदं वा । 11) Die Samh Mss बस्वैस्तेगान्, P बस्वैः । तेगान् । 12) Die Samh Mss ॰मावक्रन्देन; P अवक्रन्देन । 13) P सरस्वत्यै । 14) P जिह्वायाः । 15) P अप । 16) P वृषणा(!) 17) P आदित्यान् । श्मश्रुभिरिति श्मश्रु भिः । die Samh Mss श्मश्रुभि, 18) P पन्थान । 19) So P वर्त्तोभ्यामिति वर्त्त भ्यां । H u Bb वर्त्तोभ्या॰, B वर्त्तोभ्या॰

कर्णौ[1] अवार्याणि पक्ष्माणि[2] पार्या[3] इक्षवः[4] पार्याणि पक्ष्माण्यवार्या[4] इक्षवः ॥ १ ॥

Vgl TS 5, 7, 11 12 (açvamedhângamantrah, çvitrahomah; dasselbe auch weiterhin im ganzen Prapâthaka), Kâth 5, 13, 1 u 2, VS 25, 1; Mân Çr 9, 2, 5

वातं प्राणेनापानेन नासिकामुपयाममधरेणौष्ठेन सदुत्तरेण शुक्लाय स्वाहा कृष्णाय स्वाहा स्तनयित्नुं निबाधेन मूर्धानं निवेष्येणाशनिं[5] मस्तिष्केण विद्युतं कनीनिकाभ्यां प्रकाशेनान्तरमनुकाशेन[6] बाह्यं तेदनीमधरकण्ठेनापः[7] शुष्ककण्ठेन[8] चित्तं मन्याभिरदितिं[9] शीर्ष्णा निर्ऋतिं निर्जल्पेन शीर्ष्णा प्राणान्संक्रोशै रेष्माणं[9] स्तूपेन[10] ॥ २ ॥

Vgl TS 5, 7, 12—14 (cf oben), Kâṭh 5, 13, 2, VS 25, 2

मशकान्केशैरिन्द्रं स्वपसा[11] वहेन बृहस्पतिं शकुनिसादेन[12] कूर्माञ्छफैराक्रमणं[13] स्थूराभ्यां बलं कुष्ठाभ्यां[14] जवं जङ्घाभिरध्वानं बाहुभ्यां जाम्बिलेनारण्यमग्निमतीरुग्भ्यां[15] रुद्रं रोराभ्यां[16] पूषणं दोर्भ्यामश्विना अंसाभ्याम्[17] ॥ ३ ॥

Vgl TS 5, 7, 11 flg (s oben), VS 25, 3, Kâth 5, 13, 2

अग्नेः पक्षतिर्वायोर्निपक्षतिः सोमस्य तृतीयापां चतुर्थ्यदित्याः[18]

---

1) P कंर्णौ । 2) So P, die Samh Mss. पक्षाणि. 3) P पार्याः । 4) P पक्ष्माणि । अवार्या ।, die Samh Mss. पक्षाण्य॰ 5) Die Samh Mss निवेष्येणाशनिं, P निवेष्येण । अशनिं । 6) P प्रकाशेनेति प्र काशेन । अंतरं । अनुकाशेनेत्यनु काशेन । die Samh Mss प्रकाशेनान्तरम॰ 7) Die Samh Mss तेदनीमध॰, P तेदनीं । अधर॰ कण्ठेनेत्यधर कण्ठेन । 8) H u Bb कण्ठेनापः शुष्ककण्ठेन, B ॰कण्ठेनप शु॰, P अपः । शुष्क कण्ठेन । 9) P संक्रोशैरिति सं क्रोशैः । 10) P रेष्माणं । स्तूपेन । 11) P स्वपसेति सु अपसा । 12) H u Bb शकुनिसादेन B शकुनिसादेन, P शकुनिसादेनेति शकुनि सादेन । 13) P कूर्मान् । 14) Kath 5 13 u कुष्ठिकाभिर्जवं 15) P जाम्बीलेन । अरण्यं । अग्निं । अतिरुग्भ्यामित्यतिरुक् भ्यां । 16) P रौराभ्यां । 17) So P, die Samh Mss. अंसोभ्यां, Kâṭh अंसाभ्यां 18) So corrigirt, die Mss चतुर्थ्यदित्याः, P चतुर्थी । अदित्याः ।

पञ्च३म्यग्नीषोमयोः[1] षष्ठी मरुतां सप्तमी बृहस्पतेरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी ॥ ४ ॥

Vgl. TS 5, 7, 21; VS 25, 4

इन्द्राग्न्योः पक्षतिः सरस्वत्या[2] निपक्षतिरिन्द्रस्य तृतीया बृहस्पतेश्चतुर्थी निर्ऋत्याः[3] पञ्चमीन्द्राण्याः षष्ठी सर्पाणां[4] सप्तमी विष्णोरष्टम्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यास्त्रयोदशी द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम् ॥ ५ ॥

Vgl. TS 5, 7, 22; VS 25, 5

मरुतां स्कन्धा विश्वेषां देवानां प्रथमा कीकसा रुद्राणां द्वितीयादित्यानां तृतीया वायोः पुच्छमग्नीषोमयोर्भासदौ क्रुञ्चौ श्रोणिभ्यां मित्रावरुणा[5] ऊरुभ्यामिन्द्रावरुणा[6] स्थूराभ्यामाक्रमणं कुष्ठाभ्यामंसराभिः[7] कपिञ्जलान् ॥ ६ ॥

Vgl. TS 5, 7, 15; Kâṭh. 5, 13, 5, VS 25, 6.

इन्द्रस्य क्रोडोऽदित्याः पाजस्यं दिशां जत्रवो[8]ऽदित्या भसज्जीमूतान्[9] हृदयौपशाभ्यामन्तरिक्षं पुलीतता[10] नभ[11] उदर्येण वल्मीकान्क्लोम्ना[12] ग्लौभिर्गुल्मांश्चक्रवाकौ[13] मतस्नाभ्यां दिवं वृक्काभ्यां हिराभिः स्रवन्तीर्गिरीन्प्लाशिभ्यामुपलान्प्लीह्ना[14] हृदान्कुक्षिभ्यां[15] समुद्रमुदरेण वैश्वानरं भस्मना ॥ ७ ॥

Vgl. TS 5, 7, 16, Kâṭh. 5, 13, 6; VS 25, 8.

1) So corrigirt, die Mss. पञ्चम्यग्नीषोमयोः 2) P सरस्वत्याः। 3) P पञ्चम्याः। 4) P स्कंधाः। 5) P मित्रावरुणौ। 6) P इंद्रावरुणौ। 7) P कुष्ठाभ्यां। मसराभिः।; die Samh. Mss. कुष्ठाभ्यां मसराभि°, cf. Kâṭh. 5, 13, 5 कुष्ठाभ्याम्, TS 5, 7, 13 पक्षमाभिः; VS 25, 3 पक्ष्मभिः, 8) H u. Bb जत्रवो, 9) P भसत्। जीमूतान्। हृदयौपशाभ्यां।; H भसज्जीमुता° हृदयौपशा°, Bb भसज्जीमूतां हृदयौपशा°; B भसज्जीमुता° हृदयौपशा° ॥ 10) P पुरीतता। पुरितदिति पुरि. तता। Kâṭh. 5, 13, 6 पुरितता 11) P नभः। 12) So corrigirt, die Samh. Mss. वल्मीकां क्लोम्ना;, P वल्मीकान्। क्लोम्ना। Kâṭh. 5, 13, 6 मत्स्नीकान्क्लोम्ना 13) ग्लौभि° ohne Accente P ग्लौभिः। गुल्मान्। 14) Die Samh. Mss. संवंती गि°; aber P स्रवंतीः।; 15) die Samh. Mss. हृदौ, aber P हृदान्।

विधृतिं नाभ्या[1] घृतं रसेनापो[2] यूष्णा[3] मरीचीर्विप्रुषा नीहारमूष्मणा शीनं[4] वसया ह्रादुनीर्दूषीकाभिः[5] प्रुष्वा अश्रुभिरस्ना रक्षांसि चित्राण्यङ्गैर्नक्षत्राणि रूपैः पृथिवीं त्वचा जुम्बकाय स्वाहा ॥ ८ ॥

Vgl TS 5, 7, 20, VS [illegible] 9

पूयं[6] वनिष्ठुनान्धाहीन्स्थूरगुदया सर्पान्गुदाभिर्विह्रुत[7] आन्त्रैरप[8] आस्येन वृषणा[9] आण्डाभ्यां शेपो[10] वाजिनेन प्रजां रेतसा चाषान्पित्तेन[11] प्रदरान्पायुना कूश्माञ्छकपिण्डैः[12] ॥ ९ ॥

Vgl TS 5, 7, 17; VS 25, 7, Kāṭh 5 13, 7

अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तिकाय पुरोडाशमष्टाकपालं निर्वपतीन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय पुरोडाशमेकादशकपालं विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यः पुरोडाशं द्वादशकपालं मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां[13] वैराजाभ्यां शारदाभ्यां पयस्यां बृहस्पतये पाङ्क्ताय त्रिणवाय[14] शाक्वराय हैमन्तिकाय चरुं सवित्र[15] आतिछन्दसाय त्रयस्त्रिंशाय रैवताय शैशिराय पुरोडाशं द्वादशकपालमनुमत्यै चरुं वैश्वानरं द्वादशकपालमदित्यै विष्णुपत्न्यै चरुं कायमेककपालम् ॥ १० ॥

Vgl TS 7, 5 14 (daçahavih sarvapṛṣṭhā), VS 29, 60

---

1) P नाभ्या। 2) P रसेन। अपं। 3) So corrigirt, die Saṃh Mss यूष्णां, P पूष्णा। 4) So P, die Saṃh Mss शीनं 5) So corrigirt, die Saṃh Mss दुषीकाभि, in P die erste Silbe des Wortes ganz undeutlich 6) Die Saṃh Mss वनिष्ठुनाधाहीं स्थूरगुदया, P वनिष्ठुना। अधाहीनित्यध अहीन्। स्थूलगुदयेति स्थूल गुदया।, Kāṭh 5, 13, 7 पूष्णो वनिष्ठुरधाहे स्थूरगुदाय 7) P विह्रुत इति वि ह्रुत। 8) P अपं। 9) P वृषणौ। 10) P शेप। 11) Die Saṃh Mss चायान् 12) P कश्मान्। 13) Die Saṃh Mss °मेनुष्टु°, P आनुष्टुभाभ्या। आनुष्टुभाभ्यामित्यानु स्तुभाभ्या। 14) P त्रिवंशाय। त्रिवंशायेति त्रि वंशाय। 15) P सवित्रे।

अग्नये ऽंहोमुचे पुरोडाशमष्टाकपालं निर्वपतीन्द्रायांहोमुचे पुरोडाशमेकादशकपालं मित्रावरुणाभ्यामागोमुग्भ्यां पयस्यां वायुसवितृभ्यामागोमुग्भ्यां[1] पयो ऽश्विभ्यामागोमुग्भ्यां धाना[2] मरुद्भ्य[3] एनोमुग्भ्यः पुरोडाशं सप्तकपालं विश्वेभ्यो देवेभ्य एनोमुग्भ्यः पुरोडाशं द्वादशकपालमनुमत्यै चरुं वैश्वानरं द्वादशकपालं द्यावापृथिवीभ्यामंहोमुग्भ्यां पुरोडाशं द्विकपालम् ॥ ११ ॥

Vgl TS 7, 5, [illegible] (daçahavir mrgareshtih)

॥ इति तृतीयकाण्डे पञ्चदशमः प्रपाठकः ॥

---

मा नो मित्रो वरुणो अर्यमायुरिन्द्र[4] ऋभुक्षा[5] मरुतः परिक्शन्[6] ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥
यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीता मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूपा[7] इन्द्रापूष्णोः[8] प्रियमप्येतु पाथः ॥
एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।

---

1) P वायुसवितृभ्यामिति वायुसवितृ भ्या । B वायुसवित्राभ्या° 2) P धाना । 3) P मरुद्भ्य इति मरुत् भ्य । 4) So corrigirt die Mss (H u Bb) betonen अर्यमायुरिद्र, aber P अर्यमा । आयु । इंद्र । 5) P ऋभुक्षा । 6) So corrigirt, die Samh Mss परिख्यान् P परि । ख्यन् । s Einl z I Bd p XLIII 7) So corrigirt, H u Bb विश्वरूप B विश्वरूपा, P विश्वरूप इति विश्व रूप । 8) So P, die Samh Mss इंद्रापूष्णो

अभिप्रिय॰ यत्पुरोडाशमर्वता[1] त्वष्टेदेन[2] सौश्रवसाय जिन्वति ॥
यद्धविष्यमृतुशो[3] देवयानं त्रिर्मानुषाः पर्यश्वं[4] नयन्ति ।
अत्रा[5] पूष्णः प्रथमो भाग[6] एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥
उप प्रागात्सुमन्मे[7] ऽधायि[8] मन्म देवानामाशा[9] उप वीतपृष्ठः ।
अन्वेन॰ विप्रा ऋषयो मदन्ति[10] देवानां पुष्टे चकृमा[11] सुबन्धुम् ॥
होताध्वर्युरावया[12] अग्निमिन्धो ग्रावग्राभ[13] उत शंस्ता[14] सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा[15] आपृणध्वम् ॥
यूपव्रस्का[16] उत ये यूपवाहाश्चषाल॰ ये अश्वयूपाय तक्षति ।
ये चार्वते पचन॰[17] संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥
यद्वाजिनो दाम[18] संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य[19] प्रभृतमास्ये तृणं॰ सर्वा ता[20] ते अपि देवेष्वस्तु ॥
यदूवध्यमुदरस्यापवाति[21] य[22] आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच्छमितारः[23] कृण्वन्तूत[24] मेधं॰ शृतपाकं पचन्तु ॥
यदश्वस्य क्रविषो मक्षिकाश[25] यद्वा स्वरौ[26] स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु[27] सर्वा ता[28] ते अपि देवेष्वस्तु ॥
यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति[29] ।

---

1) So nach Anleitung von TS 4 6 8,1 u VS 25 26, die Saṃh Mss °मर्यंत, P पर्यंत । 2) P त्वष्टा । इत् । एन । 3) Die Saṃh Mss °मृतशो, P ऋतुश इत्यृतु शः । 4) So corrigirt, Bb पर्यश्वं, H पर्यश्वन्; desgl B ohne Accent, P परि । अश्व । 5) P अत्र । 6) P भागः । 7) P सुमदिति सु मत् । मे । 8) P अधायि 9) P आशाः । 10) P मदन्तु ; desgl Kāṭh 5,6 4 11) P चकृम । 12) P आवयाः इत्या वयाः । 13) P ग्रावग्राभ इति ग्राव ग्राभः । 14) So P in den Saṃh Mss ohne Accent 15) P वक्षणा । 16) P यूपव्रस्का इति यूप व्रस्काः । 17) P ये । च । पचत । 18) P संदा । (!) 19) P यत् । वाघ । वाक्षः । 20) P सर्वाता । (cf aber unten) 21) P अप वाति । 22) P यः । 23) P तत् । शमितारः । 24) P कृण्वन्तु । उत । 25) P मक्षिका । आश । 26) So P (= VS 25, 37), die Saṃh Mss स्वरौ Kāṭh 5 6 4 स्वरौ 27) P यत् । नखेषु । 28) P सर्वा । ता । 29) P अवधावतीत्यव धावति ।

मा तद्भूम्यामाश्रिषन्मा[1] तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥
ये वाजिनं परिपश्यन्ति पक्वं य[2] ईमाहुः सुरभिर्निर्हरेति[3] ।
ये चार्वतो मांसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥
यन्नीक्षणं[4] मांस्पचन्या[5] उखाया[6] या पात्राणि यूष्ण[7] आसेचनानि ।
ऊष्मण्यापिधाना[8] चरूणामङ्काः सूनाः[9] परिभूषन्त्यश्वम् ॥
यदश्वाय वास[10] उपस्तृणन्त्यधिवासं[11] या हिरण्यान्यस्मै[12] ।
संदानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति[13] ॥
निक्रमणं[14] निषदनं विवर्तनं[15] यच्च पड्वीशमर्वतः ।
यच्च पपौ यच्च घासिं[16] जघास सर्वा ता ते अपि देवेष्वस्तु ॥
मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा[17] भ्राजन्त्यभिविक्त[18] जघ्रिः[19] ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ १ ॥

Vgl TS 4 6 8 u 9 (açvamedhah), Kath 5,6 4 u 5, VS 25,34--39

समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः ।
वाजी[20] वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥
तनूनपात्स पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् ।

---

1) P षो। श्रिषत्। मा। 2) P ये। 3) So corrigirt die Samh Mss निर्हरेति, P निः। हर। इति। Kath 5 6 5 निर्हरेति 4) P यत्। नीक्षमाणमिति नि ईक्षमाण। 5) P मांस्पचन्या। 6) P उखायाः। 7) P यूष्णः। 8) P ऊष्मण्या। अपिधानेत्यपि धाना। 9) So P (cf VS 25 36) die Samh Mss सूना Kath 5 6,4 सूना 10) P वास। 11) P अधीवास। अधिवासमित्यधि वास। 12) Die Samh Mss °न्यस्मै P हिरण्यानि। अस्मै। 13) P देवेषु। आ। यामयन्ति। यमयन्तीति यमयन्ति। 14) So P, die Samh Mss नि क्रमणं 15) P निवर्तनमिति नि वर्तनं। die Samh Mss विवर्तनं, s aber auch RV 1 162 14 16) So P die Samh Mss घासं s RV 1 162 14 17) So corrigirt, die Samh Mss त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा ab s P त्वा। अग्निः। ध्वनयीत्। धूमगन्धिरिति धूम गन्धिः। मा। उखा। Kath 5 6 5 त्वाग्निर्ध्वनयिद् 18) In den Samh Mss das Verb ohne Accent aber P भ्राजन्ति। अभि। विक्त। 19) So Bh, in H, B und auch P जिघ्रि, Kath 5 6 5 जघ्रिः 20) P, die Samh Mss वाजि

अनु त्वा सप्ने[1] प्रदिशः सचन्ताꣳ स्वधां देवैर्यजमानाय धेहि ॥
ईड्यश्चासि[2] वन्द्यश्चासि वाजिन्नाशुश्चासि[3] मेध्यश्चासि सप्ने ।
अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतꣳ वह्निꣳ वहतु जातवेदाः ॥
स्तीर्णं बर्हिः सुष्टरीमा[4] जुषाणोरु[5] पृथु प्रथमानं पृथिव्याम् ।
देवेभिरक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥
एता उ वः सुभगा विश्ववारा[6] वि[7] पक्षोभिः[8] श्रयमाणा[9] उदातैः[10] ।
ऋष्वाः सतीः कवषः शुम्भमाना[11] द्वारो देवीः सुप्रायणा[12] भवन्तु ॥
अन्तरा मित्रावरुणा चरन्ती[13] मुखꣳ यज्ञानामभि संविदाने ।
उषासा वाꣳ सुहिरण्ये सुशिल्पे ऋतस्य योना[14] इह सादयामि ॥
प्रथमा वाꣳ सरथिना सुवर्णा[15] देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रय[16] चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता[17] ॥
आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत्[18] ।
इडोपहूता[19] वसुभिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥
त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत[20] आशुरश्वः ।
त्वष्टेमा[21] विश्वा भुवना जजान बहोः कर्तारमिह यक्षि होतः ॥
अश्वो घृतेन त्मन्या समक्ता[22] उप देवाँ[23] ऋतुशः पाथ[24] एतु ।

---

1) So P, die Samh Mss सप्ते 2) P च। असि। (cf. VS 29,3, TS 5,1,11,1) 3) P वाजिन्। आशुः। च। असि। 4) P सुस्तरीम। सुस्तरीमेति सु स्तरीम। 5) P जुषाणा। उरु। 6) P एताः। उं इत्। उ। वः। सुभगा इति सु भगा। विश्ववारा इति विश्व वारा। 7) Das वि fehlt in P 8) In den Samh Mss ohne Accent पक्षोभि 9) P श्रयमाणा। 10) Die Samh Mss उदातै aber P उत्। आतैः। 11) P शुम्भमाना। 12) P सुप्रायणाः। सुप्रायणा इति सु प्रायना। 13) P चरन्ती इति चरन्ती।, B चरन्ति, Ha Bh चरन्ति 14) P योना। 15) So P सुवर्णेति सु वर्णा। (cf. VS 29,7, TS 5,1,11,3) die Samh Mss सुपर्णा Kath 5,6,2 सुवर्णा 16) So corrigirt, die Samh Mss अपिपृये, P अपिप्रयम्।, cf. VS 29,7, TS 5,1,11,3, Kath 5,6, अपिप्रय 17) P दिशन्ता। 18) P नः। आवित्। 19) So m. c. P इडा। उपहूतेत्युप हूता, die Samh Mss इडोपहुता 20) P जायते। 21) P त्वष्टा। इमा। 22) Die Samh Mss समक्तो, aber P समक्त इति सं अक्त। 23) P देवान्। 24) P पाथः।

वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥
प्रजापतेस्तपसा वावृधानः[1] सद्यो जातो दधिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा[2] याहि[3] साध्या[4] हविरदन्तु देवाः ॥ २ ॥

Vgl TS 5 1, 11 (açvasyaprıyah), Kath 5, 6 2, VS 29, 1—11, Mān Çr 9 2 5

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना[5] दिवि ॥
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ॥
केतुं कृण्वन्नकेतवे[6] पेशो मर्या[7] अपेशसे ।
समुषद्भिरजायथाः[8] ॥
जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥
धन्वना गा धन्वनाजिं[9] जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोतु धन्वना सर्वाः पृतना[10] जयेम ॥
वक्ष्यन्तीवेदागनीगन्ति[11] कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥
ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यताः[12] संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान् ॥

---

1) P वावृधानः । ववृधान इति ववृधानः । 2) P पुरोगा इति पुरः गाः । 3) So P, in den Samh Mss ohne Accent 4) H u Bb स्वाध्या P साध्याः ।, Kath 5 6 2 सख्या 5) P रोचनाः । 6) Die Samh Mss कृण्वन्तु केतवे, aber P कृण्वन् । अकेतवे । 7) P मर्याः । 8) H u Bb समुषद्भिर° B समुषद्भिर°, P स । उषद्भिरित्युषत् भिः । (s RV 1 6 3) 9) P गाः । धन्वना । आजिं । 10) P पृतनाः । 11) P वक्ष्यतीवेति वक्ष्यती इव । इत् । 12) Die Samh Mss विध्यतं P विध्यत ।

बहूनां[1] पिता बहुरस्य पुत्रः चिश्चा[2] कृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥
रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥
तीव्रान्घोषान्कृण्वते वृषपाणयो ऽश्वा[3] रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति[4] शत्रूँरनपव्ययन्तः[5] ॥
वनस्पते वीड्वङ्गो हि भूयाः[6] अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीडयस्वास्थाता[7] ते जयतु जेत्वानि ॥
दिवस्पृथिव्याः पर्यन्तरिक्षाद्वनस्पतिभ्यः पर्याभृतं[8] सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य[9] वज्रं हविषा रथं यज ॥
इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां[10] नो हव्यदातिं जुषाणो देव रथ[11] प्रति हव्या[12] गृभाय ॥
स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो[13] गभीराः ।
चित्रसेना[14] इषुबला[15] अमृध्राः सतोवीरा उरवो व्रातसाहाः[16] ॥
ब्राह्मणासः पितरः सोम्यासः[17] शिवे नो द्यावापृथिवी उभे स्ताम् ।
पूषा नः पातु दुरितादृतावृधो रक्षा[18] माकिर्नो अघशंस[19] ईशत[20] ॥
ऋजीते परि वृङ्ग्धि[21] नो ऽश्मा[22] भवतु नस्तनूः ।

---

1) So P, die Saṃh Mss बहूना, Kāṭh 5, 6, 1 बह्वीनां 2) So P, die Saṃh Mss शिश्वा, Kath 5, 6, 1 चिश्चा 3) P ऽश्वाः । 4) Die Saṃh Mss क्षोणति, Kāṭh. 5, 6, 1 क्षिणति 5) So die Mss, P शत्रून् । अनपव्ययत इत्यनप व्ययत । 6) P भूयाः । 7) P वीडयस्व । आस्थातेत्या स्थाता । 8) P पर्याभृतमित्या भृतं । 9) So H, P आवृतमित्या वृतं ।, in Bb u B °वृत° 10) Die Saṃh Mss सेमं; P स । इमां । 11) Die Saṃh Mss देवरथ, P देव । रथ 12) Bb हव्यं, 13) P शक्तीवन्त । शक्तिवन्त इति शक्ति वन्त ।, B शक्तिवन्तो 14) P चित्रसेना इति चित्र सेना । 15) P इषुबला इतीषु बला । 16) Die Saṃh Mss व्रातसहा, P व्रातसाहा । व्रातसाहा इति व्रात-सहाः । 17) P सोम्यास । 18) P रक्ष । 19) P अघशंस इत्यघशंस । 20) So P, die Saṃh Mss ईशते 21) P परि । वृङ्ग्धि । 22) P अश्मा

सोमो अधिब्रवीतु नो ऽदितिः शर्म यछतु ॥
सुपर्णं वस्ते मृगो अस्या[1] दन्तो गोभिः संनद्धा पतति प्रसूता ।
यत्रा[2] नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥
अहिरिव भोगैः पर्येति बाहुं ज्याया[3] हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परिपातु विश्वतः ॥
आजङ्घन्ति सान्वेषां जघनं[4] उपजिघ्नतु[5] ।
अश्वाजनि प्रचेतसो ऽश्वान्समत्सु[6] नोदय[7] ॥
उपश्वासय[8] पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैराराद्दवीयो अपसेध शत्रून् ॥
आक्रन्दय बलमोजो न आधा[9] निष्टनिहि दुरिता बाधमानः ।
अपप्रोथ दुन्दुभे दुच्छुना इत[10] इन्द्रस्य मुष्टिरसि वीडयस्व ॥
आमूरज[11] प्रत्यावर्तयेमाः[12] केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्तु नो नरो ऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३ ॥

Vgl TS 7 4 20 (jivato gcvasyopacārah) 4 6, 6 (mahaprshtham) Kāth 5 6 1, VS 23, 5 u 6, 29 37—57 Man Çr 9 9 3 u 4

समिद्दिशामाशयानः[13] स्वर्विन्मधु रेतो[14] माधवः पात्वस्मान् ।
अग्निर्देवो[15] दुष्टरीतुरदाभ्य इदं क्षत्रं रक्षतु पात्वस्मान् ॥
रथन्तरं सामभिः पात्वस्मान्गायत्री छन्दसां विश्वरूपा ।

---

1) P अस्या ।, d e Samh Mss अस्या 2) P यत्र । 3) P ज्याया । 4) P जघनान् । 5) P उपजिघ्नति । 6) P अश्वान् । समत्स्विति समत्सु । 7) So die Samh Mss, P चोदय, desgl Kāth 5, 6 1 8) H उपाश्वासय 9) P न । आ । धाः । 10) P दुच्छुना । इतः । 11) Bb आमूरज, H आमरज desgl B ohne Accent, P आ । अमू । अज । Kath 5 6 1 आमूरज 12) P प्रत्यावर्तयेति प्रति आवर्तय । इमाः । 13) P दिशाम् । आशयानः । 14) P स्वर्विदिति स्वः विंत् । मधु । रेतः । Bb मधु रेतो, H मधु रेतो, desgl B ohne Accent 15) So B ohne Accent P अग्निः । देवः ।, H u Bb अग्निर्देवो

त्रिवृन्नो[1] विष्टया[2] स्तोमो अह्ना समुद्रो वात[3] इदमोजः पिपर्तु ॥
उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे अहन्योजसीना[4] ।
इन्द्राधिपत्यैः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदम् ॥
बृहत्साम क्षत्रभृद्वृद्धवृष्ण्यं[5] त्रिष्टुभौजः[6] शुभितमुग्रवीरम्[7] ।
इन्द्रः स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्षतु ॥
प्राची दिशां सहयशा[8] यशस्वती विश्वे देवाः प्रावृषाह्ना[9] स्वर्वती ।
वैरूपे सामन्नधि तन्मशेयं[10] जगत्यैनं[11] विक्ष्वावेशयामि ॥
इदं क्षत्रं दुष्टरमस्त्वोजो ऽनाधृष्टं[12] सहस्यं सहस्वत् ।
विश्वे देवाः[13] सप्तदशेन वर्च[14] इदं क्षत्रं सलिलवातमुग्रम्[15] ॥
धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां[16] मित्रवदस्त्वोजः ।
मित्रावरुणा शरदाह्ना[17] चिकित्नू अस्मै[18] राष्ट्राय महि शर्म यच्छतम् ॥
वैराजे सामन्नधि मे मनीषानुष्टुभा[19] संभृतं वीर्यं सहः ।
इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः ॥
सम्राड् दिशां सहसाम्नी सहस्वत्यृतुर्हेमन्तो[20] विष्टया[21] नः पिपर्तु ।

---

1) P त्रिवृदिति त्रि वृत् । नः । 2) B विष्टया 3) P वातः । 4) P अहन् । ओजसीने । 5) Die Saṃh Mss वृद्धवृष्णि, P वृद्धवृष्ण्यमिति वृद्ध वृष्ण्य ।, Kāṭh 22, 14 वृद्धवृष्ण्यं 6) P त्रिष्टुभा । त्रिष्टुभेति त्रि स्तुभा । ओजः । 7) So corrigirt, die Saṃh Mss शुभितमु°, P शुभितं ।, TS 4,4,12,2 शुभितम्, auch Kāṭh 22,14 शुभितम् 8) P सहयशा इति सह यशाः । 9) So corrigirt, die Saṃh Mss प्रावृषाह्ना, P प्रावृषा । अह्ना ।, TS 4, 4 12 2 प्रावृषाह्ना°, Kāṭh 22, 14 प्रावृषाह्ना 10) P तत् । मशेयं । 11) P जगत्या । एनं । 12) P अनाधृष्टं । 13) P देवाः । 14) P वर्चः । 15) So mit P, सलिलवातमिति सलिल वात । (cf TS 4 4 12 3), H u Bb सलिलवातम्°, B सलिलं°वातम्° 16) P दधार । उपस्थ इत्युप स्थे । आशानां । 17) P शरदा । अह्ना । Kāṭh 22, 14 शरदाह्ना 18) So ist wohl zu lesen, die Mss schwanken, H चिकित्नोस्मै°, desgl B, ohne Accent Bb चिकित्नम्° P चिकित्नम् ।, Kaṭh 22, 14 चिकित्नू 19) P मनीषा । अनुष्टुभा । अनुष्टुभेत्यनु स्तुभा । 20) So im Anschluss an P सहस्वती । ऋतुः । (cf TS 4 4 12 3), die Saṃh Mss सहस्वदृतु° 21) So corrigirt, die Mss. विष्टया, cf oben u TS 4,4 12 3

अवस्युंवाता बृहती नं शक्वरी दिशां तेव्यूवतु[1] नो घृताची ॥
स्वर्वती सुदुघा नः पयस्वतीमं यज्ञमवतु या घृताची।
त्वं गोपाः पुरएतोत पश्चाद्बृहस्पते याम्या[2] युङ्ग्धि वाचम् ॥
ऊर्ध्वा दिशां[3] रन्तीराशौषधीनां संवत्सरेण सविता नो अह्ना।
रेवत्सामातिछन्दा[4] उ छन्दो[5] ऽजातशत्रुः[6] स्योना नो अस्तु ॥
स्तोमस्त्रयस्त्रिंशे भुवनस्य पत्नी[7] विवस्वद्वाते[8] अभि नो गृणीहि।
घृतवती सवितुराधिपत्ये[9] पयस्वती रन्तिराशा[10] नो अस्तु ॥
अन्वद्य[11] नो अनुमतिर्यज्ञं देवेषु मन्यताम्।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि।
क्रत्वे दक्षाय नो हिनु प्र ना[12] आयूंषि तारिषत् ॥
वैश्वानरो न[12] ऊत्या प्रयातु परावतः।
अग्निरुक्थेन वाहसा ॥
पृष्टो दिवि ॥
ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना[13] सहसो या मनोता।
बृहस्पतिर्मातरिश्वोत[14] वायुः संध्वाना[15] वाता[16] अभि नो गृणन्तु ॥

---

1) So H I. In Bb तेव्यवतु, desgl. B, ohne Accent, P तेवी। अवतु १, TS 4,4 12,4 देव्यवतु, Kāth 22,14 इम यज्ञमवतेया घृताची 2) H u Bb यान्या॰, Kāth 22,14 याम्या 3) So corrigirt, H u Bb रन्तीर॰, in B रन्तीर॰, P रति। आशा। औषधीनां।, Kāth 22, 14 रन्तिर 4) P साम। अतिछन्दा। 5) P छन्दः इत्युत् छन्द। 6) P अजात-शत्रुरित्यजात शत्रु। 7) P पत्नि।, Kāth 22, 14 पत्नि 8) P विवस्वद्वात इति वि-वस्वत् वाते। 9) So die Mss., P सवितुः। आधिपत्ये इत्याधिपत्ये। 10) So im Anschluss an P रन्तिः। आशा न। die Saṃh. Mss रन्तीर॰, Kāth 22, 14 रन्तिर॰ 11) B अन्विदनुमते च 12) P न। 13) P अघोरा। अस्य। ईशाना। 14) P मात-रिश्वा। उत। 15) P सधाना इति स धाना। 16) P वाता।

विष्टम्भो दिवो धरुणा पृथिव्या[1] अस्येशाना[2] जगतो विष्णुपत्नी ।
व्यचस्वतीषयन्ती[3] सुभूतिः शिवा नो अस्त्वदितेरुपस्थे[4] ॥
कया नः ॥
को अद्य युङ्क्ते धुरि गा[5] ऋतस्य शिमीवतो[6] भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो[7] मयोभून्य[8] एषां भृत्यामृणधत्स[9] जीवात् ॥ ४ ॥

Vgl TS 4, 4, 12 (yajyânuvâkyâh, açvamedhaprakarane), Kâth 22, 14

अग्नेर्मन्वे प्रथमस्यामृताना॰ यं पाञ्चजन्यं बहवः समिन्धते ।
विश्वस्या॰ विशि प्रविविशिवा॰समीमहे स नो मुञ्चत्व॰हसः ॥
यस्येदं प्राणन्निमिषद्यदेजति[10] यस्य जातं जनमानं च केवलम् ।
स्तौम्यग्निं[11] नाथितो जोहवीमि स नो मुञ्चत्व॰हसः ॥
इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा[12] उप मामुपागुः[13] ।
यो दाशुषः सुकृतो हवमुप गन्ता स नो मुञ्चत्व॰हसः ॥
यः संग्रामं नयति सं॰ वशी युधे यः पुष्टानि स॰सृजति त्रयाणि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्व॰हसः ॥
मन्वे वां मित्रावरुणा तस्य वित्तं॰ सत्यौजसा दुर्हणा यं नुदेथे[14] ।
या राजाना सरथ॰ यातं[15] उग्रा ता नो मुञ्चतमागसः ॥
यो वा॰ रथ[16] ऋजुरश्मिः सत्यधर्मा मिथुचरन्तमुपयाति[17] दूषयन् ।

---

1) P पृथिव्या । 2) P अस्य ईशाना । 3) P व्यंचस्वती । ईषयती । Kâṭh 22, 1 विश्वव्यचा इषयती 4) P ऽदिते । उपस्थ इत्युपं स्थे । 5) P गो । 6) So im Anschluss an P शिमीवत इति शिमी वत 1, (cf RV 1, 84, 16), die Saṃh Mss शमेव तो 7) P आसंन्निषून्नित्यासन् इषून् । 8) P वं । 9) So corrigirt, die Saṃh Mss भृत्यां गृणधत्, P भृत्या । ऋणधत् । 10) P मायंत् । निमिषदिति नि मिषत् । यत् । एजति 11) P स्तौमि । अग्निं । 12) P स्तोमा । 13) P उपमामिर्युप मा । उपमा । (?, 14) Die Saṃh Mss दुर्हणायंनुदेथे P दुर्हणेति दुः हणा । यं । नुदेथे । 15) P यातं 16) P रथ । 17) P मथूचरतमिति मथु चरत ।

स्तौमि मित्रावरुणौ नाथितो जोहवीमि तौ नो मुञ्चतमांगसः ॥
वायोः सवितुर्विदथानि मन्महे यौ[1] आत्मन्वद्बिभृतो यौ च रक्षतः ।
यौ विश्वस्य परिभू बभूवथुस्तौ नो मुञ्चतमांगसः ॥
उप श्रेष्ठा[2] न आशिषो देवयोर्धर्मा[3] अस्थिरन् ।
स्तौमि वायुं सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमांगसः ॥
रथीतमौ रथीनामह्व[4] ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः ।
ययोर्वां देवौ[5] देवेष्वनिशितमोजस्तौ[6] नो मुञ्चतमांगसः ॥
यदयातं[7] वहतुं सूर्यायास्त्रिचक्रेण संसदमिच्छमानौ ।
स्तौमि देवा[8] अश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमांगसः ॥
मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं[9] विश्वामवन्तु विश्वे ।
आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥
तिग्ममायुधं वीडितं सहस्वद्दिव्यं[10] शर्धः पृतनासु जिष्णु[11] ।
स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥
देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं[9] विश्वामवन्तु विश्वे ।
आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥
यदिदं माभिशोचति पौरुषेयेण दैव्येन ।
स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥
अन्वद्य नो अनुमतिरन्विदनुमते त्वं वैश्वानरो न ऊत्या ॥

---

1) P यौ । 2) श्रेष्ठा । न । 3) P धर्मा । 4) So Bb, H र्(थिनामहू, desgl B, ohne Accent. P रथीना । अहू ।, Kath 22 15 रथीना ऊप 5) So P, die Samh Mss देवौ, 6) So die Samh Mss, in P देवेषु । अनिष्यितमित्यनि॰ षित ।, Kath 22, III देवेष्वनिषितम॰ 7) H = Bb यद्यात॰, III यद्यायात॰ oder याद्यायात॰, P यत् । आयातमित्या यातं । s aber auch TS. 4 7 15, 4, Kath 22, 15 यद्यात 8) P देवौ 9) So corrigirt, die Samh Mss प्रैमा॰ वाच॰, P प्र । इमा । वाच । 10) P सहस । (!) दिव्य । 11) So corrigirt, alle Mss, auch P, lesen जिष्णु, Kath 22, 15 जिष्णु

त्वमग्ने शोचिषा शोशुचान[1] आ रोदसी अपृणा जायमानः[2] ।
त्वं देवाँ[3] अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा ॥
उर्वी रोदसी वरिवस्कृणोत क्षेत्रस्य पत्नी[4] अधि नो ब्रुवाथ ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः ॥
ये अप्रथेताममितेभिरोजोभिर्ये[5] प्रतिष्ठे अभवतां वसूनाम् ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः ॥
यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः[6] ।
कृधी ३ष्वस्माँ[7] अदितेरनागान्व्येनाꣳसि शिश्रथो विष्वगग्ने ॥
यथा ह त्यद्वसवो[8] गौर्यं चित्पदि षिताममुञ्चता[9] यजत्राः ।
एवो[10] ३ष्वस्मन्मुञ्चता[11] व्यꣳहः प्रतार्यग्ने प्रतरं ना[12] आयुः ॥ ५ ॥

Vgl TS 4 7 15 (açvamedhasambandhinyo yājyanuvākyāḥ), Kaṭh 22,15

॥ इत्युपरिकाण्डे षोडशः प्रपाठकः ॥

॥ इत्युपरिकाण्ड समाप्तम् ॥

1) I शोशुचान । 2) Die Saṃh Mss अपृणाज्जायमान aber P अपृणा । जायमान । 3) P देवान् । 4) So mit I पत्नी इति पत्नी । die Saṃh Mss पत्नी cf TS 4 7 15 6 5) So corrigirt nach Anleitung von Kāṭh 22 11 °ममितेभि रोजोभि°, die Mss schreiben °ममृतेभिर° auch I अमृतेभि I, beachte den Accent der auf den Fehler hinweist 6) P कृत् I चित् I आग° I 7) P कृधि । सु । अ स्मान् I, d e 3 ist von mir hinzugesetzt 8) So im Anschluss an P त्यत् । (s auch unten 4 11 1 u RV 4 12 6) die Saṃh Mss तद्वसवो 9) I सितं । अमुञ्चत । 10) P एवो. एवो. I 11) So corrigirt die Mss. व्यस्मन्मुञ्चता (ohne 3), P सु । अस्मत् । (cf RV 4 12 6) 12) P न I

# Corrigenda.

S 5 Z. 3 lies °विदर्दुत्तरया statt °विन्दर्दुत्तरया
„ 8 „ 7 „ गृह्णन्ति statt गृह्णांति
„ 39 „ 3 „ ग्रान्तरंयो पराद् statt ग्रान्तरयो ˇ पराद्
„ 40 „ 14 „ स्रों statt स्रो
„ 42 „ 6 „ प्रत्येकल्पा statt प्रत्येकल्पर
„ 42 „ 17 „ होत्रुर्यां statt होतुर्यां
„ 53 „ 12 u 13 lies दीक्षते statt ईक्षते
„ 64 „ 3 lies प्रांपिपद्वं statt प्रांपिबद्व
„ 72 „ 12 ist das Zeichen ˇ vor चांहते zu streichen
„ 75 „ 1 lies इमां नं प्रांजान॰ statt इमांनंप्रजान॰
„ 75 „ 4 „ सांत्रपीन् statt सौं त्रपीन्
„ 77 „ 8 „ °मजयत् statt °मयजत्
„ 84 „ 12 u 13 lies सोमविक्रयिन्त्सोमं statt सोमविक्रयित्सोमं
„ 90 „ 12 lies ऽविदामहोति statt विदामहोति

# ॥ मैत्रायणी संहिता ॥

# MÂITRÂYAṆÎ SAṂHITÂ

HERAUSGEGEBEN

VON

DR LEOPOLD VON SCHROEDER

VIERTES BUCH

GEDRUCKT AUF KOSTEN DER DEUTSCHEN MORGENLÄNDISCHEN GESELLSCHAFT

LEIPZIG

IN COMMISSION BEI F A BROCKHAUS

1886

# ॥ मैत्रायणी संहिता ॥

# MÂITRÂYAṆÎ SAṂHITÂ

HERAUSGEGEBEN

VON

DR LEOPOLD VON SCHROEDER

VIERTES BUCH

GEDRUCKT AUF KOSTEN DER DEUTSCHEN MORGENLÄNDISCHEN GESELLSCHAFT

LEIPZIG

IN COMMISSION BEI F A BROCKHAUS

1886

# Vorwort.

---

Die vorliegende Ausgabe des vierten Buches der Maitrâyaṇî Saṁhitâ bringt das ganze Werk zu seinem endlichen Abschluss

### Handschriften

Die bei der Feststellung des Textes benutzten Handschriften sind folgende

1 Die Bühler'sche Handschrift (B)

2 Die Handschrift von Bombay (Bb)

3 Die moderne Haug'sche Handschrift (H)

Diese drei Handschriften, durchweg moderne Copieen ein und desselben älteren, in Nasik befindlichen Ms, sind den Benutzern meiner Ausgabe der Maitr Saṁhitâ bereits von den früheren Büchern her genugsam bekannt Es kommen nun noch dazu und zwar als besonders wichtig

4 Eine alte Handschrift von Morbî auf 112 Blättern den grössten Theil des Kaṇḍa IV enthaltend, von mir mit M bezeichnet Diese Handschrift ist nach dem alten System der Maitr Çâkhâ accentuirt Die alten Blätter derselben sind mehrfach durch neue unterbrochen, offenbar zum Ersatz von allzu schadhaft gewordenen alten Blättern, eine Mittheilung aus solch einem neuen Blatte wird stets durch den Zusatz (n Bl) besonders gekennzeichnet Die Handschrift darf als eine recht gute bezeichnet werden und steht ungefähr auf gleicher Stufe mit M 1 und 2 für Kanda I (während M 3, zu Kanda II, bedeutend schlechter war)

5 Eine alte Handschrift dem Sanskrit College zu Benares gehörig, von mir mit Ben (d h Benares) bezeichnet Dieses Ms enthält auf 105 Blättern den grössten Theil von Kanda IV Dasselbe ist sehr schön und correct geschrieben, nach dem alten System der Maitr Çâkhâ accentuirt Es erinnert sehr an das, ebenfalls vortreffliche, alte Haug'sche Ms zu Kanda II (Hg) Papier und Ductus

sind ganz ähnlich, die Buchstaben schwarz, die Accente roth (wie in Hg und den Morbî-Mss). Dieses Ms stammt allem Anschein nach aus derselben Zeit wie Hg. Die auf f 105 vermerkte Jahreszahl (saṃvat 1529) ist offenbar späteren Ursprungs. Sehr sonderbar, ja ein wirkliches Curiosum ist die Reihenfolge der Capitel in dieser Handschrift. Dieselbe beginnt auf f 1 mit dem Anfang von Maitr S IV, 9, 1 und geht regelmässig fort bis IV, 12, 5, in der Mitte dieses Capitels bricht sie am Schluss von f 31 plötzlich ab, f 32 geht sie dann auf IV, 2, 10 über (wovon aber der erste Anfang fehlt), und bricht am Schluss von f 37 mitten in IV, 3, 1 ab, geht dann f 38 auf IV, 13, 1 u. E. über und bricht f [illegible] in den letzten Partieen von IV, 13, 9 wieder ab, f 47 beginnt mit IV, 14, 1 (doch fehlt der erste Anfang) und geht fort bis IV, 14, 14 in der Mitte, wo die Handschrift wieder auf f 59 abbricht, f 61 beginnt IV, 5, 3 u. A., dann geht es regelmässig fort, bis endlich f 105 mit dem Schluss von IV, 8 endigt. Es schliesst sich also f 1 flg direct an die letzte Seite an![1]) Diese sonderbare Anordnung vermag ich mir nur durch die Annahme zu erklären, dass die Vorlage des Abschreibers aus einer Handschrift in losen Blättern bestand, welche ganz in Confusion gerathen waren, vielleicht hatte dieselbe keine Paginirung, oder der Abschreiber wusste sie doch nicht wieder in Ordnung zu bringen und schrieb nun die Blätter in der ihm vorliegenden Reihenfolge ab.

Dem Sanskrit College zu Benares, welches mir diese werthvolle Handschrift mit grösster Liberalität zur Benutzung zusandte, und speciell Herrn Griffith, Director of Public Instruction N. W. Provinces, spreche ich hiermit meinen besten Dank aus.

Zu den erwähnten Mss des Saṃhitâ Pâṭha kommt endlich ergänzend noch das Ms des Padapâṭha (P), welches den Benutzern meiner Ausgabe ebenfalls bereits bekannt ist[2])

---

1) f 46 u. 60 scheinen nicht zu B. IV zu gehören.

2) Endlich mache ich nachtragsweise noch darauf aufmerksam, dass B. Lindner eine bisher unbekannte Handschrift des 1. Buches der Maitr S. in Oxford in der Bodleiana entdeckt hat. Diese Handschrift (Wilson 505) ist im Catalog irrigerweise bezeichnet als Pancasvastyayana und ist datirt saṃvat 1622 (= 1566 nach Chr.), also ungefähr gleichen Alters mit M 1 u. 2. Näheres theilt Lindner mit Ztschr. DMG XXXIX p. 103.

## Correcturen und Conjecturen

Dem vorliegenden letzten Bande der Maitr Samhita habe ich ein Verzeichniss von Correcturen und Conjecturen für das ganze Werk beigefügt wobei ich die schon früher mitgetheilten Corrigenda für K I und III nochmals aufgeführt habe, damit die Benutzer der Ausgabe alle Corrigenda für das ganze Werk an einer Stelle zusammenfinden und mehrfachen Nachschlagens überhoben sind Das betreffende Verzeichniss berichtigt eine leider nicht ganz kleine Reihe von Druckfehlern und Versehen, und bringt ausserdem eine Anzahl von Conjecturen zur Verbesserung schwieriger Stellen · Einen Theil dieser Berichtigungen und Verbesserungen habe ich selbst gefunden, bei weitem das meiste verdanke ich jedoch den gütigen Nachweisungen befreundeter Forscher, denen ich an dieser Stelle für das meinem Werke zugewendete Interesse meinen aufrichtigen Dank ausspreche . Für das 1 Buch haben insbesondere Roth und Whitney mir eine grossere Anzahl werthvoller Berichtigungen brieflich zukommen lassen, eine Reihe anderer sind der inhaltreichen Recension von R Garbe entnommen (Gött Gel Anz 1882 Stück 3 4), von Bohtlingk stammen mehrere vorzügliche Emendationen, Anderes verdanke ich Delbrück Die von Delbrück zum 3 Buche gelieferten Correcturen und Besserungsvorschlage habe ich bereits am Schlusse des betreffenden Buches mitgetheilt und werden dieselben hier nur wiederholt, mit Weglassung eines einzigen Falles wo ich Roth's Conjectur den Vorzug gebe (III p 89 Z 8) Die zahlreichen übrigen Verbesserungen, sowohl für das 3 als auch für das 4 Buch der unter eine Reihe glanzender Conjecturen, verdanke ich fast sämmtlich Hrn Prof Roth, der sich der Muhe unterzogen, auch die Aushängebogen des 4 Buches durchzugehen und mir seine darauf bezüglichen Bemerkungen mitzutheilen · Ihm, der ja auch die erste Anregung zu dem vorliegenden Werke gegeben und der dasselbe somit von Anfang bis zu Ende mit seinem Interesse begleitet, durch seinen Rath gefordert hat, fühle ich mich darum zu ganz speciellem Danke verpflichtet.

Den Namen Desjenigen, von dem eine Verbesserung herstammt, habe ich nur in einigen wichtigeren Fällen ausdrücklich anzuführen für nöthig befunden

## Der Index.

Um die Brauchbarkeit des Werkes zu erhohen, habe ich diesem Bande ein alphabetisches Verzeichniss aller in der Maitr Samhita vorkommenden Vers und

Capitel-Anfänge beigefügt, nebst Anführung der zu vergleichenden Stellen aus den verwandten Texten. Zum besseren Verständniss dieses Verzeichnisses bemerke ich, dass die fettgedruckten Ziffern einen Capitel-Anfang bezeichnen, einerlei ob Vers oder Prosa. Bei den Vers-Anfängen bedeuten die in Klammern gegebenen Ziffern, dass der Vers an den betreffenden Stellen nicht vollständig, sondern nur mit den Anfangsworten angeführt ist. Diese Unterscheidungen machen den Index jedenfalls bequemer benutzbar, wie ich dies selbst bereits praktisch erprobt habe.

## Schluss

Zum Schluss erinnere ich noch einmal dankend an alle diejenigen Personen und Institute, welche das Zustandekommen der nunmehr abgeschlossenen ersten Ausgabe der Maitrâyanî Samhitâ durch ihre Gunst gefördert und unterstützt haben. Das Vorwort zum ersten Bande hat ihre Namen zum grössten Theile bereits genannt, das Vorwort zum zweiten und dritten Bande noch einige ergänzend hinzugefügt. Ihrer Aller sei hier noch einmal mit warmem Danke gedacht.

Möge der Beitrag, den ich mit dem vorliegenden Bande zur Förderung unserer vedischen Studien geliefert habe, trotz aller Mängel, deren ich mir wohl bewusst bin, ebenso freundlich aufgenommen, ebenso nachsichtig beurtheilt werden, wie seine Vorgänger. Mögen insbesondere die Männer, deren Namen das Widmungsblatt des ganzen Werkes zieren — Otto Böhtlingk, Georg Bühler, Rudolf Roth — mögen sie die in Verehrung und Dankbarkeit ihnen dargebrachte Arbeit freundlich entgegennehmen.

Dorpat, im Juli 1886.

Dr. L. v. Schroeder.

# मैत्रायणी संहिता

जनिविक्रमिणा श्रोना लीवोपल्दश्रोड्नवेन शोधिता

जार्मण्यनाम्नि राष्ट्रे वेलींशाख्यायां राजधान्यां मुद्रिता

संवत्सरे १८८६

वनस्पतीन्वा उत्तमो देव उदौषत्॰ शम्या अध्यशमयत्तच्छम्याः शमीत्वं॰ 'यच्छमीशाखया वत्सानपाकरोति शान्त्यै 'पर्णवती कार्या' पशूनां॰ वा एतद्रूपं 'पशुमान्भवति 'यदपर्णा स्याद्दण्डस्य तद्रूपं॰ 'वज्रो दण्डो 'वज्रेण पशूनभिप्रवर्तयेत्तृतीयस्यां॰ वै दिवि सोम आसीत्तं गायत्री[1] श्येनो भूत्वाहरत्तस्य पर्णमच्छिद्यत 'ततः पर्णो ऽजायत' तत्पर्णस्य पर्णत्वं 'तस्मात्सर्वे ऽन्ये वनस्पतयः पर्णिनो 'ऽथैष पर्ण उच्यते 'यत्पर्णशाखया वत्सानपाकरोति तमेव सोममवरुन्द्धे 'देवा वै ब्रह्म समवदन्त 'तत्पर्ण उपाशृणोत्सुश्रवा[2] वै नामैष 'न बधिरो भवति य एवं॰ वेद 'ब्रह्म वै पर्णो 'यत्पर्णशाखया प्रार्पयति[3] ब्रह्मणैवैनाः प्रार्पयतीषे त्वेतीषमूर्जं॰ यज्ञे च यज्ञपतौ चाधाद्वायवः स्थेति 'वायुर्वा अन्तरिक्षस्याध्यक्षो 'ऽन्तरिक्षदेवत्याः पशवो 'वायुरेवैनानन्तरिक्षाय परिददाति 'प्र वा एनानेतदाकरोति 'यद्वायवः स्थेत्याहारण्यस्येव हि वायुर्देवो वः सविता प्रार्पयत्विति 'सवितृप्रसूत एवैनाः प्रार्पयति[4] 'श्रेष्ठतमाय कर्मण इति 'यज्ञो वै श्रेष्ठतमो 'यज्ञायैवैनाः प्रार्पयत्याप्यायध्वमघ्न्या देवेभ्य इति 'वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुराप्यायन्ते 'ऽथैतर्हि देवेभ्य एवैना आप्याययति[5] 'मा वः स्तेन ईशत

---

1) H u Bb गायत्री., desgl B ohne Accent  2) So M, in H u Bb सुश्रवा, desgl B, ohne Accent, Kath 30, [illegible] सुश्रवा, Kap S 46 8 सुश्रवा  3) Die Mss प्रार्पयति  4) B प्रार्पयतु  5) So corrigirt, H u Bb आप्याययति, desgl B, ohne Accent, M (u Bl) आप्यायते, aber Kath 30, 10 u Kap [illegible] आप्याययति

माघशꣳसा ईत्याशिषमेवाशास्ते ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति प्रैव जनयति ॥

शुद्धा अपः सुप्रपाणे पिबन्तीः ॥

इति पुनात्येवैनाः ॥

रुद्रस्य हेतिः परि वो वृणक्तु ॥

इति रुद्रादेवैनास्त्रायन्ते ॥ पूषा वः परस्ता अदितिः मैत्रीया[1] इन्द्रो वो ऽध्यक्षो ऽनशः पुनरेत ॥ इति त्रयो वा इमे लोका एभ्य एवैना लोकेभ्यः पुनरावर्तयति यजमानस्य पशून्पाहीति यजमानस्यैव पशूनां गोपीथायाहिꣳसायै ॥ प्रतीचीꣳ शाखामुपगूहति तस्माद्ग्राम्याः पशवः सायमरण्याद्ग्राममायन्ति[2] प्रत्यञ्च एनं पशवो भवन्ति य एवꣳ वेद[3] ॥ १ ॥

Vgl 1, 1, 1. — TBr 3, 2, 1; Kath 30, 10; Kap S 46 8

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति सवितृप्रसूत एवैना देवताभिराददे प्रजापतिर्वा ओषधीः परुष्यो[4] वेद प्राजापत्यो ऽश्वो यदश्वपरश्वा[5] बर्हिर्दात्योषधीनामहिꣳसायै गोषदसीति रयिꣳ यजमाने[6] दधाति प्रत्युष्टꣳ रक्षा इति रक्षसामपहत्यै प्रेयमगाद्धिषणा बर्हिरच्छेति विद्या वै धिषणा विद्ययैवैनदच्छैति मनुना कृता स्वधया वितष्टेति मनुना ह्येषा कृता स्वधया वितष्टा तया वहन्ते कवयः पुरस्तादिति ब्राह्मणाः कवया ह्यृषयः कवयः ॥

---

1) So M (u Bl), m H u Bb मैत्रेरीया 2) M ॰मारण्याद्, auch Kap S so, nur ohne Accent 3) B वेदा 4) So corrigirt nach Anleitung von Kāth 31, 1 पहष्यो: M (u Bl) liest पहष्यौं, H u Bb पहष्यौ, desgl B ohne Accent 5) So H u Bb, desgl B u Kap S, ohne Accent, M (u Bl) यदश्वपरस्था, Kath 31, 1 यदश्वपर्श्वा 6) M (u Bl) यजमानो

देवेभ्यो जुष्टमिह बर्हिरासदे ॥

इति देवेभ्य एवैनं जुष्टं करोति देवानां परिपूतमसीति यद्वा इदं किंच तद्देवानां परिपूतं यथा श्रेयसे प्रोच्य कर्म करोत्येवं वा एतद्देवेभ्यः प्रोच्य बर्हिर्दाति यावत्परिदिशति तत्सर्वं दाति[1] यत्तत्सर्वं न दाति यज्ञस्य तदतिरेचयति यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यं तेन वर्धयत्येकं स्तम्बं परिदिशति[2] तं सर्वं दाति यज्ञस्यानतिरेकाय विष्णोः स्तुप इति विष्णोर्वै स्तुपो ऽच्छिद्यत स पृथिवीं प्राविशत्तमग्रमं नोत्सृजेद्दातिमाच्छेद् देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनं दामीति सवितृप्रसूत एवैनद्देवताभिर्दाति ॥ माधो मोपरि परुस्ते ऋध्यासम् ॥ इत्योषधीनामहिंसायै ॥ आच्छेत्ता[3] ते[4] मारिषम् ॥ इति यावद्यावदेवमविज्ञानमध्वर्युर्बर्हिर्दाति तावदस्यात्मनो मीयते नास्यात्मनो मीयते य एवं वेदातस्त्वं बर्हिः शतवल्शं[5] विरोहेत्योषधीष्वेव भूमानं दधाति सहस्रवल्शा वि वयं रुहेमेत्याशिषमेवाशास्ते ऽदित्यै रास्नासीतीयं वा अदितिरस्या एवैनद्रास्नां करोतीन्द्राण्याः संनहनमितीन्द्राणी वा अस्यै देवतानां संनद्धता चर्धिकामा साभ्यर्ध्नोद्वा ऋध्नोति य एवं वेद बर्हिः संनह्यति प्रजा वै बर्हिः प्रजानां संतत्यै प्रजानामपरावापाय[7] तस्मात्त्वाव्रा प्रजाः संतताः पूषा ते ग्रन्थिं ग्रथ्नात्विति पुष्टिर्वै पूषा पुष्टिं यजमाने दधाति स ते मास्थादिति यजमानस्याहिंसायै ॥

आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः ।
बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे ॥

---

1) So H u. Bb; in M द्रांति 2) So M, in H u. Bb परिदिशति; desgl. B, ohne Accent 3) M आच्छेत्तां 4) Bb तें 5) H u. Bb शतवल्श॰, desgl. Kâth, ohne Accent 6) So die Mss mit Recht 7) ॰मपरावापाय in den Mss ohne Accent

इत्यश्विनौ वै देवानां भिषजौ तां एनन्निष्पज्यत इन्द्रस्य त्वा बाहुभ्यामुद्यच्छा इतीन्द्रस्यैवैनद्बाहुभ्यामुद्यच्छते बृहस्पतेर्मूर्ध्ना हरामीति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनद्धरत्युरु३ वेन्तरिक्षमिति संमिष्ट्या एवांदित्यास्त्वा पृष्ठे सादयामीतीयं वा अदितिरस्यामेवैनदसीषदत् ॥ बर्हिरसि देवंगमम् ॥ इत्यासन्नमभिमन्त्रयते बहु वा एतस्य पूर्वेद्युराह्रियमाणस्येह चेह च स्कन्दत्यस्कन्नमेनद्देवताभ्यः संप्रादाद्यजमानस्याहिंसायै ॥ २ ॥

Vgl. 1, 1, 2 — TBr. 3, 2, 2; Kâṭh 31, 1; Kap S 47, 1.

पूर्वेद्युरिध्मां बर्हिः कुर्वन्ति यज्ञमेवारभ्योपवसति प्रजापतिः प्रजा असृजत तस्योखे अस्रंसेतां स एताभ्यामुखाभ्यां प्रत्यधत्त यदेते उखे भवतः प्रजापतेरेवोखे प्रतिदधाति शुन्धध्वं दैव्याय कर्मण इति देवेभ्य एवैनानि शुन्धति वसूनां पवित्रमसीति वसूनां वा एतद्भागधेयं तेभ्य एवैनत्करोति पवित्रमपिदधात्योषधीनां पशूनां च पयः संसृजति वाचं यच्छति यज्ञस्य धृत्यै धारयन्नासं धारयन्त इव हि दुहन्ति द्यौरसि पृथि३व्यसीत्याभ्यामेवैनां प्रवृणक्ति मातरिश्वनो घर्म इत्यन्तरिक्षं वै मातरिश्वनो घ३र्मो ऽन्तरिक्षस्य धृत्यै कामधुक्षः सा विश्वायुः सा विश्वभूः सा विश्वकर्मेत्यसौ वा विश्वायुरन्तरिक्षं विश्वभूरियं विश्वकर्मेमान्वा एतल्लोकान्यथापूर्वं प्रदापयत इमांल्लोकान्यथापूर्वं प्रत्तान्दुहे य एवं वेद तिस्रो यजुषाभिमन्त्रयते त्रयो वा इमे लोका एषु वा एतं लोकेषु रसं दधाति

---

1) H u Bb बहू, desgl B, ohne Accent 2) Die Mss पूर्वेद्यु॰ 3) H u B प्रत्यधत्त, Kap S 47, 2 आभ्यामादत्त 4) In den Mss ohne Accent 5) Bb प्रजापते देवोखे 6) M दुहंति, Bb दुहंति 7) So corrigirt, die Mss एतं लोकान्, Kap S 47, 2 इमानेव लोकान्यथापूर्वं प्रदापयति 8) So corrigirt, die Mss प्रत्ता

तस्मादिमांल्लोकान्प्रजा उपजीवन्ति । हुतः स्तोको हुतो द्रप्स इत्यभिमन्त्रयते ऽस्कन्दाय ॥ इन्द्राय देवेभ्यो हविर्बहु दुग्धं ॥ इति निर्दद्दति । चिपत्या हि देवा न दारुपात्रेण दुह्यादग्निमद्वै दारुपात्रं याततयामेन हविषा यजेत तद्वै स्याद्दुरोभेयाः पुरोडाशमुखं हविर्न वा इतं इतः पुरोडाशं हविषो यामो ऽस्ति दोग्धव्यमेवेति न शूद्रो दुह्यादसतो वा एष संभूतो ऽसन्त्याद्वै पवित्रमत्येति तद्धविरमिहोत्रमेव शूद्रो न दुह्यात्तद्धि नोत्पुनन्ति ॥

संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः ।
पृञ्चतीः पयसा पयो मन्द्रा धनस्य सातये ॥

इति प्रतिनयति शृतत्वाय शृतकामा हि देवा इन्द्राय त्वा भागं सोमेनातनच्मीति सोममेवैनत्करोति तस्य ह वै सोमपीथः संततो य एवं विद्वान्सान्नाय्यं पिबति ॥ अदस्तमसि विष्णवे त्वा ॥ इति यज्ञो वै विष्णुर्यज्ञायैवैनददस्तं करोति विष्णो हव्यं रक्षस्वेति यथाहैव ते भागस्तं रक्षस्वेत्येवं वा एतद्विष्णुमाहै तत्ते हव्यं तद्रक्षस्वेति न मृत्पात्रेणापिदध्यात् पितृदेवत्यं हविः स्याद्दारुपात्रेणापिदध्यादग्निमद्वै दारुपात्रमग्निरिव हव्यं रक्षत्युदन्वत्काऽर्यमापो वै रक्षोघ्नीरापो रक्षांसि न तरन्ति रक्षसामपहत्यै ॥ ३ ॥

Vgl 1, 1, 3 — TBr 3, 2, 3, Kath 31, 2, Kap 8 47 2

यो वै श्रद्धामनालभ्य यजते नास्य देवमनष्या इष्टाय श्रद्दधत्यपः

1) So M, in H u Bb बहुदुग्धि desgl B, ohne Accent 2) So corrigirt, M तद्वै, H u Bb तत् है 3) H u Bb दृविधा, Kath 31 2 दातैया 4) So M, vgl auch TS 1, 1, 3, 1, in H u Bb मैद्रा, desgl B, ohne Accent 5) So M, in H u Bb प्रतिप्रतिनयति, desgl B ohne Accent 6) So B nur ohne Accent, in H u Bb श्रद्धामेवालभ्य, M (u Bl) श्रद्धामालभ्य

प्रणयन्त्यापो वै श्रद्धा श्रद्धामेवालंभ्य यजता आपो यज्ञो यज्ञं तता प्रचरन्त्यापो देवानां प्रियं धाम देवानां प्रियं धाम प्रणीय प्रचरन्त्यापः सत्यं सत्यमेवालंभ्य यजता आपो रक्षोघ्नी रक्षसामपहत्या आपो वज्रो वज्रं भ्रातृव्याय प्रहरति स्तृत्या आपः श्रद्धा श्रद्धास्य देवाः प्रत्यनुष्ठा इष्टाय दधते यस्यैवं विदुष एवं विद्वानपः प्रणयति दैवीरापो ऽग्रेगुवा इति यज्ञमेव प्रणयति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति सवितृप्रसूत एवैनद्देवताभिरादत्त उर्वन्तरिक्षमिति समिद्ध्या एवं प्रत्युष्टं रक्षः इति रक्षसामपहत्यै धूरसि धूर्व धूर्वन्तमिति धुर्यो वै नामैते ऽग्नेर्यदनालभ्यातीयाद्यजमानं शुचार्पयेयुर्द्वौ वाव पुरुषस्य भ्रातृव्यौ यं द्वेष्टि यश्चैनं द्वेष्टि तावेव शुचार्पयति ॥ ४ ॥

Vgl 1, 1, 4 — TBr 3, 2 4, 1 flg Kaṭh 31, 3; Kap S 47, 3

देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतममिति देवेभ्य एवैनद्वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमं करोत्यहुतमसि हविर्धानं दृंहस्व मा ह्वारिति दृंहत्येवैन विष्णोः क्रमो ऽस्युरु वातायेति यद्वै किंच वातो नाभिवाति तद्वरुणस्यावरुण्यमेवैनत्करोति मित्रस्य वश्चक्षुषा प्रेक्षे इति मित्रमेवैनान्कुरुते ॥ ऊर्जे गृह्णीत ॥ इत्यूर्जं यजमाने दधाति ॥ प्रभूत्यै वः ॥ इति प्रैवैनान्भावयति देवस्य वः सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां

---

1) So corrigirt, B अद्दस्य, H u Bb अद्दस्य, M (u Bl) अद्दस्या, Kap S 47, 3 श्रद्धास्य 2) So schreibe ich mit Kāṭh 31 3 und Kap S 47, 3, in H, Bb u B अद्धते, M (u Bl) (इष्टाय) दधत्ते 3) M (u Bl) प्रणयति 4) In den Mss dies Wort ohne Accent 5) Bb धूर, Kap S 47, 3 धूर्व, desgl Kath 31, 3 6) Auch Kath 31, 3 und Kap S 47, 3 यद्वै किंच वातो नाभिवाति तद्वरुणस्यावरुण्यमेवैनत्करोति

यछन्तु पञ्च गोपीथाय वो नारातये ऽग्नये वो जुष्टान्निर्वपामीति सवितृप्रसूत एवैनान्देवताभिर्निर्वपति यछन्तु पञ्चेति पञ्च वा ऋतव ऋतून्वा एतत्प्रीणाति त एनं प्रीताः कल्पन्ते गोपीथाय वो नारातया इति रक्षसामपहत्या अग्नये वो जुष्टानित्यग्नय एवैनाञ्जुष्टान्करोत्यथो यस्यै देवतायै निर्वपति तस्या एनाञ्जुष्टान्करोतीदं देवानामिदमु नः सहेति व्यावृत्त्यै ऽहन्ता दुर्या इति हविषो गृहीतादिमे लोका उदवेपन्त तान्देवा एतेन यजुषादृंहन्यदेतद्यजुर्वदत्येषां लोकानां धृत्यै निर्वरुणस्य पाशादमुक्षीति[1] वरुणपाशादेव निर्मुच्यत आत्मनो ऽहिंसायै स्वरभिव्यख्यमिति[2] तम इव वा एष प्रपद्यते यदीक्षते स्वरेवाभिविपश्यति ज्योतिर्वैश्वानरमित्यसौ वा आदित्यो ज्योतिर्वैश्वानरम् ॥ उर्वन्तरिक्षमन्वेमि ॥ इति यद्ब्रूहीति ब्रूयाद्द्यायुको ऽध्वर्युः स्यात् ॥ उर्वन्तरिक्षमन्वेमि ॥ इत्यव्यायुको ऽध्वर्युर्भवत्यदित्यास्त्वोपस्थे सादयामीतीयं वा अदितिरस्यामेवैनानसीषदत्[3] ॥ अग्ने हव्यं रक्षस्व ॥ इति पुर उपसादयत्यग्निरेव हव्यं रक्षति ॥ ५ ॥

Vgl 1, 1, 6 ; — TBr 3, 2, 4, 4 flg , Kaṭh 31, 3, Kap S 47, 3

विष्णोर्मनसा पूते स्थः ॥ इति यज्ञो वै विष्णुर्यज्ञायैवैने[4] पुनाति देवो वः सवितोत्पुनात्विति सवितृप्रसूत[5] एवैना उत्पुनात्यग्नये वो जुष्टानित्यग्नय एवैनाञ्जुष्टान्करोत्यथो यस्यै देवतायै प्रोक्षति तस्या एनाञ्जुष्टान्करोति[6] यद्वो ऽशुद्ध आलेभे तच्छुन्धध्वमिति शुन्धत्येवैना-

1) So M; in H u Bb °दमुचिर्ति, desgl B ohne Accent 2) So ist offenbar zu lesen, M स्वरभिर्व्यख्यमिति, H u Bb °रभिर्व्यख्यमिति, desgl B ohne Accent, in Kap S 47, 3 स्वरभिर्व्यचमिति 3) H u Bb °वैनाम° 4) So M, in H u Bb यज्ञायैवेम, desgl B ohne Accent 5) So M, H u Bb, in B सवितृप्रसूताः in Kap S 47, 4 wohl सवितृप्रसूत एवैने देवताभिरुत्पुनाति 6) H u Bb एतान्

न्यदित्यास्त्वगसीतीयं वा अदितिरस्यां एवैनत्त्वचं करोत्यवधूतं रक्ष इति रक्षसामपहत्यै प्रतीचीनग्रीवं कृष्णाजिनमुपस्तृणाति तस्मात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते पृथुग्रावासि वानस्पत्यमिति ग्रावाणमेवैनत्करोत्यग्नेर्जिह्वासि वाचो विसर्जनमित्यग्ने३र्ह्येषा जिह्वा वाचो विसर्जनं यदा हि पशवा ओषधीनामश्नन्त्यथ वाचं विसृजन्त आयुषे वा इत्यायुर्यजमाने दधाति बृहद्ग्रावासि वानस्पत्य[1] इति ग्रावाणमेवैनत्करोति देवेभ्यो हव्यं शमीष्वेति देवेभ्य एवैनत्करोति ॥ अपहतं रक्षः ॥ इति रक्षसामपहत्यै ॥ हविष्कृदेहि ॥ इति यो देवानां हविष्कृत्तं ह्वयति त्रिर्ह्वयति त्रिषत्या हि देवा मनो वै[2] यज्ञादेवस्य यजमानस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत्तस्या वदन्त्या यावन्तो ऽसुरा उपाशृण्वंस्तावन्तस्तद्दहनीभवन्नेवं विद्वान्ब्राह्मणो भ्रातृव्याणां मध्ये ऽवसाय यजेत यावन्त एवास्य भ्रातृव्या यज्ञायुधानामुपशृण्वन्ति तेषां तेज इन्द्रियं वीर्यं वृङ्क्ते कुटरुरसि मधुजिह्वस्त्वया वयं संघातं संघातं जेष्मेति संघातंसंघातं वावैतेन यजमानो भ्रातृव्यं जयतीषमावदोर्जमावद रायस्पोषमावदेत्याशिषमेवाशास्ते ॥ ६ ॥

Vgl 1, 1, 6 — TBr 3 2, 5, 1 fg , Kath 31 4, Kap S 47, 4,

वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्विति प्रतिष्ठित्या अस्त्रा[4] वै देवाः पशुभ्यो रक्षांसि निरवादयन्त[5] तुषैरोषधीभ्यो यदाह परापूतं

1) Kap S 47 4 शुधता पाचाषि देवयज्याया इति देवेभ्य एवैनानि शुधति 2) So M, desgl Kath und Kap S, ohne Accent s die folgende Anmerkung, Bb मनो वें, H मेनो वें, desgl B, ohne Accent 3) So M in H u Bb वा य०, desgl B ohne Accent Kath 31 4 मनो वै यज्ञादेवस्य यजमानस्य तस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत्, Kap S 47 4 मनो वै यज्ञादेवस्य यजमानस्यासुरघ्नी वा यज्ञायुधानि प्रविष्टा cet. 4) So M, in H u Bb अस्त्रा, desgl B ohne Accent, ebenso Kath 31, 4 und Kap S 47, 4 s E 5) So M, in H u Bb निरवदयन्त, desgl B, ohne Accent, desgl Kath 31, 4

रक्षः परापूता अरातिरित्येतावतीर्वै यज्ञस्य रक्षां॰सि निरवदयते ॥ देवो वः सविता विविनक्तु ॥ इति सवितृप्रसूत एवैनान्विविनक्ति ॥ सुविचा विविच्यध्वम् ॥ इत्याशिषमेवाशास्ते सुफलीकृतान्कुर्यान्मेध्यानेवैनान्यज्ञियान्करोति त्रिः फलीकरोति त्रिवृता हि देवा अदित्यास्त्वगसीतीयं॰ वा अदितिरस्या एवैनस्त्वचं करोत्यवधूतं॰ रक्ष इति रक्षसामपहत्यै प्रतीचीनग्रीवं कृष्णाजिनमुपस्तृणाति तस्मात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते ऽदित्याः स्कम्भो ऽसीति शम्यामुपदधातीमे वै सहास्तां ते शम्यामात्रं॰ शम्यामात्रं॰[1] व्यैतां॰ यच्छम्यामुपदधात्यनयोरेव विधृत्यै धान्यमसि धिनुहि देवानित्येतस्य वै यजुषो वीर्येण यावदेका देवता कामयते यावदेका तावदस्या आहुतिः प्रथते प्रथते प्रजया पशुभिर्य एवं॰ वेद प्राणाय त्वापानाय त्वा व्यानाय त्वेति प्राणमपानं॰ व्यानं तान्यजमाने दधाति दीर्घामनु प्रसितिं॰[2] सं॰स्पृशेथामायुषे वा इत्यायुरस्मिन्दधाति मित्रस्य वश्चक्षुषावेक्ष इति मित्रमेवैनान्कुरुते देवो वः सविता हिरण्यपाणिरुपगृह्णात्विति सवितृप्रसूत एवैनानुपगृह्णाति ॥ ७ ॥

Vgl 1, 1, 7 — TBr 3, 2, 5, 10 flg , Kāṭh 31, 4 u 5, Kap S 47, 4 a E und 5

निर्दग्धं॰ रक्ष इति रक्षसामपहत्यै यदधस्तादङ्गारमुपवर्तयत्यस्मिं॰स्तेन लोके ज्योतिर्धत्ते यदुपरिष्टादन्तरिक्षे तेनासावसा आदित्यो ऽमुष्मिंल्लोके ज्योतिर्भवत्यथो दिवैवासा अमुष्मिंल्लोके भवति सर्वे ऽस्मा इमे लोका ज्योतिष्मन्तो भवन्ति य एवं॰ वेद त्रीणि समीचीनान्युपदधाति त्रयो वा इमे लोका एषां लोकानां धृत्या अपाग्ने ऽग्निमामादं जहीति यं आमात्क्रव्यात्तमपहत्य देवयजने य-

1) So M, m H u Bb शम्यामात्रं॰ 2) S oben 1, 1, 7, auch Kath 31, 5 प्रसितिम् in Kap S 47,5 प्रसतिम् corrumpirt aus प्रसितिम्

ङ्क्तिया उपदधाति ध्रुवमसि पृथिवीं दृंहेति पृथिवीमेव दृंहति धरुणमस्यन्तरिक्षं दृंहेत्यन्तरिक्षमेव दृंहति धर्त्रमसि दिवं दृंहेति दिवमेव दृंहति धर्मासि विश्वा विश्वानि दृंहेति दिश एवं दृंहति प्रजापतिर्वै यत्समभवत्स एतावञ्छ एवं समभवदेकं वा अग्रे शीर्ष्णः कपालं संभवत्यथ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमं यदष्टा उपदधात्यात्मानं वा एतद्यजमानः संस्कुरुते तं संस्कृतममुष्मिंल्लोके ऽनुपरैति यदष्टा उपदधाति गायत्रीं तेन छन्द आप्नोति यदेकादश त्रिष्टुभं तेन यद्द्वादश जगतीं तेनाथो सर्वाण्येव छन्दःसंमितान्युपदधाति ॥ चितः स्थ परिचितः स्थ ॥ इति यजुष्मन्ति करोति वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वमित्येतासामेनानि देवतानां तपसा तपति ॥

यानि घर्मे कपालान्युपचिन्वन्ति वेधसः ।
पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥

इति यजुषैव युज्यन्ते यजुषा विमुच्यन्ते ॥ ८ ॥

Vgl 1 1 8 — TBr 3 2, 8, u 7, Kath 31, 6, Kap S 47, 6

देवस्य वः सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां संवपामीति सवितृप्रसूत एवैनां देवताभिः संवपति पविघवत्संवपति हविः करोति देवो वः सवितोत्पुनात्विति सवितृप्रसूत एवैना

---

1) So M, in H श्रये, desgl Bb u B ohne Accent 2) In Bb यदष्टावुप॰ 3) Bb यदष्टावुप॰ 4) So M, in H छन्दासंमिता॰, desgl Bb, ohne Accent, B छन्दा सम्मिता॰ 5) H u Bb घर्मस्य 6) So M, in H ॰मेतानि, desgl Bb u B 7) H u Bb धर्मे 8) So M, in H u Bb पविचन्य संवपति, B पवित्र॰ वसत्वपति, Kāṭh 31 7 पविमवति संवपति

उत्पुनात्यपं उपसृजत्यमृतं वा आपोऽमृतमेव हविः करोति सं-अपा ओषधीभिर्गच्छन्तां समोषधयो रसेन सं रेवतीर्जगतीभिरित्यन्यां वा एतासामन्यां जिन्वन्त्यापा ओषधीर्जिन्वन्त्योषधीरपः शिवाः शिवाभिः समसृक्षतापा इत्यापो वै रेवतीरोषधयो मधुमतीः पशवो जगतीरपं ओषधीः पशूंस्तानस्मै संसृज्यैकधा मधुमतः करोति ॥ मखस्य शिरोऽसि ॥ इत्याह यज्ञो वै मखस्तस्य वा एतच्छिरः क्रियते सीदन्तु विशो जनयत्यै त्वेति मिथुनमेव करोति घर्मोऽसि विश्वायुरिमं घर्मं प्रथस्वोरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयत्येवैनं ॥ प्रति प्रथस्व पृथिवीमुत द्याम् ॥ इतीमे एव प्रथयति घर्मो वा एषोऽर्धमासेऽर्धमासे प्रवृज्यते स ईश्वरोऽशान्तस्तेजसा यजमानस्य पशून्निर्दहो यत्पर्यग्निं करोति पशूनेव करोति शान्त्या अनिर्दाहाय त्रिः पर्यग्निं करोति त्रयो वा इमे लोका एभ्य एवैनं लोकेभ्यः शमयति पुरोडाशं वा अधिश्रितं रक्षांस्यजिघांसन्त्स नाको नाम दिवि रक्षोहासीत्सो ऽस्माद्रक्षांस्यपाहन्यदाह देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाके पृथिव्या इति रक्षसामपहत्यै शिरो वा एतद्यज्ञस्य यत्पुरोडाशः केशा वेदो यथा शीर्ष्णः कपालान्येवं कपालानि यथा मस्तिष्क एवं पुरोडाशः सुशृतः कार्यो मेध्यत्वाय यत्पुरोडाशं नाभिवासयेदाविर्मस्तिष्कः स्याद्यदभिवासयति तस्माद्गुहा मस्तिष्कस्त्वचं ग्राहयति तस्मान्मस्तिष्कः परिततो भस्मनाभ्यूहति तस्मान्मांसेनास्थि छिन्नं ज्वालैरभिवासयति तस्मात्केशैः शिरश्छन्नं यस्त्वचम-

1) So M; in Bb °रेवत्यां, H °रेत्यत्यां, B °रित्यत्यां  2) So corrigirt, die Mss °मन्यां  3) M जिन्वत्य°  4) So M, in H u Bb मधुमत, desgl. H ohne Accent.  5) So M u B, in H u Bb प्रथ प्रथयति  6) So M, in H निर्दहद; B निर्दहेद्, Bb निर्दहेद्  7) M पर्यग्न  8) M पर्यग्न  9) So M, in H u Bb पधिश्रृत°, desgl. B, ohne Accent  10) So M, in H u Bb °स्यपाहरन्, desgl. B, ohne Accent

याहयित्वा भस्मनाभिवासयेत्पलितंभावुको ऽध्वर्युः स्याज्ज्वालैरभिवासयन्त्यपलितंभावुको ऽध्वर्युर्भवति ते वै देवास्तं नाविन्दन्यस्मिन्यज्ञस्य क्रूरमार्क्ष्यामहा इति ऽसो ऽग्निरब्रवीदहं वस्तं जनयिष्यामि यस्मिन्यज्ञस्य क्रूरमार्क्ष्यध्वा इति ऽसो ऽपो ऽङ्गारेणाभ्यपातयत्तत एकतो ऽजायत द्वितीयं तंतो द्वितस्तृतीयं ततस्त्रितो यदद्भ्यो ऽधिनिरमिमीत तदाप्त्यानामाप्त्यत्वं यदात्मनो ऽधिनिरमिमीत तदात्म्यानामात्म्यत्वमन्तर्वेदि जुहोति तदेवावरुन्द्ध उपरिष्टादभिघारयति भृतत्वाय भृतकामा हि देवास्ते देवा अतिमृजाना आयन्सूर्याभ्युदिते तु ऽमृजत यं सुप्तं सूर्यो ऽभ्युदेति सूर्याभ्युदितः सूर्याभिनिम्रुक्ते सूर्याभिनिम्रुक्तः श्यावदति श्यावदन्त्कुनखिनि कुनख्यग्रेदिधिषौ दिधिषुः परिवित्ते परिवित्तः परिविविदाने परिविविदानो वीरहणि वीरहा भ्रूणहनि भ्रूणहन्नमेनो नात्येति ॥ ९ ॥

Vgl 1, 1, 9 — TBr 3, 2, 8, Kāṭh 31, 7, Kap S 47, 7

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति सवितृप्रसूत एवैनं देवताभिरादत्ते सहस्रभृष्टिः शततेजा इति वज्रं वा एतत्सं श्यति भ्रातृव्याय प्रहरिष्यन्पृथिवि देवयजनि मा हिंसिषं ता ओषधीनां मूलमित्योषधीनामहिंसायै व्रजं गच्छ

1) So M, in H u Bb पलितंभावुको 2) So M, in H u Bb ऽपलितभावो, desgl B, ohne Accent 3) So die Mss (nur in H die Ligatur für क्ष undeutlich, wie es scheint क्य mit darunter gesetztem य, in Bb °मार्च्यामहा) Hier steckt vielleicht die Wurzel arksh (ṛksh), c praep ā, darin, die nur Dhātup 27, 29 überliefert ist, mit der Bedeutung हिंसायाम्, allerdings nach Dhātup das Praes ṛkshnoti, Kāṭh 31, 7 corrupt क्रूरमात्स्यामहे, s die folgende Anmerkung 4) Wohl Wurzel arksh c ā, für आर्क्षध्वे, (H und Bb °र्चधा), auch Kāṭh क्रूरमार्क्षध्व 5) So die Mss, nur Bb मृजत 6) So M, in den anderen Mss °निमुक्ते 7) M °निम्रुक्तः, die anderen Mss °निर्मुक्त 8) So M (u Bl, ohne Accent), in H u Bb हिंसिषता ओषधीनां, desgl B, ohne Accent, s oben 1, 1, 10

गोस्थानमिति छन्दांसि वै व्रजो गोस्थानश्छन्दांस्येवास्मै व्रजं गोस्थानं करोति वर्षतु ते पर्जन्या इति पर्जन्यादेव वृष्टिं वनुते बधान देव सवितः शतेन पाशैः परमस्या परावतीति[1] द्वौ वाव पुरुषस्य भ्रातृव्यौ यं द्वेष्टि यश्चैनं द्वेष्टि ता एव बध्नाति परमस्या परावति यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमत्र बधान सो ऽतो मा मोचीत्याशिषमेवाशास्ते द्रप्सस्ते दिवं मा स्कानिति यो वा अस्या रसः[2] स द्रप्सस्तमिमं प्रजा उपजीवन्ति तमस्या[3] यच्छत्यस्कन्दाय ॥ अररुस्ते द्यां मा पप्तत्[4] ॥ इत्यररुर्वै नामासुर आसीत्स पृथिवीमुपमुच्याशयत्तमिन्द्रो[5] ऽपायच्छन्मा पारुरुः पृथिव्यां अदेवयजनामित्यपाहंस्तं दिवमपिपतिषन्तम् ॥ अररुस्ते द्यां मा पप्तत्[6] ॥ इति दिवःप्रत्यनुदत्त य एवं[7] विद्वांस्त्रियजुर्हरत्येभ्यो वा एतंल्लोकेभ्यो[8] यजमानो भ्रातृव्यं निर्भजति त्रिः कृत्वो[9][10] हरति त्रयो वा इमे लोका एभ्य एव लोकेभ्यो भ्रातृव्यं निर्भजति तूष्णीं चतुर्थं हरति[11] यो लोको निरुक्तो ऽपरिमितस्तस्माद्भ्रातृव्यं निर्भजत्यसुराणां वा इयं पृथिव्यासीत्ते देवा अब्रुवन्दत्त नो ऽस्याः पृथिव्या इति ते वै स्वयमेव वृश्चमिति ततो वै वसवः प्राचीं दिशमुदजयन्रुद्रा दक्षिणामादित्याः प्रतीचीं मरुता

---

1) So M (u Bl) ohne Accent, in H u Bb परावती, desgl B ohne Accent, s 1, 1, 10 2) So corrigirt H u Bb रस, M ohne Accent 3) M तमस्या (u Bl, ohne Accent) 4) So corrigirt M (u Bl) मा पप्तत् in H u Bb मा पप्तात् desgl B ohne Accent in Kap S 47 8 अररुद्यां मा पप्त इति aber Kath 31, 8 द्यां मा पप्तदिति 5) So M (u Bl nur ohne Accent) H u B °मुपमुच्य° desgl B, ohne Accent 6) So M in H Bb u B जायत् 7) So corrigirt M u B मा पप्तत्, H u Bb मा पप्तत् in Kap S 47 8 स दिवमपतदररु (cod °ररु) द्यां मापपतदिति (cod मापपत°) तं दिव प्रत्यनुदत aber Kath 31 8 मा पप्तदिति 8) So H u Bb desgl B ohne Accent in M विद्वांस्त्रि° 9) So M, nur ohne Accent (u Bl) in H u Bb एत लोकेभ्यो desgl B ohne Accent 10) M कृत्वा (u Bl) 11) M (u Bl) हरति

उदीची ततो वै देवा इमामसुराणामविन्दन्त ततो देवा असुरानेभ्यो लोकेभ्यो निरभजंस्ततो देवा अभवन्परासुरा यदेवमेताभिर्देवताभिर्वेदिं परिगृह्णातीमां वा एतद्यजमानो भ्रातृव्यस्य वृङ्क्ते ऽस्या भ्रातृव्यं निर्भजति भवत्यात्मना परास्य भ्रातृव्यो भवति पृथिव्यां वै मेध्यं चामेध्यं च व्युदक्रामत्प्राचीनमुदीचीनं मेध्यमुदक्रामद्दक्षिणा प्रतीचीनममेध्यं प्राचीमुदीचीं वेदिं प्रवणां कुर्यान्मेध्यानेनान्वङ्गियां करोत्यथो यदेवास्या उद्धनतः क्रूरमक्रंस्तदक्रूरमकस्तं शमयत्यथो मेध्यस्य चैवामेध्यस्य च व्यावृत्त्यै प्राञ्चौ बाहू नयत्याहवनीयं तेन परिगृह्णाति प्रतीची श्रोणी गार्हपत्यं परिगृह्णाति मूलं वै रक्षांस्यनूत्पिबन्ति यदसेन छिन्द्यात्कुनखी स्यात्स्फ्येन छिनत्ति वज्रो वै स्फ्यो वज्रेणैव रक्षांसि हन्ति ॥ १० ॥

Vgl 1, 1, 10, TBr 3, 2, 9, Kâth 31, 8, Kap S 47, 8

यो वै स्रुचां योगमविद्वानध्वर्यो इति हूतः प्रतिशृणोत्या देवताभ्यो वृश्चते ऽपशुर्भवत्यथ यः स्रुचां योगं विद्वानध्वर्यो इति हूतः प्रतिशृणोति न देवताभ्य आवृश्चते पशुमान्भवति द्यौर्जुहूरन्तरिक्षमुपभृत्पृथिवी ध्रुवा दिश आज्यधान्यसा आदित्यः स्रुवः स यत् ॥ ओं श्रावय ॥ इत्याह जुहूं तेन युनक्ति ॥ अस्तु श्रौषट् ॥ इत्युपभृतम् ॥ यज ॥ इति ध्रुवाम् ॥ ये यजामहे ॥ इत्याज्यधानीं वषट्कारेण स्रुवं जुह्वा अधि ध्रुवामभिघारयति ध्रुवाया अधि जुह्वमसौ ३ ह्यस्यै

1) So meine Correctur, M स्याद्, H u Bb स्यात्, desgl B, ohne Accent 2) So meine Correctur, M चद्घ्नत, desgl B, ohne Accent, H चद्घ्नत, Bb चद्घ्नत; cf 3, 2, 3 3) So M, in H u Bb °दक्रूरमकंस्तन्, H °दक्रूरमकंस्तम् 4) Die Mss schreiben प्राञ्चौ बाहून्नयत्य°, Kap S प्राची बाहू नयत्य° 5) So M, in H u Bb रक्षांस्यपद्दति, desgl B, ohne Accent, Kath 31, 8 रक्षांसि हन्ति 6) So trennt M, in H u Bb यज्ञेति, desgl B, ohne Accent 7) Die ३ fehlt in den Mss

प्रयच्छतीयममुष्मै संततमस्मा अवाद्यमव्यवछिन्नं प्रदीयते ऽस्मिंश्च लो३के ऽमुष्मिंश्च पूर्वोस्य जनतामायतः कीर्तिरागछति य एवं वेद ॥ ११ ॥

Vgl TBr 3, 3, 1, Kap S 47, 9

घृतं च वै मधु च प्रजापतिरासीद्यतो मध्वासीत्ततः प्रजा असृजत तस्मान्मधोः प्रजननमस्ति तस्मान्मधुना न प्रचरन्ति यातयामं हि तदाज्येन प्रचरन्त्ययातयामं वा एतत्प्राजापत्यं घृतमयातयामा देवानां प्रजापतिर्गार्हपत्ये ऽधिश्रयति पत्न्यवेक्षते ऽन्वारम्भो वा एष यज्ञस्य पत्न्या यज्ञमेवैनामन्वारम्भयत्यथो यत्पत्नी यज्ञे करोति मिथुनं वा एतत्क्रियते प्रजात्या अमेध्यं वा एतदयज्ञियं यत्पत्न्यवेक्षत आहवनीये ऽधिश्रयति पुनात्येवैनान्मेध्यमेनद्यज्ञियं करोति स्फ्यस्य वर्त्मन्सादयति रक्षसामपहत्यै देवस्त्वा सवितोत्पुनात्विति सवितृप्रसूत एवैनदुत्पुनाति हविरसि वैश्वानरमिति द्वादशैता व्याहृतयो द्वादश मासाः संवत्सरः संवत्सरेण वा एतत्तेजेन इन्द्रियं वी३र्यं यजमानो भ्रातृव्यस्य वृङ्क्त उभयतो वैश्वानरं भवत्युभयतो वैश्वानरं ३होतं त्रिष्टेजा अस्य निर्वीर्यो भ्रातृव्यो जायते ऽथो मृधन्तर एव भवति देवाश्च वा असुराश्च संयत्ता आसन्त्स इन्द्र एतमवकाशमपश्यत्तेनासुरानभ्यभवदभि भ्रातृव्यं यज्ञेन भवति य एवं विद्वान्यजत आज्येनान्यानि हवींष्यभिघारयन्ति केनाज्यमिति यत्सवा-

1) Ganz dasselbe steckt in der theilweis corrupten Stelle Kap S 47 9 ययातयामा देवाना प्रजापतिर्गार्हपत्ये ध्रिययति Kath 31 9 अयातयामा देवाना प्रजापतिर्गार्हपत्ये ध्रिययति 2) So M, B यज्ञस्य यत् पत्न्या H u Bb यज्ञस्य य पत्न्या (in H ist das य nachträglich roth eingeschaltet) Kath 31 9 und Kap S 47 9 पत्न्या एवैव यज्ञस्यान्वारंभो 3) So corrigirt M ३होतं त्रि॰ H u Bb ३ह्मतं त्रि॰, desgl B ohne Accent. 4) So M, in H u Bb मृधंतर desgl B ohne Accent.

दिनो वदन्ति सत्येन वा आज्यमभिघृतं यदाह सत्येन त्वाभिघारयामीति चक्षुर्वै सत्यं चक्षुर्यजमानः प्रदधाति समीक्ष्यैतद्यजुर्वदति न चक्षुः प्रदधात्याज्यं वै यज्ञो यज्ञो विष्णुः ॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदा ।
समूळ्हमस्य पांसुरे ॥

इति यदोदनपचने ऽधिश्रित्याथ गार्हपत्ये ऽथाहवनीये ऽधिश्रयत्येतंवाव तत् त्रिर्विष्णुर्विक्रमते प्रत्युष्टं रक्ष इति रक्षसामपहत्यै स्रुचः संमार्ष्टि पुनात्येवैना मेध्या एना यज्ञियाः करोति ॥ अनिशिताः सपत्नक्षयणीः ॥ इत्यनिशिता ह्येताः सपत्नक्षयणीः स्रुवं संमार्ष्टि पुमांसं वा आसां तदग्रे संश्यत्यथ जुहूमथोपभृतमथ ध्रुवामसौ आदित्यः स्रुवो द्यौर्जुहूरन्तरिक्षमुपभृत्पृथिवी ध्रुवेमान्वा एतल्लोकान्यथापूर्वं संमार्ष्ट्येभ्यो लोकेभ्य आत्मानं परिददे ऽहिंसायै जुहूमग्रे संमार्ष्ट्यात्मा वै जुहूरात्मानमेवोपैत्यथोपभृतं प्रजा वा उपभृत्प्रजामेवोपैतीति परेव[3] ह्यात्मनः[4] प्रजाथ ध्रुवां पशवो वै ध्रुवा[5] पशूनेवोपैतीति पर इव हि प्रजायाः[6] पशवो यदुत्तानाः संमृज्यादप्रतिष्ठायुकं रेतः स्यादथ न्यञ्चीरप्रतिष्ठायुकं रेतः स्यात्तिरश्चीः संमार्ष्टि तिर्यग्वै रेतः सिच्यते प्रतिष्ठायुकं रेतो भवति यदग्रेण मुखं दण्डं च संमृज्याद्रक्षोभ्यश्चाभुवेभ्यश्च समदं दध्याद्यदग्रेण मुखं संमार्ष्टि जघनेन दण्डं न रक्षोभ्यश्चाभुवेभ्यश्च समदं दधात्यन्तरतो जुहूं प्रा-

1) Bb प्रतिदधात्य॰ 2) So corrigirt, M एतं लोकान्, desgl. B, ohne Accent, H u. Bb एतं लोकाम् 3) So M u. Bb, H पेरेव desgl. B, ohne Accent 4) M ह्यात्मना 5) So M, Bb ध्रुवा, desgl. B ohne Accent, in H scheint auch der Visarga am Schluss nachträglich angedeutet 6) So M, in H u. Bb प्रजा॰; desgl. B, ohne Accent 7) So M, in H u. Bb चाभुवेभ्य 8) Das च findet sich nur in M, fehlt dagegen in den andern Mss. 9) So M, in H u. Bb ॰चाभुविभ्य, desgl. B ohne Accent.

चीꣳ संमार्ष्टि बहिष्टात्प्रतीचीꣳ[1] बहिष्टादुपभृतं प्राचीमन्तरतः प्रतीचीꣳ सर्वतः समाहाय ध्रुवां प्राणानेवास्य यथापूर्वं कल्पयति यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृच्चतुर्गृह्णञ्जुह्वा भूया आज्यं गृह्णात्यष्टौ गृह्णन्नुपभृति कनीय उपस्ति[2] भ्रातृव्यमकृत ॥ १२ ॥

Vgl 1, 1, 11 — TBr 3, 3, 4, Kāth 31, 9, Kap S 47, 9

बह्वीरासादयेद्यावतीर्वै प्रोक्षणीरासादयति तावतीरस्यामुष्मिँल्लोक आपः संसाद्बह्वीरासाद्या अग्नेर्मेधो ऽपाक्रामत्स कृष्णो भूत्वा वनस्पतीन्प्राविशद्यदाह कृष्णो ऽस्याखरेष्ठो ऽग्नये घृत भवेति तमेव मेधमवरुन्धे वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामीति प्रजा वै बर्हिः पृथिवी वेदिरस्याꣳ वा एतत्प्रजा स्वगाकरोति यदुपरिष्टात्प्रोक्ष्याधस्तात्प्रोक्षति तस्मादुपरिष्टादूर्ध्वादधस्तादोषधयो[3] जायन्ते ॥ ऊर्जं पृथिवीꣳ यच्छत ॥ इत्यस्यामूर्जमधात्तस्मादिमाः[4] प्रजा उपजीवन्ति विष्णोः स्तूपो ऽसीति मुखतः प्रस्तरं गृह्णाति मुख्यमेनं तेन शीर्षण्यं करोति यावद्धस्तेन पर्याप्नुयात्तावन्तं गृह्णीयाद्दोधुको यजमानो भवति नोर्ध्वमुन्मृज्याद्यदस्य वित्तꣳ वेद्यं तत्प्रमृज्यान्नावा[5]चीमन्ववमृज्याद्यदेनमागमिष्यत्तत्प्रतिनुदेत न विधूनुयात्प्रजां पशून्विधूनुयाद्यदुपतिष्ठेत्तदुपसंगृह्णीयाद्यथाचितायोपचिनोत्येवमेव तद्दक्षिणतः पुल्वꣳ स्तृणाति तस्माद्दक्षिणतो नोर्वीरुरु[6] प्रथस्वोर्णम्रदमिति प्रथयत्येवैनं त्स्वासस्थं देवेभ्या इति देवेभ्य एवैनत्करोति प्रस्तरं

---

1) Die beiden letzten Worte finden sich nur in M fehlen dagegen in den andern Mss 2) Bb उपस्तिं 3) So M, in H u Bb तस्मादुपरिष्टादधस्ताद्°, desgl B, ohne Accent. 4) So M, in H u Bb °मूर्जमदधात्, desgl B, ohne Accent 5) H u Bb प्रमृज्यां 6) So M u H, desgl B, ohne Accent, in Bb नोर्वीरुरु, Kath 31, 10 तस्माद्दक्षिणतो नेमिं Kap S 47, 10 दक्षिणतो नोचि

धारयन्परिधीन्परिदधाति स्वयं वा एतद्यजमान आत्मानं परिधत्ते ऽहिंसायै न पुरस्तात्परिदधात्युद्यन्वा असा आदित्यो रक्षांस्यपाहतो यन्नेवास्मा असा आदित्यो रक्षांस्यपहन्त्यूर्ध्वे समिधा आदधात्युपरिष्टादस्मात्तेन रक्षांस्यपहन्ति द्वे आदधाति मिथुनत्वाय विधृती स्था इति विधृती एवैने करोति ॥ आदित्यास्त्वोपस्थे सादयामि ॥ इतीयं वा अदितिरस्यामेवैनमसीषदद्वसूनां रुद्राणामादित्यानां सदो ऽसीत्येतां वा एतामग्रे देवतामभ्यजयंस्ताभ्य एवैनामसदः करोति द्यौरसि जन्मना जुहूर्नाम प्रिया देवानां प्रियेण नाम्ना ध्रुवे सदसि सीदेत्येतद्वा आसां प्रियं नाम यद्धृतवद्देवा वदन्ते ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञ३न्यमिति यथा हैष ते भागस्तं रक्षस्वेत्येवं वा एतद्विष्णुमाह तस्मा आज्यं तद्रक्षस्वेति वेदिर्देवेभ्यो ऽपाक्रामत्तां देवा वेदेनाविन्दंस्तद्वेदस्य वेदत्वं स्त्री वेदिः पुमान्वेदो यद्वेदेन वेदिं संमार्ष्टि मिथुनत्वाय संततमाहवनीयात्स्तृणन्नेति यज्ञस्य संतत्यै तं संततमुत्तरे ऽर्धमाउसे ऽभियजते वनस्पतीनां वा एष परिवेषो यदुपवेषश्चाधा अस्य वेशा भवन्ति य एवं वेद पुरस्तात्प्रत्यञ्चमुपहन्ति तस्मात्प्रतीचीनावसिता वेशाः स्थविमत उपहन्त्येनतिवादिन एनं वेशा भवन्ति सर्वस्मै वै यज्ञः क्रीयते सर्पा वा उपवेषा वल्मीक उत्करो यदुपवेषमुत्कर उपहन्ति तस्मात्सर्पाणां वल्मीको गृहाः ॥१३॥

Vgl 1, 1, 12 — TBr 3 3 6, Kath 31, 10, Kap S 47, 10

---

1) Bb असावादित्यो 9) So M (u Bl ohne Accent), H u Bb °स्यपहतो°, B °स्यपहतो° 2) So M ohne Accent (u Bl), desgl Kath 31, 10, H u Bb °त्यूर्ध्वे, desgl B, ohne Accent, in Kap S 47, 10 ऊर्ध्वे समिधा 3) Dies Wort in den Mss ohne Accent (M u Bl ohne Accent) 4) M (u Bl, ohne Accent) स्तृणन्नेति 5) H u Bb एषं 6) M (u Bl) °मपहति, aber vgl weiter unten 7) H °करमुपहंति

भुवनमसि ॥ इति भूतिमाशास्ते ॥ विप्रथस्व ॥ इति प्रथयत्येवैनदितं इन्द्रस्तिष्ठन्वीर्यमकृणोद्देवताभिः समारभ्येत्यतो हीन्द्रस्तिष्ठन्वी३र्यमकृणोद्देवताभिः समारभ्य ॥ जुह्वेह्यग्निष्ट्वा ह्वयति देवान्यक्षावो[1] देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवान्यक्षावो देवयज्यायै ॥ इति न वा एते अविदुषा स्वादाने इव वरुणपाशा३न्ह्याक्रामन्त्येताभिरेने[2] देवताभिरादत्ते वरुणपाशानामनाक्रमाय विष्णोः क्रमोऽसीत्यतिक्रामति यज्ञस्यानवक्रामायोर्ध्वो अध्वरो दिविस्पृगह्रुतो यज्ञो यज्ञपतेरित्यृजुमूर्ध्वमाघारमाघारयति यज्ञस्याह्रुत्यै[3] ऐन्द्रवान्स्ववानिति[4] सैन्द्रं यज्ञमकृतौजो इन्द्रियं तेनावरुन्द्धे ॥ वसुमतस्ते छायामुपस्थेयम् ॥ इत्यग्निर्वै वसुमानग्नेरेव छायामुपतिष्ठत ऋजुमूर्ध्वमाघारमाघारयेत्प्राणो वा आघारः सर्वमायुर्यजमान एति यं द्विष्यात्तस्याघार्यं कुब्जं छिन्द्यात्प्राणमस्य छिनत्ति ताजक्प्रमीयते शिरो वा एतद्यज्ञस्य यदाघार आत्माज्यं यदाघारमाघार्योपभृता समञ्ज्या३च्छिरो[5] यज्ञस्य प्रच्छिन्द्यादाज्यधान्या समनक्ति ॥

समक्तमग्निना हविः समक्तं हविषा घृतम् ॥ इत्यात्मन्यज्ञस्य शिरः प्रत्यधादथो मन एव यज्ञे प्रतिदधाति स्तने स्तनिनीः[6] प्रजा उपजीवन्ति किमस्तना इति ब्रह्मवादिनो वदन्त्यमुभी[7] रिहाणा व्यन्तु वया इत्येतद्वाव ता उपजीवन्ति वशा पृश्निर्भूत्वा मरुतो गच्छेति मरुतो वै वृष्ट्या ईशते ते ऽस्मै वृष्टिं निनयन्ति ततो[8] नो वृष्ट्यावतेति

1) So corrigirt; M यचावो; B यक्ष्यावो; Bb यक्यावो; H undeutlich. 2) So M; die andern Mss °रेन 3) So M, in H u. Bb °संकृत्यै°; B °स्वाकृत्यै° 4) So M; in H, Bb u. B विक्रमन्ति 5) Der Accent des Verbums ist von mir gesetzt; in M ist dasselbe ohne Accent; in H u. Bb समंज्यात् 6) So M; in H u. Bb स्तनिना; B स्तनिनी 7) Bb °व्युर्तभि 8) So M; in H u. Bb तंतो; desgl. H, ohne Accent.

मरुद्भ्य एवं वृष्टिं[1] वनुते चक्षुष्पा अग्ने ऽसि चक्षुर्मे पाहीति चक्षुरेवास्य पाति श्रोत्रपा अग्ने ऽसि श्रोत्रं मे पाहीति श्रोत्रमेवास्य पाति तनूपा अग्ने ऽसि तन्वं मे पाहीति तन्वमेवास्य पाति यन्मे अग्न ऊनं तउन्वस्तन्मा आपृणेत्याशिषमेवाशास्ते ॥

ये परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः ।
तं त एतमनु जोषं भरामि नेदेषं युष्मदपचेतयातै[2] ॥

इति यजुषैव युज्यन्ते यजुषा विमुच्यन्ते सम्स्रावभागाः स्थेषा बृहन्ता इति परिधीन्प्रहृत्याभिजुहोत्यग्नयो वा एते तान्प्रीणाति तान्शमयति भागधेयेन ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यत यज्ञं प्रयुङ्क्ते तत्प्रतिष्ठापयतीति देवा गातुविदो गातुं[3] वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्येतं वा अध्वर्युर्यज्ञं प्रयुङ्क्ते तदेवैनं प्रतिष्ठापयति ॥ १४ ॥

Vgl 1, 1, 18 — TBr 3, 3, 7, 5—11, Kāṭh 31, 11, Kap ■ 47, 11

॥ इति खिलकाण्डे प्रथमः प्रपाठकः ॥

---

प्रजापतिर्वा एक आसीत्सो ऽकामयत बहुः स्यां प्रजायेयेति स मनसात्मानमध्यायत्सो ऽन्तर्वानभवत्स विजायमानो

---

[1]) Fur die wechselnde Betonung von वृष्टि (वृष्टि in Versen und Sprüchen, वृष्टि in der prosaischen Erzahlung oder Erorterung) vgl oben 2 4, 7 u 8, 2, 11, 4 u 5
[2]) So M, in H u Bb °चेतयातै, desgl B ohne Accent
[3]) Das इति fehlt in den Mss.

गर्भेणातताम्यत्तां तान्तः कृष्णः श्यावो ऽभवत्तस्मात्तान्तः कृष्णः श्याव इव भवति तस्य वा असुरेवाजीवत्तेनासुनासुरानसृजत तदसुराणामसुरत्वँ स यस्तदसुराणामसुरत्वँ वेदासुमान्ह भवति नैनमसुर्जहाति सो ऽसुरान्सृष्ट्वा पितेवामन्यत तेन पितॄनसृजत तत्पितॄणां पितृत्वँ स यस्तत्पितॄणां पितृत्वँ वेद पितेव ह समानानां भवति यन्त्यस्य पितरो हवं तस्मै पितॄन्त्ससृजानाय दिवाभवत्तेन देवानसृजत तद्देवानां देवत्वँ स यस्तद्देवानां देवत्वँ वेद दिवा ह वा अस्मै देवत्रा भवति यन्त्यस्य देवा देवहूतिँ स देवान्त्सृष्ट्वामनस्यतेव तेन मनुष्यानसृजत तन्मनुष्याणां मनुष्यत्वँ स यस्तन्मनुष्याणां मनुष्यत्वँ वेद मनस्वान्ह भवति नैनं मनो जहात्युत यदंतीव वदत्यति वा चरति[1] तिष्ठन्ते ऽस्य मनुष्या मनवे ततो या योनिरुदशिष्यत[2] सा गौरभवद्योनिर्वै नामैषैतद्वा अस्याः प्रत्यक्षं नामाथो आहुः परोक्षमिति प्र सहस्रं पशूनाप्नोति य एवँ वेद तस्या[3] वै पयः पर्यपश्यँस्तां देवा अदुह्र हरितेन पात्रेणामृतं दुह्रे ऽमृतँ य एवँ वेदाथ पितरो ऽदुह्र रजतेन पात्रेण स्वधां दुह्रे स्वधाँ य एवँ वेदाथ मनुष्या अदुह्र दारुपात्रेणान्नँ वव्रुं[4] दुह्रे ऽन्नँ वव्रु य एवँ वेदाथासुरा अदुह्रायस्पात्रेण सवता सुरां ते ऽसवन्त्सवत्यस्य भ्रातृव्यो य एवँ वेद तस्मात्संवता न हन्तवा अवनेनिजीत न पिबेदेते वा अस्या दोहाः सर्वैरेवास्या दोहैः सर्वैः कामैर्भुङ्क्ते य एवँ वेद चत्वारि वै नभाँ-

---

1) So ist dieser Satz wohl zu schreiben, in M eigentlich यदंतीवावदत्यतिवाचरती, dann wie es scheint corrigirt in यदतीव वदत्यतिव चरती, in H u Bb यदतीवा वदत्यताव चरत, in B ebenso, nur ohne Accent, und am Schluss चरति 2) So M, in H u Bb °रुदशिष्यत्, B °रुद्रशिष्यत् 3) Die Mss schreiben तास्॒ 4) In M ohne Accent, weiter unten aber betont Ich vermuthe वव्रिं, ebenso auch weiterhin वव्रिं, cf 4 2 3

सि देवाः पितरो मनुष्या असुराः सर्वेषु ह वा एतेष्वम्भो नभ इव भवति य एवं वेद तां वा अकामयन्त मयि स्यान्मयि स्यादिति तां[1] देवाः काम्ये ॥ इत्याह्वयन्सा वा एनानभ्यकामयतोभये ह वा एनं देवमनुष्या[2] अभिकामयन्ते वारुका एनमार्त्विज्ये भवन्ति य एवं वेद ॥ यव्ये ॥ इति मनुष्याः सा वा एनानशुश्रूषतोभये ह वा एनं देवमनुष्याः शुश्रूषन्ते पूर्वास्य जनतामायतः कीर्तिरागछति य एवं वेद[3] ॥ इलान्दे ॥ इति पितरस्तेभ्यो वा अतिष्ठत तिष्ठन्त्यस्मिन्पशवो[4] य एवं वेदाथ यथासुरा आह्वयंस्तेभ्यो वा अचसद्यो जिघांसस्य तथा गोष्ठं आह्वयेदसन्यस्मात्पशवं[5] एतैरेव जुहुयात् ॥ गोनामैः संसृष्टा गोभूर्धन्यपशुकामः ॥ काम्यायै स्वाहा यव्यायै स्वाहेलान्दायै स्वाहा ॥ इति गोष्ठो वै नामैषा लक्ष्मीः स्वं वा एतद्गोष्ठे यजमानो भ्रातृव्यस्य पशून्वृङ्क्त एतैर्वै ते तां अवृञ्जत तैरेवैना वृङ्क्ते सम्पृङ्क्ती भवति पशूनां परिगृहीत्यै यो वै चक्षुषो विभक्तिं वेद चक्षुष्मान्ह भवति नैनं चक्षुर्जहाति यद्दिवा पश्यामस्तद्देवानां चक्षुषा पश्यामो ऽसौ वा आदित्यो देवानां चक्षुः पश्यन्ह वै देयना करोति प्र देवयानं पन्थां जानाति य एवं वेद यज्ज्योत्स्नायां पश्यामस्तत्पितृणां चक्षुषा पश्यामश्चन्द्रमा वै पितृणां चक्षुर्न ह वा एनममुष्मिंल्लोके चक्षुर्जहाति प्र पितृयाणं पन्थां जानाति य एवं वेद यत्तमिस्रायां पश्यामस्तन्मनुष्याणां चक्षुषा पश्याम एतावद्दाव नः स्वं[6] चक्षुर्न ह वा एनमस्मिंल्लोके चक्षुर्जहाति सर्वमायुरे-

1) Die Mss. schreiben तान्. 2) So corrigirt, die Mss. देवमनुष्या, vgl. aber weiter unten sowie namentlich auch 4, 2, 7, 4, 2, 13, 3, 8, 4. 3) H u. Bb वेदा. 4) In H u. Bb ist das Pronomen betont यस्मिन्. 5) So die Mss., man könnte vermuthen आह्वयेत्, असन्यस्मात्. 6) In den Mss. dies Wort ohne Accent. 7) M न सं, H u. Bb. नसंत्, desgl. B, ohne Accent.

त्ति य एवं॰ वेद'यदग्नेऽन्तो पश्यामस्तदसुराणां चक्षुषा पश्यामा'उच्च वा एष दीप्यते नि च रिष्यति[1]'दीप्यमाने भ्रातृव्यस्य गृहाद्धरेद्रयिमेवास्य पुष्टि॰ हरत्यो तु सूर्यस्योदितोर्जागृयाद्यत्सत्याद्[2]रातिमांछेत्तज्जागरितव्य॰[3]'रयिमेव पुष्टिमनुजागर्ति ॥ १ ॥

यो वा इडां धेनुं॰ वेद सर्वा ह वा अस्मै दिशो धेनवो भवन्ति' सर्वे प्रतिजना दानकामास्तामिन्द्राग्नीरामिवशोचनिर्विदांचकार[4]' तस्मै सर्वा दिशो धेनवो ऽभवन्सर्वे प्रतिजना दानकामास्तेसास्ते सर्वैः प्रतिजनैर्व्यवहत्तोपजनन्संन्त्संवा[6] ह्यस्मै दिशो धेनवो ऽभवन्सर्वे प्रतिजना दानकामास्तद्य एवं॰ वेद सर्वा एवास्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामास्तस्या वा इयमेव पादो' ऽन्तरिक्षं पादो' द्यौः पादः'समा पादो'ऽपो आहुः'कृषिः पादा' इति'तेन प्रति त्वदानी[8]' तिष्ठति न त्वदानी[9]'यदा सुसस्यं भवत्यथ प्रतितिष्ठति'यदा न सस्यं भवत्यथ न प्रतितिष्ठति'भवति ह वा अस्य सस्यं नास्य सस्यं॰ व्यृध्यते य एवं॰ वेद'तस्या[10] वा अदं एवं पृष्ठमन्तरिक्षमात्मे'यमुरो'दिशः पार्श्वे'समुद्रौ कुक्षी'अस्ता आदित्यः[11] शिरो'ऽग्निराऽस्य॰'वातः प्राणो'गायत्र्यभिधानी'संवत्सर्वमायुरेति य एवं॰ वेदो'धरुत्तरवेदिः'पवमानो वत्स'एष वा एना[12] प्रस्तौति'

---

1) Bb निस्वरिष्यति oder निखरिष्यति. 2) सत्याद् habe ich mit M geschrieben, H u Bb सत्याद्, desgl B, ohne Accent 3) Den Accent von जागरितव्य॰ habe ich corrigirt, M schreibt जागरितव्य॰, H u Bb जागरितव्यं॰ 4) So M, desgl B, ohne Accent, in H u Bb तामिन्द्राग्नीरामिवशोचनि॰ 5) So M, H u Bb भवति, desgl B, ohne Accent 6) So M! In H u Bb व्यवहत्तोपजनत्सं संवा, in beiden Mss könnte übrigens auch die erste Silbe व्यु betont sein, B ebenso, nur ohne Accent. 7) So M, H u Bb भवति, desgl B, ohne Accent 8) So M! H प्रति त्वदानीस्, Bb प्रति त्वदानीम्, desgl B, ohne Accent. 9) So M, in H u Bb न त्वदानी॰, desgl B, ohne Accent 10) B तस्य 11) Bb असावादित्यः 12) M एनाम्

प्रेतान्ह[1] वा इमांल्लोकान्दुहे य एवं वेद बृहद्रथन्तरे द्वौ स्तनौ वामदेव्यं च यज्ञायज्ञियं च द्वा ओषधीरेव देवेभ्यो रथन्तरेणादुह पशून्बृहता पो वामदेव्येन यज्ञं यज्ञायज्ञियेन तद्य एवं वेदौषधीरेवास्मै रथन्तरेण दुहे पशून्बृहता पो वामदेव्येन यज्ञं यज्ञायज्ञियेनेडा वा इदं सर्वं स सहस्रं पशून्प्राप प्र सहस्रं पशूनाप्नोति य एवं वेद ॥ २ ॥

यत्र प्राचीनप्रननं समूलं भूम्या स्यात्तदुपोदये सूर्यस्य हस्ता अवनिज्य दर्भैस्तम्ब उदश्राथ्य निनयेत्कामंकामं[2] मा आवर्तय ॥ इति कामेनैवास्मै काममावर्तयति यत्कामो भवति यो वै कामं साक्षाद्वेद ताजग्घ[3] वा एनं स कामा आगछति यत्कामो भवति पशुषु वा अस्माकं कामः पशूनामोषधीष्वोषधीनामप्स्वोषधीरेव कामेन समस्नाह ता अस्मै कामं समर्धयन्ति यत्कामो भवत्याप[5] एवा स्या वा एष यर्हि संसृष्टश्चरति[6] लोमशो लोमशायास्तस्मादेषा शोष्यसत्येत्यपि[7]ऽहीस्या आऽस्य वातः प्राणो यत्र गोभिः संगछेत तन्ब्रूयात्[8] ॥ प्रशस्ताः स्थ कल्याण्यः ॥ इतीयं वा एषेमा वा एतत्संभागयत्यनासुका अस्मात्पशवो भवन्ति य एवं वेद देवाश्च वा असुराश्चास्पर्धन्तादितिर्देवेष्वासीत्कुसितासुरेषु[9] ते देवा अमन्यन्त

---

1) So corrigirt, H u. Bb प्रेतान् (desgl. B, ohne Accent), M प्रेता° 2) So corrigirt, M कामकाम, H u. Bb कामकाम 3) So corrigirt, M ताजग् ह, H u. Bb ताजग् ह, desgl. B, ohne Accent 4) So corrigirt, in den Mss dies Wort ohne Accent 5) So corrigirt, M भवत्यप, H u. Bb भवत्यैप, desgl. B, ohne Accent 6) So wohl zu schreiben, M यर्हि°, H यर्हि° H u. Bb यर्हि° 7) So meine Correctur, H u. Bb शोष्यसत्येत्यपि°, desgl. B ohne Accent, M शोष्यसत्येत्यपि° 8) So M; H u. Bb समेकित्तिष्ठन्तत् ब्रूयात्, B ebenso nur ohne Accent 9) Vgl. zu dem Namen dieser Unholdin die कुसितायी 2. 1, 11, 3, 2, 6

यद्यभिजेष्यामः कुस्तायाः शिर आहनिष्यामा इति यद्यभिजेष्यामा इत्यसुरा अमन्यन्तादित्याः शिर आहनिष्यामा इति तां देवा अभिजित्याघ्नत यस्य वै जितं यस्य विजितं तस्यैषा गृहे हन्यत एषा वै क्षुत् क्षुधं वा एतद्घ्नते तद्य एवं विद्वानेकाष्टकायां गां हते संवत्सरायैव क्षुधं हते प्रजापतिर्वा एक आसीत्सोऽकामयत बहु मनु स्यां प्रजायेयेति स आत्मानमैट्ट स मनोऽसृजत तन्मन एकधासीत्तदात्मानमैट्ट तद्वाचमसृजत सा वागेकधासीत्सात्मानमैट्ट सा विराजमसृजत सा विराडेकधासीत्सात्मानमैट्ट सा गामसृजत सा गौरेकधासीत्सात्मानमैट्ट सेडामसृजत सैडैकधासीत्सात्मानमैट्ट सेमान्भोगानसृजत यैरस्या इदं मनुष्या भुञ्जत एते वा अस्या भोगाः सर्वैरेवास्या भोगैः सर्वैः कामैर्भुङ्क्ते य एवं वेद गौर्वै वाग्गौर्विराड् गौरिडा गौः खल्वेव गौर्गौरिदं सर्वं सर्वा ह वा एनमेताः पयस्ते य एवं वेद यद्ध तदात्मानमैट्ट सैडाभवत्तदिडाया इडात्वं स यस्तदिडाया इडात्वं वेदेट्टे ह वै स्वमात्मानं भूत्यै ॥ ३ ॥

Vgl Mân Çr 9, 5, 1

या रोहिणी तामरुणा तां गौरी तां बभ्रुः ॥ तदिन्द्र उदाजत वसुर्नाम रूपं पशूनाम् ॥[6] विन्दते वसु न वसु रुणद्धि य एवं वेद या शितिपृष्ठा तां मन्दिस्तां मैत्री तां शबली तां शितिबाहुस्तां शुद्धवाला ॥ तद्बृहस्पतिरुदाजतेडा नाम रूपं पशूनाम् ॥[7] बह्वीर्ह वा एनमिडाः प्रयन्ते य एवं वेद या पृषती तां पिशङ्गी तां सारङ्गी

1) H u Bb तस्यैषा 2) So die Mss ? Vielleicht बहुमनु zu schreiben 3) In M eigentlich प्यात् geschrieben, aber am Rande wie es scheint, in स्यां corrigirt, (oder स्यात् ?) 4) Bb मैट्ट 5) So corrigirt, in den Mss das Verb ohne Accent 6) M interpunctirt so, die andern Mss पशूनां ohne Interpunction 7) Nur M hat hier Interpunction

तां कल्माषी तां पृष्टिरुष्टौ श्वेता ॥ तन्मरुता उदाजन्त ज्योतिर्नाम रूपं पशूनाम् ॥ ज्योतिष्मान्भवति य एवं वेद या सुरूपा तां श्यामां तां श्येनी तां कृष्णां ॥ तम्प्रजापतिरुदाजतायुर्नाम रूपं पशूनाम् ॥ आयुष्मान्भवति य एवं वेद चतस्रः प्रथमाश्चतस्र उत्तमाः द्विः पत्नमध्यतस्ता द्विदश दशाक्षरा विराड् वैराजाः पशवः पशूनेवावरुन्धे ॥ वस्व्यै हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्ताद्बहिःपवमानस्य वदेत् ॥ इडायै हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्तादाज्यानां वदेत् ॥ ज्योतिषे हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्तान्माध्यंदिनस्य पवमानस्य वदेत् ॥ आयुषे हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्तादार्भवस्य पवमानस्य वदेत् ॥ यज्ञो वै पशूनामायतनं स्वे वा एतदायतने यजमानो भ्रातृव्यस्य पशून्वृङ्क्ते ऽनपक्रामुका अस्मात्पशवो भवन्ति ॥४॥

वसीयस्यैहि श्रेयस्यैहि भूयस्यैहि चित्ता एहि दधृष्वेहीडा एहि सूनृता एहि चिदसि मनासि धीरसि वस्वी रन्तिः सुमनाः ॥ सूनरि विश्वा त्वा भूतान्यनुप्राणन्तु विश्वा त्वं भूतान्यनुप्राण भूयस्यायुरसी रिरसि संरूपवर्या एहि ॥

एमामनु सर्पतेमौ भद्रौ धुर्या अभि ।
नीव शीर्षाणि मृढ्वम् ॥

सा नः सुमङ्गलिः प्रिया नः सुहार्दाः प्रियवनिर्मेघवनिरन्ता एहि

---

1) So M, H u Bb श्वेतोश्चावर्दता, desgl B ohne Accent 2) M कृष्णाश्चेत् 3) So meine Correctur die Mss schreiben वस्तो 4) So meine Correctur, M सून रि, H u Bb सनरी, desgl B, ohne Accent 5) In den Mss °मनु ohne Accent 6) So M, in H निशीष. Bb u B निशीप 7) D h सुहार्दे न

जुष्टा एहीडा एह्यदिता एह्युपहूत उपहवं ते ऽशीय सुहवा नो एहि सह रायस्पोषेण देवीर्देवीरभि मा निवर्तध्वम् ॥

स्योना स्योनेन घृतेन मा समुक्षत ॥
नमे तदुपदम्भिषर्धृषिर्ब्रह्मा यद्ददौ ।
समुद्रादुदजनि वः स्रुचा ॥

वार्ये विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशम् ॥ ५ ॥

Vgl Mn Çr 9 5 1

वसीयस्येहीति ब्रह्म वै वसीयो ब्रह्म वा एतदत्याह्वयति श्रेयस्येहीति क्षत्रं वै श्रेयः क्षत्रं वा एतदत्याह्वयति भूयस्येहीति विड्वै भूयसी विशं वा एतदत्याह्वयति चित्त एहीति मनो वै चित्तं मनो वा एतदत्याह्वयति दधृष्येहीति वाग्वै दधृषि वाचं वा एतदत्याह्वयतीडा एहीति पशवो वा इडा पशून्वा एतदत्याह्वयति सूनृता एहीत्यन्नं वै सूनृतान्नं वा एतदत्याह्वयत्येता वै सप्त देवगव्यस्ताः कीर्तो वैतहोत्रो विदांचकार ताभिरदः कुरूणां कीर्तिः पशूनत्याह्वयत्ताः कुरवो ब्राह्मणेष्वन्वैच्छंस्ताः कुमारवत्याश्वदक्षिणा अविन्दंस्ते ऽब्रवीन्मा सूक्ष्मैतेताभिर्वा अहमेता अत्याह्वयिष्यामीतराभिरितरा यानि खलु वा एतासां प्रियाणि धामानि तानि कीर्तो न वेदेति स संयत्ते संयामे छदिर्दर्श एताभिरेवैता अत्याह्वयिष्यामीतराभिरितरा यत्र खलु वा एता अत्याहूयन्ते तत्पशवो ऽभिसंक्रामन्ति यत्र पशवस्तद्द-

---

1) So M, in H u Bb तदुपदभिषेधृषि°, desgl B, ohne Accent, cf 4, 2, 8 2) So M; in H u Bb स्रुचा, desgl B, ohne Accent 3) So M, in H u Bb दशभिर्देशं, desgl B ohne Accent 4) So M, in H u Bb कुरुणां कीर्तिं, desgl B, ohne Accent, 5) So M; in H u Bb अपिदन् शृो, B अविदस्तो

वां यंच देवास्तदिन्द्रो यतरान्वा एते ऽभिसंक्रामन्ति ते जयन्ति जयति संग्रामम् ॥ ६ ॥

Vgl Mān Çr 9, 5, 1

सा वै सृष्टेभयान्देवमनुष्यानत्यमन्यत तां देवा दर्शपूर्णमासाभ्यामुपप्रास्तृणत[1] तां वा एतदाभुवन्यदिडा तां वा एतदाभ्रा हरन्तो मन्यन्ते यदिडामुपह्वयन्ते यर्हि तूष्णीमुपह्वयेत[2] तर्ह्येताः सप्त वदेद्यद्धु चैतस्युत्तराः सप्त धाम धामासा वर्षो वर्णमुपगछत्या ह वा एनमप्रतिक्वयातं[3] गछति य एवं वेद यंच स मूला[4] ओषधीरुपगछेत्यभून्वा तदेता एव सप्त वदेद्धाम धामासा वर्षो वर्णमुपगछत्या ह वा एनमप्रतिक्वयातं[5] गछति य एवं वेद सप्त स्ववीर्येण[6] याजयेद्यस्य सप्त स्वविराध्वरमामन्तमा[7] स्युर्वसीयस्यैहि श्रेयस्यैहीत्येतदेतद्वास्या अत्याह्वयति यो वैश्यः[8] शूद्रो वा बहुपुष्टः स्यात्तस्य गवा सारड वत्सतरमपमयेत[9] ॥ इलान्दाः स्थ ॥ इतीलान्दा हि पशवः पूष्णो नक्षत्रं पोषयिष्णु ॥ इति विष्णेषु वा एतच्चरति पूष्णो नक्षत्रं पोषयिष्णु तदेवापधापयते तमपाकुर्वीत ॥ आयुर्मे दा वर्चो मे दा रयिं मे दाः पुष्टिं मे दाः ॥ इति रयिमेवास्य पुष्टिं हराति तमितो ऽभिसृज्याये[10] ऽतो ऽत्याह्वयेद्वसीयस्यैहि श्रेयस्यैहीत्येतदेतद्वास्या अत्या-

---

1) So corrigirt, M प्रोत्स्तृणत, H u Bb प्रास्तृणत, desgl B, ohne Accent 2) Die Mss °मुपह्वयेत, cf aber unmittelbar vorher 3) So corrigirt, M °मप्रतिचात, H u Bb °मप्रतिक्ख्यात, B °मप्रतिक्ख्यात 4) So M, desgl B, ohne Accent, H u Bb संमूचाका 5) So corrigirt, M °मप्रतिचात, H u Bb °मप्रतिक्ख्यात, B °मप्रतिक्ख्याते 6) So die Mss 7) So H u Bb, desgl B, ohne Accent; M स्वविराधरमामनतमा 8) Dies Wort in den Mss ohne Accent 9) So M, in B °मुपमयेत, Bb सुपमयेत, in H ursprünglich °मुपमयेत geschrieben, dann in सुपमयेत corrigirt 10) So M, in H u Bb °पिसृज्या, desgl B, ohne Accent

ह्वयति नास्य किंचनोदशिषद् ग्रामकामं याजयेत्सारस्वत ऋग्भ्यां संवत्सरो वै सरस्वान्त्संवत्सरेणैवास्मै ग्रामं च्यावयति वसीयस्यैहि श्रेयस्यैहीत्येतदेतदेवास्मा अत्याह्वयति पशुकामं याजयेत्सारस्वत ऋग्भ्यां संवत्सरो वै सरस्वान्त्संवत्सरेणैवास्मै पशूंश्च्यावयति वसीयस्यैहि श्रेयस्यैहीत्येतदेतदेवास्मा अत्याह्वयति सर्वासां दुग्धे चतुःशरावमोदनं पचेद्ब्राह्मणेभ्यः पशुकामो यच्चतुःशरावो दिग्भ्य एवास्मै तेन पशूनवरुन्द्धे यद्ब्राह्मणेभ्यो ब्रह्मणस्तेन न छिन्नं देयं पशुकाम इव ह्येष वासो हिरण्यं वा देयमीजानस्यास्य पशवो भूयांसो भवन्ति ॥ ७ ॥

Vgl M u Çr 9, 5, 1

प्रजापतिर्वै न व्याहरत्स आत्मन्येव पुण्यमायच्छदात्मनः पुण्यं न निरवदद्देतद्धै तद्यजुर्यदन्यान्यथा ब्रूयात् ॥ पुण्यं मयास्तम् ॥ इति ब्रूयादात्मन्येव पुण्यं यच्छत्यात्मनः पुण्यं न निर्वदति यामदानीयाय ददाति तामस्य पशवोऽन्वपक्रामन्ति यदि मन्येतादानीयायादामित्येतदेव यजुर्वदेन्नमे तदुपदम्भिपधूपियेहा महदा इति तदेवैतेनापूरयति तदाप्याययति समुद्र इव ह वा अस्य व्यच्यमानो न क्षीयते य एवं वेद ॥ वीरवतीर्भूयास्त या नो वीरवतोऽकर्त ॥ इति पुमांसं जातमभिमन्त्रयेत ॥ भूयसीर्भूयास्त या नो भूयसोऽकर्त ॥ इति स्त्रियं जाताम् ॥ अन्नादा भूयास्त ये नोऽन्नादानकर्त[10] ॥ इति

---

1) So M, m H, Bb u B °शीष्यत 2) Bb संरस्वत्यथ वत्सरेणैवास्मै 3) So B; in M, H u Bb °च्यावयति 4) M छिन्नंदेय 5) Die Mss निरवद° 6) M °नीयांपांदा° 7) So M, cf 4 2, 5, in H u Bb °दुपदस्मिय धूप्यि महा, desgl B, ohne Accent 8) So B, ohne Accent, H u Bb व्यचमानो, M व्यच्यमानो 9) H, Bb u B कर्त्त 10) So M, H u Bb °दनकर्त्त, desgl B, ohne Accent

वलिहृतो[1] ऽभिमन्त्रयेत ॥ भूयासो भूयास्त ये नो भूयसो ऽकर्त[2] ॥ इति सभासदः पादौ मत्यवहरेदेते वै पशवा उपोप[3] ह वा एनं पशवो यन्ति नापयन्ति य एवं वेद ॥ पुण्या पुण्यमसूंचित्रा[4] चित्रमसूंहैडो[5] से भगवो ऽजनिष्ठा मैत्रावरुणं ऊर्जो से भगवः सह जनिष्ठाः[6] संविदं मे विन्द ॥ इति पुमांसं जातमभिमन्त्रयेतो जैवासै सह जायते गच्छति पशूनां संविदम् ॥ पुण्या पुण्यामसूंचित्रा[7] चित्रामसूंहैडी[8] से भगवत्यजनिष्ठा मैत्रावरुणी रायस्पोषेण मे भगवती सह जनिष्ठा ज्ञानं मे विन्द ॥ इति स्त्रियं जातां रायस्पोषेणैवास्मै सह जायते गच्छति पशूनां ज्ञानं ये प्राचीनमेकाष्टकाया[9] जायन्ते पूर्वैस्य ते सस्यस्योत्तमा ये प्रतीचीनमपरस्य ते सस्यस्य प्रथमास्तानुभयान्त्सहाभिमन्त्रयेतोभयानेनान्त्सहावरुन्द्धे ॥ ८ ॥

Vgl Man Çr 9,5 2

यो वै शक्तिं[10] वेद स तच्छक्नोति[11] यच्छिक्षतीयं[12] वै शक्तिर्यो वा अस्या भूयिष्ठभाग्भवति स तच्छक्नोति[13] यच्छिक्षति[14] भूयिष्ठभाग्घ वा अस्यां भवति य एवं वेद पशवो वै शक्तिर्यो वै पशूनां भूयिष्ठभाग्भवति स तच्छक्नोति[15] यच्छिक्षति[16] भूयिष्ठभाग्घ वै पशुना-

1) So M, in H u Bb वलिहृतो, B वलिहुतो  2) H, Bb, B कर्त्ता  3) H u. Bb संपाप  4) So schreibe ich im Anschluss an M पुण्यमसूचित्रा, in H u Bb पुण्यमसौ चित्रा, desgl B, ohne Accent  5) So im Anschluss an M चित्रमसू हैडो, in H u Bb चित्रमसौ है॰, desgl B ohne Accent,  6) M जनिष्ठात्  7) Wie oben hat auch hier M ॰मसू चित्रा, die andern Mss ॰मसौ चित्रा  8) Wie oben auch hier, M ॰मसू है॰, die andern Mss ॰मसौ है॰  9) So M, die andern Mss ॰कायां  10) So die Mss  11) So corrigirt, M, H u Bb ते श॰, B ते श॰  12) So corrigirt, H u Bb ये शि॰ षती॰, B ये शिषती॰, M ये शक्ष्यती॰  13) So M (u Bl) ohne Accent, B ते शक्नोति, in Bb Lücke, H ते शक्नोति  14) So corrigirt M य शिक्ष्यति (u Bl, ohne Accent), in Bb Lücke, H ये शिषति, B ये शिक्षति  15) So M, u Bl ohne Accent, Bb ते शक्नोति, H ते शक्नोति, Bb ते शक्नोति  16) So corrigirt, M यत् शिक्ष्यति (u Bl ohne Accent), H u Bb ये शिक्षति, desgl B, ohne Accent

न्भवति य एवं[1] वेद तस्या व्रतं न हन्तेति ब्रूयात् ॥ कुह्वेति ब्रूयान्नान्तर्वत्नीति ब्रूयाद्विजन्या इति ब्रूयाद् भुवनमसि सहस्रमिन्द्राय त्वा[1] सूमो[2] ऽददात ॥ इति सूमो वै नामासुर आसीत्तस्येयं पृथिवी पशुभिः पूर्णासीत्तमिन्द्रो ऽवृङ्क्त तस्मादाहुरैन्द्राः पशव इति यावतीनामिदं करोमि भूयसीनामुत्तरा[3] समां क्रियासम् ॥ इति गवां लक्ष्म कुर्याद् भूयसीनामेवोत्तरा समां करोति पशवो वै सृष्टा एकैकं नक्षत्रमुपातिष्ठन्त तेन प्राजायन्त[4] न भूमानमगच्छन्[5] ते रेवतीमुपातिष्ठन्त रेवत्यां प्राजायन्त रेवत्यां भूमानमगच्छंस्तस्माद्यत्किंच पशूनां कुर्वीत तद्रेवत्यां कुर्वीतोप ह्वेन[5] पशवस्तिष्ठन्ति प्रास्य पशवो भवन्ति य एवं[6] वेद यस्य दक्षिणतः प्रतिभिन्नं दक्षिणत उपाध्वस्तं स्यादेतल्लक्ष्म देवलक्ष्मं[6] यज्ञियं[6] यज्ञकामः[7] कुर्वीतोप ह्वेनं[8] यज्ञो नमति यस्योभयतः प्रतिभिन्नमुभयत उपाध्वस्तं तद्यच्छ्लक्ष्म पशव्यं पशुकामः कुर्वीत पशुमान्भवति यस्योभयतः प्रतिभिन्नमुभयत उपाध्वस्तं त्रैष्टुभं लक्ष्म पूतस्य रूपं प्रतिष्ठाकामः कुर्वीत गच्छति प्रतिष्ठां वसिष्ठस्य स्थूणाकर्ण्यो वसिष्ठो वै रयिमपश्यत्तामात्मन्नधत्त यत्स्थूणाकर्णीः कुरुते पशुष्वेव रयिं धत्ते जमदग्नेः कर्करिकर्ण्यो[9] जमदग्निर्वै पुष्टिमपश्यत्तामात्मन्नधत्त यत्कर्करिकर्णीः कुरुते पशुष्वेव पुष्टिं धत्ते ऽसुराणां सास्नाकृत्यः क्षिप्रं बह्वीर्भवन्ति क्षिप्रं पराभवन्त्यमेध्याः

---

1) So corrigirt, die Mss त्वे 2) H u Bb संमो 3) Die Mss गंवासंत्स 4) So corrigirt, H u Bb प्रंजायत, desgl B, ohne Accent, M (u Bl) प्रजायत 5) So meine Correctur, H, Bb u B ह्रीन, M ह्विन (u Bl), cf weiter unten 6) So M (u Bl, ohne Accent) u B, ohne Accent, Bb यक्षंयक्षियंसं, H यक्षंयक्षियस 7) Die Mss यक्षकाम (H u Bb) 8) So meine Correctur, in M, Bb u H ह्रीम॰, B ह्विन॰ 9) M (u Bl) ककरी॰, während M weiter unten कर्करि॰ schreibt

कर्णाः क्षिप्रं बह्वीर्भवन्ति यद्यस्त्वेनानेनूपनमतीव निर्ऋत्याः छिद्रक- ३र्ण्यो यच्छिद्रकर्णीः कुर्वीत निर्ऋतिरस्य पशोर्निगृह्णीयान्न प्रच्छिन्ध्या कार्याः का३र्या न दात्राकर्ण्यः पराचीनमिव हि तन्निर्वृत्तमगस्त्यस्य विष्ट्यकर्ण्यः काश्यपस्य कत्नुन्युदस्ता इन्द्रस्याङ्कस्ता अथो आहुः प्र- जापतेर्लिंभयं ज्येष्ठलक्ष्म ज्यैष्ठ्यकामः कुर्वीत प्र समानानां ज्यैष्ठ्य- माप्नोति प्रजापतिः पशूनसृजत स वा असृगेव नासृजतासृष्टं वा एतं स्तदह्यो ऽसृक्त क्रूरं पशूनां कर्म्या इति वै सो ऽसृयासृजत क्रूरं वा एषं पशूनां कुरुते यो ऽक्ष्णुते यदक्षितास्तेनाक्षिता अथ यदनक्षिता इति पूमन्ते तेनाक्षितास्तदाहुर्न वा एतमेता अमुत्रागछन्ति या अ- नक्षिता इति तस्मादक्षित३ष्या न तेजनेनाक्ष्णुयाद्वज्रो वै तेजनं य- त्तेजनेनाक्ष्णुयाद्वज्रेण पशूनपिवेद्ध श्यामेनायसा क्रूरं तदशान्तमिक्षु- काण्डमप्सु वासयित्वा तेनाक्षित३व्यास्तद्धि शिवं तच्छान्तमथो आ- हुर्लोहितेनायसेति तद्धि शिवं तच्छान्तम् ॥ ९ ॥

Vgl Man Çr 9, 5, 3

इहं प्रजा विश्वरूपा रमन्तामस्मिन्गोष्ठे विश्वभृतो जनित्रीः ।
अग्निं कुलायमभि संविशन्तीः समासृजन्तु पयसा घृतेन ॥

इति गाः सायमायतीरभिमन्त्रयेताग्निर्वा एतासां योनिरग्निः कु- लायं स्वे एवैना योनौ स्वे कुलाये संवेशयति नास्य पशवो नक्त- मार्तिमार्छन्ति य एवं वेद ॥

---

1) So ist vielleicht zu schreiben, die Mss schwanken, M तैनानेनूपनमतीव, H तैनानेनूपनमतीव, Bb तैनानेनूपनमतीव B तेनानेनूपनमतीव 2) So corrigirt, die Mss छिद्र°, vgl aber das unmittelbar Folgende wo alle Mss छिद्र° 3) So M, in H u Bb कतुत्युदत्तो, desgl B, ohne Accent 4) So M Bb इन्द्रस्याक्षस्तायो, B इन्द्र स्याक्षस्तायो, H इन्द्रस्याक्षस्ता

सं॰ वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः ।
समिन्द्रो यो धनंजयः ।
संजग्माना अविह्रुता अस्मिन्गोष्ठे पुरीषिणीः ।
स्वावेशा ना आगत ॥

इति गाः सꣳसृजेद्या अस्य पुरा स्युर्याश्चान्यतो विन्देत पशवो वै घृतमग्नी रुद्रो यज्जुहुयाद्रुद्रायास्य पशूनपिदध्यात्ताꣳस्सꣳसृज्या एवाभियीहे भूयसीर्भवन्ति सं॰ वः सृजत्वर्यमेति यज्ञो वा अर्यमा यज्ञेनैवैनाः सꣳसृजति सं पूषेति पुष्टिर्वै पूषा पुष्ट्यैवैनाः सꣳसृजति सं बृहस्पतिरिति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनाः सꣳसृजति समिन्द्रो यो धनंजय इतीन्द्रियं॰ वा इन्द्र इन्द्रियेणैवैनाः सꣳसृजति रेवती तन्तिः पृथिवी माता रेवतीरापा ओषधयः ॥ ता नो हिन्वन्तु सातये धिये जुषे ॥ इति तन्तिं॰ वितनुयात्तामनुमृज्यात् ॥ रय्या त्वा पुष्ट्यानुमार्ज्मि ॥ इति रय्यैवैनाः पुष्ट्यानुमार्ष्टि तस्या यतं न रिक्ता स्याच्चोपर्युपरि संचरेयुर्नाभिचर्येताभिनपेदेतद्ध वस्तो रामकायनो विदांचकार तन्त्यां वितननꣳ स सहस्रं पशूनाप ॥ सहस्रं पशूनाप्नोति य एवं॰ वेद ॥

पिता वत्सानां पतिरघ्न्यानामुताथ पिता महतां गर्गराणाम् ।
रेतोधा त्वा यशोधा॰ रायस्पोषायोत्सृजेत् ॥

इत्यृषभस्य कर्णे उत्सृजमानो वदेद्रेतोधामेवैनं॰ यशोधा॰ रायस्पोषा-

---

1) Hier mit वेशा flg beginnt die Hdschr von Benares (Ben), u zwar mit p 32
2) M setzt hier eine ३, die Interpunction fehlt in den Mss 3) So Ben u M (u III, ohne Accent), H u Bb रिक्ता, desgl B ohne Accent 4) H u Bb नाभिचर्ये॰
5) So Bb, desgl M (u Bl), ohne Accent, die andern Mss समकायनो, in H eigentlich समकायनो geschrieben, später in रामकायनो corrigirt

योऽवसृजते यो वैश्यः शूद्रो वा बहुपुष्टः[1] स्यात्तस्य गवां गोष्ठादेकविंशतिं शर्करा आहृत्यैकविंशतिमाहुतीर्जुहुयादेकविंशतिर्वै मनुष्यलोका मनुष्यलोकेभ्य एवास्मै पशूनवरुन्द्ध एतैरेव जुहुयाद्यो नामयेत्तर्हि गोभिः संविदे पशुकामो मुखं वा एष पशूनां मुखत एवास्मै पशून्निनयति ॥ १० ॥

Vgl Mân Çr 9,5,3

यासामिन्द्र उदाजत वसु नाम रूपं पशूनामुपसं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयात् ॥ यासां बृहस्पतिरुदाजतैडा नाम रूपं पशूनां संगवं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयात् ॥ यासां मरुत उदाजन्त ज्योतिर्नाम रूपं पशूनां मध्यन्दिनं धाम पश्यमानाः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयात् ॥ यासां प्रजापतिरुदाजतायुर्नाम रूपं पशूनामपराह्णं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयादेतानि वा अह्नो रूपाण्येतेषु वा अह्नो रूपेषु देवाः पशूनां रूपाण्यवृञ्जत तदेतेष्वेवाह्नो रूपेषु यजमानो भ्रातृव्यस्य पशून्वृङ्क्ते[2] घृतेन जुहोति पशवो वै घृतं पशुभिरेव पशून्वृङ्क्ते तन्न सूर्यं प्रातरेवान्तर्गोष्ठासु गोषु होतव्यं संधा एनाः सहावरुन्द्ध एतै रेव जुहुयाद्गोष्वाकृतासु योनितो वा एतत्पशूनपहोदपिहीनाः परिघरिषस्कृषन्त्येतैरेव जुहुयात्संग्रामे ऽथाश्वानभिमन्त्रयेत ॥ मित्रभृतः क्षत्रभृता ओजोभृतो बलभृतो वयं जयेम वयं सहेम वयं

1) cf Mâitr S 1 6, 11 2) So corrigirt, Bea u M मृक्ते, H u Db मृक्ते, desgl B, ohne Accent 3) So corrigirt, die Mss तदेतेष्वेवा यह्नो

भवेम वयं पुषेम ॥ इति जयति संग्रामम् ॥ रोहिणीर्वो वृञ्जे गायत्रेण छन्दसारुणा वो वृञ्जे त्रैष्टुभेन छन्दसा गौरीर्वो वृञ्जे जागतेन छन्दसा बभ्रुवो वो वृञ्जा आनुष्टुभेन छन्दसा गर्भान्वो वृञ्जे पाङ्क्तेन छन्दसा रूपाणि वो वृञ्जे शाक्वरेण छन्दसा संवान्वो वृञ्जे ऽनाप्तेन छन्दसा तत्सप्त सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्द्धे गायत्री प्रथमा गायत्र्युत्तमा तेजो वै गायत्री ब्रह्मवर्चसं तेजसा च वावास्मा एतद्ब्रह्मवर्चसेन चोभयतः पशून्परिगृह्णाति ॥ ११ ॥

प्रजापतिर्वै त्रीन्महिम्नो ऽसृजताग्निं वायुं[1] सूर्यं ते चत्वारः पितापुत्राः सत्त्रमासत ते स्वेदं समवौक्षंस्तदभवत्तद्वा[3] अस्यैतन्नामाभूदिति सर्वमभूदिति तद्वा अस्यैते नामनी क्रूरे अशान्ते तस्मादेते न ग्रहीतव्ये क्रूरे ह्येते अशान्ते प्रजापतिर्वै स्वां दुहितरमभ्यकामयतोषसं सा रोहिदभवत्तामृश्यो भूत्वाध्यैत्तस्मा अपव्रतमच्छदयत्तमायतयाभिपर्यावर्तत तस्माद्वा अबिभेत्सो ऽब्रवीत्पशूनां त्वा पतिं करोम्यथ मे मा स्था इति तद्वा अस्यैतन्नाम पशुपतिरिति तमभ्यायत्याविध्यत्सो ऽरोदीत्तद्वा अस्यैतन्नाम रुद्र इति ते वा अस्यैते नामनी शिवे शान्ते तस्मादेते कामं ग्रहीतव्ये शिवे ह्येते शान्ते तस्य यत्प्रथमं रेतः परापतत्तदग्निना पर्यैन्द्ध तदासामघ्न्यात्वं ततो यदत्यस्रवत्तद्बृहस्पतिरुपागृह्णात्तदासामुस्रियात्वमशकामेति तदासां शक्वरीत्वं गातुमविदामेति तदासां गोत्वमेतानि वा आसां नामानि सर्वैरेवासां नामभिः सर्वैः कामैर्भुङ्क्ते य एवं वेद पशवो वै सृष्टा एतानि नक्षत्राण्यन्वपाक्रामन्पौर्णमासीमष्टकाममावास्यां चित्राम-

1) So M; die andern Mss bloss वायु 2) H u Bb वृञे माङ्क्तेन 3) So Bcp u M, in H u Bb तदभवत्तद्वा; desgl B, ohne Accent.

ष्वत्यं तस्मादेषु गौर्नोपाकृत्या यामपाकुर्यात्तामस्य पशवो ऽन्वप-क्रामेयुः ॥ १२ ॥

देवा वै सर्वे सहान्तवन्तो ऽभवंस्ते सर्वे सह व्यजायन्त तदेकवृ-दयायत्सं वृत्तं तद्देवा इयं चेयं च व्यत्यचरंस्तन्मिथा वरुणा अचा-यतां स्याद्धि य एनत्रिकुर्यादिति तत्रां त्रिपदीमकुरुतां सा न प्र-त्यतिष्ठत्तस्या अन्यत आहंत्येर्मी[1] प्रत्यधत्तां तस्मादेता अंबद्धा अस्य-न्तां[2] चतुष्पदी भूत्वा प्रत्यतिष्ठत्सेति प्रजया च पशुभिश्च तिष्ठति य एवं वेद तस्या वै पयः पर्यपश्यंस्तां देवा अदुह्र हरितेन पात्रेण यज्ञं चामृतं च दुह्रे यज्ञं चामृतं च य एवं वेदाथ पितरो ऽदुह्र रज-तेन पात्रेणोर्जं च स्वधां च दुह्रं ऊर्जं च स्वधां च य एवं वेदाथ म-नुष्या अदुह्र दारुपात्रेणान्नं च प्रजां च दुह्रे ऽन्नं च प्रजां च य एवं वेदाथा[3] ऋषयो ऽदुह्र चमसेन छन्दांसि च पशूंश्च दुह्रे छन्दांसि च पशूंश्च य एवं वेदाथ गन्धर्वाप्सरसो ऽदुह्र पुष्करपर्णेन पुण्यं गन्धं दुह्रे पुण्यं गन्धं य एवं वेदाथ सर्पा अदुह्रालापुना[4] विषं दुह्रे भ्रातृव्याय विषं य एवं वेदाथासुरा अदुह्रायस्पात्रेण संवता भूतिं च पराभूतिं च दुह्रे भ्रातृव्याय भूतिं च पराभूतिं च य एवं वेद तां वा इन्द्रो ऽनुपैवोपासीदत्तेदं[5] सर्वमदुहद्यदिदं किंच तां दुग्ध्वा प्रत्य-नुदत सा प्रतिनुत्ता कुमना अतिष्ठद् ध्यायन्ती तां प्रजापतिरचायद्[6] ध्यायति वा इति सो ऽब्रवीत्किं ध्यायसीति साब्रवीद्धे माधुक्षत ते

1) So M, m Ben आहंत्योर्मी, H u Bb आहत्योर्मी, desgl B ohne Accent 2) H u Bb घ्नसंत्, B घ्नस्यत्, M घ्नस्यंत् 3) Bb वेदाथ 4) So Ben u M, H u Bb अदुह्र लापुना, desgl B, ohne Accent, cf अलाबु 5) So Ben, m M °सीदतेदं°, H u Bb °सीदस्तेदं°, B सीदत्सेद° 6) So corrigirt, Ben °रचायतं, die andern Mss °रचाय

मा प्रत्यनुदन्तीति[1] सो ऽब्रवीन्मां सूर्क्ष्वैस्तथा[2] वै त्वा कृणोमि यथोभयेषां देवमनुष्याणां प्रिया भविष्यसीति[3] तस्या घृतं पद्गो ऽक्षरत्तस्य घृतस्यादाय मुख॰ न्यमार्ट् ॥ उभयेषां त्वा देवमनुष्याणां प्रियां करोमि ॥ इति तस्मादेषोभयेषां देवमनुष्याणां प्रियै तेनैव श्रोत्रियस्य मुख॰ विमृज्यादुभये ऽह्येतं देवमनुष्या विदुरे तेन कुमार्या[4] एतेन पतिकामाया एतद्वै गोवर्चसं न सर्वस्मा इव कुर्याद्यस्मै तु कुर्यात्तेजस्वी स्यात् ॥ १३ ॥

यो ललामः शितिपाञ् शितिककुञ्[5] शितिभसञ् शितिवालः[6] साशारिः[7] सामक्काष्टयूथा प्राष्टौ यूथान्याप्नोति यस्य तादृक्पभो भवति यस्य वालतुषः प्रतिष्ठितः सा प्रतिष्ठिता प्रति प्रजया च पशुभिश्च तिष्ठति[8] यस्य तादृक्पभो भवति यः समन्तः शितिबाहुः सा समन्ता समन्तः प्रजया च पशुभिश्च भवति यस्य तादृक्पभो भवति यः शितिपृष्ठः सा तन्तिः[9] पशुमान्भवति यस्य तादृक्पभो भवत्यथ यस्यैकरूपस्य सतो लक्ष्म भवति सादारसृत्नास्यामिषो[10] गा विधावति[11] यस्य तादृक्पभो भवति याञ्जलोम्नी सा पोपयिष्णुरंजा इव प्रजायन्ते यस्य तादृक्पभो भवति या श्यामा सा पोपयिष्णुः क्षिप्रं बह्वीर्भवन्त्यपनिपादुकास्तु यारुणा सा पोपयिष्णुः क्षिप्रं बह्वीर्भवन्ति हिमेरवस्तु[12] या श्वेता सा पोपयिष्णुः क्षिप्रं बह्वीर्भवन्ति दुश्चर्मोणस्तु[13] नोक्षिः

1) So corrigirt, die Mss प्रत्यनुच्यतीति 2) So M, die andern Mss सूर्क्ष्वैस् 3) Die Mss भविष्यसीति 4) So Ben, in M, Bb, H न्यमाट्, desgl B, ohne Accent 5) Ben °ककुञ् 6) M, H u Bb शितिवाल 7) So Ben, M, desgl B, ohne Accent, in H u Bb साशारि 8) Ben तिष्ठति 9) Bb तन्ति 10) So M, Ben °दारसृत्नास्यामिषो; H u Bb °दारसिन्नास्यामिषो, desgl B, ohne Accent 11) So Ben, M वी°, die andern Mss धा 12) cf हिमेलु frostig keine Kalte vertragend, Pâ 5 2,122, Vârtt 8 13) So folgen die Satze in Ben u M, anders in H Bb u B, nämlich श्यामा सा पोपयिष्णुः क्षिप्रं बह्वीर्भवन्ति हिमेरवस्तु या श्वेता सा पोपयिष्णुः क्षिप्रं बह्वीर्भवन्त्यपनिपादुकास्तु यारुणा सा पोपयिष्णुः क्षिप्रं बह्वीर्भवन्ति दुश्चर्माणस्तु u s w.

काउर्यो न पृश्निरमिथुनं तदेषो व्याघ्ररूपं वै पृश्निर्विभ्यत्यस्यापशवः कनीयांसो ऽस्य पशवो भवन्ति यस्य तादृक्षभो भवति तदाहुर्वीजमेवोत्सृज्यमित्येतद्धा आसां बीजं यद्रोहितं रूपं पशुमान्भवति यस्य तादृक्षभो भवति यो धूम्रस्तामधूम्रः स प्रजापतिः प्र प्रजया च पशुभिश्च जायते यस्य तादृक्षभो भवति यस्य लोमशं ककुत्स्तम्बी स्तम्बीव प्रजया च पशुभिश्च भवति यस्य तादृक्षभो भवति यस्योर्ध्वी ककुत्सा ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्य तादृक्षभो भवति यस्य दक्षिणतः पक्ष सा पापी सा स्रवन्त्येष यस्य सव्यत उन्नतं सा पुण्या सोपाहरन्ती या उत्पृष्टिस्ता ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्य तादृक्षभो भवति यस्य सव्यतः पक्ष सा पापी सा स्रवन्त्येथ यस्य दक्षिणत उन्नतं सा पुण्या सोपाहरन्ती या सव्यसाचिनी सा पुण्या सोपाहरन्ती या सम्पृक्ती सा गोघ्नी न प्रेछिन्द्यादनुसृष्टस्य गोपु स्यातामेतौ वै पशूनामस्कन्नं हविरस्कन्नमस्य हविर्भवति यस्यानुसृष्टिर्गोषु भवत्युक्षा चास्य वेहच्च गोषु स्यातामेतौ वै पशूनामूर्जे विभृतौ ऽक्षोधुका अस्य पशवो भवन्ति यस्योक्षा च वेहच्च गोषु भवतः ॥ १४ ॥

॥ खिलकाण्डे गोनामिको द्वितीयः प्रपाठकः ॥

---

1) So M u Bb in H तद्दाहु°, desgl B ohne Accent, Ben यदाहु° 2) Das ॰ fehlt in den Mss 3) So meine Correctur, M Ben स्तम्बीव, desgl B, ohne Accent, in H u Bb स्तम्बीव 4) Ben तादृक्षृत्पृष्टिर्गोषु ऋषभो, in M sind die beiden hier eingeschalteten Worte auch am Rande von einer späteren Hand hinzugefügt 5) So M die andern Mss °दसृष्टस्य 6) So M, die andern Mss यस्यानुसृष्टिं गोषु, vielleicht übrigens auch in M das r nachträglich als delirt bezeichnet? 7) So corrigirt, die Mss °त्तौ

अरातीयन्ति वा अन्ये पुरुषाय नान्ये ये ऽरातीयन्ति सा निर्ऋतिर्ये नारातीयन्ति सानुमतिस्तेभ्य उभयेभ्यः सह निर्वपन्त्युभौ सह शृतौ कुर्वन्ति नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य स्वकृत इरिण एतद्वै निर्ऋतिगृहीतं पृथिव्यै निर्ऋतिगृहीत एव निर्ऋतिं निरवदयत एकोल्मुकं निधाय विस्रंसिकायाः काण्डाभ्यां जुहोति जुषाणा निर्ऋतिर्वेतु स्वाहा वासः कृष्णं भिन्नान्तं दक्षिणैतद्धि निर्ऋत्यै रूपमर्धं वै पुरुषस्य निर्ऋतिगृहीतमर्धमनिर्ऋतिगृहीतं यन्निर्ऋतिगृहीतं तदेवास्मादेतेन निरवदयते पुनरेत्यानुमत्या अष्टाकपालेन प्रचरन्ति निर्ऋतिमेव निरवदायेयं वा अनुमतिर्यो वानुमतमेवैनं सर्वमाक्रमयत्यष्टाकपालो भवति गायत्री ह्यीयं गायत्री वा धेनुर्दक्षिणैतद्ध्यनुमत्या रूपमथ ये उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्धृत्य जुहुयादिदममुष्यामुष्यायणस्य क्षोपियमवयजामीति तामपुनरपिदधातीदमहममुष्यामुष्यायणस्य क्षोपियमपिदधामीति क्षोपियं वा एतं गृह्णाति य एनमन्विच्छति क्षोपस्य पत्न्यस्यामेव क्षोपियमवयज्यायैनं सर्वमाक्रमयति स्वो भूत आदित्येभ्यो भुवद्वद्भ्यो घृते चरुरित्यादित्या वा इत उत्तमाः स्वर्गं लोकमायंस्तेभ्य एव प्रोच्य स्वर्गं लोकमेत्यादित्या वा अस्मिँल्लोक ऋद्धा आदित्या अमुष्मिन्नुभयोरेव लोकयोर्ऋध्नोति वरो दक्षिणा वरेणैव स्वर्गं लोकमभ्यारोहति स्वो भूत आमावैष्णव एकादशकपाला इत्यमिर्वै सर्वा

---

1) So corrigirt, in den Mss ohne Accent, Bb ये 2) So M, H, Bb, in Ben सहःशृतौ, H सह भृतौ 3) So die Stelle in Ben u M in H u Bb प्रचरति निर्ऋतिमेतिर्वेऽस्तं अनुमतिरवदायिय॰ यो अनुमतमेवैनं॰, desgl H, ohne Accent 4) Ben चेत्रीयं॰ 5) Ben चेत्रीयं॰ 6) Bb प्रतिगृह्णाति 7) Ben चेचियम॰ 8) Mit मु bricht Ben am Schluss von p 37 plotzlich ab und geht am Anfang von p 38 auf IV, 13, 1 a E uber Die nachstfolgenden Partieen fehlen in Ben vollig

देवता विष्णुर्यज्ञो देवताश्चैवं यज्ञे चालब्धायिवै यज्ञस्यान्तो ऽवस्ताद्विष्णुः परस्तादुभयत एवं यज्ञस्यान्ता उदयहीदुभयत एवं यज्ञस्यान्ता उद्गृह्य यथोत्सङ्गं आवपेतैवं वा एतद्यज्ञमावपते तस्य यथाकामं निर्वपमाण एत्यनड्वान्वामनो[1] दक्षिणा यद्वही तेनाग्नेयो यद्वामनस्तेन वैष्णवो रूपेणैवैनं समर्धयति श्वो भूते ऽग्नीषोमीया एकादशकपाला इत्यग्नीषोमाभ्यां वै वीऽर्येणेन्द्रो वृत्रमहन्वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिञ्चते तद्धाचेग्रमेवैतद्धिरण्यं दक्षिणा सत्यं वै हिरण्यं सत्येनैव हन्ति श्वो भूत ऐन्द्राग्न एकादशकपाला इत्यग्नीषोमाभ्यां वै वीऽर्येणेन्द्रो वृत्रमहंस्त ओजसा वीर्येण व्यार्ध्यत स एतमैन्द्राग्नमपश्यत्तेनौजो वीर्यमात्मन्नधत्तौजसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चता ओजो वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येण समर्धयतो ऽनड्वानृषभो दक्षिणा यद्वही तेनाग्नेयो यन्मुष्करस्तेनैन्द्रो रूपेणैवैनं समर्धयति श्वो भूत आग्नेऽयो ऽष्टाकपालो माहेन्द्रं दधीत्यृद्धा एवाग्नेय इन्द्रो वै वृत्रमहऽंस्तो ऽन्यान्देवानत्यमन्यत स महेन्द्रो ऽभवत्स एतमुद्धारमुदहरद्वृत्रं हत्वा तदुद्धार एवास्यैष भाग एवं तस्माद्राजा संग्रामं जित्वोदाजमुदजयत्पयसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यत्पयः पयसैवैनं समर्धयतीन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यदैन्द्रमिन्द्रियेणैवैनं[2] वीर्येण समर्धयति देवताभिर्वा एष व्यृध्यते यो राजसूयेनाभिषिञ्चते सर्वदेवऽत्यं वै वासो यद्वासः क्षौमं दक्षिणा देवताभिरेवैनं समर्धयति ॥ १ ॥

Vgl. oben 2, 6, 1 — TBr 1, 6, 1, 1—9

---

1) So meine Correctur; die Mss निर्वपमाणयेत्यनड्वा॰ 2) M यदैन्द्रं इन्द्रि॰

देवा ओषधीषु पक्वास्वाजिमयुः[1] स इन्द्रो ऽवेदिमे वाव नः प्रथमं उज्जेष्यन्तीति सो ऽब्रवीद्यतरो नौ पूर्व उज्जयेत्तन्नौ सहेति ता अग्निरुदजयत्तदिन्द्रो ऽनूदजयत्तस्मादैन्द्राग्न आग्रयणो ऽथो आहुरैन्द्रं काऽर्यमित्यग्निर्हि ता अग्र उदजयत्तदुज्जित्या एवाग्रायणो द्वादशकपालो भवति द्वादश मासाः संवत्सरः संवत्सरादिह तदध्यभवत्सप्तदश सामिधेनीः कार्याः[2] पञ्च ऋतवो द्वादश मासा एष संवत्सरः संवत्सरादिह तदधि भवत्येका वै तर्हि यवस्य सुष्टिरासीदेका व्रीहेरेका माषस्यैका तिलस्य तद्विश्वे देवा अनुवन्त्यय ए एतत्प्रथयिष्यामो भागो नो ऽस्त्विति तद्विश्वे देवा अप्रथयंस्तस्मात्स एव वैश्वदेवो ऽथो प्रथयन्त्येवैतेन पयसि स्याद्वैश्वदेवो वैश्वदेवं हि पयो ऽथ वा इयमब्रवीन्मयि वा एतदध्यासीं वृस्या पचतेति नैतदितो ऽभ्युज्जेष्यथ भागो ना अस्त्विति तदाभ्यां वावैष भागः क्रियत उज्जित्या अथो प्रतिष्ठित्या एव यद्द्यावापृथिवीयः सौमीर्वा ओषधयः सोमो ओषधीनामधिराजस्तस्य वा एष भागो यदकृष्टपच्यं तदुद्वार एवास्यैष भाग एव तस्माद्राजा संग्रामं जित्वोदाजमुदजते ग्राम्या वा अन्या ओषधय आरण्या अन्यास्ता एवास्मैतेनोभयीरवेष्टा भवन्ति याः फालकृष्टास्तासामेतेनाग्रायणं[3] करोति या आरण्यास्तासामुत्तरेणानीतो वा एष देवानां य आहिताग्निर्यदकृत्वाग्रायणं नवस्याश्नीयाद्देवानां भागं प्रतिकृष्टमश्नीयादोतिमार्छेत्सर्वेभ्यो वा एषो ऽन्येभ्यो ऽभिषिच्यते यो राजसूय आग्रायणो ऽन्नाद्यस्यावरुद्ध्यै वत्सः प्रथमजो दक्षिणा रेत इव ह्येषो ऽग्रजातः प्रजात्यै[4] ॥ २ ॥ Vgl 2, 6, 2 — TBr 1, 6, 1, 10 flg

1) M °स्वाजीम°, Taitt Br 1, 6 10 ओषधीष्वाजिमयुः 2) So M, m H u Bb सुष्टयः; B वृष्टा 3) Hierüber vgl Einl zum 1 Kanda p XV, Maitr S 1, 10, 16 4) Bb प्रजात'

अथैतानि चातुर्मास्यानि संवत्सरं वै चातुर्मास्यानि परीज्यन्ते संवत्सरादेवैनान्यध्याप्नावरुन्द्ध उत्सन्नयज्ञो वा एष संवत्सराद्वा अध्युत्सन्नयज्ञो ऽवरुध्यते संवत्सरादेवैनमध्याप्नावरुन्द्धे पशवो वा एते चातुर्मास्येभ्यो ऽध्यतिरिच्यन्ते यच्छुनासीरीयं तानेवाप्नोति वर्षे उदके यजेतैतद्धि पशूनां नेदिष्ठमथैतानि पञ्च हवींषि संतत्यै ग्रामकामो यजेत वायुर्वा इमाः प्रजा नस्योता इत्थं चेत्थं च नेनीयते यद्वायवे वायुरेवास्मै नस्योतां विशं निनयत्यन्नकामो यजेत संवत्सरो वा इन्द्रः शुनासीरः संवत्सरो ऽन्नाद्यस्य प्रदाता तमेव भागधेयेनोपासरत्सो ऽस्मा अन्नाद्यं प्रयच्छति वर्षे उदके यजेतैतद्ध्यन्नाद्यस्य नेदिष्ठं वृष्टिकामो यजेत वायुर्वा इमं समीरयति स आप्याययति ततो वर्षति संवत्सरो वा इन्द्रः शुनासीरः संवत्सरमनुयपैति ॥ ३ ॥

Vgl. TBr. 1, 7, 1, 1.

देवाश्च वा असुराश्चास्पर्धन्त स वृत्र इन्द्रमब्रवीत् देवानां श्रेष्ठो ऽस्यहमसुराणां सं शक्नवाव मा त्वा अऽन्यो ऽन्यं ऽवधीदिति तौ वै समामेतामनभिद्रोहाय ते देवा वृत्रममन्यन्तायं वावेदं भविष्यतीति त इन्द्र ऐच्छन्हनामेममिति सो ऽब्रवीत्संधा वै मे संहितानभिद्रोहायेति तमभिरब्रवीदहमेव त्वतः पास्यामीति पृथिव्या अहमन्तरिक्षादिति वरुणो ऽहं दिव इति रुद्रस्ततो वै देवा वृत्रमघ्नन्वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिच्यते तद्वा अर्धमेवैतद्देवाश्च वा असुराश्च समयतन्त तानग्निस्त्रेधात्मानं कृत्वा प्रत्ययतत्ताग्निरेवास्मिँल्लोके

1) So M; in H u. Bb तान्येवा॰; desgl B. ohne Accent. 2) So M; in H u Bb इंद्रा मब्रवी॰; B इन्द्रः मब्रवी॰ 3) So M; H u Bb betonen समामेतामं॰ 4) Von hier bis पृथिव्या (excl.) in B eine Lücke 5) H u Bb ॰यजता॰

भूत्वा वरुणो ऽन्तरिक्षे रुद्रो दिवि स इन्द्रो ऽमन्यतायं वावेदं भविष्यतीति सो ऽब्रवीदहं विश्वाभ्य आशाभ्य इति ततो वा अजयंस्तांज्जित्या एवैतदे तेनैव याजयेत्संग्रामे जयति संग्राममेतेनैव याजयेद्भ्रातृव्यवन्तं यो वास्य प्रियः स्यात्स भवत्यात्मना परास्य भ्रातृव्यो भवति यद्वै तदिन्द्रस्तुरीय उपसमपद्यत तस्मादिन्द्रतुरीयं धेनुरनड्वाही दक्षिणा यद्वहिनी तेनाग्नेयी यद्धेनुः सती दान्ता तेन वारुणी यद्गौस्तेन रौद्री यत्पयस्तेनैन्द्री रूपैरेवैनां समर्धयतीन्द्रो वै नमुचिं नालभत स रश्मीन्कुलायं कृत्वान्वारोहदमुमादित्यं तं वा अन्वमन्त्रयत सखाया असावेति सो ऽब्रवीन्नाहं हनिष्यामीति सो ऽब्रवीत्संधां ते संदधे यथा त्वा न दिवा हनानि न नक्तं न शुष्केण नार्द्रेणेति तस्य वा उपोदये सूर्यस्य नीहारे संतत्यापां फेनेन शिरो ऽछिनत्तद्वा एनमन्ववर्तत मित्रद्रुगसीति पाप्मा वै नमुचेः शिरः पाप्मा वा एनं तदन्ववर्तत पाप्मानं वै स तेनापाहत पाप्मानमेवैतेनापहते ऽपां न्ययनादपामार्गैनाहरन्त्यापो वै रक्षोघ्नीरापो रक्षांसि न तरन्ति रक्षसामपहत्यै वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वर आत्मानं हि तस्य तदन्ववर्तत ये देवाः पुरःसदो ऽग्निनेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहेत्येतद्देवत्या वा इमा दिशो यथादेवतं वा एताभ्यो दिग्भ्यो ऽधि रक्षांस्यपहन्त्यनुपरिक्रामं जुहोति सर्वाभ्य एव दिग्भ्यो ऽधि रक्षांस्यपहन्तीदमहं रक्षोभिः संमूहाम्यग्ने संदह रक्षः संदग्धं रक्षा इत्याह रक्षसां घात्यै रक्षसामन्तरित्या अथ यत्पुनः स-

---

1) So M, ohne Accent (u. Bl), in H u. Bb रश्मिन्; desgl. B, ohne Accent 2) So M, nur ohne Accent, in H u. Bb सखावेति; desgl. B, ohne Accent 3) So B, ohne Accent, in H u. Bb हनिष्यामीति; M हनिष्यसि नेति 4) Die Mss. schwanken; M u. B निहारे; H u. Bb नीहारे

मूह्य जुहोति याम्य एवं दिग्भ्यो ऽधि रक्षांस्यपावधीत्तां भागिनीः करोत्यहिंसायै रथः पञ्चवाही दक्षिणा पञ्च दिशः पञ्च देवताः संमृद्ध्यै ॥ ४ ॥

Vgl 2, 6, 3 — TBr 1, 7, 1, 2 flg

सौमेनेजानं याजयेत्संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यः सौमेन यजते छन्दांसि वै देविकाश्छन्दांसि वावास्यैतद्यातयामानि पुनर्यामाणि करोति राजसूयेनाभिषिषिचानं याजयेत्पष्ठौही दक्षिणाशा वा एष उपाभिषिञ्चत आशा पष्ठौह्याशामेवास्मा अवकः पशुकामं याजयेच्छन्दांसि वै देविकाः पशवश्छन्दांसि गायत्र्यनुमतिस्त्रिष्टुब्राका जगती सिनीवाल्यनुष्टुप्कुहूर्धाता वषट्कारो या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूश्चन्द्रमा एव धाता यद्वै श्वोवरे ह परे तन्मिथुनं यत्पूर्यते ऽन्यां नान्यां तन्मिथुनं यदपक्षयत्यन्यां नान्यां तन्मिथुनं यदमावास्याया अधि चन्द्रमाः प्रजायते तन्मिथुनं तस्मादेवास्मै मिथुनात्प्रजां प्रजनयति प्रजाकामं याजयेद्धातारमुत्तमं कुर्यात्स्त्रियो वै देविकाः पुमान्धाता पराचीर्वै प्रजा रेतो दधते पराचीष्वेवासु रेतो दधाति तदाहुर्न वै तेन पराधत्ते यदन्तरा प्रवीयता इति व्यवदध्याद्धातारं मध्यतः संवा एवैना वृषभोदिनीः करोति तदाहुर्जीयत एव पश्चाच्चर इव तु भवति स्त्रीभ्यो ह्येनं पश्चात्परिणयन्तीति स यदा जायेताथ धात्रे पुरस्तान्निर्वपेद्यं वै धातारमेवैनं परिणयति ॥ ५ ॥

Vgl 2, 6, 4 — TBr. 1, 7, 2

---

1) So corrigirt, die Mss सर्मुह्य 2) B यवेत 3) So corrigirt, die Mss ष्ठौयो
4) Bb तस्मादाहु॰ 5) H u Bb यदाहु॰

आमयाविनꣳ याजयेद्धातारं मध्यतः कुर्यात्संवत्सरो वै धाता संवत्सरो हि वा एतस्य मुग्धोऽथैतस्यामयति संवत्सरं वावास्मा एतन्मध्यतोऽधीकृष्पदथैनमेतस्मान्मिथुनात्प्रजनयतीश्वराणि वा एतमेतानि छन्दांस्यृते पशोरशान्तानि निर्मृजः[1] पशुरेवालभ्यः शान्त्या अनिर्मार्गाय ते वै पशवो यद्व्रीहयश्च यवाश्च यद्व्रीहिमयः पुरोडाशो भवति तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय वीरस्था वा अन्ये पशवोऽवीरस्था अन्ये ये पुरस्तात्पुरोडाशास्ते वीरस्था ये पश्चात्पुरोडाशास्तेऽवीरस्था ये पुरस्तात्पुरोडाशा भुञ्जतस्त उपतिष्ठन्ते प्रजापतिꣳ ह्येते प्रतिष्ठामभ्यसृज्यन्त ये पश्चात्पुरोडाशाः पय ते भवन्ति यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः सोमो वै रेतोधाः प्रजननाय सर्ववेदसेनेजानꣳ याजयेत्पशुभिर्वा एष व्यृध्यते यः सर्वं ददात्यन्न वा एष जघन्यं पशून्पश्यति येनान्विभजति यद्वैनान्विभजति तत एनान्पुनरवरुन्द्धे य एवं कश्च सोमेन यजेत तꣳ याजयेत्संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यः सोमेन यजते[2] छन्दांसि वै देविकाश्छन्दांसि वावास्मा एतदयातयामानि पुनर्यामाणि करोति ॥ ६ ॥

यथैतन्त्रिपꣳयुक्तं यत्पूर्वं त्रिपꣳयुक्तमित एवास्मै तेनोर्ध्वानिमाँल्लोकान्दाधार यदुत्तरं त्रिपꣳयुक्तममुत एवास्मै तेनार्वाच इमाँल्लोकान्दाधार तदेषाꣳ वावैतं लोकानाꣳ विधृत्यै यत्पूर्वं त्रिपꣳयुक्तं वीरजननं तद्यदुत्तरं पशुजननं तद्यत्पूर्वं त्रिपꣳयुक्तं वीरानेवास्मै तेन ज-

---

1) So in M durch Corrector am Rande, eigentlich °शान्ता निर्मृजः; so auch in den andern Mss  2) B schaltet hier die Worte ein: भवन्ति यः सोमेन यजते छन्दांसि

नयति' यदुत्तरं पशूंस्तेन' यत्पूर्वं त्रिपंयुक्तं रेत एवं तेन दधाति' यदुत्तरं प्र तेन जनयति' यत्पूर्वं त्रिपंयुक्तं तेन यज्ञकामो यजेताग्निर्वै सर्वा देवता' विष्णुर्यज्ञो' देवताश्चैव यज्ञं चालब्धेन्द्रो वै यज्ञो' विष्णुर्यज्ञस्तद्यज्ञस्यैवैष आरम्भो' ऽथ यद्वैष्णवो' विष्णुर्वै यज्ञो' यज्ञ एवं प्रतितिष्ठति' यदुत्तरं त्रिपंयुक्तं तेन पशुकामो यजेत' सौमो वै रेतोधाः' पूषा पशूनां प्रजनयिता' सौम एवास्मै रेतो दधाति' पूषा पशून्प्रजनयतीन्द्रियेण वै पशवः प्रजायन्ते' पूषा प्रजनयतीन्द्रियेणैवास्मै पूषा पशून्प्रजनयत्यथ यत्पौष्णः' पशवो वै पूषा' पशुष्वेव प्रतितिष्ठत्यथैतद्वैश्वानरवारुणं[1]' संवत्सरो वा अग्निर्वैश्वानरस्तस्य वा एते स्वा यदृतवस्तेषां वा एष्वो ऽभिषिक्तो राजाभिषिक्तो वै देवानां वरुण' एतौ वै देवानां सूतौ' एतौ सर्वपती[2]' एतौ सर्वस्येशाते तौ एनं सुवाते' यावन्तो वा एतस्य स्वा अनुका वै त एतमनुका देवा वरुणं' यावन्त एवास्य स्वास्तानस्मा अनुकानविवादिनः करोतीयाथ्वर्स्भवत्येतावान्वा आत्मा' यावानेवास्यात्मा तं वरुणान्मुञ्चा' संवत्सरो वा अग्निर्वैश्वानरः' संवत्सर एवैनं प्रतिष्ठापयति' संवत्सरायुषमेनं करोति' तस्माद्राजसूयाभिषिक्तस्य जरसा दन्ता अवशीयन्ते' संवत्सरे ह्येनं प्रतिष्ठापयति' संवत्सरायुषमेनं करोति' यो ज्योगामयावी स्यात्तमेतेन याजयेद्वरुणेन हि वा एष पाप्मना गृहीतो' ऽथैतस्य ज्योगामयति' यद्वारुणो' वरुणादेवैनं तेन मुञ्चतीयाथ्वर्स्भवत्येतावान्वा आत्मा' यावानेवास्यात्मा तं वरुणान्मुञ्चा'

1) H u. Bb ॰णं: 2) So M, desgl. B, ohne Accent; H सर्वपती; Bb सर्वसती
3) Dies Wort in den Mss. ohne Accent

संवत्सरो वा अग्निर्वैश्वानरः संवत्सर एवैनं प्रतिष्ठापयति संवत्सरायुषमेनं करोति ॥ ७ ॥

अथैते रत्निनः क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतान्योजस्वीनि भवन्ति तद्राष्ट्रमोजस्वी भवति तान्येवास्यौजस्वीनि करोति क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतानि तेजस्वीनि भवन्ति तद्राष्ट्रं तेजस्वी भवति तान्येवास्य ब्रह्मणा तेजस्वीनि करोति बार्हस्पत्यश्चरुर्ब्रह्मणो गृह इति ब्रह्म वै बृहस्पतिर्बृहस्पतिपुरोहितं खलु वै राष्ट्रमृध्नोति ब्रह्म वा एतत्पुरस्ताद्राष्ट्रस्यान्वीहीदयो ब्रह्मण एवं राष्ट्रमनुकं करोत्यैन्द्र एकादशकपालो राज्ञो गृह इतो ऽन्द्रियं वा इन्द्र इन्द्रिय एव प्रतितिष्ठत्यादित्यश्चरुर्महिष्या गृह इतीयं वा अदितिरस्या एवैनं मात्रां गमयतीमामेवैनं प्रजाभ्य उपजीवनीयं करोति धेनुर्दक्षिणैतद्धादित्या रूपं नैर्ऋतश्चरुर्नखावपूतानां परिवृक्त्या गृह इति निर्ऋतिगृहीता हि वा एषा यैतां परिवृञ्जन्ति निर्ऋतिमेव निरवदायेयं वा अनुमतिरस्या एवैनं मात्रां गमयतीमामेवैनं प्रजाभ्य उपजीवनीयं करोति श्येनी वडापस्फुरा दक्षिणैतद्धि निर्ऋत्या रूपमाग्नेयो ऽष्टाकपालः सेनान्यो गृह इत्यग्निर्वै सर्वा देवता देवताभिरेवास्य सेनामुखं जित्यै संश्यति हिरण्यं दक्षिणा सत्यं वै हिरण्यं सत्येनैवं जयत्याश्विनो द्विकपालः संग्रहीतुर्गृह इति रथरेषमेवास्मात्तेन निरवदयते सवत्यौ दक्षिणैति सवत्या इव हि सव्यस्थसारथी रथमभि

---

1) So die Mss , wohl °जस्वि zu schreiben  2) So die Mss ; cf oben °ओजस्वी 3) M u [illegible] °मामेवैन, cf unten  4) So M u B, in H °वृक्ति, Bb °वृक्ति  5) So corrigirt, die Mss °मेवैन  6) So corrigirt, M u B सव्यस्तसारथी, H सव्यस्तसारथी oder सप्यस्तसारथी, Bb सव्यस्तसारथी

सावित्रो ऽष्टाकपालः क्षत्तुर्गृहे प्रसूत्या अथो सवितैव ह्यस्मै प्रजाभ्यः प्रसुवति वारुणो यवमयो दशकपालः सूतस्य गृहे मारुतः सप्तकपालो वैश्यस्य ग्रामण्यो गृह इति सूतमुखा वै विट् क्षत्रमुपतिष्ठते सूतमुखां वावास्मा एतद्विशं मुखतो ऽन्वाद्यायोपदधाति पौष्णश्चरुर्भागदुघस्य गृह इति पुष्टिर्वै पूषा पुष्टिमेवास्य भागे दधाति वैष्णवस्त्रिकपालस्तक्षरथकारयोर्गृह इति विष्णुर्वै यज्ञो यज्ञ एव प्रतितिष्ठति रौद्रो गावीधुकश्चरुरक्षावापस्य गृहे गोविकर्तस्य चेत्यन्तत एवास्मात्तेन रुद्रं निरवदयते ऽथो रुद्र इव ह्येतौ पशून् अभिमन्येते एकादश वा एतानि हवींष्येकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्य एव प्रतितिष्ठति नाना वा एत एतेषामायिनो ऽवरुन्धते यत्सह निर्वपेयुरत्विनः स्युरैन्द्र एकादशकपालो राज्ञो गृह इतीन्द्रियं वा इन्द्र एकधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठत्यैन्द्रो हि यजमानः ॥८॥

Vgl. 2, 6, 5 — TBr 1, 7, 3, 1—7

इन्द्रायांहोमुच एकादशकपालं निर्वपेद्यदेव किंचार्वाचीनं जनितोरेनः करोति तत एनमंहोमुङ् मुञ्चतीन्द्राय सुत्राम्ण एकादशकपालं य एवोपवादी यो ऽभिदासति तत एनं सुत्रामा त्रायते ऽथैतन्मैत्राबार्हस्पत्यं सत्यं वै मित्रो ब्रह्म बृहस्पतिः सत्यं चैव ब्रह्म चालभ्य दीक्षते क्षत्रं वै मित्रो ब्रह्म बृहस्पतिः क्षत्रं चैव ब्रह्म चालभ्य दीक्षते यस्य राष्ट्रं शिथिरमिव स्यात्तमेतेन याजयेन्मैत्राबार्हस्पत्येन क्षत्रं वै मित्रो ब्रह्म बृहस्पतिर्ब्रह्मणि वा एतत्क्षत्रं प्रतिष्ठापयति दृढिम्ने ऽशिथिरत्वायाथैतं देवसुव एते वै देवानां सूता एते

1) So corrigirt, die Mss (d. [illegible] H u Bb) तक्षरथकारयो॰, M u [illegible] ohne Accent, cf aber auch oben 2, 6, 5 2) M यमूनमि॰ (u Bl)

सर्वपतय एते सर्वस्येशते त एनꣳ सुवते तस्माद्वा एतमाहुः पूर्वेद्युर्वा एष सूयते ऽभितश्च सिच्यता इत्यथैष मारुत एकविꣳशतिकपालस्त्रिर्वै सप्त सप्त मरुतो विशो मरुतो विशो वा एतन्मध्यतः सूयते तस्माद्वा एष विशः प्रियो विशो हि मध्यतः सूयते वरुणस्य वा अभिषिच्यमानस्येन्द्रियꣳ वी३र्यमपाक्रामत्तत्त्रेधाभवद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयꣳ सरस्वतीं तृतीयं प्राविशत्तद्भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामꣳ सारस्वतीरापस्तदेवैन्द्रियꣳ वी३र्यं तेज आप्नोति वाचा वा एतमभिषिञ्चन्ति यमभिषिञ्चन्ति वाक्सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते यावत्येवं वाक्तया सूयते ॥ ९ ॥

Vgl 2 6 6 — TBr 1 7, 3, 7 flg

अपाꣳ वा एतानि चित्राण्यपाꣳ वा एतच्चित्राणि संभरन्त्यथापामेनं चित्रैरभिषिञ्चन्ति[3] चित्रमस्मिन्दधाति[4] तस्माद्वा ए३षो ऽभिषिक्तश्चित्रꣳ राजेति सूयते ऽपाꣳ ह्येनं चित्रैरभिषिञ्चन्ति चित्रमस्मिन्दधाति[5] यथा वा इदं मधुकृतो[6] मधु संभरन्त्येवꣳ वा एतदपामोषधीनाꣳ रसꣳ संभरन्त्यथापामेनमोषधीनाꣳ रसेनाभिषिञ्चन्ति रसमस्मिन्दधाति[7] तस्माद्वा एतमाहुरसौ[8] राजा पुण्या इत्यपाꣳ ह्येनमोषधीनाꣳ रसेनाभिषिञ्चन्ति रसमस्मिन्दधाति[9] वरुणसवो वा एष वारुणीरापो यदद्भिरभिषिञ्चति वरुणमेवैनमकर्विपुवान्वै सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते

---

1) So corrigirt, M भितुश्च H u Bb भितुश्च, desgl B ohne Accent 2) So die Mss 3) H u Bb °चन्ति 4) In M das दधाति wie es scheint nachträglich zu दधाति corrigirt, Bb दधाति 5) Bb दधाति 6) Bb मधुकृतो 7) So M, die andern Mss दधाति 8) So M, in H u Bb °रासीद्, desgl B, ohne Accent 9) So M, die andern Mss दधाति

विषुवान्भवति षोडश ग्रहा गृह्यन्ते षोडश होमा हूयन्ते तद्द्वात्रिंशद्द्वात्रिंशदक्षरानुष्टुब्वागनुष्टुब्वाच्यत्येवं वाक्कया सूयते ॥ १० ॥

Vgl TBr 1, 8, 5, 5

॥ इति[1] खिलकाण्डे तृतीयः प्रपाठकः ॥[2][3]

---

प्रतीपमन्यं ऊर्मिर्युध्यत्यन्वीपमन्यो मिथुनत्वाय यत्संस्य गृह्णाति यः प्रतीपं युध्यत्योजसा वा एष वीर्येण प्रतीपं युध्यत्योजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्यथ यत्संस्य गृह्णाति स्त्री ह्यन्वीपमीरयति माहिर्ये तेन तोकं प्रजनयत्यथ यन्नदीपतेरपां वा एतन्मिथुनमपां वा एतन्मिथुनेन राष्ट्रे मिथुनं दधात्यथ यदप्महावरीणां मध्यमेष्ठेयं तेनावरुन्धेऽथ यत्परिवाहिणीनां परिवस्यन्त्यास्[4]तेन तोकं प्रजनयत्यथ या आपो ऽम्भोरा ओजसा वा एता वीर्येणापो ऽम्भोरा ओजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्यथ यत्कूप्यानामुभयीस्तेनापो ऽवरुन्धे याश्च समुद्रिया याश्चासमुद्रिया ईश्वरा वा एतमेता स्रोतस्या आपो ऽशान्ता निर्मृज्जो[5] यत्स्थावराणां गृह्णाति शान्त्या अनिर्मार्गाय या आतपति वर्षति याश्च परिदहन्त्ये ता आपो ब्रह्मवर्चस्यास्ताभी[6] राष्ट्रे ब्रह्मवर्चसं दधात्यथ यद्ध्रादुनीनाम्[7]

---

1) Das इति fehlt in den Mss 2) B fügt hier ein खराततीयक, H u Bb खरातीय 3) In M lautet die Unterschrift irrig द्वितीय प्रपाठक समाप्त 4) So M, in B परिवस्यत्यास्, H u Bb परवस्यत्यास् 5) So M, die andern Mss. °र्दृक्षो 6) So corrigirt, die Mss ताभि 7) M यद्धादुनीना°, H u Bb यत् ह्रादुनीना°, desgl B, ohne Accent

विशस्तेन वीर्यमवरुन्द्धे ऽथ यत्पुष्पाणामारण्यं तेनाथ यत्तुल्यानां वज्रो वै पशवो वज्रा उल्या वज्रेण वा एतद्राष्ट्रे वज्रं दधात्यथ यत्पयसः पयसा वा एतद्राष्ट्रे पयो दधात्यथ यद्घृतस्यैता वा आपो ऽनाधृष्यास्ताभी[1] राष्ट्रमनाधृष्यं करोत्यथ यन्मधोरपां वा एषं ओषधीनां रसो ऽपां वा एतदोषधीनां रसेन राष्ट्रे रसं दधाति षोडश वा एते ग्रहाः प्राजापत्याः समानीतः सप्तदशः प्रजापतिः सप्तदशः प्रजापतिमेवाप्नोति ॥ १ ॥

Vgl 2, 6, 7 — TBr 1, 7, 5

देवीरापो मधुमतीः संसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वाना इत्येता हि क्षत्रस्य वन्त्रीरनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्येता हि क्षत्रस्य धात्रीरनिभृष्टमसीत्यनिभृष्टं[2] ह्येव राष्ट्रमकस्तपोजा इति तपोजा हि राष्ट्रं सोमस्य दात्रमिति सोमस्य ह्येतद्दात्रं शुक्रा वः शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामीत्यायुर्वै हिरण्यमायुष्या एवैना अकर्वर्चो वै हिरण्यं वर्चस्या एवैना अकर्देवो वः सविता पुनात्वच्छिद्रेण पवित्रेणेत्येतद्वा अच्छिद्रं पवित्रं यत्सूर्यस्य रश्मयो ऽच्छिद्रेणैवैनाः[3] पवित्रेण पुनाति स्वाहा राजसूया इति राजसूया ह्येताः सधमादो द्युम्न्या[4] ऊर्ज एता इति व्यानयति वारुण्या वारुणीर्ह्योषः स्वयैव देवतया रुद्र यत्ते गिरिपरं नामेति रुद्रमेवास्मात्तेन निरवदयते तस्मिन्हुतमसि यमेष्टमसि स्वाहेसि मृत्युर्वै यमो मृत्युमेवास्मात्तेन निरवदयते सोमा इन्द्रो वरुणो मित्रो अ-

1) So corrigirt, die Mss ताभि 2) So meine Correctur, die Mss °सीत्यनि 3) H u Bb °वैना° 4) In M entweder so oder द्युम्न्या, Bb युषा, H युषा, B द्युम्न्या, cf 2, 6, 8 In TBr 1, 7, 6 4 सधमादो द्युम्निनीर्ऊर्ज एता इति

मिंस्ते देवा धर्मधृतो धर्म धारयन्त्वित्येते वै देवा धर्मधृतो यदिमे प्राणा यदेनमेतेभ्यो ऽप्रोच्याभिषिञ्चेयुरपरोधुका एनꣳ स्युरथ यदेनमेतेभ्यः प्रोच्याभिषिञ्चन्ति तथा हैनमनपरोधुका भवन्ति पर्णस्य वा क्षये ऽन्ते ब्रह्म समवदन्त तद्वाव सुश्रवा यत्तदशृणोत्पर्णमयेनाभिषिञ्चति ब्रह्मणाभिषिञ्चति ब्रह्मवर्चसेनैवैनमभिषिञ्चत्यथो ब्रह्म वै ब्रह्मा ब्रह्मणैवैनं ब्रह्माभिषिञ्चत्याश्वत्थेन वैश्यो विशो वीऽ३र्यमपाक्रामत्तदश्वत्थं प्राविशत्सं तेन वीर्येण भर्भराभवत्तद्विशं एवैतेन वीऽ३र्यमवरुन्द्ध औदुम्बरेण भ्रातृव्या ऊर्ग्वा उदुम्बर ऊर्जꣳ वा एतदन्नाद्यꣳ यजमानो भ्रातृव्यस्य वृङ्क्ते यो जन्यो मित्रꣳ स नैयग्रोधेन मित्रेण वै क्षत्रꣳ व्यवतनमवरोधैर्न्यग्रोधो मित्रेण वा एतत्क्षत्रꣳ व्यवतनोति दृढिन्नै ऽणिपिरत्वाय ॥ २ ॥

Vgl 2, 6, 3 — TBr 1, 7, 6, 1—4

क्षत्रस्य योनिरसि क्षत्रस्योल्बमसि क्षत्रस्य नाभिरसीतीन्द्रो वै यदजायत तस्य वा एष योनिरासीद्यत्तार्प्यमुल्बं पाण्डरं नाभिरुष्णीषः सूतवशाया अध्यजायत मूना चतुःपद्यूधरासीन्नीवाराः पीयूषस्तस्मान्नैवारः पुरोडाशः पञ्चाशतमन्यासिन्वक्षाण्यानक्त्येकपञ्चाशतमन्यास्मिन्शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोत्यप उपस्पृशत्यमृतꣳ वा आपो ऽमृतेनैवैनꣳ सꣳरम्भयत्याविन्नो अग्निर्गृहपतिरिति गार्हपत्यायैवैनमावेदयत्याविन्न इन्द्रो वृद्धश्रवा इती न्द्रियꣳ वा इन्द्र इन्द्रियायैवैनमावेदयत्याविन्नौ मित्रावरुणौ धृतव्रता इत्यहोरात्रे वै मित्रावरुणा

1) H u Bb मैत्र° 2) M °मुस्त्व 3) So M, desgl. B, ohne Accent, in H u Bb पाण्डर 4) So M, in H °न्नर्चिक्षा°, desgl. Bb u B, ohne Accent 5) So M, die andern Mss (H, Bb, B) उपस्पर्शयत्य°

अहोरात्राभ्यामेवैनमावेदयत्यविन्ने द्यावापृथिवी ऋतावृधा इति द्यावापृथिवीभ्यामेवैनमावेदयत्यविन्नः पूषा विश्ववेदा इति पशवो वै पूषा पशुभ्य एवैनमावेदयत्यविन्ना देव्यदितिरित्यादित्या वा इमाः प्रजास्ताभ्य एवैनमावेदयत्यविन्नो ऽयमसा आमुष्यायणो ऽमुष्याः पुत्रो ऽमुष्या विशीति विश एवैनमावेदयति तस्माद्वा एष विशः प्रियो विशो ह्येनमावेदयत्येष ते जनते राजेति जनताया एवैनमावेदयति सोमो ऽस्माकं ब्राह्मणाना राजेति ब्रह्मोद्धरति सर्वेभ्य एवैनमन्येभ्यो भूतेभ्य आवेदयति ब्रह्मोद्धरति तस्मादाहुर्ब्रह्मोद्धृतमिति ब्रह्म उद्धरतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादिति धनुः प्रयच्छति वज्रो वै धनुर्वज्रो राजन्यो वज्रेणैव वज्रं समर्धयति शत्रुबाधनाः स्थेति बाणवन्तो ऽन्तो वै बाणवन्तो ऽन्तो राजन्यो ऽन्तेनैवान्तं समर्धयति त्रीन्प्रयच्छति तिस्रो वै शरव्या दिव्या पार्थिवा समुद्रिया ता अस्माद्योयाव पात प्राञ्चं पात प्रत्यञ्चं पात तिर्यञ्चं पातान्वञ्चं पातोर्ध्वं दिग्भ्य एनं पातेति दिग्भ्य एनं पान्ति मित्रो ऽसीतीममभिमन्त्रयते मित्रस्य ह्येतद्रूपं वरुणो ऽसीतीमं वरुणस्य ह्येतद्रूपं हिरण्यवर्णमुषसो व्युष्टा इत्युद्यता अभिमन्त्रयतोर्ध्वबाहुस्तिष्ठन्तमभिविपश्यति बृहत्साम भवति स्वर्गमेवैनं लोकमभिसंतनोति ॥ ३ ॥

Vgl 2, 6, 9 — TBr 1, 7, 6, 4 flg

दिश एनं व्यास्थापयति वज्रेण वा एतदिमा दिशो ऽभिजयति

---

1) So corrigirt, die Mss दिव्या 2) So M, die andern Mss पार्थिवा 3) So M, H u Bb एवैन, desgl B, ohne Accent 4) So M, Bb इत्युष्यता, H इत्युष्यता, desgl B, ohne Accent 5) H u Bb स्वर्गमे°

तस्माद्वा एतस्य सर्वा दिशो ऽभिजिता यां यामभिपर्यावर्तते दिशो वै स्वर्गो लोक एतद्वै वा इमा दिशो यथादेवतं वा एतदाभ्यो दिग्भ्यो ऽधि स्वर्गं लोकमेति सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति व्याघ्रचर्म[1] विवेष्टयति सोमे वा एका त्विषिर्व्याघ्र एका सर्प एका ता एवावरुन्धे प्रत्यस्तं नमुचेः शिर इति सीसं पण्डगाय[2] प्रत्यस्यति पाप्मा वै नमुचेः शिरः पाप्मानं वावास्मा एतत्प्रत्यस्यति स्वर्गं लोकमभ्यारोहन्नवेष्टा दन्दशूका[3] इति लोहितायसं केशवापाय दन्दशूकानेवास्मात्तेन[4] निरवदयते तस्माद्वा एतस्य नाभिचारो ऽस्ति यावन्तो हि मृत्यवस्तानस्मान्निरवदयते मृत्योः पाहीति रजतं रुक्ममधस्तादुपोहते मृत्योर्वा एतद्रूपं यद्वाऽग्नो ऽमृतं हिरण्यममृतेनैव मृत्युमन्तर्धत्ते दिद्योः[5] पाहीति हरितं रुक्ममुपरिष्टादध्यूहते दिव्याया एवैनमशन्या योयावेयं वै रजतासौ हरिणी ताभ्यामेवैनं परिगृह्णात्यायुर्वै हिरण्यमायुष्या एवैनमभ्यतिक्षरन्ति वर्चो वै हिरण्यं[6] वर्चस्या एवैनमभ्यतिक्षरन्ति वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियं वीर्यं निरघ्नन्यद्रुक्ममन्तर्दधातीन्द्रियस्य वीर्यस्यानिर्घाताय शतमानो भवति शताक्षरः शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति ॥ ४ ॥

Vgl 2, 6 10 — TBr 1, 7, 7, 1—3, 1, 7, 8

अथैतानि पार्थानि संवत्सरो वै पार्थानि संवत्सरं वा एतन्मध्यतः प्रविशति तस्माद्वा एष दुःपराणोदः संवत्सरं हि मध्यतः

---

1) So M, die andern Mss °चर्म 2) So M, desgl B ohne Accent, H पण्डगाय, Bb उपगाय 3) M °शूका 4) M °शूकानि° 5) Vgl 2, 6 10, TBr 1, 7, 8 2 दिद्योन्मा पाहि 6) B हिरण्यं°

प्रविशति गिरी वा एतौ राजसूयस्य बार्हस्पत्यमन्येषामुत्तमं भवत्यैन्द्रमन्येषां प्रथमं वीर्यं वै बृहस्पतिर्वीर्यमिन्द्रो वीर्य एवैनमभिसंधत्त आदित्यनामानि वा एतान्यादित्या वा इमाः प्रजास्ताभ्य एवं सूयते सोमस्य त्वा द्युम्नेनाग्नेस्तेजसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चामीत्येताभिरेवैनमिन्द्रियै रेताभिर्देवताभिरभिषिञ्चतीन्द्रस्य योनिरसि जनयेत्येतो वा अधीन्द्रो ऽजायत स्वादेवैनं योनेर्जनयति द्युम्नपाहीत्याह स्वर्गस्य लोकस्य समष्ट्यै समावृषन्नधराँगुदक्ता[1] इति समुन्मार्ष्टीन्द्रियं वा एतद्वीर्यमभिषिच्यमानस्य व्येति तदेव समुन्मार्ष्टि तेनैनं संमर्धयत्यैन्द्र्या[2] त्रिष्टुभा ब्रह्मान्वैत्यैन्द्रो वै राजन्यस्त्रिष्टुप्छन्दाः स्वेनैवैनं छन्दसान्वेत्यथो प्रजापतिर्वै ब्रह्मा यज्ञस्य प्रजापतेरधीन्द्रो ऽसूयत प्रजापतेरेवाधि सूयत इन्द्रस्य वज्रो ऽसि वाजसनिस्त्वयायं वाजं सेदिति रथमुपावहरति स्वयैव देवतया मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति युनक्ति स्वयैव देवतया विष्णोः क्रमो ऽसि सपत्नहेति रथमभ्यातिष्ठत्येतो वै विष्णुरिमांल्लोकानुदजयद्विष्णोरेवोज्जितिमन्विमांल्लोकानुज्जयत्येभ्यो लोकेभ्यो भ्रातृव्यं नुदते मरुतां प्रसवे जयेति मारुत एवं गणो भूत्वोज्जयति राजन्यं जिनात्यन्तमेवाक्रमीत्तदस्य न कश्चनाज्येयं उज्जिष्यते तस्मै तामिषुमस्यति तदस्यामोघायास्तमभूदा[3] मनः समिन्द्रियेणेत्युक्त्वा वर्तते ऽन्तमेव गत्वावर्तत आत्मनो ऽहिंसाया एवं वज्रो वाजसातमस्तेन नौ पुत्रो वाजं सेदिति पत्न्यै धन्वा-[4]

1) So M, H u Bb (cf 2 6, 11) 2) So M, in H u Bb ॰त्यैन्द्रीया, desgl B, ohne Accent 3) So M, in H ॰मोघायस्तम॰, H u Bb ॰मेधायस्तम॰ 4) H धन्वर्ति

रिति प्रयच्छत्येयं वै पन्था यज्ञस्यान्वारम्भः सह स्वर्गे लोके भवतः ॥ ५ ॥

Vgl. 2, 6, 11 — TBr. 1, 7, 7, 4 flg.; 1, 7, 8 u 9 u A

इयदस्यायुरस्यायुर्मे धेहीत्यायुरेवास्मिन्दधाति युङ्ङसि वर्चो ऽसि वर्चो मे धेहीति वर्च एवास्मिन्दधात्यूर्गस्यूर्जं मयि धेहीतीयं वै रजतासौ हरिणी मे एवालभ्यौ गवी उदुम्बरा ऊर्जे वा एतन्मध्यत आत्मनो धत्ते प्रजानां च मित्रो ऽसीतीममुपावहरति मित्रस्य ह्येतद्रूपं वरुणो ऽसीतीमं वरुणस्य ह्येतद्रूपं संदसि संमहे विश्वेदेवैरिति हस्त आमिक्षामभ्यवहरति सैवा आमिक्षा सदेवाभ्यवहरति तत्र ते हिरण्यं ददाति सा दक्षिणा हिर्नास्ति खलु वा एष पशून्पृथिवीमभ्यवरोहन्नमो मात्रे पृथिव्या इति वाराही उपानहा अभ्यवरोहत्यारण्यानेव पशूनभ्यवरोहति वराहउस्त्वेवैनं संधुमहीति तद्वराहे एवैनं सघ्नोति प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो ऽसुषोदिति वरुणसवो वा एष वरुणायैवैनं प्राह नि मित्रो जरिमाणं न आनडिति जरिमाणमेवास्मिन्नुनक्ति स्योनासि सुषदेति स्योना ह्येषा सुषदा स्योनामासीद सुषदामासीदेति[10] सुषदैवैनं[11] सादयति ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा।
साम्राज्याय सुक्रतुः ॥

---

1) Bb आमिक्षा अभ्यव॰, auch H आमि॰ 2) M सदेवा अभ्यव॰ 3) H u Bb हिरण्य 4) So M, die andern Mss वराहीस्त्वेवैन॰ 5) So M, die andern Mss अप्नोति 6) So M, die andern Mss त्वं नाम, cf 2, 6, 12 7) So corrigirt, die Mss सुखोदिति, cf 2, 6, 12 8) Das ३ fehlt in den Mss 9) So corrigirt, die Mss सुखदा 10) So corrigirt, die Mss सुखदाम॰ 11) So corrigirt, M सुखदै॰, die andern Mss सुखदे॰

इति वरुणसवो वा एष वरुणमेवैनमकरग्नये स्वाहा सोमाय स्वाहेन्द्रस्यौजसे स्वाहा मरुतां बलाय स्वाहेति रथविमोचनीयं जुहोति यजुषेव युज्यन्ते यजुषा विमुच्यन्ते हंसः शुचिषद्वसुरन्तरिक्षसदिति रथं वा एतत्परिवदति सह सारथिना रथवाहने रथमादधाति सर्वत्वायैवं प्रसवाय ब्रह्मां३स्त्वं ब्रह्मासीति किमभूः किमभूमिति वा एतदाह सवितासि सत्यसवा इतीदमसीदमसीति वावैनमेतदाह यद्व्रवत्येष वज्रस्तेन मे रध्येति स्फ्यं प्रयच्छति वज्रो वै स्फ्यो वज्रेण वा एतद्राष्ट्रं रध्यते तमवरस्परं प्रयच्छति तेनावरस्परं राष्ट्रं रध्यमाणमेति तस्माद्वा एत एतस्मा अवरस्परं राज्ञे बलिं हरन्ति तेन स्फ्येनाधिदेवनं कुर्वन्ति तच्च पष्ठौहीं विदीव्यन्त आशा वा एष उपाभिपिञ्चत आशा पष्ठौह्याशामेवास्मा अकस्तत्तच्चतुःशतमक्षाणावोप्याह ॥ उद्भिन्नं राज्ञः ॥ इति चत्वारो वै पुरुषा ब्राह्मणो राजन्यो वैश्यः शूद्रस्तेषामेवैनमुद्भेदयति ततः पञ्चाक्षान्प्रयच्छन्नाह दिशो अभ्यभूदयमितीमा एवास्मै पञ्च दिशो ऽन्नाद्याय प्रयच्छति क्षेमं ददाति तेन क्षेमे धृतो भवति वरं वृणीते सो ऽस्मै कामः समृध्यते यत्कामो भवति मङ्गल्यनाम्नो ह्वयति यत्पूर्वं व्याहार्षी[10] तं-हैन्मोपमसदित्यसा[11] अमुष्य पुत्रो ऽमुष्यासौ पुत्र इति नामनी व्यतिपजति स्वर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥

Vgl 2, 6, 12 — TBr 1 7 9, 5 u 6, 1 7, 10

---

1) H u Bb युज्रंते 2) Bb मुच्यंते 3) So corrigirt, in den Mss परिव्वदति ohne Accent 4) Die ३ fehlt in den Mss, cf 2 6 12 5) So corrigirt, die Mss रथेंना॰ 6) So M, die andern Mss चेंद्राव्यत 7) d h अव। छेद्य। आह। 8) So corrigirt, die Mss सौ 9) So ist wohl zu lesen, M मगल्यनाम्नो, die andern Mss. मागल्यनाम्नो 10) So M die andern Mss व्याहारिय 11) So M, die andern Mss तर्मोपमसादि॰

समानो वा एष यज्ञक्रतुः संवत्सरं भवति वि वा एतद्यज्ञस्यैषच्छिद्यते यदवभृथमवयन्ति यदपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति जुह्वत आयन्ति यज्ञस्य संतत्या अविच्छेदाय यज्ञो वै देवेभ्यस्तिरोऽभवत्तं[1] देवाः संसृप्भिरन्वैछन्यत्सावित्रः[2] सवितृप्रसूता एवान्वैछन्यत्सारस्वतो वाग्वै सरस्वती वाचैवान्वैछन्यत्पौष्णः पशवो वै पूषा पशुभिरेवान्वैछन्यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मणैवान्वैछन्यदैन्द्र इन्द्रियं वा इन्द्र इन्द्रियेणैवान्वैछन्यद्वारुणो वरुण एवान्वैछन्यत्त्वाष्ट्रः संवत्सरो वै त्वष्टा संवत्सर एवान्वैछन्यदाग्नेयोऽग्निर्वै सर्वा देवता देवताभिरेवान्वैछन्यत्सौम्यः[3] सौमीर्वा ओषधय ओषधीभिरेवान्वैछन्यद्वैष्णवो विष्णुर्वै यज्ञो यज्ञ एवान्वैछंस्तं विष्णा अविन्दन्दशमे तस्मादेष दशमो दशमे ह्यविन्दन्दश चमसा दश चमसाध्वर्यवो दश दश चमसानभिता आ दशमात्पुरुषादन्वावृते समृद्ध्यै दशसमृद्धो ह्येष यज्ञ एतं वै तं तद्यज्ञमन्वैछंस्तमाप्नुवंस्तद्य एतेन यजत आप्नोति सप्तदशः सर्वो भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोत्युत्सन्नयज्ञो वा एष संवत्सराद्वा अप्युत्सन्नयज्ञोऽवरुध्यते संवत्सरादेवैनमध्याप्यावरुन्द्ध इन्द्रो वै वृत्रमहंस्तस्येमे कुमाण्युमैता चित्राणीये नक्षत्राण्यसौ नक्षत्राणां वा अवकाशो पुण्डरीकं जायते क्षत्रस्य वा एतद्रूपं क्षत्रस्यैव रूपं प्रतिमुञ्चते द्वादशपुण्डरीका भवन्ति द्वादश मासाः संवत्सरः संवत्सरमेवाप्यावरुन्द्धे ॥ ७ ॥

Vgl 2, 6, 13 — TBr 1, 7 10 6 1 8 1 flg

---

1) Bb तं 2) So M, in H scheint es auch so corrigirt, B संसृष्ट॰, Bb wohl संसृष्ट॰, vgl. TBr 1 8, 1, 1 3) Dies Wort fehlt in H u Bb 4) Bb देवता देवता देवता एवान्वैछ॰

रुक्मो होतुराग्नेयो वै होता न वा एतस्मै व्युच्छत्युप्येवास्मै वासयति स्रगुद्गातुः[1] सौर्यो वा उद्गाताथो असुमेवास्मा आदित्यमाग्नोन्नयति प्रावेपा अध्वर्योर्वेपमा[2] इव ह्यध्वर्युः[3] ॥ अश्वः प्रस्तोतुः प्राजापत्यो वा अश्वः प्राजापत्यः प्रस्तोताथो प्रेव उह्येषं प्रोथति[4] प्रेव प्रस्तोता धेनुः प्रतिहर्तुः प्रतीव उह्येषा हरति प्रतीव प्रतिहर्ता[5] वशा मैत्रावरुणस्य वशं मा नयादिति वृषभो ब्राह्मणाच्छंसिनः सेन्द्रियत्वाय वासः पोतुः पवित्रत्वायानड्वान्नेष्टुर्धुरंधीधो ऽन्यो युक्ता एव स्थूरि[6] यवाचितमच्छावाकस्य स्थूरीरिव[7] उह्येषा होत्रा स्वह्यग्र्या यदच्छावाक्याथो निर्वरुणत्वायैव यवा न वा अस्यै[8] तर्हि सदस्येभ्यो दक्षिणा दीयन्ते[9] ता एवास्यै[10] तेनाभीष्टाः प्रीता भवन्ति द्वादश पष्ठौहीर्गर्भिणीर्ब्रह्मणे वाग्वै धेनुर्गर्भो मन्त्रो वाच्येवास्य मन्त्रं दधात्यामन्त्रणीयो ह भवति धेनुभव्या[11] भवन्ति द्वादश वै पयांसि तान्यस्मिन्दधाति तस्माद्वा एतमाहुः पयस्वी राजा पुण्या इति यावद्धि पयस्तदस्मिन्धीयते ॥ ८ ॥

Vgl. TBr. 1, 8, 2

श्रायन्तीयं ब्रह्मसाम भवत्यनुष्टुप्सु[12] यज्ञायज्ञियं प्रोहन्ति वारवन्तीयमग्निष्टोमसामेन्द्रो वै वृत्रमहन्स ओजसा वीर्येण व्यार्ध्यत स एतत्सामापश्यत्तेनात्मानं समर्धयदोजसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिच्यते तदेतेनैवात्मानं समर्धयते ब्रह्म वै यदग्ने

1) H u. Bb स्रग॰ 2) M ॰र्वोर्येमा 3) M ॰ध्वर्युं 4) H u. Bb प्रोथयति 5) So M; die andern Mss न्वा 6) B स्थूरी, cf TBr 1 8, 2, 4 7) So M; die andern Mss स्थूरीरीव 8) So M, die andern Mss चास्ये 9) So M u. B, in H u Bb; दीयते 10) So M, H u Bb, in B एवास्यै 11) So betont M; in H u Bb धेनुर्भव्या 12) So M, H u. Bb भवत्य॰

व्यभवद्बृहत्साम[1] यजुस्तस्य वा एष रसो यद्यज्ञायज्ञियं यद्यज्ञायज्ञियं गायते ब्रह्मण्येव रसं दधाति वाचा वा एष व्यृध्यते यो राजसूयेनाभिषिच्यते वागनुष्टुब्यदनुष्टुप्सु यज्ञायज्ञियं भवति वाच्येवास्य रसं दधातीन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिच्यत इन्द्रियं वीर्यं वारवन्तीयं यद्वारवन्तीयमग्निष्टोमसाम भवतीन्द्रियस्य वीर्यस्यावरुद्ध्या अश्रयन्वाव[2] श्यायन्तीयेनावारयन्त[3] वारवन्तीयेन तदिन्द्रियस्यैवैतद्[4] वीर्यस्य परिगृहीत्यै यच्च वा एतमदो दिशो व्यास्थापयन्ति तं स्वर्गं लोकमभ्यारोहति यदिमं लोकं पुनर्नोपावरोहेदतिजनं वा गच्छेदुद्वा माद्येद्देता दिशो मवेष्ट्य इमं वा एतं लोकं पुनरुपावरोहत्यन्नकामो यजेतैतद्देवत्या वा इमा दिशो यथादेवतं वा एतदाभ्यो दिग्भ्यो ऽध्यन्नाद्यमवरुन्द्धे यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रमेकधैवास्मिन्नन्नाद्यं प्रतिष्ठापयति समानो वा एष यज्ञक्रतुः संवत्सरे भवति वि वा एतद्यज्ञश्छिद्यते यत्संतिष्ठते यदेताः प्रयुज[5] उपैति सायमन्याः प्रातरन्या द्वौ वा ऋतू अहश्च रात्रिश्च तावेव प्रयुङ्क्ते षडन्याः षडन्याः षड्वा ऋतव ऋतूनेव प्रयुङ्क्ते ता उभयीर्द्वादश द्वादश मासाः संवत्सरः संवत्सरमेव प्रयुङ्क्ते ऽनड्वाही दक्षिणा युक्ता एवं मारुती पृश्निः पष्ठौही गर्भिणीति विड्वै मरुतो विश एवास्मिन्नेतं गर्भं करोति तस्माद्वा एष विशः प्रियः प्रियो हि गर्भ आदित्यानां[6] मलिहा[7] गर्भिणीतीयं वा अदितिरस्या

1) So corrigirt, die Mss °बृहत्साम  2) So im Anschluss an M अंश्रयन्वाव, H u Bb अश्वश्रावयित्वाव, desgl. B, ohne Accent.  3) So M, die andern Mss श्यायन्तीये°  4) So M, die andern Mss °स्यैवैतेन  5) So M, H u Bb प्रयुज, desgl. B, ohne Accent.  6) Die Mss. °त्यांजा  7) So ist wohl zu betonen, M मलिहा, H u Bb मलिहा

वा एनमेतद्गर्भं करोति तस्माद्वा एष दुःपराणोदो ऽस्यां हि गर्भो ऽथैते सत्यदूताः प्रसवाय सावित्रो देवा असुरैर्विजयमुपयन्तो ऽश्विनोः पूर्धरिग सत्यं न्यदधत वाग्वै सरस्वती वाचा सत्यं प्रहिणोति ॥ अभ्यृषिक्षि राजाभूम् ॥ इति ब्रह्मासे सुषुवाणाय दधाति संवत्सरमग्निहोत्रं जुहोत्यनुसंतत्यै ॥ ९ ॥

Vgl TBr 1, 8, 2, 5, 1, 8, 3

अग्निष्टोममग्रे ज्योतिष्टोममाहरति यज्ञमुखं वा अग्निष्टोमो यज्ञमुखमेवालभ्य सवमाक्रमते ऽथैष त्रिष्टोमस्तस्य त्रिवृत्प्रातःसवनं पञ्चदशं माध्यंदिनं सवनं तेजो वै त्रिवृत्क्षत्रं पञ्चदशस्तेज एवास्य क्षत्रे दधाति न वा अत्रापि सप्तदशस्तायते प्रजापतिर्वै सप्तदशो यज्ञः प्रजापतिर्यद्यज्ञस्तायते तेन सप्तदशो ऽनन्तरितः पञ्चदशं माध्यंदिनं सवनमेकविंशं तृतीयसवनमिति विड्वा एकविंशः क्षत्रं पञ्चदशो विड्वा वास्यैतत्क्षत्रं प्रतिष्ठापयामकः सर्वे चतुस्त्रिंशाः पवमाना अभिषेचनीयस्य त्रयस्त्रिंशद्वै देवतास्ता एवास्यैतेनाभीष्टाः प्रीता भवन्त्यथ य एष चतुस्त्रिंशः प्रजापतिर्वै चतुस्त्रिंशः प्रजापतिमेवाप्नोति स एषो वा एष स्तोमानामयथापूर्वं यद्विषमाः स्तोमा यत्समाः पवमानास्तेनैवासंशरस्तेन यथापूर्वमात्मना वा अग्निष्टोमेन ऋध्नोत्यात्मना पुण्यो भवति प्रजा वा उक्थानि पशव उक्थानि यदुक्थ्यो ऽनुसंतत्यै यो वै सवादेति नैनं सव उपनमति यः साम्भ्य एति पापीयान्सुषुवाणो भवति यानि देवराजानां सामानि यत्तेभ्यो नैति तेनैव सवान्नैत्येतानि वै सामानि यत्पृष्ठानि यत्पृष्ठान्युपयन्ति

1) H u Bb पर्शवो 2) So M, die andern Mss ॰भूत् 3) So M u Bb, in H नैव॰, desgl, B, ohne Accent

तेनैव साम्भ्यो नैति यानि देवराज्ञां सामानि तैरस्मिंल्लोक ऋध्नोति यानि मनुष्यराज्ञां तैरमुष्मिंस्तदुभयो रेवैतैर्लोकयोर्ऋध्नोत्यस्मिंश्चामुष्मिंश्चोद्वतीषु सुवत उद्वद्वा अनुष्टुभो रूपमानुष्टुभो राजन्यस्तस्मादुद्वतीषु सुवतेऽनुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा वाग्वा अनुष्टुब्वाचा वा एतं प्रयन्ति वाचोद्यन्ति सौर्यनुष्टुबुत्तमा भवति[1] स्वर्गस्य लोकस्य समष्ट्या एकविंशं केशवपनीयस्य बहिष्पवमानमेकविंशमभिषेचनीयस्योत्तममिति विद्वा एकविंशः स्वर्ग्यः सप्तदशो विशो वा एतन्मध्यतः सूयते तस्माद्वा एष विशः प्रियो विशो हि मध्यतः सूयते यत्र वा एनमदो दिशो व्यास्थापयति तत्स्वर्गं लोकमभ्यारोहति यदिमं लोकं पुनर्नोपावरोहेदतिजनं वा गच्छेदुद्वा माद्येद्यदेष प्रतीचीनस्तोम इमं वा एतं लोकं पुनरुपावरोहति ॥ १० ॥

Vgl TBr 1, 8, 7 u 8

॥ इति[3] खिलकाण्डे चतुर्थः[4] प्रपाठकः ॥

---

अपो वै वृत्रः पर्यशयत्ता या अत्यमुच्यन्त ता जीवा यज्ञिया गिरिर्वै वृत्रो या अतिमुमुचाना धावन्ति ता जीवा यज्ञिया यद्वहन्तीनां गृह्णाति या एव जीवा यज्ञियास्तासामेव गृह्णाति प्रती-

1) M भवति 2) In den Mss dies Wort ohne Accent 3) Das इति fehlt in den Mss. 4) M schreibt fälschlich तृतीय

पंसुपमारयत्यंछम्बद्वाराय सूर्यस्यावकाशे गृह्णाति सेन्द्रा एवं गृह्णाति हविष्मतीरिमा आपा इति हविष्मतीरेवं गृह्णात्याविःसूर्ये गृह्या उत्तरमेवं यज्ञक्रतुमभिगृह्णात्यनुष्टुभा गृह्णात्यनुष्टुब्वै सर्वाणि छन्दा॰सि सर्वैरेवैनाम्छन्दोभिर्गृह्णाति वंर्ष्मं वा एषा छन्दसा॰ वर्ष्मेन॰ समानानां गमयति चतुर्भिर्गृह्णाति त्रिभिः सादयति तत्सप्त सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्धे ऽपो वै रात्रिर्दिवा भूतं प्रविशति तस्मादापो दिवा कृष्णा अपो ऽहर्नक्तं तस्मादापो नक्त॰ शुक्ला यद्दिवा गृह्णात्युभे एवाहोरात्रे गृह्णाति दिवा वै मनुष्या यज्ञेन चरन्ति नक्तं देवास्तस्माद्रात्रिभिः प्रवस्यते स॰स्थाप्य वै मनुष्या यज्ञं निःपद्यन्ता आपः खलु वै विश्वे देवा यदपः परिहरन्त्यग्नौ वा एतद्यज्ञ॰ संमादादन्यस्ते ऽस्य यज्ञे क्रियते यद्वै यज्ञस्यानयन्ति तच्छिद्रं तदनु रक्षा॰सि यज्ञमेवयन्त्यापो वै रक्षोघ्नीरपो रक्षा॰सि न तरन्ति यदपः परिहरन्ति रक्षसामनन्ववायाय या दिवा गृह्णाति या अर्चीः प्रजास्तासामेता योनिस्त्वा एता अनुप्रजायन्ते या नक्तं गृह्णाति या आद्याः प्रजास्तासामेता योनिस्त्वा एता अनुप्रजायन्त उभयीरेव प्रजाः प्रजनयत्यग्नीध्राऽद्धाग्नीधीये सादयत्येतद्वा अन्तर्भाजनमेथो अंत्र हि ता॰ रात्रिं देवता उपवसन्ति देवा वै यज्ञस्य प्रस्तनं नापश्य॰स्ते वा एतदेव यज्ञस्य प्रस्तनमपश्यन्यद्वसतीवरीर्यद्वसतीवरीर्गृहीत्वोपवसन्ति प्रस्तन॰ वा एतद्यज्ञस्यालभ्योपव-

1) So M; in H u Bb सूर्ये गृह्या 2) H °वैना॰च्छ° 3) So M, in H u Bb das Verb ohne Accent 4) So M, die andern Mss. रात्रीभिः 5) So im Anschluss an M निःपद्यन्ता, die andern Mss निपद्यन्ता 6) So M, die andern Mss क्रीयते 7) So M u Bb, H रात्री, desgl H ohne Accent 8) In H u Bb findet sich यद्वसतीवरी° nur einmal geschrieben

सन्नथो ह्यापो वै विश्वे देवाः सर्वा वा एतद्देवता आलभ्योपवसन्ति यस्यागृहीताः सूर्यो ऽभिनिम्रोचेद् आहिताग्निः सोमयाजी तस्य कुम्भाद्गृह्णास्तस्य[1] हि गृहीता अग्निमुपरिष्टाद्धारयेयुरथ गृह्णीयाज्ज्योतिष्मतीरेवैना गृह्णाति हिरण्यं हस्ते भवत्यथ गृह्णाति सत्यं वै हिरण्यं सत्येनैवैना[2] गृह्णाति वरो दक्षिणा वरेणैवैना गृह्णाति यज्ञेन धनमदास्यनस्यास्तद्देयम् ॥ १ ॥

Vgl 1, 3, 1 — TBr 6, 4, 2 (vasatīvaryaḥ); Çat Br 3, 9, 2.

प्रचरण्यामग्ने गृह्णात्येषा ह्यग्ये प्रचरत्यथो वै सोमस्य रसः प्रविष्टो ऽग्निः सर्वा देवता वैश्वदेवीरापो यज्ञमुखं ग्रावाणः सवितृप्रसूतो वा एतत्सर्वाभिर्देवताभिरपां सोमस्य रसमछैति शृणोत्वग्निः समिधा हवं मा इति यस्मिन्नेवाग्नौ जुहोति तमेतदाह शृण्वन्त्वापो इति या एवापो ऽछैति ता एतदाह धिषणा च देवीति[5] वाग्वै धिषणा देवी[6] वाचं वा एतदाह शृणोत ग्रावाणो विदुषो नु यज्ञमिति यज्ञमुखं हि ग्रावाणः शृणोतु[7] देवः सविता हवं मा इत्याह प्रसूत्या एव ॥ अपं इष्य होतः ॥ इति यज्ञं मैत्रेति[8] वा एतदाह ॥ ब्रह्मणा इति ब्रह्मणैव यज्ञमछैति मैत्रावरुणस्य चमसेनाछैत्येष ह्यग्ये प्रचरत्यथो मित्रावरुणौ ब्रह्मपामीशाते यज्ञमुखं वै मित्रावरुणौ यज्ञमुखमापो यज्ञमुखेनैव यज्ञमुखमछैति यथ होतुः प्रातरनुवाकमनुब्रुवत[9] उपशृण्वयात्तदपो ऽध्वर्युर्गृह्णीयाद्यन्नोपशृण्वयाद्व्यर्धिः स्याद्वाचो हि

---

1) So B, nur ohne Accent; in M गृह्णात्तस्य, H u Bb गृह्णस्तस्य 2) Bb °वैना 3) H u. Bb देव 4) Die Mss ग्रवापो 5) So M, (in gleicher Weise ist die Lesart mit M 1 oben 1, 3, 1 in den Text zu setzen), B धिषणा देवीति, Bb धिषणार्थ देवीति, H धिषणास्य देवीति 6) So M, die andern Mss धिषणास्य देवी 7) So M; die andern Mss. शृणोतु 8) So M, die andern Mss मैत्रेति 9) Bb °प्रवर्त

छिद्यते ऽथ यज्जुहोति हविर्भूता एवैना गृह्णात्यथो अभिघृता एव तूर्णं प्रास्य जुहोत्यग्निमत्येवं जुहोत्यायतनवत्यन्धो ऽध्वर्युः स्याद्यदनायतने जुहुयादृतं वै देवा वज्रं कृत्वा सोममघ्नन्नभि खलु वा एतां धारयन्ति[1] तस्मादाहुतिमपप्लावयत्यथो आहुतिं[2] नेद्धराणीति कार्यसीत्याहुतिमपप्लावयति समुद्रस्य वो ऽक्षित्या उन्नया इत्युपमारयत्यपां मेवाक्षित्या अपो वै सोमस्य रसः प्रविष्टः[3] सोममपां रसो ऽपाञ्च खलु वै नेपाश्चापां[4] सोमस्य रसस्येशाते तौ वा एतदाहुत्या भागधेयेनापां सोमस्य रसं निरयाचिष्टोभे अहोरात्रे वसतीवरीषु गृहीत३य्ये[5] इत्याहुः पूर्वेद्युरन्यां गृह्णाति पुरान्याः सूर्यस्योदितोस्तथास्योभे अहोरात्रे वसतीवरीषु गृहीते भवतः पूर्वेद्युरन्यां गृह्णाति पुरान्याः सूर्यस्योदितोरुभयीरेवैनाः सद्योगृहीता अकर्भ्रातृव्या वा एता गृह्णन्ते या मैत्रावरुणस्य चमसे याश्च निग्राभ्यास्ता उभयीरुपरिष्टाच्चात्वालस्य समनक्ति संज्ञानमाभ्यः करोति मिथुनमाभ्यो ददाति चात्वालान्निर्गृह्णन्त एष वा अपां योनिः स्वादेव योनेर्निर्गृह्णन्ते ऽस्कन्नत्वाय ॥ अवेरपो ऽध्वर्यो३[6] ओम्[7] ॥ इत्यविदो यज्ञा३मिति[8] वा एतदाह ॥ उतेमनन्नमुरुतेम[9] पश्य ॥ अयं मे रब्ध इति वा एतदाह यद्यग्निष्टोमो जुहोति न वा अग्निमग्निष्टोमस्य स्तोत्रेण न शस्त्रेणाति यन्त्यग्निष्टोममेव यज्ञक्रतुमनुसंतनोति यद्युक्थ्यः परिधिमनक्ति परे वा अग्नेः

1) So M, in H u Bb द्वारयति, B प्रारयति 2) So M, die andern Mss आहुति 3) [illegible] प्रविष्ट. 4) M नापाश्चा° 5) So M, während H u Bb सर्वौ गृहीता accentuiren. 6) Die ३ als Zeichen der Plutirung fehlt in den Mss und ist von mir ergänzt 7) So M, in den andern Mss fehlt das ओम् sowie auch die folgende Interpunction 8) Die ३ als Zeichen der Plutirung fehlt in den Mss und ist von mir ergänzt 9) M उतेमनन्नमरु°, cf aber auch TS 6, 4, 3, 4

परिधयः' पराणि परिधिभ्य उक्थान्युक्थान्येवं यज्ञक्रतुमनुसंतनोति' यदतिरात्रे' एतदेव यजुर्वेदन्हविर्धानं प्रपद्येत' परं वै परिधिभ्यो हविर्धानं' परोक्थेभ्यो' रात्री' रात्रीमेव यज्ञक्रतुमनुसंतनोति' स्तेनं मनो ऽनृतवादिनी वागेथ केन सोमा गृह्यन्ते केन हूयन्ता' इति पृच्छेदृतं वै सत्यं हिरण्यमृतेनैवं सत्येन गृह्यन्त' ऋतेन हूयन्ते ॥ २ ॥

Vgl 1, 3, 1 — TS 6, 4, 3 (somopâvaharaṇam); Çat. Br 3, 9, 3, 14 flg

देवेभ्यो वै मनुष्येभ्यः स्वर्गाय लोकाय यज्ञ आह्रियते' यद्वृदेवेति' तेन देवेभ्यो' यन्मनसे त्वेति' तेन मनुष्येभ्यो' यदाह' दिवे त्वा सूर्याय त्वेति' तदनु यज्ञं स्वर्गं लोकं समारोहयति' वि वा एतद्यज्ञश्छिद्यते यस्मै कमाह्रियते' तद्येनमनु स्वर्गं लोकं समारोहयति' यदाह' दिवि देवेषु होत्रा यच्छेति' होत्राभिर्वे यज्ञः संततो' होत्राभिरेव यज्ञं संतनोति ॥ देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहि ॥ इति' छन्दांसि वै देवाः प्रातर्यावाणश्छन्दोभ्यो वा एतदनुवाच आह' पुरा वाचः प्रवदितोः[3]' प्रातरनुवाकमन्वाह' यजमानायैव वाचं गृह्णाति' न वा एतर्हि यजमानो हस्ता अवनेनिक्ते' यदप्सुमतीं प्रथमामन्वाह' प्रातरवनेग्यो वा एष यजमानस्य' मेघ वा अश्रदो ऽपः परिहरन्त्यग्नो वा एतद्यज्ञं समादायेदप्सुमतीं प्रथमामन्वाहाग्नौ[4] वा एतद्यज्ञं पुनरालभते' सर्वेषां वै देवानां प्रातरनुवाक' आपः खलु वै विश्वे देवा' यदप्सुमतीं प्रथमामन्वाह सर्वा वा एतद्देवता आप्नोति' सर्वा प्राप्नोति' यथा वै सामिधेनीरेवं प्रातरनुवाक' आसाद्य वै हविः सामि-

---

1) So M; in B u Bb सकथ्यांनुपथ्यायैवं desgl. B, ohne Accent. 2) So M; in B u Bb परोक्थेभ्यो desgl B, ohne Accent 3) So corrigirt, die Mss प्रवदितो 4) Mit प्वाहाग्नौ beginnt S. 61 von Bei°

धेनीरन्वाहुरेतत्खलु वा एतर्हि हविर्यत्सोमस्संसात्सोममुपावहृत्यान्वाह गायत्रीं च संपादयति जगतीं च तद्वे छन्दसी एकं छन्दोऽभिसंपादयति बृहतीं त्रिष्टुभं च ककुभं च तद्वे छन्दसी एकं छन्दोऽभिसंपादयति बृहतीमनुष्टुभं च पङ्क्तिं च तत्षट् छन्दांस्येकं छन्दोऽभिसंपादयति बृहतीमनुष्टुप्प्रतिपत्कानि[1] छन्दांसि कुर्याद्यज्ञावकीर्णोऽस्य वाग्वा अनुष्टुब्वाचैवैनं भिषज्यति समया त्रिष्टुभं च जगतीं चानुब्रूयात्पशुकामस्य पशवो वै जगती पशुमान्भवति सर्वाणि छन्दांस्यन्वाह प्रजापतिर्वै छन्दांसि प्रजापतिमेवाप्नोति प्रजापतेर्वा एतदुक्थं[2] यत्प्रातरनुवाको व्युष्टायां पुरा सूर्यस्योदेतोरनुब्रूयादेष हि प्रजापतेर्लोकः पवित्रं वै प्रातरनुवाको यजमानमेवैतेन पुनाति शतमनुब्रूयादायुष्कामस्य शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति सप्त च शतानि विंशतिं चानुब्रूयात्पशुकामस्यैतावन्ति वै संवत्सरस्याहोरात्राणि संवत्सरेणैवास्मै पशूनवरुन्धे सहस्रमनुब्रूयात्स्वर्गकामस्य यावद्वै सहस्रं तावदितोऽसौ लोकः स्वर्गस्य लोकस्य समष्ट्या अपरिमिता अन्वाहापरिमितस्यावरुद्ध्यै पङ्क्त्या परिदधात्युत्तरमेव यज्ञक्रतुमभिगृह्णाति ॥ ३ ॥

Vgl 1, 3, 1 — TS 6, 4, 3, 1 u 2 (somopavaharaṇam), Çat Br 3, 9, 3, 4 flg

यज्ञस्य वा एताः पत्नीजनीः पुंसामग्नीत्स्त्रीणां[3] नेष्टा यदग्नीन्नेष्टुरुपस्थमासीदति मिथुनं वा एतत्संभवतो यन्नेष्टारं उपप्रवर्तयति तस्मिन्नेव मिथुने रेतो दधाति पत्न्युपप्रवर्तयति पत्न्या हि प्रजाः

---

1) So schreibe ich mit Ben und übersetze „die Anushtubh zum Eingang, zum Anfang habend“, M ॰प्रतिपक्काणि, [redacted] u Bb ॰प्रतिपत्थाणि, [redacted] nicht ganz deutlich, etwa ॰प्रतिपत्क्काणि 2) So M u Ben, in [redacted] u Bb ॰दुक्थ्य, desgl B, ohne Accent 3) So corrigirt, die Mss ॰मग्नी स्त्रीणा

प्रजायन्त ऊरुणोपप्रवर्तयत्यूरू ह्यनु प्रजाः प्रजायन्ते दक्षिणेनोरुणोपप्रवर्तयति दक्षिण ह्यूरुमनु प्रजाः प्रजायन्ते ऽन्तरत उपप्रवर्तयत्यन्तरतो हि प्रजाः प्रजायन्ते यद्दक्षिणा प्रवर्तयेत्पितृलोक एना निधुवेद्यदुदीचीरुपप्रवर्तयति मनुष्यलोकमेवैना उपप्रजनयति प्राजापत्यो वा उद्गाता संख्याप्यमानो वा उद्गाता मन्या रेता आदत्ते यदाह वाग्मी ते संदृशि विश्वं रेतो धेषीयेति तया ह नादत्ते द्वादशे स्तोत्र उपप्रवर्तयति द्वादश मासाः संवत्सरो द्वादशाग्निष्टोमे स्तोत्राण्यापः शान्तिर्यत्स्तोमे उपप्रवर्तयति शममत्येव देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनमादत्ते ऽश्विनोर्बाहुभ्यामित्यश्विनौ वै देवानामध्वर्यू पूष्णो हस्ताभ्यामिति देवताभिरेव यावास्तीति रात्रे उक्षेप देवेभ्यः सोममध्वरकृद्देवेभ्य इत्यध्वरं ह्येष देवेभ्यः करोतीन्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तमित्यैन्द्रो हि यज्ञ इन्द्रं खलु वा एतर्ह्यन्या देवता अन्विन्द्राय त्वा वसुमते रुद्रवत इति वसवश्च ह्येनमेतर्हि रुद्राश्चान्विन्द्राय त्वादित्यवत इत्यादित्या ह्येनमेतर्ह्यन्वभिभवे त्वा रायस्पोषद इत्यग्निर्वै सर्वा देवता एता ह्येनमेतर्हि देवता अनु विष्णवे त्वेति विष्णुर्हि यज्ञो व्यानो वा उपांशुसवनः प्रजा अंशवो व्यानं वा एतत्प्रजासु दधाति श्वात्राः स्थ वृत्रतुर इत्येष वा अपां सोमपीथ एतं वै विश्वामित्रो ऽपां सोमपीथं

1) M एना 2) So M u Ben, in H, Bb, B धुवेद्° 3) So corrigirt (vgl Monatsberichte d Berliner Akad d Wiss 24 Juli 1879, p 659, Einleitung zum 1 Theil der Maitr S p XI), die Mss schwanken, Ben सख्याप्य°, M सचार्य°, Bb सख्यार्य°, B सख्याप्य° indem zugleich unter der Ligatur ख्य ein Rudiment des Buchstaben ग angebracht zu sein scheint, H ist ganz undeutlich 4) M धायत्ते 5) So H u Bb, die andern Mss °स्तोमे 6) So H, Bb u B (cf TS 6, 4, 4 1), M u Ben एवैनाम° 7) H, Bb u B schieben hier noch ein वै ein.

विदांचकार तस्मै सिन्धवो धोक्षमनमन्तापो वा एषं सोमपीथोऽपो वा एतत्सोमपीथेन समर्धयति यो वा अपां सोमपीथं वेद न ह वा आस्वार्तिमार्छति करोत्यासु वीर्यं यत्ते सोम दिवि ज्योतिरिति सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयं येन यजन्ते स तृतीयं गर्भानमुना दाधार प्राणाननेन यच्छन्त्ययं यः पवते ऽन्नमनेन दाधार येन यजन्ते तस्य वै वाजस्य सन्यं वाजिनमन्न वाजिनं दक्षिणा वाजिनं तां वा अस्यैतत्तन्वः संभृत्य तं सर्वं संतनुं भूतमाप्याययन्ति वज्रो वै ग्रावा हनू अधिषवणे क्रूरमिव वा एतद्यज्ञे क्रियते यदाह धिषणे ईडिते ईडेथामिति शमयत्येव ॥ ४ ॥

Vgl 1, 3, 1 u 3 — TS 6, 4, 4 (somonmánam); Çat Br. 3, 9, 4

वसतीवरीभिः सोममाप्याययन्ति न हि सोमेन सोम आप्यायते ऽद्भिर्हि सोम आप्यायते नियाभ्याभित्या अंशुमतो हीतरे सोमा गृह्यन्ते प्राणो वा उपांशुरङ्गानीतरे यद्धा यदन्यत आप्याययेयुः प्राणेन यज्ञं विछिन्द्युरष्टौ कृत्वः प्रातरभिषुणोत्यष्टाक्षरा गायत्री गायत्रीं वा एतत्प्रातःसवने ऽयातयन्ति देवाश्च वा असुराश्चास्पर्धन्त ते देवा उपांशौ यज्ञं संस्थाप्यमपश्यंस्तमुपांशौ समस्थापयंस्तदुपांशा एव यज्ञः संस्थाप्यो ऽष्टौ कृत्वः प्रातरभिषुणोत्यष्टाक्षरा गायत्री गायत्रीमेवाप्नोति यदेकादश त्रिष्टुभं तेन यद्द्वादश जगतीं

---

1) H u Bb राजस् 2) H संसांसिसना, Bb संर्भामिसना 3) Ben schiebt hier ein वै ein 4) So M u Ben, in H u Bb संभृत्यस्त, H समृत्यस्त 5) So Ben; in H u Bb सतनुं; desgl B, ohne Accent, M संतनं 6) So M, die andern Mss द्विर्हि 7) So Ben; in M °शुमंतो, in H u Bb °शुं मंतो, B °शुमतो मो 8) So Ben u. M; in H u Bb स्थाप° 9) Bb °स्थाप्य

प्रजायन्त ऊरुणोपप्रवर्तयत्यूरू ह्यनु प्रजाः प्रजायन्ते दक्षिणेनोरुणोपप्रवर्तयति दक्षिणं ह्यूरुमनु प्रजाः प्रजायन्तेऽन्तरत उपप्रवर्तयत्यन्तरतो हि प्रजाः प्रजायन्ते यद्दक्षिणा प्रवर्तयेत्पितृलोक एनां निधुवेद्यद्य यदुदीचीरुपप्रवर्तयति मनुष्यलोकमेवैना उपप्रजनयति प्राजापत्यो वा उद्गाता संक्शाप्यमानो वा उद्गाता मन्या रेता आदत्ते यदाह वाची ते संदृशि विश्वं रेतो धेषीयेति तथा ह नादत्ते द्वादशे स्तोत्र उपप्रवर्तयति द्वादश मासाः संवत्सरो द्वादशामिष्टोमे स्तोत्राण्यापः शान्तिर्यत्स्तोत्र उपप्रवर्तयति शमयत्येव देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनमादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनौ वै देवानामध्वर्यू पूष्णो हस्ताभ्यामिति देवताभिरेव यावासीति रात्रे उत्क्षेपं देवेभ्यः सोममध्वरकृद्देवेभ्या इत्यध्वरं ह्येष देवेभ्यः करोतीन्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तमित्यैन्द्रो हि यज्ञ इन्द्रः खलु वा एतस्यान्या देवता अग्निन्द्राय त्वा वसुमते रुद्रवता इति वसवश्च ह्येनमेतर्हि रुद्राश्चान्विन्द्राय त्वादित्यवता इत्यादित्या ह्येनमेतर्ह्यन्वग्नये त्वा रायस्पोषद इत्यग्निर्वै सर्वा देवता एता ह्येनमेतर्हि देवता अनु विष्णवे त्वेति विष्णुर्हि यज्ञो व्यानो वा उपांशुसवनः प्रजा अंशवो व्यानं वा एतत्प्रजासु दधाति श्वात्राः स्थ वृत्रतुर इत्येषे वा अपां सोमपीथ एतं वै विश्वामित्रो ऽपां सोमपीथं

1) M एनां 2) So M u Ben., in H, Bb, B धुवेद् 3) So corrigirt (vgl Monatsberichte d Berliner Akad d Wiss 24 Juli 1879, p 689; Einleitung zum 1 Theil der Maitr S p. XI), die Mss schwanken, Ben शप्याप्य, M सप्याप्य; Bb संप्याप्य; B सप्याप्य indem zugleich unter der Ligatur प्य ein Rudiment des Buchstaben श angebracht zu sein scheint, H ist ganz undeutlich 4) M धापयेत्ते 5) So H u Bb; die andern Mss ष्टोमे 6) So H, Bb u B (cf TS 6, 4, 4, 1), M u. Ben एवैनाम 7) H, Bb u B schieben hier noch ein वै ein.

त्वा सुभव सूर्यायेति सूर्यदेवत्या हि सर्वे सोमा हूयन्ते ऽथो अन्नं वै देवानां प्रियास्तदन्वेवावरुन्द्धे देवेभ्यस्त्वा मरीचिपेभ्य इति रश्मयो वै देवा मरीचिपाः परिधयो रश्मयो ऽसा आदित्य आहवनीयस्तानेव प्रीणात्यूर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि तिष्ठन्वीर्यवत्तरो यं द्विष्यात्तस्य निषण्णस्तिष्ठञ्जुहुयात्प्राणानस्य छिनत्ति[1] विह्वारुको भवति यद्यभिचरेदा तमितोस्तिष्ठेद्यां पराहुतिमभित्वरमाणस्तां जगन्नुगच्छति[2] यदि कामयेत वर्षेत्पर्जन्य इति परिमृज्योर्ध्वमुन्मृज्यादोषधीभ्यो वा एषो ऽमुतो वर्षत्योषधीरेवं नेदोयो वृष्ट्या अकर्यदि कामयेत वर्षेत्पर्जन्य इति परिमृज्यावाचीनमवमृज्याद्वैश्वानरेणैव वृष्टिमपि हन्ति[3] नाभिधेयो यदपिदध्यात्प्राणमस्यापिदध्यात्प्रमायुकः स्याद्यं द्विष्यात्तस्यापिदध्यात्प्राणमेवास्यापिदधाति यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्य प्राणमपिदधामि ॥ इत्यपिदध्यात्प्राणमेवास्यापिदधाति ॥ इदमहममुष्यामुष्यायणस्य प्राणं सादयामि ॥ इत्यभिचरन्सादयेत्प्राण एवास्य सादयति प्रमायुको भवति प्राणाय त्वेत्यनभिचरन्त्सादयेत् ॥ ५ ॥

Vgl 1, 3, 4 — TS 6, 4, 5 (grahah, upançvoh), Çat Br 4, 1, 1, 4, 1,2 21 flg, Kap S 41, 9 u 42, 1 u 2

यविष्ठ वितन्वन्ति प्राणापानयोर्विधृत्या उपयामगृहीतो गृह्यते ऽपानेन वै प्राणो धृतः प्राणस्य धृत्या अन्तरिक्षं वा अन्तर्यामो ऽन्तरिक्षमिमाः प्रजा यदेतं प्राञ्चं सूदयन्सादयति प्रजास्वेव रसं दधाति[4] देवाश्च वा असुराश्चास्पर्धन्त ते देवा उपांशुमपश्यंस्तमगृह्णत

---

1) So Ben u M, die andern Mss छिनाति 2) So Ben u M, B °भित्वरमाण°, H u Bb °भिषरमाण 3) So Ben u M, die andern Mss °मप हन्ति 4) So Ben u M, die andern Mss °दधाति

तेन विर्विगृह्णाति त्रीणि वै सवनानि सवनान्येवाप्नोत्येतद्वा उपा॰शौ यज्ञ॰ समतिष्ठिप॰स्तेन सं॰स्थितेनारिष्टेन भूतेन प्रचरन्ति विर्विगृह्णाति त्रयो ३हीमे प्राणाः प्राणो ऽपानो व्यानो ऽथो त्रयो वा इमे लोका इमानेव लोकानाप्नोत्यसौ वा उपा॰शुरन्तरिक्षमन्तर्याम इयमुपयामो यदुपयामगृहीता गृह्यन्ते ऽनया वा एतद्गृह्यन्ते तदस्कन्ना वा ए३ते ऽनया हि गृह्यन्ते यत्स्थाल्या गृह्यन्ते ऽनया वा एतद्गृह्यन्ते ऽस्यां वा एषाधिक्रियते तदस्कन्ना वा ए३ते ऽनया हि गृह्यन्ते यद्दारुमयेण गृह्यन्ते ऽनया वा एतद्गृह्यन्त इय॰ हि वनस्पतीना॰ योनिस्तदस्कन्ना वा ए३ते ऽनया हि गृह्यन्त एष ते योनिरिति सादयतीय॰ वै सोमस्य योनिरस्याः सोमो ऽधि जायते स्व एवैन॰ योनौ दधातीय॰ वै देवपात्रं तद्य एव॰ वेद प्र वसीयसः पात्रमाप्नोति ब्राह्मणं तु पात्रे न मीमा॰सेत यः पाचिय इव स्यादनुपयामगृहीतो गृह्यते ऽनुपयामगृहीत॰ हि प्रजाः प्राणमुपजीवन्त्यपवित्रपूतो गृह्यते ऽपवित्रपूत॰ हि प्रजाः प्राणमुपजीवन्त्यसन्नो हूयते ऽसन्न॰ हि प्रजाः प्राणमुपजीवन्ति पवित्रपूता वा अन्ये सोमा अथ वा एष वाक्पूतो यदुपा॰शुस्तं स्वाहा वाचस्पतये पवस्वेत्याह वाक्पूतो ३ह्येऽषो ऽ॰शुभिः पावयति प्राणा वा अ॰शवः प्राणैरेवैनं पावयति द्वाभ्यां ॰भ्यां पावयति द्वौ ह्वौ ३हीमे प्राणा देवो देवानां पवित्रमसीति ॰न्स्वासोम॰ सोमेन पुनाति स्वांकृतो ऽसीति प्राणमेवं स्वंमकृत ॰॰॰॰ऽर्धिति मनसैवं प्राणमाप्नोति स्वाहा

1) In ॰ u. H findet sich das तुं; in Bb u. ॰ fehlt es. 2) So Ben u. M; die andern ॰ पांचीय 3) H, Bb u. B schieben hier noch ein वा ein 4) So corrigirt; die Mss. स्वार्दृति; cf. aber oben 1,3,4. Uebrigens liest aber auch Kap.S. 42,1 स्वार्दृति

त्वा सुभव सूर्यायेति सूर्यदेवत्या हि सर्वे सोमा हूयन्तेऽथो अन्नं वै देवानां प्रियास्तऽन्वसस्तान् एवावरुन्द्धे देवेभ्यस्त्वा मरीचिपेभ्य इति रश्मयो वै देवा मरीचिपाः परिधयो रश्मयोऽसा आदित्य आहवनीयस्तानेव प्रीणात्यूर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि तिष्ठन्वीर्यावत्तरो यं द्विष्यात्तस्य जिह्मस्तिष्ठञ्जुहुयात्प्राणानस्य छ्लिनाति[1] विह्वारुको भवति यद्यभिचरेदा तमितोस्तिष्ठेदग्निराहुतिमभितंरमाणस्ताजंगनुगच्छति[2] यदि कामयेत वर्षेत्पर्जन्य इति परिमृज्योर्ध्वमुन्मृज्यादोषधीभ्यो वा एष ऊर्ध्वो वर्षत्योषधीरेव नेदोषा वृष्ट्या अकर्यदि कामयेत वर्षेत्पर्जन्य इति परिमृज्यावाचीनमवमृज्याद्वैश्वानरेणैव वृष्टिमपि हन्ति[3] नापिधेयो यदपिदध्यात्प्राणमस्यापिदध्यात्प्रमायुकः स्याद्यं द्विष्यात्तस्यापिदध्यात्प्राणमेवास्यापिदधाति यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्य प्राणमपिदधामि[4] ॥ इत्यपिदध्यात्प्राणमेवास्यापिदधाति ॥ इदमहममुष्यामुष्यायणस्य प्राणं सादयामि ॥ इत्यभिचरन्सादयेत्प्राण एवास्य सादयति प्रमायुको भवति प्राणाय त्वेत्येनमभिचरन्सादयेत् ॥ ५ ॥

Vgl 1, 3, 4 — TS 6, 4 5 (grahah, upamçuh), Çat Br 4, 1, 1, 4, 1 2 21 flg, Kap S 41, 3 u 42 1 u 2

पवित्रं वितन्वन्ति प्राणापानयोर्विधृत्या उपयामगृहीतो गृह्यतेऽपानेन वै प्राणो धृतः प्राणस्य धृत्या अन्तरिक्षं वा अन्तर्याऽमोऽन्तरिक्षमिमाः प्रजा यदेतत्पात्रं सूदवत्सादयति प्रजास्वेव रसं दधाति देवाश्च वा असुराश्चास्पर्धन्त ते देवा उपांशुमपश्यंस्तमगृह्णत

---

1) So Ben u M, die andern Mss छिणाति 2) So Ben u M, B °भिलपमाण°, H u Bb °भिचरमाण 3) So Ben u M, die andern Mss °मेव इति 4) So Ben u M, die andern Mss °दधाति

तं पुरा स्तोत्रात्पुरा शस्त्राद्धोतुमुपोदतिष्ठꣳस्ते ऽसुरा अचिकयुर्जुह्वति वा इति ते वज्रमादायाभ्यूपतꣳस्ते देवा अन्तर्याममपश्यꣳस्तम् गृह्णत तेनासुरानेभ्यो लोकेभ्यो ऽन्तरदधत ततो देवा अभवन्परासुरास्तथो एवैष एवं विद्वानन्तर्यामं गृह्णीते ऽन्तर्यामेनैव भ्रातृव्यमेभ्यो लोकेभ्यो ऽन्तर्धत्ते भवत्यात्मना परास्य भ्रातृव्यो भवति प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेवं ग्रावाणावन्तरेते पात्रे सादयति प्राणापानयोर्विधृत्यै यौ वा एतौ इज्यते येनैतौ विधृता एष वाव स उपाꣳशुसवनो ग्रावा प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेते पात्रे एतं ग्रावाणमा तृतीयात्सवनान्न जहीतस्तस्मात्सुप्तस्य सर्वाण्यन्यानि श्रोत्राण्यपक्रामन्ति प्राणापानौ त्वेनं न जहीतो ऽथ यत्पुनरर्दयति तस्मात्सुप्ताः पुनः प्रबुध्यन्ते प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेते पात्रे एतं ग्रावाणमा तृतीयात्सवनान्न जहीतस्तस्मात्पक्षिणो विपत्य पक्षानीरयन्तो नावपद्यन्ते ऽथ यत्पुनरर्दयति तस्मात्पुनरभ्यायुवते प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेते पात्रे पुनः प्रयुज्येते तस्मादिमौ द्वा अधस्तात्प्राणौ घ्नन्ति वा एतत्सोमꣳ यदभिषुण्वन्त्यध्वर्युः प्रथमो ऽभिषुणोति व्यर्धुको भवति यत्र मूलं तदभिपुत्य एतद्धा अस्य विदेवतमं तथा हाव्यर्धुको ह भवति यो वै देवक्षेत्रꣳ विद्वाꣳस्समर्पयत्यार्तिमार्छति पात्राणि वाव देवक्षेत्रꣳ यत्र वा अग्रे ऽध्वर्युः सोमं जुहोति तदेनं देवताः प्रत्यासत इह नो परमा हरिष्यतीति यत्ततो ऽन्यत्र जुहुयाद्यदस्य स्वं तदन्येभ्यः प्रयच्छेदस्वो ह

1) So Bcu u M, die andern Mss °र्द्धयति 2) B विपतय 3) So Bcu u M, die andern Mss °र्द्धयति 4) M (u Bl, ohne Accent) हरिष्यतीति

भवत्येतद्वा अध्वर्योः स्वं यदाश्रावयति यदाश्राव्याहुत्वा प्रच्यवेत यदस्य स्वं तस्मात्प्रच्यवेतास्वो ह भवत्येतद्वा अध्वर्योः स्वं यद्वाय३व्यं यद्वाय३व्यमनालभ्याश्रावयेद्यदस्य स्वं तस्माच्छिद्येतास्वो ह भवति तद्ध एवं विद्वानाश्राव्य हुत्वा वाहुत्वा वा प्रच्यवते यद्वस्य स्वं भवति न स्वाच्छिद्यते वायव्यमालभ्याश्रावयति स्ववानेव भवति ॥६॥

Vgl 1, 3, 5 — TS 6, 4 6 (antaryamah), Çat Br 4 1, 2, Kap S 41, 9, 42 2

ब्रह्मवादिनो वदन्ति किं तद्यज्ञे क्रियते यस्माद्धस्तादाना अन्ये पशवो मुखादाना अन्य इति यदुपांशुं हस्तेन गृह्यते तस्मान्मर्कटः पुरुषो हस्ती ते हस्तादाना मुखं वै वाय३व्यं यद्वाय३व्ये नेतरे ग्रहा गृह्यन्ते तस्मादितरे पशवो मुखादाना ब्रह्मवादिनो वदन्ति किं तद्यज्ञे क्रियते यस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति संवत्सरे पुरुषा इत्युपांश्वन्तर्यामौ वा अन्वन्ये पशवः पुरुषस्त्वै यज्ञेन संमितः प्राणापानौ वा उपांश्वन्तर्यामौ यदेतौ ग्रहा असन्नौ हूयेते तस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति संवत्सरो वा अग्निष्टोमो द्वादश मासाः संवत्सरो यदेत इतरे ग्रहाः साद्यन्ते तस्मात्पुरुषो जातः संवत्सरे प्रतितिष्ठति यन्ने सोमादाभ्यं नाम जागृवीत्येष वै सोमस्य सोमपीथः सोमं वा एतत्सोमपीथेन समर्धयति यो वै सोमस्य सोमपीथं वेद न सोमपीथाच्छिद्यते सोमो वा इमा दि३शो ऽभ्यकामयत प्रागपागधरागुदगित्याभिरेनं दिग्भिः समूहत्याभिः समर्धयति काममेनं गमयति कामं ह गच्छति कामुका एनं स्त्रियो भवन्ति यां कामयेत तां तर्हि मनसा ध्यायेत्सा हैनं कामयते ऽव निसरेति

---

1) H u Bb वाहुत्वा, desgl B ohne Accent 2) So Ben u M, die andern Mss स्वं 3) Bh दिशो 4) So Ben u M, die andern Mss सं

समेति वा एतदाह समरिविदामिति संमनेन वित्स्वेति वा एतदाह चत्वारि वै पृष्ठेः स्तना आसंस्तांस्त्रिभिर्देवेभ्यो ऽदुहत्कुशीभिरेको ऽनुनद्ध आसीत्तं वा इन्द्र एवापश्यत्तेनेन्द्रायैवादुहत्तद्वा अस्य कौशिकत्वं यदाह ॥ ब्राह्मण कौशिका इव ॥ इति चतुर्निग्राभमुपैति चत्वारि वै पयांसि यावदेव पयस्तदाप्नोति त्रिः संभरति तस्मादेतस्यां त्रयो भागाः प्रातर्मध्यंदिने सायं चतुर्निग्राभमुपैति त्रिः संभरति तत्सप्त सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्द्धे नव कृत्वो निग्राभमुपैति त्रिः संभरति तद्द्वादश द्वादश मासाः संवत्सरो ज्योतिष्टोमे स्तोत्राण्येषा यज्ञस्य मात्रा स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्तस्य देवास्तमो ऽपाघ्नन्यत्प्रथमं तमो ऽपाघ्नन्त्साविः कृष्णाभवद्यद्द्वितीयं सा लोहिनी यत्तृतीयं सा बलक्षी स स्वेन रूपेण निरमुच्यत यद्वलक्षः पवित्रं भवति ततः शुक्रो गृह्यते यजमानस्य वा एतत्पवित्रं यजमानमेवैतेन पुनात्यमोतं स्यादात्मन एवैनदकृत यदन्यमोतमपवित्रं तद्यजमानस्य ॥ ७ ॥

Vgl 1, 3 4 — TS 6, 4, 4—6, Kap S 42, 2 u 3

याग्वा ऐन्द्रवायवः सा वै वागेकधावदद्यावद्व्यावृत्तासीत्स इन्द्रो ऽब्रवीन्मह्यमनापि सोमं गृह्णीताहं व एतां वाचं व्यावर्तयिष्यामीति स व वाचैव वाचं व्यावर्तयद्यदैन्द्रवायवो गृह्यते वाचो व्यावृत्त्यै वायवे प्रथमं गृह्णाति वायव उत्तमं मध्यत इन्द्रायेन्द्रियेण वा इयं वाङ् मध्यतो विधृतेन्द्रियवतीं वाचं वदति य एवं

1) M ब्रुह कु° 2) So die Mss 3) M भोगा' 4) So Ben u M, in H वलच', in Bb der Accent zweifelhaft 5) Bb °मपवित्र H °मपवित्र 6) So Ben u M, die andern Mss गृह्णीयाताहं 7) Bb °यिष्यामीति 8) So Ben u M, H u Bb गृह्णीत, B गृह्णाति

वेद देवा वै सोममजिघांसंस्तं नाशक्नुवन्हन्तुं वायुर्ह स्विन्नलं रासीत्प्राणस्ते देवा अपाशासुरेष न आवर्तस्वेति सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्सो ऽब्रवीन्मद्देवत्यान्येव पात्राण्यासन्निति तस्मादप्तुरीयं वायोः पात्रमथ वायव्यान्युच्यन्ते ततो वै देवाः सोममघ्नंस्स हतो ऽपूयत्तस्माद्देवा उदवीभत्सन्त स वायुरब्रवीदहं व एतं सोमं स्वदयिष्यामि भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्सो ऽब्रवीन्मदग्रा एव ग्रहा गृह्यान्ता इति तं वायुर्मध्यतो ऽवात्तमस्वदयत्तस्माद्वाय्वग्रा ग्रहा गृह्यन्ते तस्माद् शुक्तं प्रवाते विषजन्ति देवा वै प्रातःसवनमुद्यन्तुं नाशक्नुवंस्तृतीयसवने तर्हि वायुरासीत्ते देवाः प्रातःसवनमभिपर्यौहंस्तेन प्रातःसवनमुदयच्छन्त यदैन्द्रवायवः प्रातःसवने गृह्यते प्राणो वै वायुः प्राणेन वा एतन्मुखतो यज्ञमुद्यच्छन्ते देवा वै वृत्रमजिघांसंस्ते मित्रो ऽब्रवीन्मित्रः सो ऽहमस्मि नाहं हनिष्यामीति ते ऽब्रुवन्नप ऽस्येवेति सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्सो ऽब्रवीत्पयस्यैव मे सोमं श्रीणान्निति तस्मात्पशवो ऽपाक्रामन्मित्रः सन्क्रूरमकरिति पशूनां हि पयो यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेवैनं सम्यञ्चं दधाति यन्मैत्रावरुणं पयसा श्रीणाति विदेलत्वाय यच्छीतं तेन मैत्रं यच्छृतं तेन वारुणं ब्रह्म वै मित्रः क्षत्रं वरुणो ब्रह्मणि च वा एतत्क्षत्रे च पयो दधाति तस्माद्ब्रह्म च क्षत्रं च पयस्वितमे पञ्च वै ब्राह्मणस्य देवता अग्निः सोमः सविता बृहस्पतिः सरस्वती तस्माद्ब्राह्मणमन्ये मनुष्या उपधावन्त्येतस्य हि भूयिष्ठा देवतास्तासां तिस्रो ऽवान्तरं श्रोत्रिय-

---

1) So schreibe ich mit Bb; die andern Mss गृह्यंता; cf TS 6,4,7,1  2) H u Bb गृह्णते  3) Bb शुक्र  4) Bsn ॰ष्यामीति  5) So Bb, die andern Mss. ऽवाप॰

स्याग्निर्बृहस्पतिः सरस्वती तस्मान्न्यौचित्यमध्योचिया उपधावन्त्येतस्य ह्यवान्तरं भूयिष्ठा देवतास्तां मैत्रावरुणं प्रति न्यागच्छन्ति यन्मैत्रावरुणं पयसा श्रीणाति तास्वेव पयो दधाति नाना वै पुरा मित्रावरुणाभ्यां सोमा अगृह्णंस्ताः प्रजा अन्यान्यस्याः[3] परिहायमा-ददत ततो मित्रावरुणाभ्यां सह सोममगृह्णंस्ततो वा अकल्पत यन्मैत्रावरुणं पयसा श्रीणाति मित्रेण वा एतद्वरुणं कल्पयति वरुणेन मित्रं मित्रं वै वृत्रं जघ्निवांसं वरुणो ऽगृह्णात्तं देवेभ्यो-नायत ते ऽब्रुवन्वरुणो नायस्वेति स वरुणो ऽनायत सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्सो ऽब्रवीत्तेनैव नौ पयसा सोमं श्रीणा-निति यन्मैत्रावरुणं पयसा श्रीणाति यजमानस्य निर्वरुणत्वाय यद्येनं भ्रातृव्यो ऽतीव स्याद्यदङ्गुल्याङ्गुष्ठमवगृह्णीयाद्यद्यन्वङ्गुष्ठेनाङ्गु-लिम् ॥

यो नो मित्रावरुणा अभिदासात्सपत्नो भ्रातृव्य उत्पिपीते बृ-हस्पते ।

इदमहं तमधरं पादयामि यथाहमुत्तमश्चेतयानि ॥

इत्युत्तमो ह चेतयति ॥ ८ ॥

Vgl 1, 3, 6 u. 7. — TS 6, 4, 7 (aindravāyavah) u 8 (maitrāvaruṇah); Çat. Br. 4, 1, 3 u 4; Kap. S 42, 3 u. 4.

देवा वै सत्त्रमासत कुरुक्षेत्रे ऽग्निमखो वायुरिन्द्रस्ते ऽब्रुवन्य-तमो नः प्रथमं यशो व्यश्नवत् नः सहेति तेषां वै मख आर्च्छन्न्यका-

1) So M, in Ben °न्यौचित्या, in H u. Bb °मध्यौचिया betont   2) So H u. Bb; in Ben [illegible] , M [illegible]   3) M अन्यान्यस्या   4) So H u. Bb; in Ben u. M [illegible]   5) M (u. B), °[illegible]; Bb °[illegible]   6) M (u. B) व्यश्नवत्   7) Das वै fehlt in M (u. B).

मयत तं न समसृजत तदस्य प्रासहादित्सन्त स इत एवं तिस्रो ऽजनयत्ततो धनुस्त्रिसृण्वां च धन्वनश्च जन्म स प्रतिधायापाक्रामत्तं नाभ्यधृष्णुवन्त्स धन्वार्तिं[1] प्रतिष्कभ्यातिष्ठत्स[2] इन्द्रो वम्रीरब्रवीदेतां ज्यामपत्स्यतेति[3] ता अब्रुवन्नभिमृतायां वा अस्यां न शक्ष्यामो जीवितुं भागो नो ऽस्त्विति सो ऽब्रवीद्रसमेवास्या उपजीवाथेति तस्मादेताः शुष्कादार्द्रमुद्दिहन्ति रसं ह्यस्या उपजीवन्ति ता वै ज्यामपादंस्तस्य धन्वार्तिरुदय्य[4] शिरो ऽच्छिनत्स सम्राडभवदथैतं त्रेधा व्यगृह्णताग्निः[5] पूर्वार्धमिन्द्रो मध्यं वायुर्जघनार्धं[6] तस्मादाग्नेयं प्रातःसवनमैन्द्रं माध्यंदिनं सवनं वैश्वदेवं तृतीयसवनं वायुर्हि विश्वे देवाः प्राणापानौ वा उपांश्वन्तर्यामौ व्यान उपांशुसवनो वागिन्द्रवायवौ दक्षक्रतू मैत्रावरुणः श्रोत्रमाश्विनः चक्षुषी शुक्रामन्थिना आत्माग्रायण उक्थान्युक्थ्या आयुर्ध्रुवः स्तना ऋतुपात्रे मूर्धा द्रोणकलशः कुक्षी कलशौ हनू अधिषवणे जिह्वाधिषवणं ग्रावाणो दन्ता अक्षाः परिधयो नासिकोत्तरवेदिः शिखा यूपः शिरो हविर्धानं पृष्ठमाग्नीध्रमुदरं सदो यदन्तरुदरे तद्धिष्ण्याः पार्श्वे आग्नीध्रश्च मार्जालीयश्च[7] पार्ष्णी गार्हपत्यः प्रतिष्ठा वेदिरेष वै प्रजापतिः पाषीयः स ह वा एनं वेद य एवं वेद ॥ ९ ॥

Vgl (TA 5 1)

1) M (n Bl ohne Accent) धन्वार्ति 2) Ben प्रतिस्कभ्या॰ 3) H ज्यामपत्यैति
4) So Ben, u M (n Bl ohne Accent) धन्वार्तिरुदय्य die andern Mss धन्वार्तिरुदेय 5) So Ben, desgl M ohne Accent (n Bl), B व्यगृह्णीता॰, H व्यगृह्णिता॰, Bb व्यगृह्णाता॰ 6) M (n Bl) ॰नार्धं 7) So Ben u M, die andern Mss मार्जालीयस्य
8) Das इति fehlt in den Mss

॥ इति[8] खिलकाण्डे पञ्चमः प्रपाठकः ॥

नवैते प्रातर्ग्रहा गृह्यन्त इमे वा एते गृह्यन्ते नव प्राणा आश्विनो दशमो गृह्यते व्यानो वा एष गृह्यते नाभिरेव दशमो गृह्यते तृतीयो हूयते तृतीयो ह्ययं प्राणः प्राणानां संतत्यै सर्वे वा एते ग्रहाः स्तोत्रवन्तः शस्त्रवन्तो निदानवन्तो निदानवान्भवति य एवं वेद होता वा अद्य प्रातरुपांशुमयजत्तेनैत उक्थवन्तो ऽथ यं होता तूष्णींशंसं शंसति तेनैवैत उक्थवन्तो नवैते प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते त एते सामन्वन्तो हिंकारेणाश्विनः सामन्वानैन्द्रवायवेनैन्द्रवायवो मैत्रावरुणेन मैत्रावरुण ऐन्द्रेण शुक्रामन्थिनौ वैश्वदेवेनाग्रायण उक्थायोक्थ्यो गृह्यत उक्थाय ध्रुवः संतत्या ऐन्द्राग्नः संतत्यै मरुत्वतीया अध्वर्युर्जुहोति होता वषट्करोति प्राणान्वा एतत्प्रयच्छो येन मन्त्रेणाध्वर्युः प्रयच्छति तेन होता प्रतिगृह्णाति प्राणानां गोपीथाय प्रजापतिर्वै स्वयं होतासीत्सो ऽताम्यत्तं देवा द्विदेवत्यैरभ्यधावन्प्राणा वै द्विदेवत्या यदध्वर्युर्द्विदेवत्यान्हुत्वा क्षिप्रं होतारमभ्याद्रवति प्राणैर्वा एतद्धोतारमभिधिनोति वषट्कारे वषट्कारे वै होता प्राणस्यान्तं गच्छति प्राणा वै द्विदेवत्या यदध्वर्युर्द्विदेवत्यान्हुत्वा क्षिप्रं होतारमभ्याद्रवति प्राणैर्वा एतद्धोतारमभिधिनोति प्राणा वै द्विदेवत्याः पशवा इडा यद्द्विदेवत्यानभक्षयित्वेडामुपह्वयेत पशुभिः प्राणानन्तरियाद्यद्द्विदेवत्यान्भक्षयित्वेडामुपह्वयते प्राणान्वा एतदात्मन्धित्वाय पशूनुपह्वयत इन्द्रियं वै सोमः पशव इन्द्रियं यत्सोमं भक्षयतीन्द्रियमेवात्मन्धत्ते सर्वत आश्विनं परिहारं भक्षयति तस्मात्सर्वा दिशः शृणोति ॥ १ ॥

Vgl. 1, 3, 8 — TS 6, 4, 9 (âçvinaḥ), Kāṭh 27, 5; Kap [illegible] 42, 5

1) Bcn °नैवैते 2) Bb तं रेतं 3) H u. Bb °भिमंहोतार° 4) M पशुंसु°

यद्वै पात्रं रिक्तमनुन्मुक्तं तदनु रक्षांसि यज्ञमन्ववयन्ति यदैन्द्रवायवे पुरोडाशमवदधाति मैत्रावरुणे पयस्यामाश्विने धाना अरिक्तत्वाय वि वा एतद्यज्ञश्छिद्यते यत्सवनानि संतिष्ठन्ते यदेतानि पात्राण्या तृतीयात्सवनात्परिशेरे यज्ञस्य संतत्या अविच्छेदाय वायव्याया अस्यमानायां पात्राणि विमुञ्चति प्राणो वै वायुः प्राणेन यज्ञः संततः प्राणेनैव यज्ञं संतनोति ॥ एकया च दशभिश्च स्वभूते[1] द्वाभ्यामिष्टये विंशत्या च तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्च ॥ इत्याह विमुक्त्या एवावगतं[2] वा अध्वर्युपात्रं निरूढं प्रतिप्रस्थानं यदि कामयेत यो बहिस्तं ग्रामे कुर्यां[3] यो ग्रामे तं बहिरिति ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां[4] विशि निरूहामि ॥ इत्यध्वर्युपात्रे निरूह्य ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विशि सादयामि ॥ इति प्रतिप्रस्थाने सादयेद्यो बहिस्तं ग्रामे करोति यो ग्रामे तं बहिरध्वर्युपात्रं वै यजमानस्य पात्रं प्रतिप्रस्थानं भ्रातृव्यस्य यदि कामयेत समावद्वीर्यमेनं[5] भ्रातृव्येण कुर्यामिति प्रबाहुग्गृह्णीयातां प्रबाहुक् सादयेतां प्रबाहुग्जुहुयातां समावद्वीर्यमेवैनं भ्रातृव्येण करोत्यध्वर्युपात्रं वै पात्रं पापीयः प्रतिप्रस्थानं यदि कामयेत पापवसीयसं स्यादिति पूर्वो गृह्णीयात्पूर्वः[6] सादयेत्पूर्वो जुहुयादेतेन वै विपूजनः सौराकिः पापवसीयसं चकार तत्पापवसीयसमेवैतेन करोति यज्ञस्य वै सृष्टस्य शिरो ऽच्छिद्यत तस्मै देवाः प्रायश्चित्तिमैच्छंस्तथ वा एतौ तर्हि देवानां भिषजा आस्ताम-

---

1) Bb स्वभूते 2) So Ben u. M, in H u. Bb एवावहृतं; B एवावकृतं 3) So Ben, die andern Mss कुर्यांद्वो 4) So corrigirt, die Mss ॰मुष्यां 5) H u. Bb समावद्वीर्यमे॰ 6) In Bb गृह्णीयात् ohne Accent

श्विना असोमपौ तौ उपाधावन्यथा भिषजमुपधावन्त्येवमिदं यज्ञस्य शिरः प्रतिधत्तमिति तौ अब्रूतां भागो ना अस्त्विति वृणाथामित्यब्रुवंस्तौ[1] अब्रूतां ग्रहं नौ गृह्णन्तु सोमपीथमश्नवावहा[2] इति तद्वा अश्विनौ प्रत्यधत्तां तस्मादाश्विनीभिरभिष्टुवन्त्यश्विनौ हि प्रत्यधत्तां तौ वै बहिष्पवमानेनैवं पावयित्वा ताभ्यां पूताभ्यां यज्ञियाभ्यां भूताभ्यां ग्रहमगृह्णंस्तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते तस्माद्ब्राह्मणेन बहिष्पवमानमभिसृप्यं पवित्रं हि तत्तस्माद्ध धिष्ण्यात्तं परिबाधेत तद्वै भेषजं त्रेधा विन्यदधुरग्नौ तृतीयं ब्राह्मणे तृतीयमप्सु तृतीयं तद्य एवं विद्वानग्नेरन्ते ब्राह्मणाय प्रोच्याप्सु भेषजं करोति समर्धुकं[3] ह भवति यावद्धि भेषजं तत्क्रियते वास्तुहानि वा एतत्पापाणि भवन्ति यद्ग्रहान्गृहीत्वा बहिष्पवमानं सर्पन्ति वैष्णव्यर्चा पुनरेत्य संमृशति विष्णुर्वै यज्ञो विष्णुनैवैनानि यज्ञेन स्वर्गं लोकं समारोहयति[4] ॥ २ ॥

Vgl. TS 6, 4, 9 (açvinah), Kaṭh 27, 5 u 6, Kap S 42, 4 u 5

प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिना असौ आदित्यः शुक्रश्चन्द्रमा मन्थी तस्य वै प्रजापतेः सव्यं चक्षुरश्वयत्ततो ये स्तोका अवापद्यन्त तैरिदं वर्पेत्यैकविंशतिर्वै[5] ते ऽवपेदुस्तान्वायुरमुतो विसृजति प्रजानां कृत्यै तस्य या कनीनिका परापतत्स यवो ऽभवद्यन्मन्थिनं सक्तुभिः श्रीणाति चक्षुरेवास्य संभावयति मिथुनं वै सोमश्च सक्तवश्च यन्मन्थिनं सक्तुभिः श्रीणाति मिथुनत्वायार्तिं वा एतत्पात्रं यन्मन्थिपात्रं यं द्विष्यादृत्विजां तस्मै हरेदार्तिमार्छति पं-

1) H u B वृणाथा° 2) Ben °वामहा 3) H u Bb °र्धं° 4) Bb °रोहति 5) Ben संपेतें°

षण्डामर्कौ वा असुराणां पुरोहिता आस्तां तान्देवा नाशक्नुवन्हन्तुं ब्राह्मणवन्तो ह्यासंस्तौ देवा अपाशासुरुप ना आवर्तेथामिति ता अब्रूतां भागो ना अस्त्विति वृणाथामित्यब्रुवंस्ता एतौ शुक्राम-न्थिना अवृणातां ते देवा अमन्यन्त यदिमा असुर्यौ सोमौ हो-ष्यामस्तदेवासुरा आभविष्यन्ति येन होष्यामस्तदस्वाभविष्यन्तीति ता अपनुद्यायैन्द्रायाजुहवुस्तस्मादेतावन्यदेवत्यौ गृह्येते ऐन्द्राय हूयेते अपनुत्तौ षण्डामर्कौ सह तेन यं द्विष्म इति षण्डामर्कयोरेवैन स-हापनोदेनापनुदते ॥ आयुः पाहि प्रजां पाह्यमुष्य वीरतां पाहि ॥ इति सादयेद्यो ऽस्य प्रियः स्यात्तस्य शुक्रं वै प्रति राष्ट्रं मन्थिनं नि-रुद्धं मध्यता इति ऽह्येतद्राष्ट्रमाहुर्यन्निरुद्धं भवति यदि कामयेत यो बहिस्तं ग्रामे कुर्यां यो ग्रामे तं बहिरिति ॥ इदमहममुमामुष्याय-णममुष्याः पुत्रममुष्या विशो निरूहामि ॥ इति शुक्रपात्रं निरुह्य ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विशि सादयामि ॥ इति मन्थिपात्रं सादयेद्यो बहिस्तं ग्रामे करोति यो ग्रामे तं बहिरेति वा एतत्पात्रं यन्मन्थिपात्रं यच्छुक्रपात्रं पुनः प्रयुज्यते तस्मादिमे समावद्वीर्ये तस्मादाभ्यां समावत्पश्यत्यसौ वा आदित्यः शुक्रश्चन्द्र-मा मन्थी यदपिधाय प्राञ्चा हुतस्तस्मादेतौ प्राञ्चौ यन्तौ न पश्यन्त्यथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति यदपिधाय प्राञ्चा हुतस्तस्मात्पराङ् प्राणो ऽथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्पुनरपानो यदपिधाय प्राञ्चा हुतस्तस्मात्पराञ्चो

1) So corrigirt; die Mss तौ देवा 2) H u Bb अब्रुतां 3) So Ben u. M; in B असुऽर्यौ; H u. Bb असुऽर्यौ 4) So Ben, in H u Bb गृह्येते, desgl. M (u. Bl) u. B, ohne Accent. 5) So M (u. Bl), die andern Mss. हूयन्ते, H हूतये 6) So Ben; desgl. M (u. Bl), ohne Accent, die andern Mss कुर्यांर्यो, cf oben 4, 6, 2. 7) So corrigirt; die Mss °मुंष्या°; cf oben 4, 6, 2. 8) H u Bb पश्यति

गर्भं धीमन्ते । अथ यदेनौ पिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्प्रत्यञ्चः प्रजायन्ते । चक्षुषी वै शुक्रामन्थिनौ । नासिकोत्तरवेदि[1] । यद्दक्षिणाभ्यामाक्रमेते । चक्षुषी वा एतत्प्रधत्तो । अथ यदुपरिष्टादाक्रमेते तस्मादिमे उपरिष्टाच्चक्षुषी । तुष्टो ऽसि जनधाया । देवास्त्वा शुक्रपाः प्रणयन्त्विति । या अग्नीः प्रजास्तासामेष योनिस्ता एतमनु प्रजायन्ते । तुष्टो ऽसि जनधाया । देवास्त्वा मन्थिपाः प्रणयन्त्विति । या आद्याः प्रजास्तासामेष योनिस्ता एतमनु प्रजायन्त । उभयीरेव प्रजाः प्रजनयत्यग्नीश्चाद्याश्च । शुक्रमन्वारभन्ते । तेजो वै शुक्रो ब्रह्मवर्चसं । तेज एव ब्रह्मवर्चसमन्वारभन्ता । इन्द्रेण मन्युना युजेति शुक्रेण परियन्ति । मन्युना वै युजेन्द्रो ऽसुरानवाबाधत । मन्युना वा एतद्युजा यजमानो भ्रातृव्यमवबाधते । संजग्मानौ दिवा पृथिव्येत्यरत्नी संधत्त । इमानि वा एतत्संधत्तो यत्प्राचे संदध्यातां नेदमन्तरा[2] स्यादथ यदरत्नी संधत्तस्तस्मादिदमन्तरा । चक्षुषोर्विधृत्यै । पुमांसं गर्भमाधत्तं गवीन्योरिति । तदनु स्त्रीष्व्यो[3] यजमानस्य गावो भवन्ति । वीरं पत्नी जनयति । शुक्रस्याधिष्ठानमसि । मन्थिनो ऽधिष्ठानमसीति शकलौ प्रास्यतः । समिद्धा एवैतयोरग्नौ आहुतीनां प्रतिष्ठित्यै । निरस्तः षण्डो[4] । निरस्तो मर्कः सह तेन यं द्विष्म इति शकलौ[5] निरस्यत । एतावान्वा लोको यावदुज्ञत[6] यावानेव लोकस्तस्माद्यजमानो भ्रातृव्यं निर्भजति । श्रीणन्त्यन्यान्सोमान्नान्यांस्तत्सोमानां मिथुनं । याञ्छ्रीणन्ति ताननुवषट्करोति । यान्न

---

1) H u Bb °वेदि 2) So Ben u M die andern Mss नैदम° 3) So Ben u M, die andern Mss स्त्रीश्यो 4) Bb षण्डो, wir hatten wohl auch oben 1, 3 12 mit M 1 षण्डो schreiben sollen, übrigens aber schreibt Kath in dem hier entsprechenden Cap 31, 8 शुण्डामर्कौ 5) Bb सकलौ 6) So Ben u M, die andern Mss °ददात

घ्नीर्णन्ति तानेनुवीध्रति दारुमयान्यन्यानि पात्राणि मृन्मयान्यन्यानि तत्पात्राणां मिथुनं यो वै सोमस्य च पात्राणां च मिथुनं वेद मिथुनो एनं पशवा उपतिष्ठन्ते ॥ ३ ॥

Vgl. 1, 3, 10. 11 u. 12 — TS 6, 4, 10 (çukrâmanthinâu), Kâth. 27, 7 u. 8; Kap. 8, 43, 1.

प्रजापतिर्वा आग्रयणो ये देवा दिव्येकादश स्थेत्येतावन्तो वै देवा यावन्त एव देवास्तेभ्यो गृह्यत आग्रयणं वै गृहीत्वा देवाः स्वर्गं लोकमायंस्तेनासुरा अभ्यशंसन्त ततो देवा अभवन्परासुरास्तद्य एवं विद्वानाग्रयणं गृह्णीते भवत्यात्मना परास्य भ्रातृव्यो भवति य आनुजावरः स्यात्स आग्रयणाग्रान्ग्रहान्गृह्णीताग्रं ह्याग्रयणो यद्यभिचरेत् ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥

इति पुरोरुचं कुर्यादग्रंजति ह्येवाथो वाग्वै सरमा वाचमेवैषा वृङ्क्ते स्तरां वा एषा यज्ञस्य तस्माद्यत्किंच प्राचीनमाग्रयणात्तदुपांशु चरन्त्यथ वा एतदाग्रयणं प्रति वाचं विसृजन्ते यज्ञमेवाभ्यां वाचं विसृजन्ते वाग्वै देवेभ्यो ऽपाक्रामत्ते देवास्तूष्णीं यज्ञमतन्वत सा वागमन्यतान्तर्वै मा यज्ञाद्यन्तीति साग्रायणं प्रति न्याद्रवत्तस्मादाग्रयणं प्रति वाचं विसृजन्ते हिंकृत्य वाचं विसृजन्ते प्राणो वै हिंकारो वाक् प्राणस्तद्वाच एवैषा युक्तिर्यद्धिंकरोति त्रेधा उद्गीयं वाग्वदति शनैरुच्चैरथ सूच्चैर्यावत्येवं वाक् सास्य युज्यते श्रेयो वै

1) So M; desgl. B, ohne Accent, Ben विध्रति; Bb वीध्रति; H वीध्रति oder वीध्रति 2) Bb आग्रयणो 3) In H u. Bb zweimal यावन्त एवं देवा 4) Bb आग्रयणं 5) Bb °ग्रयणं 6) Bb आग्रयण° 7) Bb °ग्रयणो 8) M स्तरां 9) Bb °ग्रयणा° 10) Bb ग्रयणं 11) Ben ग्राग्रा° 12) M सूच्चै

प्राजापत्या ऋत्विज उद्गाता प्रस्तोता प्रतिहर्ता ते वा अस्यैतर्हि वृत्ता[1] अयुक्ता यद्धिंकरोति[2] तेनैवास्य ते वृत्ता[3] युक्ता भवन्ति वाक् च मनश्चावदेतामहं श्रेयानस्म्यहं श्रेयानसीति तौ प्रजापतिं प्रश्नमैतां सा वागब्रवीन्नैवं मया किं चनानभ्युदितं[4] क्रियता[5] इत्यथ मनोऽब्रवीन्नैवं मया किं चनानभिगतं क्रियता इति स मनसेऽन्वब्रवीत्सा वागब्रवीदहं हव्यवाडेवाहं तुभ्यमसानीति तस्मादेषा प्रजापतये[6] ऽहव्यवाट् तस्माद्यत्किंचोपांशु क्रियते तदाहुः कृतमेतत्क्रियता इति प्रजापतये हि क्रियते द्वाभ्यां धाराभ्यां प्रातःसवने गृह्णाति तिसृभ्यो माध्यंदिने सवने चतसृभ्यस्तृतीयसवने तन्नव नव प्राणा आत्माग्रायणः प्राणानेवात्मन्धत्ते वि वा एतद्यज्ञश्छिद्यते यत्सवनानि संतिष्ठन्ते ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुक्षितो महिनैकादश स्थेति देवताभिर्वै[7] यज्ञः संततो देवताभिरेव यज्ञं संतनोति प्रजापतिर्वा आग्रायणो यत्सर्वेषु सवनेष्वभिप्रस्कन्दयति प्रजापतिर्वा एताः प्रजा अभिजिघ्रति प्रजापतिर्वा आग्रायणो यत्सर्वेषु सवनेषु गृह्णात्यात्मनैव यज्ञं संतनोति प्रजापतिर्वा आग्रायणो यदेषोऽतिरिच्यते तस्मात्पुरुषः पशूनां द्विष्ठमेत्याग्रायणो[9] वै गायत्र्या वत्सस्तं[10] वा एतदा तृतीयात्सवनादभिप्रतिधावति[11] गायत्र्या वा एते लोके सर्वे सोमा गृह्यन्ते तां वा एतत्सर्वाणि सवनान्यभिप्रतिधावन्त्यथ यत्स्थाल्या गृहीतो विज्ञातस्थाल्या होष्यन्ती३ दारुमयेणा३[12] इति तस्मादवि-

1) M °वृत्ता 2) M यद्वि हिंकरोति 3) M वृत्ता 4) H u. Bb चनान्यभ्युदितं 5) Bb क्रियाता, M क्रीयता 6) Von hier bis zum folgenden प्रजापतये in B fehlend 7) Dies Wort fehlt in B 8) Das वै fehlt in Bb 9) Bb आग्रायणो 10) Bb °ग्रयणो 11) M धावति 12) Die Mss. schwanken, Ben ह्यौष्यती दारुमयेणा indem zugleich eine ३ über der Linie die Pluturung der letzten Silbe eines jeden der Wörter andeutet, in M ह्यौ३ष्यती३ दारुमयेणा, in H u. Bb होष्यती दारुमयेणेति, desgl. B, ohne Accent

ज्ञातेन गर्भेण भ्रूणहाथ यत्स्थालीं रिञ्चन्ति[1] न दारुमयं तस्मात्पुमान्दायादः स्त्र्यदायादाथ यत्स्थालीं परास्यन्ति न दारुमयं तस्मात्स्त्रियं जातां परास्यन्ति[2] न पुमांसमथ स्त्रिय एवातिरिच्यन्ते ॥ ४ ॥

Vgl 1, 3, 18 — TBr. 6, 4, 11 (âgrâyanah), Kâth 27, 9

इन्द्रो वै वृत्राय वज्रमुदयच्छत्स वज्रमुद्यतं दृष्ट्वाबिभेत्सो ऽब्रवीदस्ति वा इदं त्वयि वीर्यं तत्ते प्रदास्यामि[3] मा मा वधीरिति तद्वा अस्मै प्रायच्छद्यज्ञं वा अस्मै तत्प्रायच्छत्पशूननुक्थ्यमेव यदुक्थ्यो गृह्यते यज्ञस्य च पशूनां चावरुद्ध्या एतावान्वै यज्ञो यावानुक्थ्यो ऽन्तः पृश्नेव यन्तं सर्वो वा एष[4] यज्ञस्य यदुक्थ्यो यथा वा इदं सर्वं संनद्धं[5] प्रजात्येवं वा एतदुक्थ्यमालभ्य प्रजाति स एनमा यज्ञस्योदृचः संपारयत्यङ्गानि वा उक्थ्यो यज्ञस्य संतत्यै गृह्यते तस्मै त्वा विष्णवे त्वेति विष्णुर्वै यज्ञो विष्णुना यज्ञः संततो विष्णुनैव यज्ञेन यज्ञं संतनोत्येतेन वा इदमुक्थानि[6] संततानि तस्मात्पुरुषः पर्वभिरनुसंततः सद आलभ्यावनयति यज्ञं वा एतत्संतत्य संप्राप्यावनयति चक्षुर्वै प्युकथ्यं चक्षुरु३कथ्यं चक्षुर्वा एतत्पुरस्ताद्ध्रियते ऽथो यथेदं पुरस्तात्पश्चात्पश्यन्त्येवं तदथ यदेकः सन्नेकधा क्रियते तस्मादेकः श्रेष्ठः पूर्वार्धे ऽवस्यति यदेतौ यहौ भूयिष्ठाः सोमा अनु हूयन्ते[7] पापवसीयसस्य व्यावृत्त्यै यदेतस्यावं भूयिष्ठाः सोमा अन्वायन्ति तस्मादेकः श्रेष्ठः यन्तं[8] बहवः पश्चादनुयन्ति पाचाणि वा अध्वर्युं पुरो विदुर्ह उक्थामदानि[9] पर्यैन्द्र्या[10] सदा उपचरत्याग्नेय्याग्नीध्रं वैष्ण-

1) So Ben u M, in H u Bb रिञ्चति, desgl B, ohne Accent 2) So M, H u Bb, in Ben परास्यन्ति 3) Ben प्रजास्यामि Kâth 27, 10 प्रदास्यामि 4) Ben एषा 5) H संनह 6) So M, in Ben ॰मुक्थानि, Bb ॰मुक्थानि, desgl B, ohne Accent, H ॰मुख्यानि 7) H u Bb हूयन्ते 8) So Ben, die andern Mss. (auch M) यच्छति 9) So H M; in Ben उक्थामदानि, Bb उक्थमदानि, H u Bb उक्थमदानि 10) So Ben u M, in H पर्यैन्द्र्याः; desgl B, ohne Accent, Bb पर्यैन्द्र्यां

व्यां हविर्धानं यथादेवतमेवैनाननुपचरति तथा हैनं न विदुहेऽन्तराहवनीयं च हविर्धानं चाध्वर्योर्लोकोऽन्तरा हविर्धानं च सदश्च यजमानस्य सदः सदस्यानां यदि कामयेताध्वर्युं यश ऋच्छेदित्यन्तराहवनीयं च हविर्धानं चावनयेत्सोमो वै यश एषो ऽध्वर्योर्लोको ऽध्वर्युमेव यशसार्पयति यदि कामयेत यजमानं यश ऋच्छेदित्यन्तरा हविर्धानं च सदश्चावनयेत्सोमो वै यश एष यजमानस्य लोको यजमानमेव यशसार्पयति यदि कामयेत सदस्यान्यश ऋच्छेदित्यन्तः सदस्यावनयेत्सोमो वै यश एष सदस्यानां लोकः सदस्यानेव यशसार्पयति सद आलभ्यावनयत्यैन्द्रं वै सद ऐन्द्राण्युक्थान्युक्थानां संतत्या उक्थानामनपच्छेदाय ॥ उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा ॥ इति गृह्णाति प्रातःसवने मैत्रावरुणाय ॥ इन्द्राय त्वा ॥ इति ब्राह्मणाच्छंसिने ॥ इन्द्राग्निभ्यां त्वा ॥ इत्यच्छावाकाय ॥ उपयामगृहीतो ऽसीन्द्राय त्वेन्द्राय त्वा ॥ इति गृह्णाति सर्वेभ्यो माध्यंदिने सवने ॥ उपयामगृहीतो ऽसीन्द्रावरुणाभ्यां त्वा ॥ इति गृह्णाति तृतीयसवने मैत्रावरुणाय ॥ इन्द्राबृहस्पतिभ्यां त्वा ॥ इति ब्राह्मणाच्छंसिने ॥ इन्द्राविष्णुभ्यां त्वा इत्यच्छावाकायैवमस्य यथोक्थं यथादेवतं गृहीता भवन्ति ॥ ५ ॥

Vgl 1, 3 14 — TS 6, 5, 1 (ukthyagrahah), Kāth 27, 10

आयुर्वै ध्रुवस्तमुत्तमं गृह्णात्युत्तमं ह्यायुः स्थाल्या गृह्णात्यायुषो धृत्यै पूर्णं गृह्णाति सर्वमायुरेति प्राणो वै गायत्र्यायुर्ध्रुवो यदेषं आ तृतीया-

---

1) Von hier ab in M eine Lücke (ein Blatt fehlt) 2) H सोमे 3) So corrigirt; die Mss सदस्यामेवं 4) So Ben, die andern Mss °क्थान्युक्थाना° 5) So Ben, die andern Mss उक्थाना° 6) So H u Bb, in Ben मित्रावरुणाभ्या 7) Ben यथोक्त°

त्सवनात्परिशयेत्तं सादयेदायुस्तावान्प्राण आयुर्वै ध्रुवो यदग्निष्टोमं मास्त आयुरेवाभ्यां निः सर्पत्यायुर्वै ध्रुवो यत्केवलं जुहुयादायुः प्रजानां प्रदध्यात्परिधानीयाया शस्यमानायामवनयति स ह्यन्तो[1] होतुश्चमसेऽवनयति वैश्वदेवो वै होता वैश्वदेवीरिमाः[2] प्रजाः सर्वासु वा एतत्प्रजास्वायुर्दधाति जनानामित्याहुः सर्वासां वा एतत्प्रजानामायुः सर्वाभ्यः[3] प्रजाभ्यो गृह्यत उभयतोवैश्वानरो गृह्यत उभयतोवैश्वानरो ह्ययं प्राणोऽयं वाव वैश्वानरो योऽयमवाङ् प्राणो यदेष केवला उत्तरे हविर्धाने साद्यते तस्मादेषो ऽर्धभाक् प्राणानामर्धभाजा इतरे हिरण्ये ऽधि सादयेदायुःकामस्यामृतं वै हिरण्यमायुर्ध्रुवो ऽमृत एवास्यायुर्दधात्युपोप्ते ऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवस्तस्मादस्थान्ये[5] पशवः प्रतितिष्ठन्ति मांसेन पुरुषः प्राणा वा उपरवा यदेत उपोप्ते ग्रहाः साद्यन्ते स्वे वा एतद्योनौ साद्यन्ते पूर्वार्धे वा इमे मुखस्य प्राणा एतत्खलु वै हविर्धानस्य पूर्वार्धं यद्दक्षिणं हविर्धानं तस्माद्दक्षिणे हविर्धाने प्राणा वा एत इतरे ग्रहा आयुर्ध्रुवो नव वै प्राणा आयुर्दशमं तस्मादेष दशमो गृह्यते दशमं ह्यायू राजपुत्रो ध्रुवं गोपायति सर्वासां वा एतत्प्रजानामायुर्गोपायति तस्माद्राजपुत्रो वीर्यवत्तमो यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामि ॥ इति ध्रुवं प्रवर्तयेदायुरेवास्य प्रवर्तयति यत्प्रवर्तयेत्सर्वासां प्रजानामायुः प्रवर्तयेऽमुक्[6] प्रजा न्यृच्छेद्वर्तिर्यजमानं गृह्णीयात्क्षोधुको ऽध्वर्युः स्यात्तद्यक्ष्म एवं ॥ ध्रुवं त्वा ध्रुवक्षितिममुमास्था-

1) So Bb u. H, in Ben ह्यन्तो ohne Accent    2) Mit diesen Worten fängt M wieder an    3) Von hier in H u. Bb Lücke bis zum folgenden वा    4) So Ben u. M; in H u. Bb सर्वाभ्य एव, B सर्वाभ्या एव    5) So Ben, (cf. TS 6, 5, 2), in M °स्थान्ये, desgl. B, ohne Accent; in Bb °अस्थान्ये, in H अस्थान्ये    6) So M; die andern Mss प्रवर्तयेदामुं

नाच्यावयामि ॥ इत्यास्थानादेवैनं च्यावयति प्रमायुको भवति ध्रुवं वै प्रच्यवमानं विश्वा भूतान्यनु प्रच्यवन्ते प्र यजमान आस्थानाच्च्यवते तदभिमृश्यो दिवि दिव्यान्दृंहान्तरिक्षे अन्तरिक्ष्यान्पृथिव्यां पार्थिवानिति यथास्थानं वा एतत्प्रजा दृंहति स्व आयतने यजमानमायुषा वा एष वीर्येण व्यृध्यते यस्य ध्रुवः स्कन्दत्यायुर्वै ध्रुवस्तदभिमृश्यः ॥ आयुर्धा असि ध्रुवायुर्मे धेहि ॥ इत्यायुरेवास्मिन्दधाति वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वरः पुषसेनस्य ह वै भैमसेने ध्रुव उपदद्दास तं मृणानः स्थैरकायणं ऋतेनेभ्यो लोकेभ्य आप्याययांचकार ॥ स्वाहा दिवं आप्यायस्व ॥ इति स तृतीयं बभूव ॥ स्वाहान्तरिक्षादाप्यायस्व ॥ इति स द्विभागं बभूव ॥ स्वाहा पृथिव्या आप्यायस्व ॥ इति स पुपूरे तदेतैनैवैभ्यो लोकेभ्यो ध्रुव आप्याययितव्यो द्वादशे स्तोत्रे ऽवनयति ॥ द्वादश मासाः संवत्सरः संवत्सरो यज्ञो यज्ञः प्रजापतिः प्राजापत्यः पुरुषो यावानेव पुरुषस्तस्मिन्नायुर्दधाति यत्स्तूयमाने ऽवनयेद्गर्भाः प्रपादुकाः स्युर्यज्ञस्य स्तूयमाने युवानः प्रमीयेरन्यच्छस्त्रे वहिः प्राणान्दध्यात्सकृच्छस्तायां मध्यतो ऽवनीयो मध्यतो वा एतत्प्रजानामायुर्दधाति ॥ स्वयंभूरसि श्रेष्ठो रश्मिः प्रियो देवानां संसदनीयः ॥ तं त्वा सुभव देवा अभिसंविशन्तु ॥ आयुर्धा असि ध्रुवायुर्मे धेहि ॥ इत्यायुरेवास्मिन्दधाति ॥ वर्चोधा असि ध्रुव वर्चो मे धेहि ॥ इति वर्च एवास्मिन्दधाति ॥ इषो ऽसि त्वेषो ऽसि नृम्णो ऽसि क्रतो ऽसि दक्षो ऽसि तस्य

---

1) In Ben u M °रिर्चं तरिक्षान् (in M das च des Adj aber zuerst geschrieben und erst dann als del bezeichnet), cf 1 3 15 2) So Ben u M, in H u Bb य थास्थानं°, B यथास्थानं 3) So Ben u M, die andern Mss °मायुषो 4) So M, in B °द्दास, H u Bb °द्दास, Ben? 5) H सूयमाने 6) Ben त्विषो

त इयस्य त्वेषस्य नृम्णस्य व्रतस्य दक्षस्य भक्षीय[1] स्वस्य चारणस्य च शूद्रस्य चार्यस्य च यथा त्वं सूर्यासि विश्वदर्शत एवमहं विश्वदर्शतो भूयासम् ॥ इति विश्वदर्शतो ह भवत्यसौ वा आदित्यः स्वयंभूः श्रेष्ठो रश्मिर्यथैष स्वयंभवदेवं स्वयं भवति य एवं वेद ॥ ६ ॥

Vgl 1, 3, 15 — TS 6, 5, 2 (dhruvah); Kāth. 28, 1; Kap S. 44, 1.

अथैत ऋतुग्रहाः संवत्सरस्य वा एते विधृत्यै गृह्यन्ते द्वादश मासाः संवत्सरस्तस्माद्द्वादश ऋतुग्रहा मधुश्च माधवश्च वासन्तिका ऋतू असन्वा हूयन्तेऽसन्वा३ हीम ऋतवो नान्योऽन्यमभिप्रपद्यन्ते[2] यदन्योऽन्यमभिप्रपद्येत[3] ऋता ऋतुरभीयादेष[4] यदन्योऽन्यः[5] प्रपद्यते तस्मादिदमृता ऋतुरनुनिहिताः[6] परिप्लवन्त उभयतोमुखमृतुपात्रमुभयतोमुखा३ हीम ऋतवो न वै तद्विद्म यत ऋतूनां मुखं सह प्रथमं गृह्णाते सहोत्तमं सह युज्येते[6] सह विमुच्येते[7] चतुर्दश वा एतत्कुरुतो ऽति वा एतद्रूचयतो ऽस्ति मासस्त्रयोदशस्तमेवैतेनाप्त्वावरुन्द्ध ऋतुभ्यो वै प्रजाः प्रजायन्ते यत्षड्ऋतुना चतुर्ऋतुभिर्ऋतुभ्यो वावासा एतच्चतुष्पदः पशून्प्रजनयतो ऽथ यच्चतुर्ऋतुभिर्द्विर्ऋतुन ऋतुभ्यो वावासा एतद्द्विपदः पशून्प्रजनयतो यद्द्विर्ऋतुना[8] द्वौ ३ हीमा ऋतू अथ यद्द्वे ऋतुपात्रे द्वौ ह्यो ३ हीम ऋतवो नानुयजति वैश्वानरो वषट्कारो यदनुयजेद्वैश्वानरमृतुष्वन्ववसृजेदन्धो वा इदमासीद्व्यावृत्तमहरासीन्न रात्रिरासीत्ते देवा ऋतुग्रहैर्व्यावर्तयन्यदृतुग्रहा गृह्यन्तेऽहोरात्रयोर्व्यावृत्त्यै

1) Bb भक्षीय 2) So Ben, H u Bb प्रपद्यते; desgl B, ohne Accent; M प्रपद्येते 3) Die Mss schwanken, H u B प्रपद्यत, desgl B, ohne Accent; Ben प्रपद्येत; M प्रपद्येत 4) Ben ऋतुर॰ 5) So Ben u M, desgl B, ohne Accent, in H u Bb यदन्योन्यः 6) So Ben u M, die andern Mss युज्यते 7) So Ben u M, die andern Mss मुच्यते 8) In den Mss द्वि॰ ohne Accent

संवत्सरो वै स्वर्गो लोकस्तस्य वा एत आक्रमा यदृतुग्रहा यदृतुग्रहा गृह्यन्ते स्वर्गस्य लोकस्याक्रान्त्यै ॥ ७ ॥

Vgl. 1, 3, 18 — TS 6, 5, 3 (ṛtugrahāh), Kāth. 29, 2; Kap S 44, 2

आदित्या वा इत उत्तमाः स्वर्गं लोकमायंस्ते वा इतः प्रतिसंहिताः पुरस्ताद्देवान्यत्संवत्सरो वै स्वर्गो लोकः संवत्सरमेतौ कल्पयतुं आयेते यदध्वर्यू यदैन्द्राग्नमृतुपात्रेण गृह्णाति संवत्सरं वा एतदन्वारभते स्वर्गाय लोकायाथो ज्योतिरुपरिष्टाद्दधाति स्वर्गस्य लोकस्य समष्ट्या असौ वा आदित्यः शुक्रः पुरुषो वैश्वदेवो यच्छुक्रपात्रेण वैश्वदेवं गृह्णाति तस्मात्पुरुष एवामुं प्रत्यक् सर्वे ऽन्ये न्यञ्चः पशवो देवाश्च वा असुराश्चास्पर्धन्त ते देवाः प्रातःसवने वैश्वदेवे यज्ञं संस्थापयमपश्यंस्ते प्रातःसवने समस्थापयन्यद्वैश्वदेवः प्रातःसवने गृह्यते प्रातःसवने वा एतद्वैश्वदेवे यज्ञं संस्थापयन्ति तेन संस्थितेनारिष्टेन भूतेन प्रचरन्ति देवा वै सर्वे प्रातःसवनमभ्यायच्छन्तोत्तराभ्यां सवनाभ्यामतिष्ठन्त यद्वैश्वदेवः प्रातःसवने हूयते प्रातःसवने वा एतद्वैश्वदेवे देवतास्तर्पयन्ति तास्तृप्ता उत्तरे सवने अभिसृज्यमाना यन्ति वज्रो वै मरुत्वतीया वज्र एव प्रथमो ऽपगूर्तिर्द्वितीयः स्तृतिरुत्तमो वज्रो वै धनुर्धनुरेव प्रथमः प्रतिहितिर्द्वितीयो विसृष्टस्तृतीयश्चक्रियौ वा एते यज्ञस्य यन्मरुत्वतीया अंसो मध्यमः पक्षसी अभितो मरुद्भिर्वै वीर्येणेन्द्रो वृत्रमहन्न्ऋते मरुद्भ्यो ऽशक्नोडी३ं कर्तुं यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते तेन माध्यंदिनं सवनं वीर्यवत्कृतं

1) In Ben nur ein Mal यदृतुग्रहा 2) So Ben u M, Bb स्तृतीयस्तमो; desgl B, ohne Accent, H स्तृतीयस्तमो 3) Ben पंचसो oder पंचसि

सवनान्यृतुमन्ति[1] वेद्धेति पृच्छेदृतुग्रहैः प्रातःसवनमृतुमन्मरुत्वतीयैर्माध्यंदिनꣳ सवनꣳ सावित्रेण तृतीयसवनं मरुत्वतीययोः सन्नयोर्दक्षिणा दीयन्ते स्वे वा एतद्योनौ दक्षिणा दीयन्ते परिधयो वा एते यज्ञस्य यन्मरुत्वतीयास्तस्मान्मरुत्वतीयान्दक्षिणा[2] नातिदीयन्ते यदतिदद्याद्यथा बहिष्परिधि स्कन्नमेवꣳ स्याद्यदि कामयेत विडोजीयसी स्यादबलीयः क्षत्रमिति यस्या मरुत्वतीयः पूर्वोऽर्धर्चस्तां[3] पुरोरुचं कुर्याद्विशꣳ वा एतदोजीयसीमकरबलीयः क्षत्रꣳ यदि कामयेत क्षत्रमोजीयः स्यादबलीयसी विडिति यस्या ऐन्द्रः पूर्वोऽर्धर्चस्तां पुरोरुचं कुर्यात्क्षत्रꣳ वा एतदोजीयोऽकरबलीयसीꣳ विशं जामिं वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो यंहो गृह्यते मरुत्वतीयꣳ शस्यते पशवो वै मरुतोऽजामि पशवस्तेन तदजाम्यृतुपात्रमालभ्य प्रतिगृह्णात्यृतवो वै मरुतः सꣳवत्सर ऋतवा आयुः सꣳवत्सर आयुषैवा एतदध्वर्युः श्रयते वृत्रꣳ वा एष हन्ति यो मरुत्वतीयान्गृह्णाति माहेन्द्रे सर्वे कामाः सर्वान्वा एतत्कामानाप्नोति सर्वान्व्यश्नोतीन्द्रो वै वृत्रमहꣳस्सोऽन्यान्देवानत्यमन्यत स महेन्द्रोऽभवत्स एतमुद्धारमुदहरत वृत्रꣳ हत्वा तदुद्धारं[4] एवास्यैष भाग एव तस्माद्राजा संग्रामं जित्वोदाजमुदजते शुक्रपात्रेण माहेन्द्रं गृह्णाति वदन्ति ग्रावाणो वदन्त्युलूखलं मन्थन्त्याशिरमिन्द्रं वा एतद्या[5] आगते घोषमकुर्वतांश्चो यजमान एव तेजो दधाति[6] ॥ ८ ॥

Vgl 1, 3 17—25 — TS 6, 5, 4 (âindrâgnah) u 5 (marutvatîyâ mâhendraçca); Kâṭh 28, 2 u 3; Kap 44, 2 u 3

1) M °मति (n. Bl) 2) So M, ohne Accent (n Bl); die andern Mss मरुत्वतीया 3) Ben ता ohne Accent, schreibt तान्, H u Bb तान्, desgl B, ohne Accent 4) Bb तमुद्धारं 5) So Ben, die andern Mss एतर्या 6) So Ben u. M; die andern Mss दधाति

एतद्वा एषाभ्यनूक्ता ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि ।
देवाँ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत्[1] ॥

इत्येष वाव स उपांशुसवनो ग्रावा तस्य वा एष सोमपीथो यदादित्य मेवायन्ति ॥ विवस्वन्नादित्यैष ते सोमपीथः ॥ इति सोमपीथेनैवैनं[2] समर्धयति व्यानो वा उपांशुसवनः प्रजा आदित्यो व्यानं वा एतत्प्रजासु दधाति पशवो वा आदित्यो यद्वा मध्यतः श्रीणाति मध्यतो वा एतत्पशूनां पयो दधात्यथ यत्समानं तस्मादामा सती पक्वं दुहे[3] यदि कामयेत वर्षेत्पर्जन्य इति ॥ या दिव्या वृष्टिस्तया त्वा श्रीणामि[4] ॥ इति दध्नोपरिष्टादादित्यं श्रीणीयात्पशवो वा आदित्यः पशुभ्य एवैषो ऽमुतो वर्षति पशूनेव वृष्ट्याभिजिघर्ति[5] यदि कामयेत गर्भाः स्रीव्येयुरित्युद्धृत्यादित्यमवेक्षेत गर्भा ह स्रेवुका[6] भवन्ति शुक्रवती वै[7] पूर्वे सवने अशुक्रं तृतीयं सवनं यद्द्विदेवत्यानां संस्रवानवनयत्यायायणमभिप्रस्कन्दयति तेन तृतीयसवनं शुक्रवद्देवा असुरान्हत्वा मृत्योर्बिभयुस्तेनाधिषिणो[8] न्यञ्चनेषिण एता देवता भूयिष्ठाः प्राविशन्[9] यद्द्विदेवत्यास्तस्माद्द्विदेवत्येभ्य आदित्यो निर्गृह्यते बृहतीभ्यां गृह्णाति पशवो वै बृहतीः प्रजा आदित्य एतावांल्लोको यावद्बृहतं यत्संप्रसारयित्वा गृह्णाति लोकं वा एतद्दत्ते यजमानो भ्रातृव्यस्य वृङ्क्ते ऽभी इमा एव प्रजा अन्नाद्यायावरुन्द्धे यद्यस्य भ्रातृव्यो यजेत बहिर्वेदि तिष्ठंस्तया हैनं नावरुन्द्धे पशवो वा आदित्यो ऽग्नी रुद्रो

1) So M, H, Bb; m Ben °मास्यत्, cf aber RV 10, 72, 8  2) H u Bb °येनैव°  3) cf शृतातङ्क्य TS 6, 5, 6 4  4) Ben °ग्रासि  5) H u Bb वृष्ट्या°; cf über die verschiedene Betonung dieses Wortes oben 2 4, 7 u 8, 2, 11, 5  6) So Ben u M, die andern Mss स्रेवुका  7) M (u Bl) °वती वै  8) Ben °धिषिणो  9) Ben मांविशन्

ऽपैरितास्त३न्वो यद्धिष्ण्या यत्संप्रसारयित्वा गृह्णाति रुद्रा वा एतत्पशूनन्तर्दधात्यपिधायोप निष्क्रामति पशूनां गोपीथायादित्यो वै द्विदेवत्यानामनुयाजांस्तस्मात्तान्नानुयजति द्विदेव३त्या वा आदित्यस्य प्रयाजास्तस्मात्तान्नानुयजति पशवो वा आदि३त्यो ऽसौ रुद्रो ब्राह्मण उपद्रष्टा यद्दीक्षमाणो जुहुयात्प्रधीयमानानामेषामुपद्रष्टा स्याद्यदन्यद्वीक्षमाणेन होत३व्यमनुपद्रष्टैषां भवति ॥ ९ ॥

Vgl 1, 3, [illegible] — TS 6, 5, 6 (ādityagrahaḥ), Kāṭh 28, 6

॥ इति खिलकाण्डे षष्ठः प्रपाठकः ॥

---

गायत्रो वै देवानां सविता गायत्र्या एष लोके सोमो गृह्यते यदाग्रायणस्तस्मादाग्रायणात्सावित्रो निर्गृह्यते ऽसो ऽद् आ तृतीयात्सवनात्परिश्रयेत्क्रियमाणस्य क्रियमाणस्य प्रसवायान्तरिक्षं वा अन्तर्या३मो ऽन्तरिक्षमिमाः प्रजा यदन्तर्याममपावेण सावित्रं गृह्णाति सविता वा एतत्प्रजाः प्रसुवति प्रजननायासलो हूयते ऽसन्ना ३हीमाः प्रजा नेलंयन्ति नानुयजति यदनुयजेत्सृष्टिं प्रजानां वि-

---

1) So Ben u M, H u. Bb संप्रसर्पयित्वा, B समर्पयित्वा 2) So Ben u M; die andern Mss निष्क्रामयति 3) Ben •मनुपयाजांस, Bb तस्मात्तान्नानु 4) Ben ता नानु•; Bb तचानु oder तन्नानु, H तन्नानु; M (n Bl) u. B तन्नानु• 5) H u. Bb •मेषामु• 6) In Bb स्याद्• ohne Accent. 7) So Ben; desgl. M. ohne Accent (n. Bl); in H u Bb संमुपद्रष्टै•, desgl B ohne Accent 8) So das Verbum in H u Bb betont; in Ben परिश्रयेत्, in M u Bl. ohne Accent.

छिन्द्यादथो समानपात्रौ ह्येतौ सोमौ गृह्येते तस्मान्नानुयजन्ति देवा वै तृतीयसवनमुद्यमं नाशक्नुवन्प्रातःसवने तर्हि सवितासीत् देवास्तृतीयसवनमभिपर्यायंस्तेन तृतीयसवनमुदयच्छन्त यत्सावित्रस्तृतीयसवने गृह्यते सवितृप्रसूता वा एतत्तृतीयं सवनमुद्यच्छन्ते सावित्रस्य सम्प्रसवे वैश्वदेवमभिगृह्णाति वैश्वदेवीरिमाः प्रजाः सवितृप्रसूताः खलु वै प्रजाः प्रजायन्ते[1] मनो वै सविता वैश्वदेवीरिमाः प्रजाः सर्वासु वा एतत्प्रजासु मनो दधात्याशीमेतः सवनस्य गृह्णाति वैश्वदेवत्वाय सुशर्मासि सुप्रतिष्ठान इति यत्स्वित्सोमः सोमे प्रतितिष्ठति बृहदुक्षे[2] नम इति यद्बृहदिति तेन देवेभ्यो यन्नम इति तेन पितृभ्य उक्थभाजो वै पितरोऽस्तोमभाज उक्थायैष[3] गृह्यते न स्तोत्राय यत्र गृह्यते तद्वास्यात्ते स्व आयतने ॥ १ ॥

Vgl 1, 3, 27 u 28 — TS 6, 5, 7 (sâvitrah, vâiçvadevah), Kâṭh 28, 7; Kap ■ 44, 7

घृतस्य यजत्येष वै प्रथमो धिष्ण्यानां यदाहवनीयस्त्वं वा एतदग्ने व्याघारयत्याग्नावैष्णव्या व्याघारयति पराङ् वा एतर्हि यज्ञोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालब्ध घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति यत्सौम्यः सोमं वा एतत्संभावयन्ति सोममाप्याययन्त्यवधिषुर्वा एतत्सोमं यदभ्यसुषुवुरनुस्तरणी[4] वा एषा सोमस्य यत्सौम्यः पितॄणामनुस्तरणी[5] तस्मात्पितृमत्या यजति दक्षिणा तिष्ठञ्जुहोति दक्षिणा हि पितॄणामुपसदा[6] वा एतेऽनुयाजा आग्नावैष्णव्या घृतस्य यजति[7] सौम्या सोमस्य या एवादं उप-

---

1) H u Bb प्रजायन्ते 2) H बृहदुचे, Bb बृहदुचे 3) H u Bb °थैवं 4) H (u Bl) °सुषवुर° 5) So M (u Bl) ohne Accent, die andern Mss पितृणा°, u übrigens auch TS 6, 6, 7, 1 6) H u Bb °मुपषदा॰ 7) In Bb यजति ohne Accent

सस्तु देवता अयाक्षीत्तां एतदसुंन्वा एष भूताय क्रियते यद्वा एतस्य व्यार्धि[1] यत्प्रामायि तदस्यामु लोके गच्छत्यथ पूत एवोऽज्ञिश्यते पवित्रं वै सौम्यो यजमानमेवैतेन पुनाति सामदेवत्यो वै सौमः सोमस्य खलु वै सौम्य साम्ने वा एतद्ध्रियते ॥ सन्ना ते एतद्यदु त इह[2] ॥ इति परिपश्यति यो ऽगतासु स परिपश्यति यो गतासुर्न स परिपश्यति यदि न परिपश्येदथ वदेत् ॥

यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

हृदिस्पृक् क्रतुस्पृग्वर्चोधा[3] असि वर्चो मे धेहि ॥ इत्याशिषमेवाशास्ते ॥ २ ॥

Vgl TS 6 6 7 (saumyaca ughrtayaganubandhyah) Kap ▪ 45 3

अथैते ऽतिग्राह्या[4] देवा वै सोममगृह्णतांथ वा एतानिन्द्रो ऽगृह्णीत सो ऽवेद्वा अहमिमानृतें ब्रह्मण सविष्यामीति स ब्रह्मोपाधावत्तांन्ब्रह्मणासम्नोद्ब्रह्म वै गायत्री तस्मात्गायत्रीभिर्गृह्णन्ते यदेवादः परमन्नाद्यमनवरुद्ध तस्यैते ऽवरुद्ध्यै गृह्यन्ते ये वा अमी वैराजस्य स्तोभा अतिरिक्तास्तैरेते[5] सामन्वन्त सर्वे वा एत ऐन्द्रा य ऐन्द्र ऐन्द्र ऽसौ ऽसा आदित्य इन्द्र समानमभिश्चासौ चादित्यो विराजो वै तेज आग्नेय शक्करीणामैन्द्रो रेवतीनां सौर्यो यत्र पृष्ठानि युज्यैरंस्तदेताञ्जुहुयात्सांमा[6] सतेजस्त्वाय सं वा एतद्यज्ञ पश्वा-

1) So Ben u M die andern Mss व्यार्थ्यै 2) Bb यदुत्तरहो 3) So M nur ohne Accent (u Bl) die andern Mss wie es scheint हृदिस्पृक ऋतुस्पृ॰ 4) So corr girt die Mss ॰याह्यां vgl aber weiter unten 5) Ben अति॰ M (u Bl) अतिरक्तास् 6) H u Bb जुहुयात्सांमा॰ Be जुहुयात्सामा॰ M u Bl ohne Accen

स्तोत्रेण च शस्त्रेण चाधीयते यददित्याह्याः[1] प्रत्युत्तब्ध्यै[2] चाक्रियौ वा एते यज्ञस्य यत्पृष्ठान्युपस्तम्भनमतिग्राह्यास्तस्मात्प्रातःसवने गृह्याः प्रत्युत्तब्ध्यै यदाग्नेयस्तेजस्तेनावरुन्द्धे यदैन्द्र इन्द्रियं तेन यत्सौर्यो रुचं तेन त्रिवृद्वा वा असा एतत्समृद्धं ब्रह्मवर्चसं दधाति तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्मवर्चसमसावादित्यस्तेजसा च वा असा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णाति ॥ अग्नेष्ट्वा ब्रह्मणश्च तेजसा जुहोमि तेजोदास्तेजो मा मा हासीन्माहं तेजो हासिषं[3] स्वाहेन्द्रस्य च त्वा क्षत्रस्य चौजसा जुहोम्योजोदा ओजो मा मा हासीन्माहमोजो हासिषं स्वाहा सूर्यस्य च त्वौषधीनां च वर्चसा जुहोमि वर्चोदा वर्चो मा मा हासीन्माहं वर्चो हासिषं स्वाहाग्न आयुःकारायुष्मांस्त्वं[4] तेजस्वान्देवेष्वेध्यायुष्मन्तं मा तेजस्वन्तं मनुष्येषु कुर्विन्द्रौजस्कारौजस्वांस्त्वं[5] सहस्वान्देवेष्वेध्योजस्वन्तं मा सहस्वन्तं मनुष्येषु कुरु सूर्य भ्राजस्कार भ्राजस्वांस्त्वं[6] वर्चस्वान्देवेष्वेधि भ्राजस्वन्तं मा वर्चस्वन्तं मनुष्येषु कुरु ॥ एते होमा भक्षकाराश्च भवन्त्येतया वै वीर्येण बभ्रुविश्ववयसा[7] इमांल्लोकानर्वाचश्च पराचश्च प्राजानीतां[8] ते ह वा[9] असा इमे लोका अर्वाञ्चश्च पराञ्चश्च भान्ति[10] य एवं वेद सुप्रज्ञाना वा[11] इत इत्थं लोका अमुतस्त्वा अर्वाञ्चो दुःप्रज्ञाना[12] एष ह ऽस्येवामुतो ऽर्वाच इमांल्लोकान्प्रजानाति यस्यैते[13] हूयन्ते ॥ ३ ॥

Vgl 1, 3 31—33 — TS 6 6, 8 (atigrâhyah), Kap ■ 45, 2 u 3

---

1) So Ben, in H u Bb °दतियाह्यां 2) Bb प्रत्युत्तब्ध्यै 3) Bb षकें, H षचो) 4) M °कारो°, die Mss schreiben तं statt त्वं wie ich corrigirt habe, cf das Folgende 5) So Ben, die andern Mss तं° 6) So Ben, die andern Mss तं° 7) Ben °भयसा 8) So Ben u M, in H u Bb प्रज°, desgl B, ohne Accent 9) Bb त्वं 10) So Ben u M, dagegen H u Bb भाति ohne Accent 11) H u Bb त्वो 12) H u Bb schieben hier noch ein वा ein, desgl B, ohne Accent 13) Bb तच्चैते

उपांशुपात्रेण पात्नीवतं गृह्णाति प्राणो वा उपांशुः प्राणेन वा एतं प्रयन्ति प्राणेनोद्यन्त्यथो प्राणानां प्रतिप्रज्ञात्या अथो यत्प्रथमं पात्रं युज्यते तदुत्तमं विमुच्यते प्राणानां गोपीथाय होता वा अद्य प्रातरुपांशुमयजद्यदेतं होता वषट्कुर्याद्यत्पुरो ऽकस्तंमश्चात्परिहरेत्प्रमायुकः स्यात्तस्मादेतमग्नीद्वषट्करोति पुरो ३ह्यग्नीत्प्राणो[1] वा उपांशुः प्राणादधि प्रजाः प्रजायन्ते यदुपांशुपात्रेण पात्नीवतं गृह्णाति प्रजननाय सन्नो हूयते ऽसन्ना हि प्रजाः प्रजायन्ते नानुयजति यदनुयजेत्प्रजननमपिहन्यादथो समानपात्रौ ३ह्येतौ सौम्यौ गृह्येते तस्मान्नानुयजति मिथुनं वै घृतं च सोमश्च यत्पात्नीवतं घृतेन श्रीणाति[2] मिथुनत्वाय बृहस्पतिसुतस्य त इति ब्रह्म वै बृहस्पतिर्ब्रह्मणो वै योनेः प्रजापतिः प्रजा असृजत ब्रह्मणो वा एतद्योनेर्यजमानः प्रजायत इन्द्र[3] इन्द्रियावत इतीन्द्रियं हि गर्भो ग्ना३इ[4] पत्नीवा३निति[5] मिथुनं वा अग्नीच्च पत्नीश्च सजूस्त्वष्ट्रा सोमं पिबेति त्वष्टा हि रूपाणि विकरोति घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नभि खलु वा एतं[6] घारयन्ति यत्पात्नीवतं घृतेन श्रीणातीन्द्रियेण वा एतत्पत्नी व्यृध्यति तस्मान्निरिन्द्रिया स्त्री पुमानिन्द्रियवांस्तस्मात्पुमांसः[7] सभां यन्ति न स्त्रियो यदितग्नस्तौमाञ्छ्रीणीयुर्न पात्नीवतं स्त्रियः सभामीयुर्न पुमांसा इन्द्रो वै वृषभमहंस्तस्य यन्मूर्धो-

1) Die ३ fehlt in den Mss und ist von mir ergänzt  2) In H u Bb werden hier die letzten Sätze, von यदनुयजेत्प्रजननमपिहन्यादथो u s w bis hierher (श्रीणाति) wörtlich wiederholt  3) So M, die andern Mss इन्द्र, s aber auch 1, 3, 23  4) Die ३ als Zeichen der Plutirung fehlt in den Mss und ist von mir hinzuergänzt, cf 1, 3, 29  5) Die ३ als Zeichen der Plutirung fehlt in den Mss, cf 1, 3, 29, H u Bb पत्नीवानिति, Ben पत्नीवानीति, M पत्नीवानिति  6) So Ben u M, die andern Mss एतां  7) So im Anschluss an M पुमानिन्द्रीयवांस्तस्मात्पुमांस, die andern Mss पुमानिरिन्द्रियवांस्तस्मात्पुमांस

नमुद्रुजत्स द्रोणकलशो ऽभवत्ततो यः सोमः समस्रवत्स हारियोजनस्तस्मादेतं द्रोणकलशेन जुहोति योनिर्ह्येष इन्द्रो वृत्रं हत्वा तस्य यत्क्रोमन्नौ हृदयात्सोमं समसिञ्चत्स हारियोजनो ऽभवत्स इन्द्रो ऽमन्यत यदिमममुष्मै सोमं होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि तदन्वेभविष्यन्तीति स संस्थिते प्रहृतेषु परिधिष्वजुहोद्यत्संस्थिते प्रहृतेषु परिधिषु जुहोति तत्स्वदुभयमकर्जुहोत्यह्न संस्थिते जुहोत्यतिरिक्तो वा एष ऋत्विजां य उन्नेता तस्मादेतं न वृणते न वषट्करोत्यन्येषां सोमो ऽरेचि स वा उन्नेतारमेवाभ्यतिरिच्यते ऽध्वर्युर्वै पूर्वान्सोमाञ्जुहोति यदेतमध्वर्युर्जुहुयादाहुतीः संसृजेत्समदं कुर्यात्तस्मादेतमुन्नेता जुहोति प्रजापतिर्वा एतममन्यत सोमं होष्यं स्तमग्निरब्रवीन्मयि त्वमेतममुष्मै सोमं होष्यस्यमृतमद्वितीयं द्वितीयमस्त्विति यद्धानाभिः श्रीणाति मृतत्वायैषो द्वितीयमत्वायैषिता धाना यच वा असौ देवेभ्यः कामदुघाः काममदुह्र तदेता अपिदुदुह्रे तत्पुष्टिमेवैताभिरवरुन्द्धे प्रजापतिर्वा आत्मामणो यदेषो ऽतिरिच्यते तस्मादयमतिरिक्तो ऽपरिमित इमाः प्रजा अभिपवत ऋक्सामे वा इन्द्रस्य हरी तयोः परिधय आधानं निराधानाय खलु वा अश्वाय घासमपिदधाति यत्संस्थिते प्रहृतेषु परिधिष्वजुहोद्यत्संस्थिते प्रहृतेषु परिधिषु जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति पशवो वै धाना यत्संस्थादितपशून्हि स्याद्यन्न

---

1) Ben u M यी 2) So Ben, die andern Mss हार्योजनम्, diese Form auch Kap S 44, 9, dagegen Kath 28, 9 हारियोजन 3) M यी, Bb य 4) So Ben; die andern Mss हार्योजनो, u übrigens 1, 3, 20, Kâth 28, 9 हारियोजनः 5) So Ben, die andern Mss °मुष्यै° 6) So Ben u M; die andern Mss जुहोत्यह 7) M पूर्वां° त्स° 8) So Ben, die andern Mss. °मुष्यै° 9) Bb होष्यंस्त° 10) Ben °इधति 11) In den Mss ist das Verbum ohne Accent

संस्थादिदयताः[1] स्युः संहृत्य[2] रत्यै त्वा पोषाय त्वेत्युपवपति[3] तत्स्विदुभयमकः पशूनां यत्यै भुञ्जन्त एनं पशवा उपतिष्ठन्ते ॥ ४ ॥

Vgl 1, 3, 29 u 30 — TS 6, 5, 8 (pâtnîvato grahaḥ) u 9 (hâriyojanaḥ); Kâth 28, 8 u 9, Kap. S 44, 8 u 9; 46, 4

यज्ञेन वै देवाः स्वर्गं लोकमायꣳस्ते ऽमन्यन्तानेन वै नो ऽन्ये लोकमन्वारोक्ष्यन्तीति ते छन्दाꣳस्यपश्यꣳस्तानि व्यत्यषजन्स्वर्गस्य लोकस्याननुकख्यात्यै[4] यच्छन्दाꣳसि व्यतिषजति लोकं वा एतच्छन्दाꣳसि यजमानो भ्रातृव्यस्य मोहयति स्वर्गस्य लोकस्याननुकख्यात्यै[5] देवेषु वा अन्यानि छन्दाꣳस्यासन्नसुरेष्वन्यानि कनीयाꣳसि देवेष्वासञ्ज्यायाꣳस्यसुरेषु ते देवाः कनीयोभिश्छन्दोभिर्ज्यायाꣳसि छन्दाꣳस्यसुराणामवृञ्जत यत्कनीयोभिश्छन्दोभिर्ज्यायाꣳसि छन्दाꣳसि विशꣳसति लोकं वा एतच्छन्दाꣳसि यजमानो भ्रातृव्यस्य वृङ्क्ते लोकमेनमछन्दस्कमकरनुष्टुभꣳ सर्वाणि छन्दाꣳस्यभिसꣳशꣳसति वाग्वा अनुष्टुब्वागनुष्टुभः पुरुषस्तस्मात्पुरुषः सर्वा वाचो वदति पशवो वै छन्दाꣳसि वागनुष्टुब्वागनुष्टुभः पुरुषो यत्सर्वाणि छन्दाꣳसि सꣳशस्यानुष्टुभमुत्तमाꣳ शꣳसति तस्मात्पुरुष उपरिष्टाद्वाचः पशूनत्ति सर्वाणि छन्दाꣳसि सꣳशꣳसति[6] प्रजापतिर्वै छन्दाꣳसि प्रजापतिमेवाप्नोति षडक्षराणि स्तोत्रादतिरिच्यन्ते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति तच्चत्वारि शस्त्रे पुनरुपावर्तन्ते[7] चतुष्पदस्तेन पशूनवरुन्द्धे ऽथ द्वे ए-

1) So M, die andern Mss °दयत्ता  [redacted] M सदेखं  3) Ben °वसति, in H u Bb त्वैत्यपचयति  4) So corrigirt, die Mss schwanken, M °स्यानुकख्यात्यै; Ben u H स्यानुख्यात्यै, desgl B, ohne Accent, Bb °स्यानुख्यात्यै  5) Die Mss schwanken; M °स्याननुकख्यात्यै, H °स्याननुख्यात्यै, desgl B, ohne Accent, Ben °स्यानुख्यात्यै; Bb °स्यानुख्यात्यै  6) H संꣳशं°  7) So M, H Bb, die andern Mss °वर्तेते

वातिरिच्येते[1] द्वे विराजमिति सत्यं चानृतं च विराजमेवाप्नोति ॥ ५ ॥

Vgl TS 6, 6, 11, 5 u 6 (shoḍaçigrahaḥ)

प्रजापतिर्वै देवेभ्यो यज्ञान्व्यकल्पयत्सो ऽमन्यतात्मानमन्तरगामिति तेषां वा इन्द्रियाणि वीर्याणि पुनः समवृहत्स षोडश्यभवदेष वै तर्हीन्द्रो[2] देवानामासीदवमतमः[3] शिथिरतमस्तस्मै वा एतं षोडशिनं[4] प्रायच्छत्तेनेन्द्रो ऽभवत्ततो देवा अभवन्परासुरास्तद्य एवं विद्वानेतं[5] षोडशिनं गृह्णीते भवत्यात्मना परास्य भ्रातृव्यो भवति प्रजापतिर्वै देवेभ्यस्तनूर्व्यकल्पयत्तासां या हरिवत्यासीत्तामात्मन्नधिष्यत[6] प्रेणा यद्धरिवती पुरोरुग्ग्रहस्य भवति यैवास्य हरिवती प्रिया तनूस्तामाप्नोति[7] न षोडशी नाम यज्ञो ऽस्तीत्याहुरथ कस्मात्षोडशीति यत्स्तोत्रेण च शस्त्रेण च संपद्यते तस्मात्षोडशी यज्ञेन वै देवाः स्वर्गं लोकमायंस्त[8] एषां न प्राभवंस्तस्मिन्वा एतं षोडशिनं[9] प्रत्यपश्यंस्तेनामुं लोकं व्याप्नुवंस्तदमुष्य वाव लोकस्य व्याप्त्यै षोडशी गृह्यते ऽमुष्य लोकस्य समष्ट्या अग्निष्टोमे राजन्यस्य गृह्णीयादेशान्त एनं वज्रो भूत्वा इन्द्धे ऽतिरात्रे ब्राह्मणस्य वज्रो वै षोडशीश्वरो ऽशान्तो यजमानं हिंसितो रात्रिरेव वज्रं शमयति प्रातःसवने गृह्यते[10] तेजो वै प्रातःसवनं तेजस एव वज्रं निर्मिमीते माध्यंदिने सवने गृह्य ओजो वै माध्यंदिनं सवनमोजस एव वज्रं निर्मिमीते तृ-

1) M °च्यते 2) So M, in Ben तर्हीन्द्रो, Bb तर्ह इन्द्रो, H तं है इन्द्रो, B ते होन्द्रो 3) Ben u M °मतम 4) Ben °शीन 5) Ben °शीन 6) Die Mss schwanken, H u Bb °मात्मनध्य॰ष्यत, desgl H ohne Accent, M °मात्मन्नधिष्यत, Ben °मात्मन्न्यष्यत् (erg °यति geschrieben dann corrigirt) 7) So Ben u M, in H u Bb तामेवाप्नोति, desgl B ohne Accent 8) M °मायन्तं 9) Ben °शीन 10) Bb तेज्ञ

तीयसवने गृह्यः पशवो वै तृतीयसवनं पशुभ्य एव वज्रं निर्मिमीते यत्प्रातःसवने गृह्णीयाद्वज्रा उत्तरे सवने अभ्यतिरिच्यते[1] यन्माध्यंदिने सवने मध्यतो वज्रो निहन्यात्[2] तृतीयसवने गृह्यस्तत्सर्वेषु सवनेषु गृह्णाति न पूर्वे सवने आर्तिं नीतः[3] पञ्चदशः कार्यो वज्रो वै पञ्चदशो वज्रमेवास्मा आधात्तेन विजितिं भूतिं गच्छति षोडशी कार्यो यजमानो वै पञ्चदशो वज्रः षोडशी वज्रमेवास्मा आधात्स एनं भूत्यै श्रेण्यं इन्द्धे सप्तदशः कार्यः प्रजापतिर्वै सप्तदशः प्राजापत्यः षोडशी स्व एवैनं योनौ दधात्येकविंशः[4] कार्य एकविंशतिधाम्नी वा अनुष्टुबानुष्टुभः षोडश्येतद्वा अस्यायतनतमं तस्मादेकविंशः कार्यो मध्यमे ऽहंस्त्रिरात्रस्य गृह्यो मध्यमं वा अहस्त्रिरात्रस्य शिथिरं मह्यो दृढिम्ने ऽशिथिरत्वाय चतुर्थे ऽहंश्चतूरात्रस्य गृह्यश्चतुर्थं वा अहश्चतूरात्रस्य शिथिरं मह्यो दृढिम्ने ऽशिथिरत्वाय चतुर्थे चतुर्थे ऽहन्नहीनस्य[5] गृह्यश्चतुर्थं चतुर्थं वा अहरहीनस्य[6] शिथिरं मह्यो दृढिम्ने ऽशिथिरत्वाय न द्विरात्रे ऽवकल्पते[7] द्वे वा एते छन्दसी गायत्रं च त्रैष्टुभं चाछन्दस्कमनायतनं गृह्णीते ऽनायतनो यजमानो भवत्युत्तरे ऽहन्द्विरात्रस्य गृह्यो रात्रिमेवायतनमभ्यतिरिच्यते[8] ॥ ६ ॥

Vgl 1, 8, 84 — TS 6, 6, 11, 1 flg (shodaçigrahah)

अथैषो ऽदाभ्यो देवाश्च वा असुराश्चास्पर्धन्त ते देवा एतमपश्यंस्तमगृह्णत तानसुरा नादभ्नुवंस्तदृदाभ्यस्यादाभ्यत्वं नैनं भ्रातृव्यो दभ्नोति य एतं गृह्णीते घ्नन्ति वा एतत्सोमं यदभिषुण्वन्त्यंशुर्वै सो-

---

1) Ben °रिच्यते (das Vorhandensein des c fraglich)    2) So M, die andern Mss विहन्यात्    3) Ben नीत    4) Bb दधात्ये°    5) Ben u M चतुर°    6) Ben °हिनस्य    7) So Ben u M, die andern Mss °कल्पते    8) So Ben, die andern Mss रात्रीम°

मस्यातिमोक्षिणी तनूर्यानेतानꣳशूꣳन्प्रवृहन्त्येवं वा एतं लोकं[1] यजमानो ऽत्यतिमुच्यते वि वा एतद्यज्ञश्छिद्यते यत्संवनानि संतिष्ठन्ते यदेतानꣳशूꣳन्पुनरप्यंस्यति यज्ञस्य संतत्या अविच्छेदाय वृष्ट्यै वा एष गृह्यते मरुत्वामानि हि वर्षति[2] पर्जन्यो यच्चैषं गृह्यते ऽग्निः प्रातः संवनात्पात्वस्मानिति संवनानि वा एतेन देवा असुराणामवृञ्जत संवनान्येवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते ऽग्नये त्वा प्रवृहामि गायत्रेण छन्दसेति छन्दाꣳसि च वा एतेन देवताश्च[3] देवा असुराणामवृञ्जत छन्दाꣳसि चैवैतेन देवताश्च यजमानो भ्रातृव्यस्य वृङ्क्ते चतुरो धूनोति[4] दिशो वा एतेन देवा असुराणामवृञ्जत दिश एवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते जीवग्रहो वा एष सोमस्याहुतस्य[5] ह्यनभिषुतस्य गृह्यते यजुषा च वा आहुत्या च यज्ञः संततो यद्यजुर्वदन्नाहुतिं जुहोति यजुषा चैवाहुत्या च यज्ञꣳ संतनोति देवा वै सोममगृह्णत स प्रजापतिरवेद्यो वा इदं प्रथमः सोमं ग्रहीष्यते स इदं भविष्यतीति स एतमगृह्णीत सो ऽभवद्यो भूतिकामः स्यात्स एतं गृह्णीत भवति यदि शक्नोति ग्रहीतुमुभौ भवतो यदि न शक्नोति ग्रहीतुमुभौ न भवतः पराचीनेन प्राणता ग्रहीतव्यः पराङ् हि स प्राणैः प्रियो ऽन्तमगच्छदपानता ग्रहीतव्यो ऽपानꣳ[6] हि स तमगृह्णीत प्राण्यापान्याव्यानता[7] ग्रहीतव्यो ऽव्यानꣳ[8] हि स तमगृह्णीत यद्व्यानेत्प्राणान्विच्छिन्द्याद्यदि व्यानेद्धिरण्येनापिदध्यादमृतꣳ वै हिरण्यममृतेनैव प्राणान्त्संदधाति[9] सकृदभिषुणोति सकृद्गृह्णात्येको वै प्रजापतिः प्रजापतिमेवाप्नोति चतुःस्रक्तिना ग्रहीतव्यश्चतुःस्रक्तिना वा एतं

1) So Ben u M, die andern Mss एतंलोक॰ 2) In H u Bb वर्षति ohne Accent. 3) देवताश्च fehlt in Ben 4) Ben ॰धुनोति 5) M ॰हुतस्य 6) So Ben, in M, H u Bb ॰तव्यो पान॰ 7) M प्राण्यापान्या॰ 8) H u Bb ॰व्यो व्यान॰ 9) M प्राणाꣳस्तं

प्रजापतिर्गृह्णीत स सर्वासु दिक्ष्वार्ध्नोत्स सर्वासु दिक्ष्वृध्नोति य एवं विद्वानेतं चतुःस्रक्तिना गृह्णीते ऽपो वै सोमस्य रसः प्रविष्टः सोममपां रसो यथा वा इदं गावौ संजग्माने अन्यान्यां हत एवं वा एतौ संजग्माना अ३न्यो ऽन्यस्येन्द्रियं वीर्यं विनिर्हतस्तयोर्वा एष रसो यदधि यद्ध्रा जुहोति स्वेनैवैनौ रसेन शमयति ॥ ७ ॥

Vgl 1, 3, [illegible] — TS 6, 6, 9 (adâbhyaḥ) u [illegible] (aṃçugrahaḥ)

कृष्णग्रीव आग्नेयो मेषी सारस्वती बभ्रुः सौम्यः श्यामः पौष्णः शितिपृष्ठो बार्हस्पत्यः पिशङ्गो वैश्वदेवो वृष्णिरैन्द्रः कल्माषो मारुतः संहित ऐन्द्राग्नो ऽधोरामः सावित्रः पेत्वो वारुणः प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत स एतामेकादशिनीमपश्यत्तयात्मानमाप्रीणीत यज्ञो वै प्रजापतिस्तद्य एवं विद्वानेतामेकादशिनीं विधत्ते यदेवास्यात्मन ऊनं तदाप्रीणीते प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत स एतानीन्द्रियाणि वीर्याण्यपश्यत्तानि द्वन्द्वमात्मानमभिसमबध्नीताग्नेयो वाक्सरस्वतीन्द्रियं सोमो वाचं चैवेन्द्रियं चात्मानमभिसमबध्नीत पुष्टिः पौष्णो ब्रह्म बृहस्पतिः पुष्टिं चैव ब्रह्म चात्मानमभिसमबध्नीत बलं विश्वे देवा वीर्यमिन्द्रो बलं चैव वीर्यं चात्मानमभिसमबध्नीतौजो मरुतः सह इन्द्राग्नी ओजश्चैव सहश्चात्मानमभिसमबध्नीत प्रसवाय सावित्रो निर्वरुणत्वाय वारुण आग्नेयाय सर्वा उपबध्यन्ते ऽग्निर्वै सर्वा देवताः सर्वाभ्य एव देवताभ्य उपबध्यन्ते मिथुनत्वायैव सारस्वत्यथ यत्सौम्यः सौ-

1) So corrigirt, die Mss schwanken, Bcn दिक्ष्वृध्नोति, M दिक्षु ऋध्नोति, H u Bb दिक्षो ऋध्नोति, desgl B, ohne Accent. 2) Bcn उनं, H u Bb सुर्न

मो वै रेतोधा रेतो ऽसिन्दधात्यथ यत्पौष्णः प्रजननं वै पूषा प्रजननाय ब्रह्म बृहस्पतिर्वैश्वदेवीरिमाः प्रजा ब्रह्म वा एतत्पुरस्तादासां प्रजानामत्यौहीदथो ब्रह्मण एवैमाः प्रजा अनुकाः करोति क्षत्रमिन्द्रो विशमरुतो विशं वा एतत्क्षत्राय नियुनक्त्यथो विशमेव क्षत्रायानुकां करोत्योज इन्द्राग्नी ओजसा वा एतद्विशं क्षत्राय परिगृह्णात्यालभ्य आग्नेयमालभ्य ऐन्द्रो ऽथैष ऐन्द्राग्न आलभ्यते ब्रह्म चैवं क्षत्रं च सयुजा अकर्यदग्निश्चेन्द्रश्च भूयिष्ठभाजौ देवतानां तस्माद्ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणां प्रसवाय सावित्रो निर्वरुणत्वाय वारुणः समुद्रो वै वरुणो दक्षिणा समुद्रो यद्वारुणो दक्षिणार्ध आलभ्यते यजमानस्य निर्वरुणत्वायेतद्वा एषाभ्यनूक्ता ॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

इति ॥ ८ ॥

Vgl TS 6, 6, 5 (paçvekadaçinî)

ये देवानां बलमतमास्तेभ्यो दक्षिणार्ध आलभ्यन्ते तस्मात्प्रजा दक्षिणाभिजयन्तीयेन्ति यदाग्नेयः सौम्यो बार्हस्पत्यस्ते सार्धमालभ्यन्ता ओज एवैतत्संधीयते यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितस्तेजसा च वा वासा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णात्येकादश वा एतेषां पशूनां देवता मेषी सारस्वती देवतानां द्वादशी यदेषातिरिच्यते तस्मात्स्त्रियः पुंसो ऽतिरिच्यन्ते ऽथ द्वे एकस्य रशने द्वे एकस्य तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसमथ स्त्रिय एवातिरिच्यन्ते यं

1) Bb विंयुन॰ 2) H u Bb ॰र्धेत 3) So M H u Bb, m Ben परास्यति

वा अमुमिन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधाभवद्यदस्य तेजा आसीत्तं स्फ्यो ऽभवद्यन्मध्यं स रथो यज्जघनं स यूपः स्फ्येन परिलिखति रथाक्षेण विमिमीते यूपो भवति वज्र एवैष संभ्रियत एतावती वा इयं पृथिवी यावती वेदिर्वज्र एकादशिनी तिरश्चीं मिनोति वज्रेण वा एतदिमां जयति दक्षिणत उन्नता मेतव्या देवयजनस्य रूपमथो वज्रं वा एतद्यजमानो भ्रातृव्यायोद्यच्छति यो मध्यतः समां मेतव्याः समत्वाय समं हि पशवो ऽनूपतिष्ठन्ते पशुभिरेवैनं सम्यञ्चं दधाति यं कामयेत पितृलोकं ऋध्नुयादिति तस्योपरसंमितां मिनुयात्पितृलोकं एव ऋध्नोत्यथ यं कामयेत मनुष्यलोकं ऋध्नुयादिति तस्य मध्यसंमितां मिनुयान्मनुष्यलोकं एव ऋध्नोत्यथ यं कामयेत देवलोकं ऋध्नुयादिति तस्य चषालसंमितां मिनुयाद्देवलोकं एव ऋध्नोति तासां वा एषां समृद्धतमा या चषालसंमिता तस्माच्चषालसंमिता मेतव्या समृद्ध्यै यस्य पश्चादुपस्यः पुरस्तान्निर्णतं तं मिनुयाद्यं कामयेत भ्रातृव्याय लोकं कुर्याद्यजमानं निर्बाधेतेति भ्रातृव्यायैव लोकं करोति यजमानं निर्बाधते ऽथ यस्य पुरस्तादुपस्यः पश्चान्निर्णतं तं मिनुयाद्यं कामयेत यजमानाय लोकं कुर्याद्भ्रातृव्यं निर्बाधेतेति यजमानायैव लोकं करोति भ्रातृव्यं निर्बाधते सर्वे ऽग्निष्ठाः का३र्या या अग्निष्ठा अश्रयस्तां अग्निष्ठाः का३र्यास्तेन सर्वे ऽग्निष्ठा अथ यदग्निष्ठादधि रशना विह्रियन्ते तेन सर्वे ऽग्निष्ठा नाना वा एतेषां पशवो नाना देवता अथ य एष द्वादशो यजमान

---

1) Dies Wort in den Mss. ohne Accent. 2) M (u. Bl.) य कामं कामयेत. 3) So corrigirt, Ben विह्रियन्ते, desgl. M, ohne Accent, in H u. Bb विह्रीयेते; B विह्रीयन्ते

एवैतस्य पशुर्यदस्मै पशुं न निर्दिशेत्प्रमायुको यजमानः स्याद्यं द्विष्यात्तं ब्रूयात् ॥ असौ ते पशुः ॥ इति तमेवास्मै पशुं निर्दिशति प्रमायुको भवति यद्यभिचरेत् ॥ इदमहममुमामुष्यायणममुष्याः पुत्रमिन्द्रवज्रेणाभिनिदधामि ॥ इत्यभिनिदध्यादिन्द्रवज्रेणैवैनमभिनिदधाति प्रमायुको भवत्यथो द्वादशस्यैवैष मासो ऽवरुद्धो ॥ ९ ॥

Vgl TS 6, 6, 4 (yupâikadaçinî)

॥ इति खिलकाण्डे सप्तमः प्रपाठकः ॥

---

मनोर्वै पात्राण्यासंस्तैषां समाहन्यमानानां यावन्तो ऽसुरा उपाशृण्वंस्तावन्तस्तद्दहनाभवन्नथ वा एतौ तर्ह्यसुराणां ब्राह्मणा आस्तां तृष्टावरूत्री ता अब्रुवंश्चिकित्सतं ना इति ता अब्रूतां मनो यज्वा वै श्रद्धादेवो ऽसीमानि नौ पात्राणि देहीति तानि वा आभ्यामददात्तान्यग्निना समक्षापयतां तान्वालानृषभः समलेढ् तं सा मेनिरन्वपद्यत[9] तस्य रुवतो यावन्तो ऽसुरा उपाशृण्वंस्तावन्तस्तद्दहनाभवंस्तौ अब्रूतां[10] मनो यज्वा वै श्रद्धादेवो ऽस्यनेन त्व

1) M (u Bl) पशू 2) Die Mss schwanken, Ben °शेत्तत्प्र°, M °शेत् । प्र°, H u Bb °शेत्तं प्र°, desgl B, ohne Accent 3) So Ben u M, die andern Mss °दध्याति 4) Das इति fehlt in den Mss 5) So Ben u Bb, ■ H ohne Accent, M u Bl ohne Accent 6) So Ben, desgl M, ohne Accent (u Bl), die andern Mss चिट्टावरूत्री, cf त्रिष्टावरूत्री (sic) असुरब्रह्मौ Kath in Ind St 3, 461 flg, Kap S 40, 4 तृष्टावरूत्री 7) M u Bl चीकित्सतं 8) Die Mss schreiben °वो ज्य° 9) Ben मेनीर° 10) H अब्रूता

गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन्[1] ॥
ह॰सैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना[2] व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गा[4] उत प्रास्तौदुच्च[5] विद्वा[6] अगायत्[7] ॥
त्व॰ सुतस्य पीतये सद्यो वृद्धो अजायथाः ।
इन्द्र ज्यैष्ठ्याय सुक्रतो[8] ॥
भुवस्त्वमिन्द्र ब्रह्मणो महान्भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नॄ॰श्च्यौत्नो[9] विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे[10] ॥
प्र सम्राजानमीवासः[11] ॥
यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।
मिनीमसि द्यवि द्यवि[12] ॥
यत्किंचेद॰ वरुण दैव्ये जने ऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा[13] युयोपिम[14] मा नस्तस्मादेनसो देव रीरिषः[15] ॥
यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे ।
यथा तोकाय रुद्रियम्[16] ॥
मा नस्तोके तनये मा ना[17] आयुषि मा नो गोषु मा नो अश्वेषु री-
रिषः[18] ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते[19] ॥

---

1) P सं । उत्सैंय । 2) Vgl RV 10, 68 1, TS 3, 4 11, 3, Kath 23, 12 3) So P, die Samh Mss महना 4) P गां । 5) P प्रं । प्रस्तौत् । उत् । च । 6) P वि-द्वान् । 7) Vgl RV 10 67 3, TS 3 4, 11, 3, Kath 23, 12 8) Vgl RV 1, 5, 6, TS 3, 4 11 4, Kath 23 12 9) Die Samh Mss च्यौत्नो, P नृन् । च्यौत्नं । 10) Vgl RV 10 50 4, TS 3 4 11 4, Kath [illegible] 12 11) So die Samh Mss, in P fehlen diese Worte. 12) Vgl RV 1 25 1, TS 3 4 11, 5 13) P धर्म । 14) So P u B युयोपिम, H u Bb पुपोपिम 15) Vgl RV 7, 89 5, TS 3 4 11, 6, TBr 2 3, 1 6, Kath 23 12 16) Vgl RV 1, 43 2, TS 3 4 11, 2, Kath 23 12 17) P न । 18) P रिरिष । 19) Vgl RV 1, 114 8, TS 3, 4 11, 2, TBr 2, 8, 6, 9, TA 10 53, Kath 23, 12, VS 16, 16

ये इमा विश्वा जातान्याभावयति श्लोकेन।
प्र च सुवाति सविता[1] ॥
विश्वा रूपाणि[2] ॥
अश्विना यज्ञमागतं दाशुषः पुरुदंससा।
पूषा रक्षतु नो रयिम्[3] ॥
इमं यज्ञमश्विना वर्धयन्तेमौ[4] रयिं यजमानाय धत्ताम्।
इमौ पशून्रक्षतां[5] विश्वतो नः पूषा नः पातु सदमप्रयुच्छन्[6] ॥
प्र ते महे[7] सरस्वति सुभगे वाजिनीवति।
सत्यवाचे भरे मतिम् ॥
इदं ते हव्यं घृतवत्सरस्वति[8] सत्यवाचे प्रयतेमा[9] हवींषि।
इमानि त उदिता[10] शंतमानि तेभिर्वयं सुभगासः स्याम[11] ॥ ६ ॥

Vgl TS 3 3 11, 3, 4, 11 n o, weitere Vergleichungen s in den Anmerkungen

॥ इति[12] खिलकाण्डे द्वादशमः प्रपाठकः[13] ॥

---

1) Vgl RV 5, 82, 9 2) Der P fügt hier die Worte प्रति । सुवते । hinzu, vgl RV 5 81 2, TS 4 1 10 4, Kāth 16 6, 10, 12, Kap S 32 1, Vs 12 3 3) Vgl TBr 2, 5, 4 5 4) P वर्धयन्ता । इमौ । 5) P पशून् 6) Vgl TBr 2, 5 4 5 7) So P, die Samh Mss महे 8) So Bb, auch P घृतवदिति घृत वत् ।, in H घृतावत्, desgl B, ohne Accent 9) P प्र । यतेम । 10) P उदितेत्युत् इता । 11) Vgl TBr 2 5 4 6 12) Das इति fehlt in den Mss 13) Im P am Schluss समुदायेन एकोनत्रिंशो ऽध्यायः ।

प्र देवं देव्या धियेत्यष्टौ[1] ॥

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन।
यदूर्ध्वस्तिष्ठा[2] द्रविणेह[3] धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे[4] ॥
उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि।
सुमिती मीयमानो[5] वर्चो धा यज्ञवाहसे[6] ॥
समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् ।
आरे अस्मदमतिं बाधमाना[7] उच्छ्रयस्व महते सौभगाय[8] ॥

ऊर्ध्व ऊ षु ण[9] ऊतये[10] ॥

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह।
कृधी न[11] ऊर्ध्वाञ्चरथाय[12] जीवसे विदा[13] देवेषु नो दुवः[14] ॥
जातो जायते सुदिनत्वे अह्नां समर्ये[15] आ विदथे वर्धमानः।
पुनन्ति धीरा[16] अपसो मनीषा देवया विप्र[17] उदियर्ति वाचम्[18]॥
युवा सुवासाः परिवीतो[19] आगात्स[20] उ श्रेयान्भवति जायमानः।
तं धीरासः कवय[21] उन्नयन्ति स्वाध्यो मनसा[22] देवयन्तः[23] ॥

अभि त्वा देव सवितरिति त्र्योदश[24] ॥ १ ॥

Vgl TBr 3, 6 1 (pâçukahotramuktâh, yupasamskarah), Kâth 15, 12, RV 3, 8; weitere Vergleichungen s in den Anmerkungen

1) P धिया। इत्यष्टी चच। पूर्वमुक्ता।, vgl RV 10, 176, 2, TS 3, 5, 11, 1, Kâṭh 15, 12 2) P तिष्ठा।, hier beginnt S 38 von Ben, welche Handschrift also fortab wieder berücksichtigt wird 3) P द्रविणा। इह। 4) Vgl RV 3, 8, 1, TBr 3, 6, 1, 1, Kâth 15, 12 5) Ben, H u Bb मियमानो 6) Vgl RV 3, 8, 3, TBr 3, 6, 1, 1, Kaṭh 15, 12 7) P बाधमाण। 8) Vgl RV 3, 8, 2, TBr 3, 6, 1, 1, Kaṭh 15, 12 9) P ऊर्ध्वं। उ। सुं। न। 10) Vgl RV 1 36, 13, TS 4 1, 4, 2, 5, 1, 5 2, TBr 3, 6, 1, 2, TA 4, 20, 1, Kath 15, 12, 16 4 VS 11, 42 11) P कृधि। न। 12) So corrigirt, die Samh Mss ऊर्ध्वां, P ऊर्ध्वान्। 13) P विदा। (!) 14) Vgl RV 1, 36 14, TBr 3 6, 1, 2, Kath 15, 12 15) P समर्य इति स मर्ये। 16) P धीराः। 17) P विप्र। 18) Vgl RV 3, 8, 5, TBr 3, 6, 1, 3 19) P परिवीत इति परि-वीत.। 20) P आ। अगात्। सः। 21) P कवयः। 22) Ben मनसा 23) Vgl RV 3, 8, 4, TBr 3, 6, 1, 3, TA 1 27, 2, Kath 15, 12 24) P इति त्र्योदश ऋच पूर्वोक्ता।, vgl RV 1, 24, 3, TS 3, 5, 11 3, Kath 15 12, 28, 7, Kap S 44, 7

होता यक्षदग्निꣳ समिधा सुषमिधा[1] समिद्धं नाभा पृथिव्याः संगथे वामस्य वर्ष्मन्दिवः[2] इडस्पदे वेत्वाज्यस्य होतर्यज होता यक्षत्तनूनपातमदितेर्गर्भं[3] भुवनस्य गोपां मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज होता यक्षन्नराशꣳसं नृशस्तं[4] नॄꣳ प्रणेत्रं[5] गोभिर्वपावान्स्याद्वीरैः शक्तीवान्रथैः प्रथमयावा[6] हिरण्यैश्चन्द्री[7] वेत्वाज्यस्य होतर्यज होता यक्षदग्निमिडं[8] ईडितो देवो देवाꣳ आ च वक्षद्दूतो हव्यवाडमूरः[9] उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा[10] अस्मिन्यज्ञे वि च प्र च प्रथताꣳ स्वासस्थं देवेभ्यः[11] एमेनदद्य[12] वसवो रुद्रा आदित्याः स्वदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज होता यक्षद्दुरः[13] ऋष्वाः कवष्यो[14] कौषधावनीरुदाताभिर्जिहताꣳ[15][16] वि पक्षोभिः[17] श्रयन्ताꣳ सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो वेत्वाज्यस्य होतर्यज होता यक्षदुषासानक्ता बृहती सुपेशसा नॄꣳ पतिभ्यो[18] योनिं कृण्वाने संस्मयमाने इन्द्रेण देवैरेदं[19] बर्हिः सीदताꣳ[20] वीतामाज्यस्य होतर्यज होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा स्विष्टमद्यान्यः कर-

1) B सुसमिधा, P सुषमिधा सुसमिधेति सु समिधा। 2) P दिवः। 3) Die Samh Mss °मदिते गर्भं; P अदितेः। गर्भं। 4) So Ben u Bb, so H नृशस्तं, P नृशस्तमिति नृ शस्तम्। 5) Die Mss schwanken; B नॄꣳ प्रणेत्र, Bb नॄꣳः प्रणेत्र, H नॄꣳ प्रणेत्र, Ben नॄः प्र°, P नॄन्प्रणेत्र। नॄन्प्रणेत्रमिति नॄं प्रणेत्र।, TBr 3 6, 2 नॄꣳः प्रणेत्रम्। 6) Ben प्रथमजा। 7) P इन्द्रः। 8) P देवान्। 9) P अमूरः। 10) P सुष्टरीम। सुष्टरीमेति सु स्तरीम। ऊर्णम्रदा ऊर्णम्रदः। 11) P देवेभ्यः। 12) P आ। ईं। एनत्। अद्य। 13) P दुरः। 14) So H u. Bb, Ben कवष्यो, P कवष्यः। 15) So corrigirt, die Mss schwanken, H, Bb = B कौषधावनी°, Ben कौवधावनी°; P कौषधावनी-रिति कौष. धावनी। 16) P उत्। आभिः। जिहताम्। 17) P पक्ष. । अभिः। (!) 18) Die Mss schwanken; H u Bb नॄꣳ पतिभ्यो°, desgl. B, ohne Accent, Ben नॄः प°; P नॄन्। पतिभ्य इति पति-भ्यः।, TBr 3, 6, 2, 2 नॄꣳः पतिभ्यो 19) P देवैः। आ। इदं। 20) P सीदत।

दिवा[1] स्वभिगूर्तमन्य[2] ऊर्जो सन्तवसेम[3] यज्ञं दिवि देवेषु धत्ता[4] वीतामाज्यस्य होतर्यज होता यक्षत्तिस्रो देवीरपसामपस्तमा[5] अच्छिद्रमद्येदमपस्तन्वताम्[6] देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज होता यक्षत्त्वष्टारमचिष्टुमपाक रेतोधां विश्रवसं यशोधां पुरुरूपमकामकर्शनं[7] सुपोषः पोषैः स्यात्सुवीरो[8] वीरैर्[9] वेत्वाज्यस्य होतर्यज होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमन्नरः[9] स्वदात्स्वधितिर्ऋतुथाद्य[10] देवो देवेभ्यो हव्यावाड्[11] वेत्वाज्यस्य होतर्यज ॥ २ ॥

Vgl TBr 3, 6, 2 (prayājavishayakamaitrāvaruṇapraishoktiḥ).

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः[12] ॥
तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्स्वदया[13] सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा[14] च कृणुह्यध्वरं नः[15] ॥
नराशंसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्तु[16] देवा उभयानि हव्या[17] ॥
आजुह्वान[18] ईड्यो वन्द्यश्च[19] यास्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो[20] यजीयान्[21] ॥

---

1) Die Samh Mss स्वरदिवा, P स्वरत् । इवा । 2) P मन्यः । 3) P सं तवसा । इमे । 4) P धत्त । 5) P अच्छिद्र । अद्य । इदं । अपः । तन्वता । 6) P युञ्जु । 7) P अकामकर्शनमित्यकामऽकर्शन । 8) P स्यात् । 9) So mit P शशंमन् ।, Ben u Bb शशंम, desgl H u B, ohne Accent 10) Bb स्वधात् 11) So Ben u Bb, P हव्या ।, वषाट् ।, H हव्यंवाट्, desgl B, ohne Accent 12) Vgl RV 10, 110, 1, TBr 3, 6, 3, 1; Kaṭh 16, 20, VS 29, 25 13) H u Bb स्वदया, P स्वद्य । 14) P स्वदन् । 15) Vgl RV 10 110, 2, TBr 3, 6, 3 1, Kaṭh 16, 20, VS 29, 26 16) So Ben, H u Bb स्वदन्तु, desgl B, ohne Accent P स्वदति । 17) Vgl RV 7, 2, 2, TBr 3, 6, 3, 1, Kāṭh 37, 4, VS 29 27 18) P आजुह्वान इत्या.जुह्वान । 19) P वंद्य । च । आ । 20) P एनान् । यक्षि । इषितः । 21) Vgl RV 10, 110, 3, TBr 3, 6, 3, 2, Kaṭh 16, 20, VS 29, 28.

होता यक्षदग्निं समिधा सुषमिधा[1] समिद्धं नाभा पृथिव्याः संगथे वामस्य वर्ष्मन्दिवं[2] इडस्पदे वेत्वाज्यस्य होतर्यज होता यक्षत्तनूनपातमदितेर्गर्भे[3] भुवनस्य गोपां मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज होता यक्षन्नराशंसं नृशस्तं[4] नॄं प्रणेत्रं[5] गोभिर्वपावान्त्स्याद्वीरैः शक्तीवान्रथैः प्रथमयावा[6] हिरण्यैश्चन्द्री[7] वेत्वाज्यस्य होतर्यज होता यक्षदग्निमिड ईडितो देवो देवां[8] आ च वक्षद्दूतो हव्यवाडमूरः[9] उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा[10] अस्मिन्यज्ञे वि च प्र च प्रथतां स्वासस्थं देवेभ्यः[11] एमेनदद्य[12] वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज होता यक्षद्दुरः[13] ऋष्वाः कवष्यो[14] कौषधावनी[15] रुदाताभिर्जिहताम्[16] वि पक्षोभिः[17] श्रयन्ताम् सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो वेत्वाज्यस्य होतर्यज होता यक्षदुषासानक्ता बृहती सुपेशसा नॄंः पतिभ्यो[18] योनिं कृण्वाने संस्मयमाने इन्द्रेण देवैरेदं[19] बर्हिः सीदताम्[20] वीतामाज्यस्य होतर्यज होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा स्विष्टमद्यान्यः कर-

1) B सुसमिधा, P सुषमिधा सुसमिधेति सु समिधा। 2) P दिवं। 3) Die Samh Mss °मदिते गर्भे, P °मदिते। गर्भे। 4) So Ben u Bb, m H नृशस्तं, P नृशस्तमिति नृ शस्तम्। 5) Die Mss schwanken, H नॄं प्रणेत्रं, Bb नॄं°, °प्रणेत्रं, H नॄंप्रणेत्रं, Ben नॄं प्र°, P नॄंप्रणेत्रं। नॄंप्रणेत्रमिति नॄं प्रणेत्रं।, TBr 3 6, 2 नॄं प्रणेत्रम् 6) Ben प्रथमजा 7) P इच्छ। 8) P देवान्। 9) P अमुरः। 10) P सुष्टरीम। सुस्तरीमेति सु स्तरीम। ऊर्णम्रदा इत्यूर्ण म्रदा। 11) B देवेभ्य। 12) P आ। ई। एनत्। अद्य। 13) P दुरः। 14) So H u Bb, Ben कवष्यौ, P कवष्यः। 15) So corrigirt, die Mss schwanken, H Bb u B कौषधावनी°, Ben कोवधावनी°, P कौषधावनीरिति कौष धावनी। 16) P उत्। आभिः। जिहताम्। 17) P पक्ष। आभिः। (!) 18) Die Mss schwanken, H u Bb नॄंःपति°, desgl B, ohne Accent Ben नॄं प°, P नॄंः। पतिभ्य इति पति भ्यः।, TBr 3, 6 2 2 नॄंः पतिभ्यो 19) P देवैः। आ। इदं। 20) P सीदत।

दिया[1] स्वभिगूर्तमर्च्य[2] ऊर्जो संतवसेम[3] यज्ञं दिवि देवेषु धत्ता[4] वीतामाज्यस्य होतर्यज होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वतां[5] देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य[6] होतर्यज होता यक्षत्त्वष्टारमचिष्टुमपाकं रेतोधां विश्रवसं यशोधां पुरुरूपमकामकर्शनं[7] सुपोषः पोषैः स्यात्सुवीरो[8] वीरैर्वेत्वाज्यस्य होतर्यज होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमन्नरः[9] स्वदात्स्वधितिर्ऋतुथाद्य[10] देवो देवेभ्यो हव्यावाड्[11] वेत्वाज्यस्य होतर्यज ॥ २ ॥

Vgl TBr 3, 6, 2 (prayâjavishayakamaitrâvaruṇapraishoktih)

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः[12] ॥
तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्स्वदया[13] सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा[14] च कृणुह्यध्वरं नः[15] ॥
नराशंसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्तु[16] देवा उभयानि हव्या[17] ॥
आजुह्वान[18] ईड्यो वन्द्यश्चा[19] याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो[20] यजीयान्[21] ॥

---

1) Die Saṃh Mss ॰रदिया, P ॰रत् । दया । 2) P ॰मर्च्य । 3) P सं तवसा । इमं । 4) P धत्त । 5) P ॰अच्छिद्र । अद्य । इदं । अपः । तन्वता । 6) P व्यन्तु । 7) P ॰अकामर्शनमित्यकामकर्शनम् । 8) P सुवी । 9) So mit P शशमन् ।, Ben u Bb शशम, desgl H u B, ohne Accent. 10) Bb स्वधात् 11) So Ben u Bb, P हव्या ।, ॰वाट् ।, H हव्यवाड् desgl B, ohne Accent 12) Vgl RV 10, 110, 1, TBr 3, 6 3, 1, Kaṭh 16, 20, VS 29 25 13) H u Bb स्वदया, P स्वदय । 14) P ॰वता । 15) Vgl RV 10 110, 2, TBr 3 6, 3 1 Kaṭh 16, 20, VS 29, 26 16) So Ben, H u Bb स्वदन्तु, desgl B, ohne Accent P स्वदन्तु । 17) Vgl RV 7, 2, 2 TBr 3, 6 3, 1, Kaṭh 37, 4, VS 29 27 18) P आजुह्वान ईड्य आजुह्वान । 19) P वन्द्य । च । आ । 20) P एनान् । यक्षि । इषित । 21) Vgl RV 10, 110, 3, TBr 3, 6, 3, 2, Kaṭh 16, 20, VS 29, 28.

प्राचीनं बर्हिः प्रदिशा पृथिव्या[1] वस्तोरस्या[2] वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम्[3] ॥
व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो नं जनयः शुम्भमानाः ।
देवीर्द्वारो[4] बृहतीर्विश्वमिन्वा देवेभ्यो भवत[5] सुप्रायणाः[6] ॥
आ सुष्वयन्ती[7] यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने[8] ॥
दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता[9] ॥
आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु[10] ॥
य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतरिषितो[11] यजीयान्देवं त्वष्टारमिह यक्षि विद्वान्[12] ॥
उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु[13] हव्यं मधुना घृतेन[14] ॥ ३ ॥

Vgl RV 10, 110, TBr 3, 6, 3 (âprîsaṃjñakaprayâjayâjyoktiḥ), Kâṭh 16, 20, VS 29, 25 flg

---

1) P पृथिव्या । 2) P वस्तोः । अस्याः । 3) Vgl RV 10, 110, 4, TBr 3 6, 3, 2; Kâṭh 16, 20, VS 29, 29 4) So im Anschluss an P देवीः । द्वारः ।, die Saṃh Mss देवीर्द्वारो 5) B u. Bb भवतु 6) Vgl RV 10, 110, 5, TBr 3, 6, 3, 2, Kâṭh 16, 20, VS 29, 30 7) P आ । सुष्वयन्ती । सुस्वयन्ती इति सु स्वयन्ती । 8) Vgl RV 10, 110, 6, TBr 3, 6, 3, 3, Kâṭh 16 20, VS 29, 31 9) Vgl RV 10, 110, 7, TBr 3, 6, 3, 3, Kâṭh 16, 20, VS 29 [illegible] 10) Vgl RV 10, 110 8, TBr 3, 6, 3, 4, Kâṭh 16, 20; VS 29, 33 11) Ben होत चषीतो 12) Vgl RV 10, 110, 9, TBr 3, 6, 3, 4; Kâṭh 16, 20 13) P स्वदतु । 14) Vgl RV 10, 110, 10, TBr 3, 6, 3, 4; Kâṭh 16, 20, VS 29, 35

अग्निर्होता नो अध्वरे वाजी सन्परिणीयते ।
देवो देवेषु यज्ञियः[1] ॥
परि त्रिविष्ट्यध्वरं[2] यात्यग्नी[3] रथीरिव ।
आ देवेषु प्रयो दधत्[4] ॥

परि वाजपतिः कविः[5] ॥ अञ्जेदग्निरसनद्वाजं[6] नि देवो देवेभ्यो हव्यावाट्[7] प्राञ्जोभिर्हिन्वानो[8] धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य[9] होतर्हव्या देवेभ्यो दैव्याः शमितार उत मनुष्या[10] आरभध्वमुपनयत[11] मेध्यादुर[12] आशासाना[13] मेधपतये[14] मेधं प्रासा[15] अग्निं भरत स्तृणीत बर्हिरन्वेन[16] माता मन्यतामनु[17] पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्य उदीचीना[18] अस्य पदो निधत्तात्सूर्यं[19] चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं[20] पृथिवीं शरीरमेकधास्य त्वचमाछ्यतात्पुरा[21, 22] नाभ्या[23] अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयताच्छ्येनमस्य[24] वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवांसाछिद्रे[25] श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता[27] षड्विंशतिरस्य वङ्क्रयस्ता[28]

1) Vgl RV 4 15 1, TBr 3 6 4 1, Kaṭh 16, 21, 38, 12  2) P त्रिविष्टीति त्रि विष्टि । अध्वरं ।  3) P यात्यग्नि ।  4) Vgl RV 4, 15 2, TBr 3, 6, 4, 1, Kāṭh 16, 21, 38, 12  5) Vgl RV 4 15 3, TS 4 1 2 5 TBr 3 6, 4, 1, Kāṭh 16 2 u 21, 19 3, 38 12, Kap [illegible] 30 1, VS 11 35  6) P अंसनीत् ।, vgl TBr 3, 6, 5, Kāṭh 16, 21  7) So Ben u Bb in H हव्यवाट् desgl B ohne Accent, P हव्यवाडिति हव्य वाट् ।  8) P प्र । अञ्जोभिरित्यञ्जः भिः ।  9) So Ben, in Bb °नुपप्रेष्य, H नुपप्रेष्य B °नुपप्रेष्य P उपप्रेष्येति । उप । प्रेष्य ।  10) P मनुष्याः ।  11) P आ । रभध्वं ।  12) P मेधात् । [illegible]  13) P आशासाना इत्या शासाना ।  14) H मेध पतये  15) P प्र । अस्त ।  [illegible] RV 1, 13 5  17) Bb मन्यतामनु vgl Kāṭh 16 21  18) P उदीचीनान् । [illegible] Ait Br 2, 6  19) P निधत्तादिति नि धत्तात् ।  20) P अन्तरिक्षं । असुं । [illegible] auch P त्वचं । आ । छ्यतात् । die andern Mss त्वचमाछ्यतात्  23) P [illegible] नाभ्याः ।  24) So Bb die andern Mss वारयध्वात्, P वारयध्वात् । [illegible] साछिद्रे इति वा° साछिद्रे । (?)  26) P कवषो । ऊरू इति । [illegible] Mss, desgl TBr 3, 6 6 3, P स्रेकपर्णा । अष्ठीवन्ता ।  29) P वङ्क्रयः । [illegible]

अनुष्ठ्योच्च्यावयताद्ग्रीवं[1] गानमस्यानूनं[2] कृणुतादूवध्यगोहं पार्थिवं खनतादस्ना रक्षः संसृजताद्वनिष्ठुमस्य मा राविष्टोरूकं[3] मन्यमाना[4] नेद्वस्तोके[5] तनये रविता रवदध्रिगो[6] शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगो[7] ॥

अध्रिगुश्च विपापश्च देवानां शमितारौ ।
तौ[8] एनं प्रविद्वांसौ श्रपयतं यथास्य श्रपणं तथा ॥ ४ ॥

Vgl TBr 3, 6, 4—6 (paryagnikaraṇyājñānāṃ ṛcāṃ uktiḥ, maitrāvaruṇapraiṣoktiḥ, adhrigupraiṣakathanam), weitere Vergleichungen s. in den Anmerkungen

जुषस्व सप्रथस्तमम्[9] ॥
इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान[10] प्रथमो निषद्य[11] ॥
घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः ।
स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यम्[12] ॥
तुभ्यं स्तोका घृतश्चुतो[13] ऽग्ने[14] विप्राय सन्त्य ।
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव[15] ॥
तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा[16] हव्या जुषस्व[17] मेधिर[18] ॥
ओजिष्ठं ते मध्यतो मेद[19] उद्भृतं प्र ते वयं ददामहे ।

1) Die Saṃh Mss °योच्चा°, P °अनुष्ठ्य ऽच्यनु ग्रीवं । च्यावयतात् । 2) P ग्राह्य । अनूनम् । 3) P मा । अरविष्ट । उरूकं । 4) P मन्यमाना । 5) So Ben, auch P नेत् । इत् । व । तोके ।, die andern Mss नेद्वस्तोके 6) P रविता । अरवत् । 7) So H in Bb °मध्रिगो, in Ben ohne Accent 8) P तौ । 9) Vgl RV 1, 75, 1, TBr 3 6, 7, 1 Kāṭh 16 21 10) P प्र । आशान । die Saṃh Mss प्राशान 11) Vgl RV 3, 21, 1, TBr 3, 6 7 1, Kaṭh 16 21 12) P वार्यं । vgl RV 3, 21, 2, TBr 3 6 7 1 u 2 Kaṭh 16, 21 13) Ben °श्चुतो 14) P अग्ने । 15) Vgl RV 3, 21 3, TBr 3 6, 7, 2, Kāṭh 16, 21 16) P भानुना । आ । अगाः । 17) H जुषस्व 18) Vgl RV 3 21, 4, TBr 3 6, 7, 2, Kaṭh 16 21 19) P मेदः ।

श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति[1] तान्देवशो विहि[2] ॥ होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनां स्वाहा देवा आज्यपा जुषाणा अग्न[3] आज्यस्य व्यन्तु होतर्यज ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः[4] ॥

अपि वृश्चासि जघ्नत[5] ॥ होता यक्षदग्निमाज्यस्य जुषतां[6] हविर्होतर्यज ॥ त्वं सोमासि सत्पतिः[7] ॥ होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज ॥ शुचिं नु स्तोमम्[8] ॥ होता यक्षदिन्द्राग्नी छागस्य वपाया[9] मेदसो जुषतां हविर्होतर्यज ॥ श्नथद्वृत्रमुभा[10] वामिन्द्राग्नी[11] ॥ होता यक्षदिन्द्राग्नी पुरोडाशस्य जुषतां हविर्होतर्यज ॥ प्र चर्षणिभ्यः[12] ईडामहे[13] होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज ॥

अग्निं सुदीतिं[14] सुदृशं गृणन्तो नमस्यामस्त्वेड्यं[15] जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम्[16] ॥

इडोपहूतोपहूतेडोपासे[17] इडा ह्वयतामिडोपहूता मानवी घृतपदी मैत्रावरुणी ॥ ब्रह्म देवकृतमुपहूतं दैव्या अध्वर्यव[18] उपहूता उपहूता

---

1) So P, in Bcn प्रती, desgl Bb, ohne Accent, in H u B प्रथि 2) So P, in Bcn विहि; H, Bb u B विहि, vgl RV 3, 21, 5, TBr 3, 6, 7 2, Kaṭh 16, 21. 3) Bb अग्ना 4) Vgl RV 10, 110, 11, TBr 3, 6, 3, 4, Kāṭh 16, 20, VS 29, 36 5) Vgl RV 6, 16, 34, TS 4, 3 [illegible] 1 u 5, TBr 3, 5, 6, 1, Kāṭh 2, 14, 20, 14, VS 33, 9 6) In Bb dies Wort ohne Accent 7) Vgl RV 1 [illegible] 5, TS 4 3, 13 1, TBr 3, 5, 6, 1, Kāṭh 2, 14 8) Vgl RV 7 93 1, TS 1, 1 14 1 TBr 2 4 [illegible] 3, Kāṭh 13, 15, 21, 13. 9) P वपाया 10) Vgl RV 6, 60 1, TS 4, 2 11, 1 3 11 8, TBr 2 8 5 1, 3, 5 7, 3 Kāṭh 4, 15, 21, 13, 23, 11 11) Vgl RV 6 60 13, TS 1, 1 14 1 5 5 1, TBr 2, 8, 5, 1, Kāṭh 7 4, 7 5, 6 9, Kap 5 4 5, 5 3 5, 4 12) Vgl RV 1, 109, 6, TS 4 2, 11, 1, TBr 2, 8 5 1, Kaṭh 4 15 13) Bcn ईडाम॰ 14) Bcn सुदितिं॰ 15) P त्वा । ईड्य । 16) Vgl RV 3 [illegible] 4, TBr 3 6 7 1, Kaṭh 19, 21 17) So Bcn; P उप । आसाम् ।, die andern Mss ॰पासा॰ 18) P दैव्या । अध्वर्यव ।

मनुष्या य इमं यज्ञमवान्[1] च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी[2] देवी देवपुत्रे उपहूतो ऽयं[3] यजमान[4] उत्तरस्यां देवयाज्यायामुपहूतो भूयसि हविःकरण[5] उपहूतो दिव्ये धामन्नुपहूतो[6] देवा म इदं हविर्जुषन्तामिति तस्मिन्नुपहूतः ॥ ५ ॥

Vgl TBr 3, 6, 7—9 (stokavishayakamâitrâvarunânuvacanokth, vapâpurodâçasvish takrtâm mâitrâvarunapâdyaprâishapurovâkyokth, vapâpurodaçasvishtakrtam vâkyokth), RV 3, 21, Kath 16, 21 u 20, weitere Vergleichungen s in den Anmerkungen

त्वं ह्यग्ने प्रथमो मनोतास्या धियो[7] अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै[8] ॥
अधा[9] होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन्[10] ॥
वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिं जागृवांसो अनु ग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा[11] दीदिवांसम्[12] ॥
पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम्[13] ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ[14] ॥
त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम्[15] ॥
सपर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो निषसादा[16] यजीयान् ।

---

1) P यद्वां । वंवान् । 2) P ऋतावरी । ऋतावरी इत्युत वरी ।(?) 3) Dies Wort fehlt im P 4) P यजमान । 5) P हविष्करण इति हवि करणे । 6) P धम्नं । 7) Bb धियो, Vgl RV 6, 1, 1, TBr 3 6 10 1, Kath 18, 20 8) P षध । 9) Die Samh Mss ईषय°, P इषयन् । 10) Vgl RV 6, 1, 2, TBr 3, 6, 10, 1, Kath 18, 20 11) P विश्वाहा । विश्वहेति विश्व हा । 12) Vgl RV 6 1, 3, TBr 3 6 10, 1, Kath 18, 20 13) P श्रेव । आपन् । अमृक्तम् । 14) Vgl RV 6, 1, 4, TBr 3, 6, 10, 2 15) Vgl RV 6 1 5, TBr 3, 6, 10, 2, Kath 18, 20 16) P नि । ससाद ।

तं त्वा वयं दमा[1] आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम[2] ॥
तं त्वा वयं सुध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो[3] दिवो अग्ने बृहता रोचनेन[4] ॥
विशां कविं विश्पतिं[5] शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं[6] पावकं राजन्तमग्निं यजतं रयीणाम्[7] ॥
सो अग्न ईजे शशमे[8] च मर्तो[9] यस्ता[10] आनट् समिधा हव्यदातिम् ।
य आहुतिं परि वेदा[11] नमोभिर्विश्वेत्स वामा दधते त्वोतः[12] ॥
अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम[13] ॥
आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्यस्तरुत्रः[14] ।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं विभाहि[15] ॥
नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा[16] अस्मे भद्रा सौश्रवसानि सन्तु[17] ॥
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते[18] राजनि त्वे[19] ॥ ६ ॥

Vgl RV 6, 1, TBr 3, 6, 10 (manotasûktoktih), Kâṭh 18, 20

1) P दमे । 2) Vgl RV 6, 1, 6, TBr 3 6 10 3 Kâṭh 18 20 3) So im Anschluss an P दीद्यान्, die Samh Mss दीध्यानो 4) Vgl RV 6, 1, 7, TBr 3, 6, 10, 3, Kâṭh 18 20 5) H u Bb विश्पतिं 6) H u Bb °प्रयी°, Ben °मीर्ष°, P प्रेतीषणिमिति प्रेती इषणि । इषयन्त । 7) Vgl RV 6 1 8, TBr 3 6, 10, 3, Kâṭh 18, 20. 8) P शशमे । 9) H मर्त्ता, Bb मर्त्तो 10) P यः । ते । 11) P वेद । वेद । 12) Vgl TBr 3 6 10 4, Kâṭh 18, 20. 13) Vgl RV 6, 1 10, TBr 3 6, 10, 4 14) P श्रवस्य । 15) Vgl RV 6 1, 11, TBr 3, 6, 10 5, Kâṭh 18 20 16) P आरेअघा इत्यारे-अघा । 17) Vgl RV 6, 1, 12; TBr 3, 6, 10, 5, Kâṭh 18, 20 18) Ben u P विधते 19) Vgl RV 6, 1, 13, TBr 3, 6, 10, 5; Kâṭh 18, 20

आ वृत्रहणा वृत्रहभिः[1] शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक्।
युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः[2] ॥

होता यक्षदिन्द्राग्नी छागस्य हविष[3] आत्तामद्य मध्यतो मेद[4] उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या[5] गृभो घस्तां[6] नूनं घासे अज्राणां[7] यवसप्रथमानां[8] सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां[9] पीवोपवसनानां[10] पार्श्वतः श्रोणितः शितामत[11] उत्सादतोऽङ्गादङ्गादवत्तानां करत[12] एवेन्द्राग्नी जुषेतां हविर्होतर्यज[13] ॥

गीर्भिर्विप्रः प्रमतिमिच्छमान[14] ईट्टे[15] रयिं यशसं पूर्वभाजम्।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो[16] नव्येभिस्तिरतं देष्णैः[17] ॥
देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण[18] प्रदिवस्ते[19] अर्थम्।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी[20] रजिष्ठैः[21] ॥

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित[22] यत्राग्नेराज्यस्य प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव[23] कृत्वी करदेवं[24] देवो वनस्पतिर्जुषतां हविर्होतर्यज[25] ॥

---

1) Ben वृत्रहाभि  2) Vgl RV 6, 60, 3 TBr 3, 6 8 1  3) P हविषं ।  4) P मेदं ।  5) P पौरुषेय्या ।  6) P घस्ता । (?)  7) P घासेअज्राणामिति घासे अज्रा णाम् । vgl TBr 3 6 11 2, VS 21 43  8) P यवसप्रथमानामिति यवस प्रथमाना । 9) P शतरुद्रियाणामिति शत रुद्रियाणाम् ।  10) P पीवोपवसनानामिति पीव उ पवसनानाम् ।  11) P शितामत ।  12) P करत ।  13) Vgl TBr 3 6 11 1 u 2, VS 21, 43  14) P इच्छमान ।  15) P ईट्टे ।  16) Bh णो  17) Vgl RV 7 93, 4 TBr 3 6, 8 1, Kath 4 15  18) Ben °पर्णो P हिरण्यपर्णेति हिरण्य पर्ण ।  19) Ben प्रदिवस P प्रदिव इति प्र दिव ।  20) P पथिभि ।  21) Vgl TBr 3, 6 11, 2, Kath. 18, 21  22) P रशनया धित ।  23) P उपस्तुत्येवोपस्तुत्य इव ।  24) P करत् । पर्ण ।  25) P यज ।, vgl TBr 3, 6, 11, 4

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।
वहा[1] देवत्रा दधिषो[2] हवींषि प्र च दातारममृतेषु वोचः[3] ॥
पिप्रीहि[4] देवान्[5] ॥ होता यक्षदग्निं॰ स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्याज्यस्य हविषः प्रिया धामान्ययाडिन्द्राग्न्योश्छागस्य हविषः प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथांस्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या[6] इषः कृणोतु सो अध्वराञ्जातवेदा[7] जुषतां॰ हविर्होतर्यज ॥ अग्ने यदद्य होतोपहूता[8] ॥ ७ ॥

Vgl TBr 3, 6, 11 (maitrâvaruṇapravaktavyakavirvanaspatisvishṭakṛtpraishapuronuvakyanam uktih) u 12 (havirvanaspatisvishṭakṛtam yajyoktih), weitere Vergleichungen s in den Anmerkungen

देवं बर्हिः सुदेवं देवैः स्यात्सुवीरं॰[9] वीरैर्वस्तोर्वृज्येतास्तोः[10] प्रभ्रियेतात्यन्यानाया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज देवं बर्हिर्वसुवने वसुधेयस्य वेतु देवीर्द्वारः संघाते वीड्वीर्यामञ्छिथिरा[11] ध्रुवा देवहूतौ[12] वत्स[13] ईमेनास्तरुणा[14] आमिमीयात्कुमारो वा नवजातो मैना[15] अर्वा रेणुककाटः[16] प्रणग्वसुवने[17] वसुधेयस्य व्यन्तु यज देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु देवी उषासानक्ताद्यास्मिन्यज्ञे प्रयत्यह्वेतामपि[18] नूनं दैवीर्विशः[19] प्रायासिष्टां॰[20] सुप्रीते सुधिते वसुवने वसुधेयस्य

1) P वह । 2) So Ben, P दधिष । die andern Mss दिधिषो 3) Ben वोच, vgl TBr 3, 6, 12 1 4) Ben पिपृहि 5) Vgl RV 10 2 1, TS 4, 3, 13, 4, TBr 3, 5, 7, 5. 6 11, 4, Kâṭh 2, 15, 18, 21, 20 15 6) P यां । यजतां । एज्या एत्या ऐज्या । 7) Bb कृणोतु, die andern Mss कृणोतु, die Mss अध्वरां आ॰ 8) Vgl RV 6, 15, 14, TS 4 3 14, 4 TBr 3 5, 7, 6 6, 12, 2 9) H u Bb स्यात् 10) P वृज्येत । स्तोः । 11) So Ben, in H u Bb शिथिरायम्, desgl B ohne Accent, P वीड्वी । यामन् । शिथिरा । 12) P देवहूत इति देव हूत । (!) 13) P वत्स । 14) P इम । एना । तरुण । 15) P मां । एना । 16) B रेणुककार 17) So Ben, in H u Bb प्रणग्, desgl B, ohne Accent., P प्रणग् ।, TBr 3 6, 13, 1 प्रणग् 18) P प्रयतीति प्र यति । अह्वेता । 19) P दैवी । विश । 20) Die Samh Mss प्रायासिष्टा॰, P प्र । अयासिष्ट ।, cf TBr 3, 6, 13, 1

वीताम् यज देवी उषासानक्ता वसुवने वसुधेयस्य वीतां देवी जोष्ट्री वसुधिती[1] ययोरन्याघा[2] द्वेषांसि यूयवदान्या[3] वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीताम् यज देवी जोष्ट्री वसुवने वसुधेयस्य वीतां देवी ऊर्जाहुती[4] इषमूर्जमन्या वक्षत्सग्धिं[5] संपीतिमन्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने[6] अधाताम् वसुवने वसुधेयस्य वीताम् यज देवी ऊर्जाहुती वसुवने वसुधेयस्य वीतां देवा दैव्या होतारा पोतारा नेष्टारा हतांघशंसा[7] आभरद्वसू वसुवने वसुधेयस्य वीताम् यज देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीमं[8] रुद्रैर्यज्ञमावीदिहैवेडया[9] वसुमत्या सधमादं मदेम[10] वसुवने वसुधेयस्य व्यन्तु यज देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु देवो नराशंसस्त्रिशीर्षा[11] षडक्षः शतमिदेनं शितिपृष्ठा[12] आदधति[13] सहस्रमी[14] प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो[15] बृहस्पतिः स्तोत्रमश्विनाध्वर्यवं[16] वसुवने वसुधेयस्य वेतु यज देवो नराशंसो वसुवने वसुधेयस्य वेतु देवो वनस्पतिर्वर्षप्रावा[17] घृतनिर्णिग् द्यामग्रेणास्पृक्षदान्तरिक्षं[18] मध्येनाप्राः[19] पृथिवीमुपरेणादृंहीद्वसुवने[20] वसुधेयस्य वेतु यज देवो वनस्पतिं वसुवने वसुधेयस्य वेतु देवं बर्हिर्वारिती-

1) Ben वसुधीती 2) So Bb, u Ben u H °न्याघा, P चन्यां । घंषा । 3) Bb द्युयवद्, P यूयवत् । र्वा । मन्या । 4) Ben ऊर्जाहुती 5) So Ben, auch P यंचत् । 3) Bb in H u Bb वचत् ohne Accent 6) Ben °मर्जयमाना 7) P हतांघश॑साविति हते H, Ben यज्ञमाविद् B यज्ञ मावीद्°, P रुद्रै । यज्ञं । आवीत् । इहं । एव । इडया अघश॑सौ । 8) P आदित्यैः । अस्पृक्षत् । सरस्वती । इमं । 9) So Bb und wohl auch 10) P मंदेम । 11) P त्रिशीर्षेति त्रि शीर्षा । 12) P शिति पृष्ठा । 13) Ben आ दधती 14) P सहस्र । ई । 15) In H das Verbum ohne Accent 16) P अश्विना । आध्वर्यवं । 17) P वर्षप्रावेति वर्ष प्रावा । 18) P द्यां । अग्रेण । आ । अस्पृक्षत् । आ । अंतरिक्ष । 19) So H u Bb, P मध्येन । आप्राः ।, Ben मध्येनाप्राः 20) So Ben H u Bb पृथिवीमुपरे°, desgl B, ohne Accent, P पृथिवी । उपरेण ।

नां निधेधासि[1] मंच्युतीनामंप्रच्युतं निकामधरणं पुरुषस्याहिँ॰[2] यंश-स्वदेनां[3] बर्हिषान्या बर्हीं॰ष्यभिंष्याम वसुवंने वसुधेयस्य वेतु यंज देवं बर्हिर्वारितीनां॰ वसुवंने वसुधेयस्य वेतु देवो अग्निः स्विष्टकृद्यंज देवो अग्निः स्विष्टकृत् ॥ ८ ॥

Vgl TBr 3, 6, 15 (anûyâjasambandhimaitrâvaruṇapraishoktib)

अग्निमद्य होतारमवृणीतायं॰ यंजमानः पंचन्पक्तीः[4] पंचन्पुरोडाशं गृह्णन्नपंया आज्यं गृह्णन्त्सौमायाज्यं बध्नन्निन्द्राग्निभ्यां छाग॰[4] सूपस्था[5] अद्य देवो वनस्पतिरभवदपंया[6] आज्येन सौमायाज्येनेन्द्राग्निभ्यां[7] छागेनौघस्तां तं[8] मेदस्तः[8] प्रतिपचतांग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्य ऋष आर्षेय[9] ऋषीणां नपादवृणीतायं॰[10] यंजमानो बहुभ्या[11] आ संगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यता[12] इति तां या देवा देवदानान्यंदुस्तान्यस्मा[13] आ च शांस्वा[14] च गुरस्वेंषितश्च[15] होतरसि[16] भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीदं[17] द्यावापृथिवी भद्रमभूदांर्ध्म[18] सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमंग्ने त्वं॰ सूक्तवागस्युंपश्रुति[19] दिवस्पृथिव्योरोमन्वती[20] ते[21] ऽस्मिं-

1) So die Saṃh Mss , P निधिधा इति निधि धा । पसि ।, auch TBr 3, 6 13, 1 निधिधासि 2) P पुरुषाहे । 3) So H u Bb, Ben यंशस्वाधेनां, B यशस्वदेवा, P यंशस्वत् । एना । 4) P पंक्ती । 5) So H u Bb, Ben संपस्था, P सपस्था इति सु उपस्था । 6) P अपंद्ये । 7) P सौमाय । आज्येन । 8) Die Saṃh Mss मेदस्त P छागेन । अर्ध । स्तात्तमिति सु आत्त । मेदस्तं । 9) P ऋषे । आर्षेय । 10) Ben नपादमवृ॰ 11) So Ben, H u Bb, in B बाहुभ्या, P बहु ऽभ्य॰ । 12) Ben वार्या॰, B वार्यायिषता, P वारि । आ । यक्षते । 13) Die Mss schwanken, Ben तां या देवं देवान्यादुस्तान्यस्मा, Bb तां यां देवां देवयानान्यंदुस्तान्यस्मा, H तां यां देवां देवयानान्यदु स्तान्यस्मा, B ता या देवा देवयाणान्यधुस्तान्यस्मा, P तां । यां । देवां । देव । दानानि । अदु । तानि । अस्मै । 14) So Ben, P शास्व । आ ।, H u Bb शांस्वा 15) So im Anschluss an P गुरस्व । इषितः । च ।, Ben, H u Bb गुरस्वेषितश्च, B गुरस्वेषितश्च 16) P होत । असि । 17) Ben ब्रूहिदं 18) P अभूत् । आर्ध्म । 19) P सूक्तवागिति सूक्त वाक् । असि । उपश्रुतोत्युप श्रुति । die Saṃh Mss setzen hier das Zeichen ॥, welches ich fortgelassen habe 20) P पृथिव्योः । ओमन्वती इति ओमन्वती । 21) P ते इति ते ।

न्यङ्क्षे यजमान द्यावापृथिवी स्ताᳪ[1] शंगवी[2] जीरदानू अत्रस्नू[3] अप्रवेदे असंबाधे उरुगव्यूती अभयंकृतौ वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती च पयस्वती च सूपचरणा च स्वधिचरणा च[4] तयोराविद्यग्निरिदं[5] हविरजुषतावीवृधत[6] महो ज्यायोऽकृत[7] सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृतेन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राता[8] वनस्पतिरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रताग्निर्होत्रेणेदं[9] हविरजुषतावीवृधत महो ज्यायोऽकृतास्यामृधद्धोत्रायां[10] देवंगमायामाशास्तेऽयं यजमान[11] आयुराशास्ते सुप्रजास्त्वमाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते[12] तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो[13] देवेभ्यो वनुतां[14] वयमग्नेर्मानुषा[15] इष्टं च वीतं[16] चोभे च नो द्यावापृथिवी अंहसस्पातामिह[17] गतिर्वामस्येदं[18] नमो देवेभ्यः ॥ ९ ॥

Vgl TBr 3, 6, 15 (sûktavâkavishayakam uttaravarṇapraishoktih); 3, 5, 10 (sûktavâkamantroktih)

तच्छंयोरावृणीमहे[19] गातुं यज्ञाय गातुं यज्ञपतये दैवी[20] स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः।

1) H u Bb स्तां॰ 2) So Ben u P, H u Bb शंगवी, B सुगवी 3) H u. Bb अत्रस्र 4) P च सुचौ। 5) P आविद्धौग्नि रिदं। अग्निं। इदं। 6) P अवीवृधत। 7) P ज्यायः। अकृत। 8) P ज्यायः; अक्राताः Hier bricht nach einigen Worten Ben mit f 45 wieder ab 9) Die Samh Mss क्रताग्निर्होत्रेणेदं॰, P अक्रत अग्निः। होत्रेण 10) P अस्याः। ऋध होत्रायामिवृधत् होत्रया।, die Samh Mss ॰स्यामृधद्धोत्राया 11) P अयं। यजमानः। 12) So im Anschluss an P आशास्ते। Bb ॰षाशास्ते, H ॰षायाशास्ते 13) So B, nur ohne Accent, P तत्। अग्निः। देवः। Bb तदग्निर्देवो H तदग्निर्देवो 14) So H, P वनुतां।; Bb वनुतां॰ 15) P मानुषाः। 16) H वित्तं 17) P वां। इह। 18) P गतिः। वां। अस्य। इदं। 19) So mit P तत्। शंयोः। die Samh Mss शं॰ योर॰ 20) Bb दैवी

ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे[1] ॥
आप्यायस्व[2] सं ते पयांसि[3] ॥
इह त्वष्टारमग्रियं विश्वरूपमुपह्वये ।
अस्माकमस्तु केवलः[4] ॥
तन्नस्तुरीपमध पोषयित्नु[5] देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः[6] ॥
देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत[7] ॥
उत ग्ना[8] व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी[9] राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम्[10] ॥
राकामहं[11] यास्ते राके[12] सिनीवालि[13] या सुपाणिः[14] कुहूमहं[15] कुहूर्देवानाम्[16] ॥
अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा[17] जातवेदाः ।
देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजतामृतावा[18] ॥

---

1) Vgl. TS 3, 6, 10, 2; TBr 3, 5, 11; TA 1, 9, 7. 3, 1 2) Vgl. RV 1, 91, 16; 9, 31, 4; TS 3, 2, 5, 3; 4, 2, 7, 4; TBr 3, 5, 12, 7, 13, 4; TA 6, 6, 3; Kāṭh. 16, 14; Kap. S. 25, 5. 3) Vgl. RV 1, 91, 18; TS 4, 2, 7, 4; Kāṭh 16, 14; 35, 13; 37, 5; Kap. S. 25, 5; VS 12, 113. 4) Vgl. RV 1, 13, 10; TS 3, 1, 11, 1; TBr 3, 5, 12, 1. 5) P पोषयित्नु । 6) Vgl. RV 3, 4, 9, 7, 2, 9; TS 3, 1, 11, 1 7) Vgl. RV 5, 46, 7; TBr 3, 5, 12, 1. 8) P ग्नाः । 9) Die ड fehlt in den Mss und ist von mir ergänzt; P इंद्राणी । अग्नायी । अश्विनी । राट् । 10) P यः । ऋतुः । जनानाम् ।; vgl. RV 5, 46, 8; TBr 3, 5, 12, 1. 11) Vgl. RV 2, 32, 4; TS 3, 3, 11, 5, Kāṭh. 13, 16 12) Vgl. RV 2, 32, 5; TS 3, 3, 11, 5; Kāṭh 13, 16 13) Vgl. RV 2, 32, 6; TS 3, 1, 11, 3 3, 11, 5; Kāṭh. 13, 16; VS 34, 10. 14) Vgl. RV 2, 32, 7; TS 3, 1, 11, 4 3, 11, 5; Kāṭh. 13, 16. 15) Vgl TS 3, 3, 11, 5; Kāṭh. 13, 16. 16) Vgl TS 3, 3, 11, 5; Kāṭh. 13, 16. 17) P जनिमा । 18) Vgl. RV 6, 15, 13; TBr 3, 5, 12, 1.

हव्यवाडग्निरिडोपहूता[1,2] ॥ १० ॥

Vgl TBr 3, 5, 11 (çamyuvâkamantroktiḥ) und 12 (patnîsamyâjamantroktiḥ), weitere Vergleichungen s in den Anmerkungen

## ॥ इति[3] खिलकाण्डे त्रयोदशमः प्रपाठकः ॥

---

सोमो धेनुं॰ सोमो अर्वन्तमाशुं॰ सोमो वीरं कर्मण्यं ददाति ।
सादन्यं॰ विदथ्यं॰ सभेयं पितृश्रवणं॰ यो ददाशदस्मै[4] ॥
अषाढं॰ युत्सु पृतनासु पप्रिं॰ स्वर्षामप्सां॰ वृजनस्य गोपाम् ।
भरेषुजां॰ सुक्षितिं॰ सुश्रवसं जयन्तं त्वामनु मदेम सोम[5] ॥
त्वं॰ सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः ।
त्वं॰ वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो[7] नृचक्षाः[8] ॥
या ते धामानि दिवि या पृथिव्याम्[9] ॥
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततन्थो३र्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ[10] ॥
यां ते धामानि हविषा यजन्ति[11] सोमापूषणेमौ[12] देवौ[13] ॥

---

1) Vgl RV 5, 4, 9, TS 3, 4, 11, 1 2) Die Saṃh Mss °रिडोपहूता, P इडा । उप° । 3) Das इति fehlt in den Mss 4) Vgl RV 1, 91, 20, TBr 2, 8, 3 1, VS XI 21, 5) Hier beginnt f 47 von Ben 6) Vgl RV 1 91 21, TBr 2 4 3 8, 2 8, 3, 1, VS 34 20 7) P द्युम्नी । अभव । 8) Vgl RV 1, 91, 2, TBr 2, 4 3 8, 2, 8, 3, 1 9) Vgl RV 1, 91, 4, TS ° 3 11 1 4 1 11, 1, TBr 2, 8, 3, 2, Kaṭh 13 15 10) Vgl RV 1, 91, 22, TBr 2, 8, 3 1, VS 34 22 11) Vgl RV 1, 91, 19, TS 1, 2 10, 1, TBr 2 8, 3, 1, Kâṭh 11 13, VS 4 37 12) Vgl RV 2, 40 1, TS 1, 8 22, 5, 2 6, 11 4, TBr 2, 8, 1, 5, Kâṭh 8 17 13) Vgl RV 2, 40, 2, TS 1, 8, 22, 5, 2, 6, 11, 4, TBr 2 8, 1 5, Kâṭh 8, 17

सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम् ।
विषूवृतं[1] मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम्[2] ॥
दिव्यन्यः सदनं चक्र[3] उच्चा पृथिव्यामन्यो अध्यन्तरिक्षे ।
ता[4] अस्मभ्यं पुरुवारं पुरुक्षुं[5] रायस्पोषं वि ष्यतां नाभिमस्मे[6] ॥
धियं पूषा जिन्वतु विश्वमिन्वो रयिं सोमो रयिपतिर्दधातु ।
अवतु देव्यदितिरनर्वा बृहद्वदेम विदथे सुवीराः[7] ॥
विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति ।
सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम[8] ॥
प्रजापते नहि[9] त्वदेतान्यन्यो[10] विश्वा जातानि परि ता बभूव[11] ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्[12] ॥
रयीणां पतिं[13] यजतं बृहन्तमस्मिन्भरे नृतमं वाजसातौ ।
प्रजापतिं[14] प्रथमजामृतस्य यजाम देवमधि नो ब्रवीतु[15] ॥
प्रजापते त्वं निधिपाः पुराणो देवानां पिता जनिता प्रजानाम् ।
पतिर्विश्वस्य जगतः परस्पा[16] हविर्नो देव विहवे जुषस्व[17] ॥
तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत[18] उद्वतश्च ।
प्रजापते विश्वसृग्[19] जीवधन्य[20] इदं नो देव प्रतिहर्य हव्यम्[21] ॥
प्रजापतिं प्रथमं यज्ञियानां देवानामग्रे यजतं यजध्वम् ।

---

1) P विषुवृतमिति विषु-वृत । 2) Vgl RV 2, 40, 3, TS 1 8, 22, 5, TBr 2, 8, 1, 5 3) P चक्रे । 4) P तौ 5) P पुरुक्षुमिति पुरु क्षु । 6) Vgl RV 2, 40, 4; TBr 2, 8, 1, 5 7) Vgl RV 2, 40, 6, TBr 2, 8, 1, 6 8) Vgl RV 2, 40, 5, TBr 2, 8, 1, 6 9) H u Bh नेहि 10) So Ben, in H u Bh त्वदेतान्य॰, desgl B, ohne Accent, P त्वत् । तानि । 11) H बभूवा 12) Vgl RV 10, 121, 10, TS 1, 8, 14, 2 u 5, TBr 2, 8, 1, 2, TA 10, 54, Kāth 15, 8, VS 10 20 13) Bb रयीपति 14) So im Anschluss an P, die Samh Mss प्रजापति 15) Vgl TBr 2, 8, 1, 3 16) P परस्पा. । 17) Vgl TBr 2, 8, 1, 3 18) P निवत । 19) Ben schreibt विश्वसृज्, die andern Mss विश्वसृक् 20) P जीव धन्य. । 21) Vgl TBr 2, 8, 1, 3

स नो ददातु श्रवणं पितृणां तस्मै ते देव[1] हविषा विधेम[2] ॥
यो रायं ईशे शतदाय[3] उक्थ्यो यः पशूनां॰ रक्षिता विष्ठितानाम्।
प्रजापतिः प्रथमजा ऋतस्य सहस्रधामा जुषता॰ हविर्नः[4] ॥ १ ॥

Vgl TBr 2, 8, 3 (saumyadipaçusuktabhidhānam) u 2, 8, 1 (tattaddevatāpaçusūkta kathanam), weitere Vergleichungen s in den Anmerkungen

वायो शतं॰ हरीणां॰ युवस्व पोष्याणाम्।
उत वा ते सहस्रिणो रथा[5] आयातु पाजसा[6] ॥
ईशानाय प्रहुति॰[7] यस्ता[8] आनट् शुचि॰ सोम॰ शुचिपास्तुभ्य॰[9] वायो।
कृणोषि तं मर्त्येषु प्रशस्तं जातो जातो जायते वाज्यस्य[10] ॥
युक्ष्वा[11] हि त्वं॰ रथासहा युवस्व पोष्या वसो।
आन्नो[12] वायो मधु पिबास्माकं॰ सवनागहि[13] ॥
कुविदङ्ग नमसा ये वृधासः पुरा[14] देवा अनवद्यास[15] आसन्।
ते वायवे मनवे बाधितायावासयन्नुषस॰[16] सूर्येण[17] ॥
आ नो वायो महे तने याहि मखाय पाजसे।
वयं॰ हि ते चकृमा[18] भूरि दावने सद्यश्चिन्महि दावने[19] ॥
सं ते वायुः[20] ॥
पीवोअन्न॰[21] रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः।

---

1) Bb देवि । 2) Vgl. TBr 2, 8, 1, 4 3) So Bb, die andern Mss शतदाय / 4) Vgl TBr 2, 8 1, 4 5) P रथ । 6) Vgl TS 2, 2, 12, 7 7) So im Anschluss an P प्रहुतिमिति प्रं हुति ।, die Samh Mss प्रहुति॰ 8) P यं । ते । 9) P शुचिपा इति शुचि पा ; 10) P वाजी । अस्य ।, vgl RV 7, 90, 2 11) P युक्ष्व । 12) So im Anschluss an P आत् । नः । die Samh Mss आ नो 13) P सवना । आ । गहि ।, vgl RV 8, 26 20 14) So Ben u P, die andern Mss पुरो 15) P देवाः । अनवद्यास । 16) P बाधिताय । अवासयन् । 17) Vgl RV 7, 91 1 18) P चकृम । 19) Vgl RV 8, 46, 25 20) Vgl TS 4 1 4, 5 1 5 1, Kath 16 4, 19, 5, Kap S 30 3, VS 11 39 21) So die Samh Mss, P पीवोअन्नानिति पीव॰ अन्नान् ।

ते वायवे समनसो वितस्थुर्विश्वेन्नरः[1] स्वपत्यानि चक्रुः[2] ॥
राये नु यं[3] जज्ञतू[4] रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चत स्वा[5] उत श्वेतं वसुधितिं निरेके[6] ॥

आ वायो[7] प्र वायुं[8] प्र याभिः[9] ॥

आ नो नियुद्भिः शतिनीभिरध्वरं॰ सहस्रिणीभिरुपयाहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः[10] ॥

देवानां भद्रा सुमतिरृजूयतां देवाना॰ रातिरभि नो निवर्तताम् ।
देवाना॰ सख्यमुपसेदिमा[11] वयं देवा न[12] आयुः प्रतिरन्तु जीवसे[13] ॥

भद्रं कर्णेभिः शृणुयाम[14] देवा भद्रं पश्येमाक्षभिर्यजत्राः[15] ।
स्थिरैरङ्गैस्तुष्टुवा॰सस्तनूभिर्व्यशेम[16] देवहित॰[17] यदायुः[18] ॥
शतमिन्नु शरदो अन्ति देवा[19] यत्रा[20] नश्चक्रा[21] जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः[22] ॥

आ वो देवास ईमहे[23] ॥

उत देवा अवहितं देवा उन्नयथा[24] पुनः ।

---

1) H वितस्थु॰; P विश्वा । इंत् । नरः । 2) Vgl. RV 7, 91, 3, TBr 2, 8, 1, 1; VS 27, 23 3) B मम॰ 4) So im Anschluss an P जज्ञतु ।, Ben जजत, H u Bb जज्ञे तु, desgl B, ohne Accent 5) P स्वा । 6) Vgl RV 7, 90, 3, TBr 2, 8, 1, 1; VS 27, 24 7) Vgl RV 7, 92, 1, TS 1, 4, 4, 1, 3, 4, 2, 1, TBr 2, 8, 1, 1; Kâth 4, 2, 13, 11 u 12, Kap S 3, 2; VS 7, 7 8) RV 6, 49 4, TBr 2, 8, 1, 1; VS 33, 55 9) Vgl RV 7, 92, 3, TS 2, 2 12, 7, TBr 2, 8, 1, 1, Kath 10, 12, VS 27, 27 10) Vgl RV 7, 92, 5, TBr 2, 8, 1, 2, VS 27, 28 11) P सेदिम । 12) P न । 13) Vgl RV 1, 89, 2, VS 25, 15 14) Bb शृणुयाम 15) Bb यजत्रा 16) Bb व्यशेम 17) H देवा॰ 18) Vgl RV 1, 89, 8, TA 1, 1, 1, Kâth 35, 1, Kap S 29 2, VS 25, 21 19) P देवाः । 20) P यत्र । 21) P चक्र । 22) P रिरिषत । आयु ।, vgl RV 1, 89, 9, TA 1, 27, 6, Kâth 35, 1, Kap S 48, 2, VS 25, 22 23) Vgl TS 1, 3, 1, 2, VS 4, 5 24) P उत् । नयथ ।

उतोगश्चकुषं देवा देवा जीवयथा[1] पुनः[2] ॥
यज्ञेन यज्ञमयजन्त देवाः[3] ॥ २ ॥

Vgl TBr 2, 8, 1 (s oben), weitere Vergleichungen s in den Anmerkungen

अग्ने नय[4] ॥

प्र वः शुक्राय भानवे भरध्व॰ हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनू॰ष्यन्तर्विश्वानि विद्मना जिगाति[5] ॥
अग्ने त्वं पारय[6] ॥

अच्छा गिरो मतयो देवयन्तीरग्नि॰ यन्ति द्रविणं भिक्षमाणाः ।
सुसंदृश॰ सुप्रतीक॰ स्वञ्च॰ हव्यवाहमरतिं मानुषाणाम्[7] ॥
अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा[8] अभ्यमन्त[9] कृष्टीः ।
पुनरस्मभ्य॰ सुवितायं देव क्षा॰ विश्वेभिरमृतेभिर्यजत्र[10] ॥
प्र कारवो मनना वच्यमाना[11] देवद्रीचीं[12] नयत देवयन्तः ।
दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये[13] घृताची[14] ॥
उदुत्तमंमस्तभ्नाद्[15] द्यामिमां[16] धियम्[17] ॥
कितवासो यद्रिरिपुर्न दीवि[18] यद्वा घा[19] सत्यमुत यन्न विद्म ।

---

1) P जीवयथ । 2) Vgl RV 10, 137 1, AV 4, 13, 1 3) Vgl TS 3, 5, 11, 5, VS 31, 16 4) Vgl RV 1, 189 1, TS 1 1, 14 3 u 5, TBr 2, 8 2, 3, TA 1, 8, 8, Kath 3, 1, 6, 10, Kap [illegible] 2, 8, VS 5 36 u 6 5) Vgl TBr 2, 8, 2, 3, Kath 7, 16 6) Vgl RV 1, 189, 2, TS 1, 1, 14 4, TBr 2, 8, 2, 5, TA 10, 2, 1 7) Vgl RV 7, 10, 3, TBr 2, 8, 2, 4 8) P ॰नग्निचा देवमपि चा । 9) P ॰भि । ॰मन्त ।, Bb ॰भ्यमत 10) Vgl RV 1 189, 3, TBr 2 8 2, 4 11) P मननां । वच्यमाना । 12) Ben ॰ध्रीचो 13) H हविर्भरन्त्य॰, P हवि । भरंती । 14) Vgl RV 3, 6, 1, TBr 2, 8 2, 5 15) Vgl RV 1, 24, 15, TS 1 5 11 3 u 5, TBr 2 7 16, 4 8, 1, 6, TA 2, 4, 4, Kath 3, 8, 16, 8, 11, 11, [illegible] 13 Kap 8 2 15, 39, 1, VS 12, 12 16) Vgl RV 8, 42, 1, TS 1 2, 8, 1, TBr 2 8 1 6 Kath 2, 6, 11, 12, Kap [illegible] 1, 19 VS 4, 30 17) Vgl RV 8, 42, 3, 10 67 1 TS 1, 2 2 2, 6, 1 3, 2, Kath 2, 3 Kap 8 1 15 18) So H u Bb, Ben दिवि, B दीवो, P दीवि । 19) P घ ।

संवा तां विष्य शिथिरेव देवाथा[1] ते स्याम वरुण प्रियासः[2] ॥
स्व ते हेडो वरुण[3] तत्त्वायामि[4] ॥
पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं[5] शरणं सजोषा दुराधर्षं गृणते[6] शर्म यंसत्[7] ॥
आ नो दिवः[8] ॥
इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व ।
तव शर्मन्प्रियतमे दधाना[9] उपस्थेयाम शरणं न वृक्षम्[10] ॥
यस्ते स्तनः शशयो यो मयोभूर्येन[11] विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः[12] सरस्वति तमिह धातवे कः[13] ॥
सरस्वत्यभि नो नेषि वस्य[14] इदं ते हव्यम्[15] ॥ ३ ॥

Vgl TBr 2, 6, 2 (vaçâdipaçusûktoktah), weitere Vergleichungen s. in den Anmerkungen.

आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् ।
सादद्योनिं[16] दम[17] आ दीदिवांसं हिरण्यवर्णमरुषं सपेम[18] ॥
स हि शुचिः शतपत्रः स शुन्ध्युर्हिरण्यवाशीरिषिरः[19] स्वर्षाः ।

1) P देष । धेष । 2) Vgl RV 5, 85, 8; TS 3, 4, 11, 6; TBr 2, 8, 1, 5; Kâth 23, 12. 3) Vgl RV 1, 24, 14, TS 1, 5, 11, 3 u 5, TBr 2, 7, 16, 4 8, 1, 6; TA 2, 4, 4; Kâth 40 11 4) Vgl. RV 1, 24, 11, TS 2, 1, 11, 6 u 5; TBr 2, 8, 1, 6 u 5.; Kâth 4, 16, 11, 13, 12, 15; 17 19; 21, 13, 40, 11 5) P ग्नाभिः । 6) P गृणते । 7) Vgl RV 6, 49, 7, TS 4, 1, 11, 2, TBr 2 8 2, 8. 8) Vgl RV 5, 43, 11; TS 1, 8, 22, 1; 2, 5, 12, 1, 3, 1, 11, 2, Kâth 4, 16; 20, 15 9) P दधाना. । 10) Vgl. RV 7, 95, 5, TBr 2, 4, 6, 1; Kâth 4, 16 11) Bb येन 12) H u. Bb सुदत्रः 13) Vgl RV 1, 164, 49, TBr 2, 8 2, 8, TA 4, 8, 2; 5. 7, 3: VS 38, 5 14) Vgl RV 6, 61, 14, TS 7, 2, 7 4, TBr 2 4 3, 1, 2, 8, 2, 8; Kâth 17, 18; 30, 3 15) Vgl TBr 2, 5, 4, 6 16) P साद्द्योनिमिति साद्त् योनिं । 17) P दमे । 18) Vgl RV 5, 13, 12; TBr 2, 5, 5, 4, 2 8, 2, 7. 19) So im Anschluss an P हिरण्यवाशीरिति हिरण्य-वाशीः । इषिरः ।. Bon °वाशीर्षिरः, die andern Mss. °वाशीरुषिरः

बृहस्पतिः स स्वावेश[1] ऋष्वः पुरू[2] सखिभ्य आसुतिं करिष्ठः[3] ॥
बृहस्पतिः[4] स सुष्टुभा[5] ॥

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस[6] ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्[7] ॥
एवा[8] पित्रे विश्वदेवाय वृष्णे[9] ॥

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्[10] ।
यत्रा[11] नरो देवयन्तो युगानि वितन्वते[12] प्रति भद्राय भद्रम्[13] ॥
भद्रा[14] अश्वा हरितः सूर्यस्य[15] ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति[16] ॥
अद्या[17] देवा[18] उदिता[19] सूर्यस्य निरंहसः पिपृता[20] निरवद्यात् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः[21] ॥
चित्रं देवानामुदगादनीकं[22] सुत्रामाणं[23] महीमू[24] ष्वदितिः पा-
शान्[25] ॥

---

1) P स्वाविद्यं इति सु.आवेशः । 2) So H, Bb, R, in Ben u P पुरु 3) Vgl RV 7, 97, 7; TBr 2, 5, 5, 4 8, 2, 7 4) Vgl oben 4, 12, 1; RV 4, 50, 4; TBr 2, 8, 2, 7; Kāṭh 17, 16. 5) Vgl RV 4, 50, 5, TS 2, 3, 14, 4; Kāṭh. 10, 13 6) P दी- दयत् । शवसा । 7) Vgl RV 2, 23, 15, TS 1, 8, 22, 2; Kāṭh 4, 16; 10, 11; VS 26, 3 8) P एवं । 9) Vgl RV 4, 50, 6, TS 1, 8, 22, 2; TBr 2, 8, 2, 8; Kāṭh 17, 18, AV 20, 88, 6 10) P पश्चात् । 11) P यत्र । 12) Bb वितन्वते 13) Vgl. RV 1, 115, 2, TBr 2, 8, 7, 1; AV 20, 107, 15 14) Vgl RV 1, 115, 3; TBr 2, 8, 7, 1 15) Vgl RV 1, 115, 4, TBr 2, 8 7, 1, VS 33, 37 16) Vgl RV 1, 115, 5; TBr 2, 8, 7, 2, VS 33, [illegible] 17) P अद्य । 18) P देवाः ।; H देवा 19) P उदिता इत्युत् इता । 20) Bb पिपृता, P पिपृत । 21) Vgl RV 1, 115, 6; TBr 2, 8, 7, 2; VS 33, 42 22) Vgl RV 1, 115, 1, TS 1, 4, 43 1 u 5; TBr 2, 8, 7, 3 u 5; TA 1, 7, 6, Kāṭh 4, 6, 10, 13, [illegible] 16, 21, 14, 22, 5, 22, 6 u 8, Kap S 3, 4 u. 7; 35, 2. 23) Vgl RV 10, 63, 10, TS 1, 5, 11, 5, 7, 1 18, 2; TA 1, 13, 2; Kāṭh 2, 3; VS 21, 6 24) Vgl. TS 1, 5, 11, 5; 7, 1 [illegible] 2, TBr 3, 1, 3, 3, TA 1, 13, 2; Kāṭh. 30, 4 u 5; Kap S. 46, 7; VS 21, 5 25) Vgl TS 3, 1, 4, 4; Kāṭh 30, 8

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्[1] ॥
विष्टम्भो दिवः[2] स्तीर्णं वर्हिः[3] ॥ ४ ॥

Vgl TBr 2, 3, 2 (s oben), 2, 8, 7 (sâuryâdipaçusuktakathanam), weitere Vergleichungen s in den Anmerkungen

विष्णोर्नु कम्[4] तदस्य[5] प्र तद्विष्णुः[6] ॥
परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से[7] ॥
विचक्रमे पृथिवीमेष एतां क्षेत्राय[8] विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो[9] जनास उरुक्षितिं सुजनिमा चकार[10] ॥
त्रिर्देवः[11] पृथिवीमेष एतां विचक्रमे शतर्चसं[12] महित्वा ।
प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम[13] ॥
इन्द्रं नरो नेमधिता[14] युजे रथम्[15] ॥
जगृह्मा[16] ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः[17] ॥
तवेद् विश्वमभितः पशव्यं यत्पश्यसि चक्षसा सूर्यस्य ।

---

1) Vgl RV 1, 89, 10, VS 25, 23, AV 7 6 1, Nir 4, 23 2) Vgl RV 9, 89, 6, TS 4, 4, 12, 5, Kath 22, 14 3) Vgl TS 5, 1 11 2, Kâth 5, 6, 2, VS 29, 4 4) Vgl RV 1, 154, 1, TS 1 2, 13, 2, TBr 2, 8 3, 2, Kath 2, 10, 25, 8, Kap S 2, 4, 40, 1 5) Vgl RV 1, 154, 5 TBr 2 4, 6 2 8, 3, 2 6) Vgl RV 1, 154 2, TBr 2, 4 3, 4 [illegible] 3 2, 3, 1, 3 3, Kath 2 10, 25, 8, Kap [illegible] 2, 4, 40, 1, VS 5 20 7) Vgl RV 7, 99, 1, TBr 2, 8, 3, 2 8) B चेत्राय 9) Ben किरयो 10) Vgl RV 7, 100, 4, TBr 2, 4 3 5 8 3 3 11) [illegible] दिव 12) P शतर्चसमिति घृतं अर्चस । 13) Vgl RV 7, 100, 3, TBr 2, 4 3, 5 8 3, 3 14) Vgl RV 7, 27, 1, TS 1, 6, 12, 1 u 5, TBr 2, 8, 2, 5 15) Vgl RV 7, 23, 3, TBr 2, 4, 1, 3 8, 2, 5 16) P जगृभ्म । 17) Vgl RV 10, 47, 1, TBr 2, 8, 2, 5

गवामसि गोपतिरेक इन्द्र भक्षीमहि ते प्रयतस्य वस्वः[1] ॥
समिन्द्र नः[2] ॥
आराच्छत्रुमपबाधस्व[3] दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्[4] ॥
इन्द्रो[5] बलं रक्षितारं दुघानां करेणेव विचकर्ता रवेण ।
स्वेदाञ्जिभिराशिरमिच्छमानो ऽरोदयत्पणिमा[6] गा[7] अमुष्णात्[8] ॥
अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि बलं वः ।
तस्मा[9] एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत[10] जूर्न[11] वस्त्रैः[12] ॥
इन्द्र[13] ओषधीरसनोदहानि वनस्पतीँरसनोदन्तरिक्षम् ।
बिभेद बलं[14] नुनुदे[15] विवाचो ऽथाभवद्दमिताभिक्रतूनाम्[16] ॥
यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा[17] बलस्य[18] ।
यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः[19] ॥
अभि स्ववृष्टिम्[20] ॥
भिनद्बलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत्[21] ।
रिणग्रोधांसि कृत्रिमाण्येषां[22] सोमस्य ता मद[23] इन्द्रश्चकार[24] ॥ ५ ॥

Vgl TBr 2, 8, 3; 2, 8, 2 (s oben); weitere Vergleichungen s. in den Anmerkungen

---

1) Vgl RV 7, 98, 6; TBr 2, 8, 3, 6 2) Vgl RV 5, 42, 4, TS 1, 4, 44, 1; TBr 2, 8, 2, 6, Kâṭh 4, 12; Kap S. 3, 10, VS 8, 15 3) P आरात् । शत्रुं । 4) Vgl. RV 10, 42, 7, TBr 2, 8, 2, 7; AV 20, 89, 7 5) P इंद्र । 6) P अरोदयत् । 7) P गाः । 8) Vgl RV 10, 67, 6; AV 20, 91, 6. 9) Ben तस्मा 10) So Ben; H u Bb सोमैरूर्णुत, desgl. B, ohne Accent, P सोमैः । आ । ऊर्णुत । 11) So Ben; H u Bb जूर्न, desgl B, ohne Accent, P जूः । न । 12) Vgl RV 2 14, 3 13) P इंद्रः । 14) So Ben u. Bb, die andern Mss बलं 15) H u Bb नुनुदे 16) Vgl. RV 2, 34, 10, AV 20, 11, 10 17) Bb ऽपधा, P अपऽधा । 18) So Ben u Bb; die andern Mss बलस्य 19) Vgl RV 2, 12, 3, AV 20, 34, 3 20) Vgl RV 1, 62, 5 21) P ऐरत । 22) P कृत्रिमाणि । एषां । (?) 23) P ता । मदे । (?) 24) Vgl RY 2, 15, 8; TS 2, 3, 14, 5

विष्णुं देवं वरुणमूतये भगं मेदसा देवा[1] वपया यजध्वम् ।
ता नो यज्ञमागतं विश्वधेना[2] प्रजावदस्मे द्रविणेह धत्तम्[3] ॥
मेदसा देवा वपया यजध्वं विष्णुं च देवं वरुणं च रातिम् ।
ता नो अमीवामपबाधमाना इमं यज्ञं जुषमाणा उपेतम्[4] ॥
विष्णूवरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्यू[5] हविषा वृधाना[6] ज्योतिषारातीर्दहतं[7] तमांसि[8] ॥
ययोरोजसा स्कभिता[9] रजांसि वीर्येभिर्वीरतमा शविष्ठा ।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतिम्[10] ॥
विष्णूवरुणा[11] अभिशस्तिपावा[12] देवा यजन्त हविषा घृतेन ।
अपामीवां सेधतं रक्षसश्चाथा धत्तं[13] यजमानाय शंयोः[14] ॥
अंहोमुचा वृषभा सुप्रतूर्ती देवानां देवतमा शविष्ठा ।
विष्णूवरुणा प्रतिहर्यतं न इदं नरा प्रयतमूतये हविः[15] ॥
आ देवो याति सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयञ्च प्रसुवञ्च[16] भूम[17] ॥
अभीवृतं[18] कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम् ।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः[19] ॥
स घा[20] नो देवः सविता सहावासाविषद्वसुपतिर्वसूनि ।
विश्रयमाणो अमतिमुरूचीं[21] मर्तभोजनमध रासते नः[22] ॥

1) P द्देवा. । 2) Bb विश्वधेना, P विश्वधेनेति विश्व धेना । 3) Vgl. TBr 2, 8, 4, 4 4) Die Saṃh Mss उपेत, P उप । इत 1, vgl TBr 2, 8, 4, 4 5) H दीर्घप्रयुज्यू; desgl B, ohne Accent 6) P वृधाना । 7) P ज्योतिषा । अरातीः । दहतं । 8) Vgl. TBr 2, 8, 4, 5 9) Ben स्कभीता 10) Vgl TBr 2, 8, 4, 5 11) H विष्णु°; P विष्णुवरुणा । 12) P अभिशस्तिपावेत्यभिशस्ति पावा । 13) P च । अथ । धत्त । 14) Ben शंयो. ।; vgl TBr 2, 8, 4, 6 15) Vgl TBr 2, 8, 4, 6 16) Ben प्रसुवं, P प्र.सुवन् । 17) Vgl RV 7, 45, 1, TBr 2, 8, 6, 1, Kâṭh 17, 19 18) Ben अभिवृत, P अभिवृतमित्यभि.वृतं । 19) Vgl RV 1, 35, 4, TBr 2, 8, 6, 1 20) P घः । घ । 21) Bb अमति° 22) Vgl RV 7, 45, 3, TBr 2, 8, 6, 1.

